# [ १. हेतोः सामान्यनिरूपणम् । ]

### [ § १. हेतोस्त्रित्वेन व्याप्तिः कथं फलितेति चर्चा । ]

[S. 7a.]............हि कथितम् । तत्र कार्यस्वभावयोर्विधिसाधनत्वान्न प्रतिषेधे साध्ये व्यापारः । अनुपलब्धितोऽपि न हेत्वन्तराभावनिश्चयो यतः सा चतुर्धाऽवस्थिता स्वभाव[कारण]व्यापकानुपलब्धयो विरुद्ध[T. 209b.]विधिश्चेति[1] । तुल्ययोग्यतारूपस्यैकज्ञानसंसर्गिणः स्वभावानुपलब्धिरन्योपलब्धिरूपा अभावव्यवहारहेतुरिष्यते । न [च हेत्वन्]तरमत्यन्ताभावतयोपगतमनुक्रान्तरूपम्, यदि हि स्याद्देशादिनिषेध एवास्य स्यात् नात्यन्ताभावः । कारणव्यापकानुपलब्धी तु सिद्धे कार्य[कारण]व्याप्यव्यापकभावे भवतः । न च हेत्वन्तरेऽत्यन्तासत्तयाङ्गीकृते प्रकारोऽयं सम्भवति । तत् कथं ते तदभावं गमयिष्यतः । विरोधोऽप्यविकल[कारणस्य] भवतोऽन्यभावेऽभावादवगम्यत इति विरुद्धोपलब्धिरप्यसम्भविनी । सम्भवे वा कारणानुपलब्ध्यादीनां कथमत्यन्तनिषेधः ? इत्याशङ्क्याह – "हेत्वाभासास्ततोऽपरे" इति । "ततः" त्रिविधाद्धेतोः "अपरे" अन्ये "हेत्वाभासाः" यतस्ततस्त्रिधैव स इति ।

एवं मन्यते – इह यद् यत्र नियम्यते [तद्वि]पर्ययेण [S. 7b.] तद्विपक्षस्य व्याप्तौ स नियमः सिद्ध्यति । यथा यत् सत् तत् क्षणिकमेवेति सत्त्वस्य क्षणिकेषु नियम उच्यमानः सत्त्वविपर्ययेणा[स]त्त्वेन क्षणिकविपक्षस्याक्षणिकस्य व्याप्तौ सिद्ध्यति । एवमिहापि त्रित्वे हेतुर्नियम्यमानो हेतुविपर्ययेण हेत्वाभासत्वेन त्रिसंख्यावा[ह्यस्यार्थ]स्य व्याप्तौ त्रिसंख्यायामेव नियतो भवति । ततस्त्रिविधहेतुव्यतिरिक्तानामर्थानां हेत्वाभासतां दर्शयति । तेन स्वभावविरुद्धोपलब्ध्या [कार्य-स्व]भावानुपलम्भव्यतिरिक्तानामर्थानां हेतुत्वाभाव[T. 210a.]निश्चय इति । हेतुतदाभासयोश्च परस्परपरिहारस्थितलक्षणतयैव विरोधो [हेतुल]-

१. °श्चेति । तत्र तुल्य° – T. । २. एकज्ञानसंसर्गिव[स्त्वन्तरम्] । ३. हेतुत्वम् ।

क्षणप्रतीतिकाल एव प्रतिपन्नः । तदात्मनियतप्रतिभासज्ञानादेव तद्विपरीतस्यान्यतया तदाभासताप्रतीतेः, परस्परमितरेतररूपाभाव[निश्च]यात् । तत्र त्रिविधहेतुव्यतिरिक्तेष्वर्थेषु हेत्वाभासत्वमुपलभ्यमानं स्वविरुद्धं हेतुत्वं निराकरोति । ते च हेतुत्रयबाह्या अर्था नात्यन्तासत्त्व[योप][S. 8a.]गता नापि हेतुत्वं तेषु निषिध्यमानं, केवलं व्यामोहात् हेतुत्वमन्यत्र प्रसिद्धमेव तत्राऽऽरोपितमाशङ्कितं वा तद्विरुद्धोपलम्भादपसार्यते । तत् किमुच्यते – " [अत्यन्तासंभ]विनः कथं विरोधः " इति । न च सहानवस्थानलक्षण एव विरोधो येन तन्न्यायः सर्व्वत्रोपवर्ण्येत । नापि यद् यत्र प्रतिषिध्यते तस्य तत्रैव विरो[धः प्रति]पत्तव्यो येन "कथमसतः केनचिद् विरोधगतिः ? " इति चोद्येत । न हि नात्र शीतस्पर्शोऽग्नेरिति साध्यधर्म्मिण्येव शीतस्पर्शस्याग्निना विरोध[संब]न्धो (?) यथा तु अस्यान्यत्र प्रतीतविरोधस्याग्निना साध्यधर्म्मिणि निषेधः तथा हेत्वाभासत्वोपलम्भाद् हेतुत्रयबाह्येष्वर्थेषु हेतुत्वनिरासः । [अत्यन्तास]तो ऽपि च लाक्षणिको विरोधः प्रतीयते यथा क्षणिकत्वेनाक्षणिकत्वस्य तस्य वस्तुनि क्वचिदप्यसम्भवात्, भावेन वा यद्वदभावस्य सर्व्व[शक्तिविरहल]क्षणस्येत्यलं दुर्म्मतिविस्पन्दितेष्वत्यादरेणेति स्थितमेतत् – त्रित्वे हेतुत्वं नियम्यमानं [तद्विपर्ययस्या][S. 8b.] [T. 210b.]ऽपि च व्याप्तौ सत्यां तत्र नियतं भवतीत्यभिप्रायवता विपर्ययव्याप्तिं प्रदर्शयितुमिदमुक्तम् – " हेत्वाभास(सा)स्ततोऽपरे " इति ।

[ § २. त्रिविधबाह्यार्थानां हेत्वाभासत्वेन व्याप्तेश्चर्चा । ]

तत्रैतत्स्यात् – क्षणिकविपक्ष[स्य सत्त्व]विपर्ययेण व्याप्तिर्बाधकप्रमाणवशादवसिता इह तु त्रिसङ्ख्याबाह्यानामर्थानां हेत्वाभासत्वेन व्याप्तिः कतरेण प्रमाणेनावसितेत्य[त्राह] –"अविनाभावनियमात्" इति । त्रिविधहेतुव्यतिरिक्ते लिङ्गतयोपगते शङ्क्यमाने वा वस्तुनि पक्षधर्म्मतासद्भावेऽप्यविनाभावाभावा[दि-

१. हेतु° । २. भवतोऽन्यभावेऽभावलक्षणः । ३. यथाप्रतीतस्यैवास्य – T. । ४. शीतस्पर्शस्य । ५. त्रित्वे ।

त्यर्थः]। तथा च वक्ष्यति – "न स त्रिविधाद्धेतोरन्यत्रास्तीत्यत्रैव नियत उच्यते" इति। अविनाभाववैकल्यं च हेत्वाभासत्वेनासिद्धविरुद्धानैकान्तिकसामान्य[धर्मे]ण व्याप्तं प्रमेयत्वादौ निश्चितमिति हेत्वाभासत्वे साध्येऽविनाभाववैकल्यं स्वभावहेतुः।

अविनाभाववैकल्यं च त्रिविधहेतुव्यतिरिक्तत्वादेव [तदन्येषां] [S. 9a.] [व्याप]कानुपलब्धितः सिद्धम्। तथा हि – तादात्म्यतदुत्पत्तिभ्यामविनाभावो व्याप्तः, तयोस्तत्रावश्यंभावात्। तस्य च तयोरेव भावादतत्स्वभावस्यातदुत्पत्तेश्च [तदनायत्तत]या तदव्यभिचारनियमाभावात्। तदुक्तम् –

"कार्यकारणभावाद्वा स्वभावाद्वा[2] नियामकात्।
अविना[3]भावनियमो[4]ऽदर्शनान्न[5] न दर्शनात्[6]॥
[अवश्यंभाव]नियमः कः [7]परस्यान्यथा[8] परैः[9]।
अन(अर्था)[10]न्तरनिमित्ते वा धर्म्मे[11] वाससि [T. 211a.] रागवत्॥"

[प्रमाणवार्तिक ३. ३०, ३१] इति।

रूपादिनाऽपि हि रसादेरविनाभावो न स्व[तः किन्तु स्वकार]णाव्यभिचारद्वारक इति तत्कारणोत्पत्तिरेवाविनाभावनिबन्धनम्। अन्यथा[12] तदनायत्तस्य[13] तत्कारणानायत्तस्य[14] वा तेना[विनाभावकल्प]नायां सर्व्वस्य सर्व्वार्थैरविनाभावः स्यात्, अविशेषात्। एकार्थसमवायनिमित्तो रूपरसादेरविनाभाव इति चेत्। ननु समवायोऽप्याधार्या[धार]भूतानामुपवर्ण्यते। स चाधाराधेयभावस्तदात्मानुपकारे[15]ऽतिप्रसङ्गतो न सिध्यतीत्येकसामग्र्यधीनतैवैकार्थसमवायो[ऽवसे]यः। [S. 9b.] अन्यो वा वस्तुभूतः संबन्धोऽसम्भवी तथा सम्बन्धपरीक्षायां विस्तरतः शास्त्रकृता प्रतिपादितमेवेति तत एवावधार्यम्। अस —— न वा

---

१. अविनाभावे। २. तादात्म्यात्। ३. साध्येन। ४. साधनस्य। ५. विपक्षे। ६. सपक्षे। ७. साधनस्य। ८. तादात्म्यतदुत्पत्त्यभावे। ९. साध्ये। १०. मुद्गरादि°। ११. नित्यत्वादिके। १२. एकसामग्रीप्रतिबन्धाभावे। १३. साध्यानायत्तस्य। १४. साध्यकारणानायत्तस्य। १५. आधेयस्य रूपरसादेरनुपकारे।

ज(नन्वसत्यपि ज)न्यजनकभावे, तादात्म्ये वा, तेनैवाविनाभावो नान्येनेत्यत्र वस्तुस्वभावैरेवोत्तरं वाच्यम् ये एवं भवन्ति नास्माभिः, के[वलं वयं द्रष्टार] इति चेत्; आकस्मिकस्तर्हि स वस्तूनां स्वभाव इति न कस्यचिन्न स्यात्। न ह्यहेतोर्देशकालद्रव्यनियमो युक्तः। [तद्धि किञ्चित् क्वचिदुप]नीयेत न वा यस्य यत्र किञ्चिदायत्तमनायत्तं वा। अन्यथा विशेषाभावादिष्टदेशकालद्रव्यवदन्यदेशादिभावः के[न वार्येत विशेषाभावात्। ततो य]द्येनाविनाभूतं दृश्यते तस्य तेनाव्यभिचारकारणं तत्त्वचिन्तकैरभिधानीयम्, [T. 211b.] न तु पादप्रसारिकाऽवलम्बनीया। तच्चाव्यभिचारकारणम् [S. 10a.] यथोक्तादन्यन्न युज्यते इति तद्विकला न हेतुलक्षणभाज इति। तथा चाह –

"संयोग्यादिषु येष्वस्ति प्रतिबन्धो न तादृशः।
न ते हेतव [इत्युक्तं] व्यभिचारस्य संभवात्॥"

[प्रमाणवा० ४. २०३] इति।

अत्र प्रयोगः – यस्य येन सह तादात्म्यतदुत्पत्ती न स्तो न स तदविनाभावी, यथा प्रमेयत्वादिरनित्यत्वादिना, न स्तश्च केनचित् तादात्म्यतदुत्पत्ती स्वभावकार्यव्यतिरेकिणामर्थानामिति व्यापकानुपलब्धिः। स्वभावानुपलब्धिस्तु स्वभावहेतावन्तर्भावितेति तस्याः [तादात्म्य]लक्षण एव प्रतिबन्धः। व्यापककारणानुपलब्धी तु तादात्म्यतदुत्पत्तिलक्षणप्रतिबन्धवशादेव व्याप्यकार्ययोर्निवृत्तिं साधयतः।

[तदुक्तम् –

"तस्मा]त् तन्मात्रसंबद्धः स्वभावो[२] भावमेव[३] वा।
निवर्तयेत्कारणं वा कार्यमव्यभिचारतः॥" [प्रमाणवा० ३.२२] इति।

तदेवं हेतुलक्षणं १ संख्यानियमः २ तदुपदर्शि[कं च प्रमाण]म् ३ अत्र [S. 10b.] श्लोके निर्दिष्टमिति।

[§ ३. अविनाभावनियमादित्यस्य प्रकारान्तरेण व्याख्यानम्।]

अथवा 'त्रिधैव सः' इति स पक्षधर्म्मस्त्रिप्रकार एव स्वभावकार्यानुपलम्भाख्यस्तदंशेन व्याप्तो नान्यः। [स] त्रिप्रकारस्त-

१. प्रतिबद्धम्। २. अनित्यादिकः। ३. व्याप्यं कृतकत्वादिकम्।

दंशेन व्याप्त एवेति सम्बन्धः। किं कारणम्?। "अविनाभावनियमात्"। अविनाभावस्य – व्याप्तेः। त्रिविध एव पक्षधर्म्मे नियमात्। त्रिविधस्य च पक्षधर्म्मस्याविनाभावनियमात्। तेन च [स्व]भावकार्यानुपलम्भात्मकत्रिविधपक्षधर्म्मव्यतिरिक्ता [T. 212a.] न तदंशेन व्याप्ता इति। त्रिविधश्च कार्यस्वभावानुपलब्धिरूपः पक्षधर्म्मस्तदंशेन व्याप्त एवेति न तस्याहेतुत्वमित्युक्तं भवति। ततस्त्रिविधहेतुबाह्येष्ववि[नाभा]वाद्धेतुव्यवहारं कुर्व्वन्तः, त्रिविधे च हेतावविनाभावस्यावश्यम्भावा[भावा]दहेतुत्वमाचक्षाणा निरस्ता भवन्ति। [S. 11a.]

[§ ४. हेत्वाभासलक्षणानभिधानेपि तत्सूचनम्।]

तत्रैतत् स्यात् – हेत्वाभासानामपि [लक्षणम]भिधानीयं तत्र शिष्याणां हेतुव्यवहारनिवृत्तय इत्याह "हेत्वाभासास्ततोऽपरे" इति। "ततः" पक्षधर्म्मस्तदंशेन व्याप्त इति हेतुलक्षणाद् "अपरे" अ[न्ये त]ल्लक्षणविकला हेत्वाभासा गम्यन्त एवेति न तल्लक्षणमुच्यते। तथा हि – "पक्षधर्मः" इत्युक्ते यत्र पक्षधर्म्मता नास्ति न स हेतुः। "तदंशेन व्याप्तः" इति वचने यत्र तदंशव्याप्तिविरहो विपर्ययव्याप्तेर्व्यापकस्य वा तत्रावश्यम्भावाभावात्, ते हेतुरूपविकलतया "हेत्वाभासाः" असिद्धविरुद्धानैकान्तिका गम्यन्त एव। तथा हि – यल्लक्षणो योऽर्थः शिष्यस्य व्युत्पादितः तल्लक्षणविरहिते न तद्व्यवहारं स्वयमेव प्रवर्तयिष्यति अ[तद्रूप]परिहारेणैव तद्रूपप्रतिपत्तेरिति न तत्र यत्नः फलवान् भवति। [S. 11b.] यत्त्वन्यत्र हेत्वाभासव्युत्पादनं तन्मन्दबुद्धीनधिकृत्य। इदं तु प्रकरणं विपुलमतीनुद्दिश्य प्रणीतम् "संक्षेपतः" इति वचनात्। [T. 212b.] त एव हि संक्षेपोक्तं यथावदवगन्तुं क्षमाः न मन्दमतयः, तेषां विस्तराभिधानमन्तरेण यथावदर्थप्रतिपत्तेरभावात्। अत एवार्थाक्षिप्तोपन्यासपूर्वकमेव हेत्वाभासलक्षणं तत्रोपवर्णितमिति। तदत्र व्याख्याने हेतुलक्षणं १ हेतुसंख्या-

१. चार्वाकाः। २. यद्रूप°।

नियमः २ तस्य च त्रिविधस्य हेतुत्वावधारणं ३ तदुभयकारणं ४ श्लिष्टनिर्द्देशा[ख्यानं ५] हेत्वाभासलक्षणानभिधानकारणं ६ चेति षडर्थाः श्लोकेऽत्र निर्दिष्टा इति।

किञ्च – इदमपि साधु दृश्यते – "त्रिधैव" कार्यस्वभावानुपलब्धि[भेद]भिन्नः स हेतुः। तथा, त्रिधैव पक्षधर्म्मान्वयव्यतिरेकरूपभेदात् "त्रिप्रकार एव" त्रिरूप एव। [S. 12a.] तदंशव्याप्तिवचनेनान्वयव्यतिरेकयोरभिधानात्। नाबाधितविषयत्वादिरूपान्तरयोग्यपि स हेतुः। कुतः? यतः "हेत्वाभासास्ततोऽपरे" "ततः" त्रिविधात् स्वभा[वा]देः, पक्षधर्म्मादिरूपत्रययोगिनो वा "अपरे" अन्ये संयोग्यादयोऽबाधितविषयत्वादिव्यतिरिक्तरूपवन्तो वा। कस्माद्?। अविनाभावस्य अत्रैव त्रिविध एव त्रिरूप एव च हेतौ नियमादन्यत्र स्वभावादिव्यतिरिक्त(क्ते) रूपान्तरसम्भविनि वा अविनाभावाभावादित्यर्थः। न हि स्वभावादिव्य[ति]रिक्ते प्रतिबन्धनिबन्धनस्याऽविनाभावस्य संभवः तद्वति वा रूपान्तरस्य। यथा चा(च) सत्येवाविनाभावे रूपा[T. 213a.]न्तरस्य न सम्भवस्तथा "षड्लक्षण" इत्यादिना वक्ष्यति।

[§ ५. दिङ्नागानुसारेण पक्षशब्दस्य धर्मिमात्रपरत्वम्।]

"पक्षधर्म्मः" इत्यत्र हेतुलक्षणेऽपि क्रियमाणे यदि समुदायः पक्षे(क्षो) गृह्यते योऽनुमानविषयस्तदा सर्व्वो हेतुरसिद्धः, सिद्धौ वाऽनुमानवैयर्थ्यमित्याह "पक्षो धर्म्मी" इति। कथं पुनः समुदायवचनः [S. 12b.] पक्षशब्दो धर्म्मिमात्रे वर्तत इति चेत्? "अवयवे समुदायोपचारात्"। पक्षाख्यस्य हि समुदायस्य द्वाववयवौ धर्म्मी धर्म्मश्च। तदत्र धर्म्मिमात्रे समुदायोपचारात् पक्षशब्दो वर्तते। तदेकदेशत्वं च समुदायोपचारनिमित्तमिति न साध्यधर्म्मिणोऽन्यत्र तत्प्रसङ्गः। तदुक्तम् –

"समुदायस्य साध्यत्वात् धर्म्ममात्रे [च] धर्म्मिणि।
अमुख्येऽप्येकदेशत्वात् साध्यत्वमुपचर्यते॥" इति।

---

१. तस्योभयस्य हेतुसंख्यानियमस्य हेतुत्वावधारणस्य कारणं अविनाभावनियम इत्येत......।

२. यस्य हि य एकदेशस्तत्र ताद्रूप्योपचारः, न हि पटस्यैकदेशे दग्धे कम्बलो दग्ध इत्युपचारः।

[ § ६. दिङ्नागव्याख्याने ईश्वरसेनाक्षेपस्तदुद्धारश्च। ]

तदेतदाचार्यीयं व्याख्यानमीश्वरसेनेनाक्षिप्तं परिहर्तुं पूर्व्वपक्षयन्नाह " प्रयो[जने] " त्यादिना।

" नत्वैं, प्रयोजनादिष्टं(ष्टं) मुख्यशब्दार्थलङ्घनम्। "

इत्यसति प्रयोजने नोपचारो युक्तः। ततो धर्म्मिधर्म्म इत्येवास्त्विति परः। " न " प्रयोजनाभावः। कुतः? सर्व्वेश्चासौ विवादाश्रयोऽन्यो वा धर्म्मी यस्तस्य प्रतिषेधोऽर्थः प्रयोजनं यस्योपचारस्य तद्भावस्तस्मात् " सर्व्वधर्म्मिधर्म्मप्रतिषेधार्थत्वादुपचारस्य " इति प्रयोजनाभावादित्यसिद्धो हेतुः।

क एवं सति गुणः? इति चेदाह [S. 13a.] [T. 213b.] — "एवं हि" उपचारे सति " चाक्षुषत्वादि " आदिग्रहणात् 'काकस्य कार्ष्ण्यात्' इत्यादि व्यधिकरणासिद्धं " परिहृतं " हेतुत्वेन निरस्तं " भवति "। धर्म्मिधर्म्म इति तु सामान्ये[नाभि]धानात् तेषामपि हेतुता स्या[1]दिति।

असत्युपचारे धर्म्मिग्रहणाद[2]प्येतत् सिध्यति। ततोऽनर्थक एवोपचार इत्याह परः — " धर्म्मवचनेनापि " न केवलं ध[र्म्मिव]चनेन। " धर्म्याश्रयसिद्धौ " धर्म्मिण आश्रयणमाश्रयः परिग्रहस्तस्य सिद्धिस्तस्यां सत्याम्। किं पुनर्द्धर्म्मस्य धर्म्याक्षेपनिमित्तमिति चे[3]त्? " परा[श्रयत्वा]त् " — धर्म्मिपरतन्त्रत्वात् " धर्म्मस्य " अवश्यमसौ धर्म्मिणमाक्षिपति। ततो धर्म्मिवचनमतिरिच्यमानं विशिष्टं साध्यधर्म्मिणमेव प्रतिपादयति, [न धर्म्मिमात्रम्]। स्यान्मतम् — धर्म्मिग्रहणाद् विशिष्टोऽत्र धर्म्मी कश्चिदभिप्रेत इति गम्येत। स तु साध्यधर्म्मीति कुतः? इत्याह — " प्रत्यासत्ते "न्यायात्। प्रत्यासत्तिश्चात्र धर्म्मि[वचनसामर्थ्याद]भिप्रेतेति गम्यते। व्या[4]सौ तु न्याये धर्म्मवचनेनापि धर्म्मिमात्राक्षेपा[5]त् धर्म्मिग्रहणवैयर्थ्यम्। [S. 13b.] प्रत्यासन्नता च साध्यधर्म्मिण एव, तत्र प्रथ-

१. घटकाकादिधर्म्मिधर्मत्वात् तेषाम्। २. व्यधिकरणासिद्धनिरसनम्। ३. चेदाह — "परा° — T. ४. यस्य कस्यचिद् धर्म्मिणो धर्मस्य हेतुत्वमिति व्याप्तिन्यायः। स यद्यभिप्रेतः स्यात् तदा। ५. धर्म्मिमात्राक्षेपश्च धर्म्मिपरतन्त्रत्वात् धर्म्मस्य।

मं हे[तूप]दर्शनात् । न प्रत्यासत्तेः साध्यधर्म्मिपरिग्रहः । कुतः ? । " दृष्टान्तधर्म्मिणोऽपि " न केवलं साध्यधर्म्मिणः प्रत्यासत्तेः । कदाचिद् व्याप्तिदर्शनपूर्व्वके प्रयोगे दृष्टान्तधर्म्मिण्यपि प्रथमं हेतुसद्भावोपदर्शनात् ।

यदि न प्रत्यासत्तेः साध्यधर्म्मिसिद्धिः पारिशेष्यात् तर्हि भविष्यति । यतः " तदंशव्याप्त्या " हेतुभूतया " दृष्टान्तधर्म्मिणि " धर्म्मस्य सत्व(त्त्व)सिद्धेः । नहि [T. 214a.] दृष्टान्तमन्तरेण हेतोः साध्येन व्याप्तिः प्रदर्शयितुं शक्यत इति मन्यते । ततो धर्म्मिग्रहणाद्व्यतिरिच्यमानात् साध्यधर्म्मिण एव परिग्रहः । " तदंशेन " इति च तच्छब्देन धर्म्मवचनाक्षिप्तो धर्म्मी सम्भन्त्स्यत इति तत्सम्बन्धनार्थमपि धर्म्मिग्रहणं नाऽऽशङ्कनीयम् । यत्र प्रयोजनान्तरं न सम्भवति स पारिशेष्यविषयः, धर्म्मिवचनस्य त्वन्यदपि प्रयोजनं सम्भाव्यते । तत् कुतः पारिशेष्यात् " धर्म्मिवचनात् साध्यधर्मिपरिग्रहः " ? इति मन्यमानः सिद्धान्तवाद्याह – " सिद्धे तदंशव्याप्त्या दृष्टान्तधर्म्मिणि सत्व(त्त्वे) पुनर्द्धर्मिणो [S. 14a.] वचनं दृष्टान्तधर्मिण एव यो धर्म्मः स हेतुरिति नियमार्थमाशङ्क्येत । ततश्च चाक्षुषत्वादय एव हेतवः स्युः, न कृतकत्वादय इति अनिष्टमेव स्यात् तस्मादुपचारः कर्तव्यः " इति ।

किं पुनस्तर्क्कशास्त्रे दृष्टं क्वचित् नियमार्थवचनमित्यत आह – " दृष्टं सजातीय एव " इत्यादि । " तत्र यः[2] सन् सजातीये[3] – " [न्यायमुख ७] इत्यत्राऽऽचार्यीये हेतुलक्षणे 'सजातीय ए[व] सत्व(त्त्व)मि'त्यवधारणेन सिद्धेऽपि हेतोर्व्यतिरेके । कुत्र ? । साध्याभावे । यदेतत् "असंस्तदत्यये" [न्यायमुख ७] इति असत्व(त्त्व)वचनं तन्नियमार्थमाचार्येण व्याख्यात[म् अ]सत्येव[4] नास्तिता यथा स्यात् नान्यत्र न विरुद्ध इति । तथेहापि धर्म्मिवचनं[5] तत्रैव भावनियमार्थमाशङ्क्येत । कदा ? सिद्धेऽपि दृष्टान्तधर्म्मिणि [स]त्वे(त्त्वे) । कुतः ? तदंश-

१. द्विविधो हि प्रयोगः – व्याप्तिपुरस्सरपक्षधर्म्मतोपसंहारवान्, पक्षधम्मतोपसंहारपूर्वकव्याप्तिवांश्च । यत् कृतकं तदनित्यम् । यथा घटः । कृतकश्च शब्द इ........ २. यः सन् सजातीये सपक्षे सन् विद्यमानस्तदत्यये साध्यस्याभावे विपक्षे च द्वेधाऽसन् सदसन् यदि न भवति । किन्त्वसन्नेव विपक्षे यदि भवति तदैव सम्यग्घेतुरिति भावः । ३. " यः सन् सजातीयेऽसन् तदत्यये " इति दिग्नागाचार्यीयं सूत्रं व्याख्यातमत्र । ४. अभावरूप अन्यरूपे विरुद्धरूपे वा नास्तिता यस्य स हेतुरित्यर्थः । ५. धर्मिधर्मवच – T. ।

व्याप्तिवचनात् । क्व भावनियमार्थम् ? "[त]त्रैव" दृष्टान्तधर्म्मिणि, [T. 214b.] सति चाशङ्कासम्भवे । कुतः ? । पारिशेष्यात् साध्यधर्म्मिपरिग्रहः । [S. 14b.] ननु अपक्षधर्म्मस्याहेतुत्वात् न नियमार्थताशङ्का । तथा हि – साध्यधर्म्मेण व्याप्तोऽपि धर्म्मो यदि क्वचिद् धर्म्मिण्युपलभ्येत तदा तत्रैव स्वव्यापकप्रतीतिं जनयेत् नान्यत्र [प्रत्या]सत्तिविप्रकर्षाभ्यां यथाक्रमम् । अनुपलब्धस्तु क्वचिद् धर्म्मिणि कथं गमकः ?[1] । तथाभावे वा सर्व्वत्र स्वव्यापकं गमयेत् प्रत्यासत्तिविप्रकर्षाभावादे[वेत्यत] आह – "तस्मात् सामर्थ्यात्" इत्यादि । यदिदमनन्तरं सामर्थ्यं समुपवर्ण्णितम् अस्मात् सामर्थ्यादर्थस्य साध्यधर्म्मिपरिग्रहलक्षणस्य भवति प्रतीति[पि]ट्वधियां श्रोतृणाम्, किन्त्वशब्दकमर्थं स्वयमनुसरतां प्रतिपत्तिगौरवं स्यात् । तदुपचारमात्रात् स्वयमशब्दकार्थाभ्यूहरहिताद् धर्म्मिधर्म्म इत्यने[न प]क्षधर्म्म इति "समाननिर्देशात् [प्रतिपत्तिगौरवं च] परिहृतं भवति ।" "प्रतिपत्तिगौरवं च" इति 'च'शब्देनैतदाह – ये परोपदेशमाकाङ्क्षन्ति तैरयमर्थो लक्षण[वच]नाद् बोद्धव्य इति । [S. 15a.]

यथालक्षणं प्रतीतेरपक्षधर्म्मो न हेतुरिति कुतः ? इयमाशङ्का । ततस्तेषां[2] लक्षणानुसारिणां नियमाशङ्कापरिहारार्थं चोपचारकर[णमि]ति ।

[ § ७. पक्षधर्म इत्यत्र नियमव्यवस्था । ]

इह व्यवच्छेदफलत्वात् शब्दप्रयोगस्यावश्यमेवावधारयितव्यम् । षष्ठीसमासाच्च पक्षधर्म्म इत्यत्र नान्यः समासः सम्भवति । तथा च पक्षस्यैव धर्म्म [इ]त्येवमवधारणात् तदंशव्याप्तिर्व्विरुध्यत इति विरुद्धलक्षणतामुद्भावयन्नाह – [T. 215a.] "पक्षस्य धर्म्मत्वे स्वं(तं) पक्षं विशेषणमन्यतो व्यवच्छेदकमपेक्षत" इति "तद्विशेषणापेक्षस्य" धर्म्मस्य "अन्यत्र" पक्षीकृतादन्यस्मिन् सपक्षे "अननुवृत्तिः" । तथा हि – यः पक्षेण विशेष्यते स पक्षस्यैव भवति नान्य[स्य] । यथा – यो देवदत्तस्य पुत्रः स तस्यैव पुत्रो न यज्ञदत्तस्यापि ।

१ अनुपलब्धस्यापि गमकत्वे । २. परोपदेशाकाङ्क्षिणाम् ।

ततोऽन्यत्राननुवृत्तेः " असाधारणता "–साधारणता न स्यात् । तदंशव्याप्तिविरोध [इ]ति यावत् । साधारणतायास्त्व(याश्च) तदंशव्याप्त्या प्रतिपादनात् । ततो यदि पक्षधर्म्मो न त[दंशे]न व्याप्तिः, [S. 15b.] अथ तदंशव्याप्तिर्न्न पक्षधर्म्म इति व्याहतं लक्षणमिति ।

ननु च तदंशव्याप्तिर्नाम साध्यधर्म्मस्य व्यापकस्य तत्र हेतौ सति तदाधारधर्म्मिणि भाव एव, व्याप्यस्य वा हेतोस्तत्रैव व्यापके साध्यधर्म्मे सत्येव भाव इति स्वसाध्याविनाभावलक्षणा वक्ष्यते । न चानयाऽवश्यं पक्षीकृतादन्यत्र वृत्तिराक्षिप्यते, यतो लक्षणव्याघात आशङ्क्येत । तथा हि – तत्रैव पक्षीकृते सत्येव साध्यधर्म्मे हेतुर्व्वर्त्तमानस्तदंशव्याप्तिं प्रतिपद्यत एव । यैव चास्य साध्यधर्म्मिणि स्वसाध्याविनाभाविता सैव गमकत्वे निबन्धनं नान्यधर्म्मिणि । स च स्वसाध्याविनाभावः प्रतिबन्धसाधकप्रमाणनिबन्धनः, न सपक्षे क्वचिद् बहुलं वा सहभावमात्रदर्शननिबन्धनः । न हि लोहलेख्यं वज्रम् पार्थिवत्वात् काष्ठादिवत् इति तदन्यत्र पार्थिवत्वस्य [T. 215b.] लोहलेख्यताऽविनाभावोऽपि तथाभावो भवति [S. 16a.] । यदि च पक्षीकृतादन्यत्रैव व्याप्तिरादर्शयितव्येति नियमस्तदा सत्वं(त्त्वं) कथं क्षणिकतां भावेषु प्रतिपादयेत् ? । यो हि सकलपदार्थव्यापिनीमक्ष(णीं क्ष)णिकतामिच्छति तं प्रति कस्यचित् [स]पक्षस्यैवाभावात् । यदपि कैश्चित् ज्वालादेः क्षणिकत्वमभ्युपगम्यते तदपि न प्रत्यक्षतः, क्षणविवेकस्यातिसूक्ष्मतयाऽनुपलक्षणात् । अन्यत्रैव च व्याप्तिरादर्शनीया न साध्यधर्म्मिण्यपीति कोऽयं न्यायः ? । एवं हि काल्पनिकत्वं हेतु[2]लक्षणस्य प्रतिपन्नं स्यात्, न वस्तुबलप्रवृत्तत्वम्, तस्मात् स्वसाध्यप्रतिबन्धाद् हेतुस्तेन व्याप्तः सिध्यति । स च विपर्यये बाधकप्रमाणवृत्त्या साध्यधर्म्मिण्यपि सिध्यतीति न किञ्चिदन्यत्रानुवृत्त्य-

१. वृत्तेः । २. अन्वयव्यतिरेकात्मकस्य ।

पेक्षया। अत एवान्यत्रोक्तम्[1] – [S. 16b.] "यत्[2] किंचिद्[3] दृष्टं[4] तस्य[5] यत्र[6] प्रतिवन्धः तद्विदः[7] तस्य[8] तद्[9] गमकं तत्रेति[10] वस्तुगतिः" इति।

यदपि "अनुमेयेऽथ तत्तुल्ये सद्भावः-" इत्यादि[11] लक्षणं तत्रापि साध्य[12]धर्म्मवानेव सपक्ष उच्यते। ततः सत्येव साध्यधर्म्मे वाऽस्तीत्येवंपरमेतत्। ततश्च तद्धर्म्मणः साध्यधर्म्मिणोऽपि वास्तवं सपक्षत्वं न व्यावर्त्तते। साध्यत्वेनेष्टतयेच्छाव्यवस्थितलक्षणेन पक्षत्वेन तस्य निराकर्त्तुमशक्यत्वात्। तस्मात् तदंशव्याप्तिवचनेन स्वसाध्याविनाभावित्वस्य प्रतिवन्धनिवन्धनस्यान्यथा तद्[13]योगादभिधानान्नावश्य[T. 216a.]मन्यत्र वृत्तिराक्षिप्तेति, कथमिदमाशङ्कितम्?। सत्यम्, नैवेदमाशङ्कनीयम्, यदि सर्व्वस्य हेतोः पक्षीकृते एव धर्म्मिणि स्वसाध्यप्रतिवन्धः प्रमाणतो निश्चेतुं शक्येत। [S. 17a.] यथा सत्त्वलक्षणस्य स्वभावहेतोः क्षणिकतायां साध्यायां तादात्म्यं विपर्यये वाधकप्रमाणवृत्त्या। कार्यहेतोस्तु प[क्षीकृतधर्म्मिणा। कस्यचित् स्वभावहेतोः] प्रत्यक्षानुपलम्भसाधनः प्रतिवन्धः कथं परोक्षे साध्यधर्म्मे गृह्येत?। तस्मात् तस्या[14]न्यत्रैव [प्रसिद्धिरिति तद्विशेषणापेक्षस्य तत्र अपेक्षणात् अन्य]त्रानुवृत्तेः असाधारणता सम्भवमात्रेणाशङ्किता। तदा ह्यन्यत्रावर्तमानः साध्यविपरीत[व्यतिरेक]................................................ तदुभयवहिर्भावायोगात् तद्धर्म्मिणः[15] साध्यवृत्तिव्यवच्छेदाभ्यां सर्व्वसंग्रहात् तत्र संशयहेतु[र्भवति। स्यान्मतम् – क्वचिदाश्रये सत्तायाः प्राक्प्रवृत्तपूर्वगृही[16]]तविस्मृतप्रतिबन्धसाधकप्रमाणस्मृतयेऽन्यत्र वृत्तिरपेक्षणीया। [S. 17b.] एतत् परिहरति। "न" इत्यादि। [नान्यत्रानुवृत्तिः। कुतः?

१. विनिश्चये। २. लिङ्गम्। ३. प्रदेशे। ४. निश्चितम्। ५ लिङ्गस्य। ६. वह्नयादौ। ७. प्रतिबन्धविदः। ८. वह्नेः। ९. लिङ्गम्। १०. यत्र दृष्टं तत्रैव नान्यत्र। ११. "अनुमेयेऽथ तत्तुल्ये सद्भावो नास्तिताऽ*सति। निश्चितानुपलम्भात्मकार्याख्या हेतवस्त्रयः॥" १२. स साध्यो धर्मो यस्य साध्यधर्मिणः। १३. स्वसाध्याविनाभाव°। १४. कार्यहेतोः स्वभावहेतोश्च तस्य......। १५. स चासौ धर्म्मी चेति समासः। "तद्धर्म्मणः" इति पाठान्तरम्, तत्र च सोऽसाधारणो धर्मो यस्य तस्येति व्याख्येयम्। स चासौ धर्मी च। तस्य। साध्यधर्मिण इत्यर्थः। १६. प्राक् प्रवृत्तं च तत् गृहीतं तद् विस्मृतं च तत् प्रतिबन्धसाधकप्रमाणं च तस्य स्मृतये इति समासः।

*विपक्षे

अयोगोऽसम्ब]न्धः तन्नवच्छेदेन विशेषणात् पक्षस्य। न ह्यन्य-योगव्यवच्छेदेनैव विशेषणं भवति। [ किन्तु अयोगव्यवच्छेदे-नापि। यत्र धर्मिणि ध]र्म्मस्य सद्भावः संदिह्यते तत्राऽयोग-व्यवच्छेदस्य न्यायप्राप्तत्वात्। अत्र च दृष्टान्तः[ "यथा चैत्रो धनुर्धर इति"। चैत्रे हि धनुर्धर]त्वं संदिह्यते किमस्ति नास्ति इति। ततश्चैत्रो धनुर्द्धर इति तत्सद्भावप्रतिपादिका श्रुतिः [T. 216b.] [पक्षान्तर-मधनुर्धरत्वं श्रोतुराशङ्कोपस्थापितं] निराकरोतीत्ययोगव्यवच्छे-दोऽत्र न्यायप्राप्तः। [S. 18a.] पराभिमतव्यवच्छेदनिराचिकीर्ष-याऽऽह – [ " न, अन्ययोगव्यवच्छेदेन विशेषणात् " अन्यत्राननुवृत्तेर]-साधारणतेति सम्बन्धः। अत्रापि दृष्टान्तो " यथा पार्थो धनुर्द्धर इति "। सामान्यशब्दोऽप्ययं ध[नुर्धरशब्दः प्रकरणसामर्थ्यादिना प्रकृष्टगुणवृत्तिः। इह पार्थे] हि धनुर्द्धरत्वं सिद्धमेवेति नायोगा-शङ्का। [तादृ]शं तु सातिशयं किमन्यत्रास्ति नास्तीत्यन्ययोग-[शङ्कायां श्रोतुः यदा पार्थो धनुर्धर इति उच्य]ते तदाऽन्ययोग-व्यवच्छेदो न्यायप्राप्तः, प्रतिपाद्याशङ्कोपस्थापितयोरेव पक्षयोः पर[स्परं विरोधात् एकनिर्देशेन अन्ययोगव्यवच्छेदस्य] न्याय-बलायातत्वात्। तदिह पक्षेऽस्त्ययं धर्म्मो न वेति संशीतौ [पक्ष-धर्म इत्युक्ते पक्षस्य धर्म एव [S. 18b.] नाधर्मः। धर्मश्च आश्रि-तत्वाद्विशेषणं तेनायोगो व्य]वच्छिद्यते नान्ययोगस्तदंशव्याप्त्या तस्य प्रतिपादित[त्वेन दृष्टान्ते संदेहा]भावात्।

" तदंशः " तद्धर्म इति]। तच्छब्देन पक्षः परामृश्यते न धर्म्मः, धर्म्मस्य धर्म्मासम्भवात्। अंशश्च धर्म्मो नैकदेशः, पक्ष[श-ब्देन धर्मिमात्रवचनात्। न तदंशः तस्य एक]देशाभावादिति।

[ § ८. व्याप्तेर्व्याप्यव्यापकोभयधर्मत्वम्। ]

तस्य पक्षधर्म्मस्य सतो व्याप्तिः – यो व्याप्नोति यश्च व्या-प्यते [तदुभयधर्म्मतया प्रतीतेः। यदा व्यापकधर्मतया विवक्ष्यते त]दा व्यापकस्य गम्यस्य। तत्रात [T. 217a.] सत्सप्तम्यर्थप्र-धानमेतत् नाधारप्रधानम्, धर्म्माणां धर्म्म[न्तरत्वाभावात्। ते-

१. व्याप्यव्यापक°। २. भाव एवेति सम्बन्धः।
३ हे.

नायमर्थः]–यत्र धर्म्मिणि व्याप्यमस्ति तत्र सर्व्वत्र भाव एव[1] व्यापकस्य स्वगतो धर्म्मो व्याप्तिः। ततश्च व्याप्यभावापेक्षया व्याप्यस्यैव व्याप्तताप्रतीतिः] [S. 19a.]। न त्वेवमवधार्यते। व्यापकस्यैव तत्र भाव इति। हेत्व[2]भावप्रसङ्गादव्यापकस्यापि मूर्त्तत्वादेस्तत्र भावात्। नापि 'तत्रैवे'[3][4]ति प्रयत्नानन्तरीयकत्वादेरहेतुतापत्तेः[5]। साधारणश्च हेतुः स्यात्। नित्यत्वस्य प्रमेयेष्वेव भावात्। यदा तु व्याप्यधर्म्मता(र्मतया) विवक्षा व्याप्तेस्तदा व्याप्यस्य वा गमकस्य तत्रैव व्यापके गम्ये सति। यत्र धर्म्मिणि व्यापकोऽस्ति तत्रैव भावो, न तदभावेऽपि व्याप्तिरिति। अत्रापि व्याप्यस्यैव तत्र भाव इत्यवधारणं हेत्व[6]भावप्रसक्तेरेव नाश्रितम्, अ[7]व्याप्यस्यापि तत्र भावात्। नापि व्याप्यस्य तत्र भाव एवेति सपक्षैकदेशवृ[8]त्तेरहेतुत्वप्राप्तेः[9]। साधारणस्य [च] हेतुत्वं स्यात्। प्रमेयत्वस्य नित्येष्ववश्यंभावादिति। व्याप्यव्यापकधर्म्मतासंवर्णनं तु व्याप्तेरुभयत्र [S. 19b.] तुल्यधर्म्मतयैकाकारा प्रतीतिः संयोगिवत् मा भूदिति प्रदर्शनार्थम्। तथा हि – पूर्व्वत्रायोगव्यवच्छेदेनावधारणम् [T. 217b.] उत्तरत्रान्ययोगव्यवच्छेदेनेति कुत उभयत्रैकाकारता व्याप्तेः?। तदुक्तम् –

" लिङ्गे लिङ्गी भवत्येव लिङ्गिन्येवेतरत् पुनः।
नियमस्य विपर्यासेऽसम्बन्धो लिङ्गलिङ्गिनोः॥ " इति।

एतेना[10]ऽऽचार्येण संयोगवलात् गमकत्वे यो दोष उक्तः –

" न च केनचिदंशेन न संयोगी हुताशनः।
धूमो वा स[11]र्व्वथा तेन प्राप्तं धूमात् प्रकाशनम्॥ " इति।

स इह नावतरतीत्याख्यातं भवति। तथा हि – संयोगस्य उभयत्राविशेषात् एष प्रसङ्गो न तु व्याप्तेः। न हि यादृशी

१. व्यापकस्येति। २. सर्व्वथोच्छेद°। ३. हेतौ। ४. अवधार्यते। ५. व्यापकस्यानित्यत्वादेरप्रयत्नानन्तरीयेष्वपि विद्युदादिषु भावात्। ६. उच्छेद°। ७. अनित्यत्वादेर्व्यापकस्येत्यर्थः। ८. प्रयत्नानन्तरीयकत्वादेः। ९. अनित्येष्वपि विद्युदादिषु व्याप्यस्य प्रयत्नानन्तरीकत्वस्याभावात्। १०. कारणेन। ११. सर्वथा गम्यगमकभावः प्राप्तः। अग्नेः सामान्यधर्मवद विशेषधर्मा अपि तार्ण्णपार्ण्णादयो गम्याः स्युः। धूमस्यापि धूमत्वपाण्डुत्वादिविशेषधर्मवद् द्रव्यत्वपार्थिवत्वादयोऽपि सामान्यधर्माः गमका भवेयुः संयोगस्योभयत्रापि तुल्यत्वात्।

व्यापकधर्म्मे व्याप्तिः तादृश्येव व्याप्यधर्म्मे इति। तथा चाह –

“ सम्बन्धो यद्यपि द्विष्ठः सहभाव्यङ्गलिङ्गिनोः।
आधाराधेयवद् वृत्तिस्तस्य संयोगिवन्न तु ॥ ” इति। [S. 20a.]

तेन व्यापको व्याप्यो न भवति व्याप्यश्च [न] व्यापक इति। “ तदंशेन व्याप्तो हेतुः ” इति वचनात् न संयोगिपक्षोक्तो दोषः। नाऽप्युभयोर्ग्गम्यगमकताप्रसङ्गः, यथोक्ताद् हेतुलक्षणाद् व्यापकस्यैव गम्यत्वप्रतीतेः, व्याप्यस्यैव गमकतासम्प्रत्ययादिति।

[ § ९. व्याप्तेरन्वयव्यतिरेकरूपयोस्सूचनम्। ]

यदि तर्हि “ पक्षधर्म्मस्तदंशेन व्याप्तः ” इत्येतद्धेतुलक्षणं ततः पक्षधर्म्मत्वं तदंशव्याप्तिश्चेति द्विरूपो हेतुः स्यात्, अन्यत्र च त्रिरूप उक्तः तत् कथं न व्याघातः? इत्याह “ एतेन ” तदंशव्याप्तिवचनेन “ अन्वयो व्यतिरेको वा उक्तः ” वेदितव्य इति सम्बन्धः [T. 218a.]। अन्वयव्यतिरेकरूपत्वाद् व्याप्तेरिति भावः। तथा हि – य[१] एव येना[२]न्वितो य[३]न्निवृत्तौ च निवर्त्तते स एव तेन[४] व्याप्त उच्यते इति तदात्मकत्वाद् व्याप्तेर्व्याप्तिवचनेनान्वयव्यतिरेकाभिधानम्। ततो व्याप्तिवचनेन रूपद्वयाभिधानात् न व्याघात इति। [S. 20b.]

[ § १०. व्याप्तेः प्रत्यक्षेणानुमानेन वा निश्चयः। ]

तौ च ज्ञापकहेत्वधिकारात् निश्चितौ। “ निश्चयश्च तयोर्नैकेनैव प्रमाणेन अपि तु यथास्वम्। ” यस्य यद् आत्मीयं प्रमाणं निश्चायकं तेन। यस्य च यत् निश्चायकं प्रमाणं तद् उत्तरत्र वक्ष्यति।

“ अन्वयो व्यतिरेको वा ” इति तुल्यकक्षतासूचनार्थो ‘वा’शब्दः। तेन साधर्म्यवैधर्म्यवतोः प्रयोगयोरेकेनैव द्वितीयगतेर्व्विधिप्रतिषेधरूपतया व्यावृत्तिभेदेऽपि परमार्थतस्तादात्म्यात् नोभयोपदर्शनमिति सूचितं भवति। व्यतिरेको हि साध्यनिवृत्तौ लिङ्गस्य निवृत्तिधर्म्मै[६]कत्वं स्वभावभूतो धर्म्म इत्यन्वयरूपता वस्तुतोऽस्य न विरुध्यते। “ पक्षधर्म्मश्च ” । किं?। “ यथास्वं प्रमाणेन निश्चितः ”

१. धू (धमः)। २. व (वह्निना)। ३. व (वह्निं)। ४. धू (धूमः)। ५. व (वह्निना)।
६. न तु निवृत्तिमात्रं तुच्छरूपम्।

उक्त इति सम्बन्धः। निश्चयप्रसङ्गेन सोऽप्यत्र प्रतिपाद्यते, निश्चितस्य गमकत्वमाख्यातुम्। [S. 21a. and S. 21b.] ........................

..............................................................................................

..............................................................................................

..............................................................................................

..............................................................................................

..............................................................................................

[1][S. 22a.] इति प्रदर्शनार्थो 'वा'शब्दः। "प्रत्यक्षेण च स्वयं स्वलक्षणाकारत्वेऽप्यनन्तरसामान्यविकल्पजननात् प्रसिद्धिः" उपचारतो निश्चय उच्यते – प्रत्यक्षपृष्ठभाविनो विकल्पस्यानधिगतार्थाधिगन्तृत्वाभावं दर्शयितुं। तेन यद्यपि सामान्यरूपं लिङ्गमवस्थाप्यते तथापि स्वलक्षणप्रतीतिरेव तद्व्यवस्थानिबन्धनमिति प्रत्यक्षतः पक्षधर्म्मस्य साध्यधर्म्मिणि प्रसिद्धिरुच्यते। एतच्चानन्तरमेव व्यक्तीकरिष्यते। "अनुमानतो वा साध्यधर्म्मिणि पक्षधर्म्मस्य प्रसिद्धि"र्निश्चयः। प्रमाणफल[2]भेदाच्च "अनुमानतः" अनुमानेन निश्चय इति आह। "अत्रोदाहरणे" यथाक्रमं "यथा प्रदेशे [Tt. 356a.] धूमस्य" धूमसामान्यस्य प्रत्यक्षतो निश्चयः इति।

[ § ११. उद्द्योतकरमतं निरस्य देशाद्यपेक्षकार्यहेतोर्गमकत्वोक्तिः। ]

यस्तु मन्यते – 'यः प्रदेशोऽग्निसम्बन्धी सोऽप्रत्यक्षो यस्तु प्रत्यक्षो नभोभागरूप आलोका[3]द्यात्मा धूमवत्तया दृश्यमानो न सोऽग्निमान् अतः कथं प्रदेशे धूमस्य प्रत्यक्षतः प्रसिद्धिः। [S. 22b.] तस्माद् धूम एव धर्म्मी युक्तः। साग्निरयं धूमः धूमत्वात् इत्येवं साध्यसाधनभावः' इति – तस्यापि साग्नेः धूमावयवस्याऽप्रत्यक्षत्वात्, परिदृश्यमानस्य चोर्ध्वभागवर्तिनोऽग्निना सहावृत्तेः, कथं धूमसामान्यस्य साध्यधर्म्मिणि प्रत्यक्षतः प्रसिद्धिः?। धूमावयवी प्रत्यक्ष इति चेत्; न, अवयवव्यतिरेकेण [T. 219b.] तस्याभावात्। लोकाध्यवसायतस्तस्यैकत्वे वा प्रदेशस्यापि ता-

१. ननु निर्विकल्पकेन प्रत्यक्षेण कथं सामान्यात्मनो लिङ्गस्य ग्रहणम्? इत्याह। २. बौद्धमते न प्रमित्यात्मकं प्रमाणफलं भिन्नं किञ्चिदस्ति। किन्तु भेदमभ्युपगम्य अनुमानेन निश्चय इति उच्यते। अत्र ह्ययं भ्रमो........। पर्यायः। ३. [आ]लोकतमसी नभः

वतः कल्पितमेकत्वं न निवार्यते । प्रदेशो एव च लोको[1]ऽग्निं प्रतिपद्यते, न धूमे । देशकालाद्यपेक्षयैव च कार्यहेतुर्गमकः । यदाह –

" इष्टं[2] विरुद्धकार्येऽपि देशकालाद्यपेक्षणम् ।
अन्यथा व्यभिचारि स्याद् भस्मेवाऽशीतसाधनः(धने) ॥ "

[ प्रमाणवा० ३.५] इति ।

" ततो देशाद्यपेक्षाऽग्निसाधने धूमवत्तया ।
गृह्यमाणस्य देशस्य धर्म्मिता न विरुध्यते ॥ "

यथा बलाकावतो वृक्षादेर्देशाद्यपेक्षया जलसाधनत्वमिति । " शब्दे वा कृतकत्वस्य " प्रत्ययभेदभेदित्वादिनानुमानेनेति ।

[ § १२. निर्विकल्पं कथं सामान्यग्राहीति कुमारिलाक्षेपस्योत्तरम् । ]

अत्र यथोपवर्णितं प्रत्यक्षतः [S. 23a.] पक्षधर्म्मस्य साध्यधर्म्मिणि प्रसिद्धावभिप्रायमप्रतिपद्यमानः कुमारिलः – 'कथं प्रत्यक्षेण(णा)विकल्पेन सामान्यात्मनो लिङ्गस्य धूमादेः स्वरूपग्र[हण]मपि तावद् युज्यते, धर्म्मिणो वा कुत एव तत्सम्बन्धग्रहणम् ' – इति प्रत्यवतस्थे । तेन हि " प्रत्यक्षपूर्व्वकत्वाच्चानुमानादेर्द्धर्म्मे प्रत्यनिमित्तत्वम् " [ शावरभाष्य १. १. ४. ] इत्येतद् भाष्यम् –

" कथं प्रत्यक्षपूर्व्वत्वमनुमानादिनो भवेत् ? ।
यद्वा स्मृत्यसमर्थत्वान्निर्व्विकल्पेन्द्रियस्य धीः ॥
न चाविकल्प्यलिङ्गस्य धर्म्मिसम्बन्धयोस्तथा ।
गृहीतिः " [ श्लोक० प्र० ८७,८८ ]

इत्याक्षिप्य –

" प्रत्यक्षाग्रहणं यत्तु लिङ्गादेरविकल्पनात् ।
तन्नेष्टत्वाद् विकल्पस्याप्यर्थरूपोपकारिणः ॥
अस्ति ह्यालोचनाज्ञानं प्रथमं निर्व्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥
ततः [T. 220a.] परं पुनर्व्वस्तु धर्म्मैर्जात्यादिभिर्यया ।
बुद्ध्यावसीयते साऽपि प्रत्यक्षत्वेन सम्मता ॥ "

[ श्लोक० प्र० १११, ११२, १२० ]

---

१. धूमकाले एव चाग्निः साध्यते न भस्मकाले । २. न केवलं कार्यहेतौ ।

उक्त इति सम्बन्धः । निश्चयप्रसङ्गेन सोऽप्यत्र प्रतिपाद्यते, निश्चितस्य गमकत्वमाख्यातुम् । [S. 21a. and S. 21b.] ....................

..........................................................................................

..........................................................................................

..........................................................................................

..........................................................................................

..........................................................................................

[S. 22a.] इति प्रदर्शनार्थो 'वा'शब्दः । "[1]प्रत्यक्षेण च स्वयं स्वलक्षणाकारत्वेऽप्यनन्तरसामान्यविकल्पजननात् प्रसिद्धिः " उपचारतो निश्चय उच्यते – प्रत्यक्षपृष्ठभाविनो विकल्पस्यानधिगतार्थाधिगन्तृत्वाभावं दर्शयितुं । तेन यद्यपि सामान्यरूपं लिङ्गमवस्थाप्यते तथापि स्वलक्षणप्रतीतिरेव तद्व्यवस्थानिबन्धनमिति प्रत्यक्षतः पक्षधर्म्मस्य साध्यधर्म्मिणि प्रसिद्धिरुच्यते । एतच्चानन्तरमेव व्यक्तीकरिष्यते । " अनुमानतो वा साध्यधर्म्मिणि पक्षधर्म्मस्य प्रसिद्धि"र्निश्चयः । प्रमाणफले[2]भेदाच्च " अनुमानतः " अनुमानेन निश्चय इति आह । " अत्रोदाहरणे " यथाक्रमं " यथा प्रदेशे [Tt. 356a.] धूमस्य " धूमसामान्यस्य प्रत्यक्षतो निश्चयः इति ।

[ § ११. उद्द्योतकरमतं निरस्य देशाद्यपेक्षकार्यहेतोर्गमकत्वोक्तिः । ]

यस्तु मन्यते – ' यः प्रदेशोऽग्निसम्बन्धी सोऽप्रत्यक्षो यस्तु प्रत्यक्षो नभोभागरूप आलोका[3]द्यात्मा धूमवत्तया दृश्यमानो न सोऽग्निमान् अतः कथं प्रदेशो धूमस्य प्रत्यक्षतः प्रसिद्धिः । [S. 22b.] तस्माद् धूम एव धर्म्मी युक्तः । साग्निरयं धूमः धूमत्वात् इत्येवं साध्यसाधनभावः ' इति – तस्यापि साग्नेः धूमावयवस्याऽप्रत्यक्षत्वात्, परिदृश्यमानस्य चोर्द्ध्वभागवर्तिनोऽग्निना सहावृत्तेः, कथं धूमसामान्यस्य साध्यधर्म्मिणि प्रत्यक्षतः प्रसिद्धिः ? । धूमावयवी प्रत्यक्ष इति चेत्; न, अवयवव्यतिरेकेण [T. 219b.] तस्याभावात् । लोकाध्यवसायतस्तस्यैकत्वे वा प्रदेशस्यापि ता-

१. ननु निर्विकल्पकेन प्रत्यक्षेण कथं सामान्यात्मनो लिङ्गस्य ग्रहणम् ? इत्याह । २. बौद्धमते न प्रमित्यात्मकं प्रमाणफलं भिन्नं किञ्चिदस्ति । किन्तु भेदमभ्युपगम्य अनुमानेन निश्चय इति उच्यते । अत्र त्वयं भ्रमो......... । पर्यायः । ३. [आ]लोकतमसी नभः

वतः कल्पितस्यैकत्वं न निवार्यते । प्रदेशे एव च लोकोऽग्निं प्रतिपद्यते, न धूमे । देशकालाद्यपेक्षयैव च कार्यहेतुर्गमकः। यदाह –

" इष्टं विरुद्धकार्येऽपि देशकालाद्यपेक्षणम् ।
अन्यथा व्यभिचारि स्याद् भस्मेवाऽशीतसाधनः(धने) ॥ "

[ प्रमाणवा० ३.५] इति ।

" ततो देशाद्यपेक्षाऽग्निसाधने धूमवत्तया ।
गृह्यमाणस्य देशस्य धर्म्मिता न विरुध्यते ॥ "

यथा बलाकावतो वृक्षादेर्देशाद्यपेक्षया जलसाधनत्वमिति। " शब्दे वा कृतकत्वस्य " प्रत्ययभेदभेदित्वादिनानुमानेनेति ।

[ § १२. निर्विकल्पं कथं सामान्यग्राहीति कुमारिलाक्षेपस्योत्तरम् । ]

अत्र यथोपवर्णितं प्रत्यक्षतः [S. 23a.] पक्षधर्म्मस्य साध्यधर्म्मिणि प्रसिद्धावभिप्रायमप्रतिपद्यमानः कुमारिलः – 'कथं प्रत्यक्षेण(णा)विकल्पेन सामान्यात्मनो लिङ्गस्य धूमादेः स्वरूपग्र[हण]मपि तावद् युज्यते, धर्म्मिणो वा कुत एव तत्सम्बन्धग्रहणम्' – इति प्रत्यवतस्थे । तेन हि " प्रत्यक्षपूर्व्वकत्वाच्चानुमानादेर्द्धर्म्मं प्रत्यनिमित्तत्वम् " [ शावरभाष्य १. १. ४. ] इत्येतद् भाष्यम् –

" कथं प्रत्यक्षपूर्व्वत्वमनुमानादिनो भवेत् ? ।
यदा स्मृत्यसमर्थत्वान्निर्व्विकल्पेन्द्रियस्य धीः ॥
न चाविकल्प्यलिङ्गस्य धर्म्मिसम्बन्धयोस्तथा ।
गृहीतिः " [ श्लोक० प्र० ८७,८८ ]

इत्याक्षिप्य –

" प्रत्यक्षाग्रहणं यत्तु लिङ्गादेरविकल्पनात् ।
तन्नेष्टत्वाद् विकल्पस्याप्यर्थरूपोपकारिणः ॥
अस्ति ह्यालोचनाज्ञानं प्रथमं निर्व्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥
ततः [T. 220a.] परं पुनर्व्वस्तु धर्म्मैर्जात्यादिभिर्यया ।
बुद्ध्यावसीयते साऽपि प्रत्यक्षत्वेन सम्मता ॥ "

[ श्लोक० प्र० १११, ११२, १२० ]

---

१. धूमकाले एव चाग्निः साध्यते न भस्मकाले । २. न केवलं कार्यहेतौ ।

इति ब्रुवता – 'सौगतानामेवायं लिङ्ग-धर्म्मि-तत्सम्बन्धाग्रहण-लक्षणो दोषो येषामविकल्पकमेव प्रत्यक्षं, नास्माकं सविकल्पमपि प्रत्यक्षमिच्छताम्' [S. 23b.] इत्युक्तं भवति। ततस्तदुपवर्णितदोषप्रतिविधानायाऽऽह – "सधूमं हि" [Tt. 356a.] इत्यादि। अयमत्र समुदायार्थः – प्रत्यक्षं हि पुरोवस्थितमौत्तराधर्येण धूमप्रदेशादिकं विधिरूपेण धूमादिस्वलक्षणं सकलसजातीयविजातीयव्यावृत्तं च स्वस्वभावव्यवस्थितेः सर्व्वासामर्थमात्राणां परस्परमसंकीर्ण्णरूपत्वात् तत्सामर्थ्यभावियथास्थानमनुकुर्व्वत्पाश्चात्त्यविधिप्रतिषेधविकल्पद्वयं जनयति येन धूमप्रदेशाख्यौ धर्म्मधर्म्मिणौ तयोश्चौत्तराधर्यम् 'एवमेतत् नान्यथा' इति विकल्पयति। यथानुभवमभ्यासपाटवादिप्रत्ययान्तरसहकारिणां विकल्पानामुदयात्। ततो धर्म्मधर्म्मिणोः स्वरूपनिश्चयः सम्बन्धनिश्चयश्च प्रत्यक्षनिबन्धनः सम्पद्यते। तथा हि – अयमेव धूमप्रदेशयोः सम्बन्धस्य निश्चयो यः 'अत्रायम्' इत्यध्यवसायः। स चाविकल्पेनापि प्रत्यक्षेण यथोक्तेन प्रकारेण सम्पादित एव। न चौत्तराधर्यावस्थिताद् वस्तुद्वयादन्य [S. 24a.] एव कश्चिदाधा[राधे]यभावलक्षणः सम्बन्धः यतः तस्य [T. 220b.] प्रत्यक्षेणाननुभूतत्वात् पश्चाद(द्) विकल्पनं स्यात्। वस्तुभूतस्य तस्यान्यत्र निषेधात्। तस्मादयं तदेव तथावस्थितमर्थद्वयमाश्रित्य कल्पनासमारोपित एव। तेन सम्बन्धः सम्बन्धीति भेदान्तरप्रतिक्षेपाप्रतिक्षेपाभ्यां धर्म्मधर्म्मितया व्यवहारो लोके न तु पारमार्थिकः। सामान्यव्यवहारोऽपि विजातीयव्यावृत्तानेव भावानास्(श्रि)त्य कल्पनासमारोपित एव प्रतन्यते। तेषामेव भिन्नानामप्यनुभवद्वारेण विजातीयव्यावृत्ततया प्रकृत्यैवैकाकारपरामर्शप्रत्ययहेतुत्वात्। तथा चाह –

"एकप्रत्यवमर्शार्थज्ञानाद्येकार्थसाधने।
भेदेऽपि नियताः केचित् स्वभावेनेन्द्रियादिवत्॥" [प्रमाणवा० ३.७२]

इति।

१. पुरोऽवस्थितार्थसामर्थ्यभाविप्रत्यक्ष° । २. औत्तराधर्यावस्थितम्। ३. धूमप्रदेशलक्षण°।

ततः सामान्यवि[कल्पजननद्वारा] [S. 24b.] तत्प्रतिभासिनो धूमाकारस्य विजातीयव्यावृ[त्तरूपस्य सामान्यरूपतया] प्रत्यक्षेणैव गृहीतत्वात् । न हि विजातीयव्यावृत्तिर्व्यावृत्तादन्यैव काचिद् यस्याः प्रत्यक्षेणाग्रहणं स्यात् । तस्माद् यथापरिदृष्टं धूमादिस्वलक्षणमेवान्यतो व्यावृ[त्तात्मना वि]कल्प्यत इति प्रतिपत्त्रध्यवसायवशात् स्मृतिरेव । द्विविधो विकल्पः प्रत्यक्षपृष्ठभावी वस्तुतः पुनर्निर्विषय एव । ततो यदाह - सामान्यस्याननुभूततया –

" स्मार्त्तमेतदभेदेन विज्ञानमिति यो वदेत् ।
तस्य वन्ध्यासुतेऽप्यस्ति नूनं स्मरणशक्तता ॥ " [ श्लोक० अनु० १६० ]

इति तदप्यपास्तमिति ॥

[ § १३. अनुमितेः सामान्यविषयत्वेऽनवस्थेति कुमारिलाक्षेपस्योत्तरम् । ]

अथवाऽपरं कुमारिलेनाभिहितम् – " स्व[T. 221a.]लक्षणविषयं प्रत्यक्षं सामान्यलक्षणविषयमनुमानम् " इति वचनात् धूमादिसामान्यमनुमानग्राह्यमेव । तत्र चानवस्था लिङ्गग्राहिणोऽप्यनुमानस्य तदन्यलिङ्गबलेनोत्पत्तेः । तस्य च सामान्यरूपतया [S. 25a.] तदन्यानुमानमानविषयत्वात् तथा तदन्यस्यापीति कस्यचिदेकस्यापि लिङ्गिनः प्रतिपत्तिः युगसहस्रैरपि न सम्भवति । किमङ्ग पुनरेकेन पुरुषायुष्केणेति । तथा चाह –

" सामान्यं नानुमानेन विना यस्य प्रतीयते ।
न च लिङ्गविनिर्मुक्तमनुमानं प्रवर्त्तते ॥
असामान्यस्य लिङ्गत्वं न च केनचिदिष्यते ।
न चानवगतं लिङ्गं किञ्चिदस्ति प्रकाशकम् ॥
तस्यापि चानुमानेन स्यादन्येन गतिः पुनः ।
तदुद्भूतिश्च लिङ्गात् स्यात् सामान्यज्ञानसंहितात् ॥
तस्य चाप्यनुमानत्वं लिङ्गेन च तदुद्भवः ।
अनुमानान्तरादेव ज्ञातेनैवं च कल्पने ॥
लिङ्गलिङ्ग्यनुमानानामानन्त्यादेकलिङ्गिनि ।
गतिर्युगसहस्रेषु बहुष्वपि न विद्यते ॥ " [ श्लोक० अनु० १४९–१५३ ]

इत्याशङ्क्याऽऽह [S. 25b.] – " सधूमं हि " इत्यादि । एवं मन्यते । यस्यानुमानमन्तरेण सामान्यं न प्रतीयते भवतु तस्यायं दोषः,

अस्माकं तु प्रत्यक्षपृष्ठभाविनाऽपि विकल्पेन प्रकृतिविभ्रमात् सामान्यं प्रतीयते । लिङ्गविकल्पस्य च स्वलक्षणदर्शनाश्रयत्वात् [T. 221b.] परम्परया वस्तुप्रतिबन्धादविसंवादकत्वम्, मणिप्रभायामिव मणिभ्रान्तेः । कार्यहेतुत्वमपि विकल्पावभासिनो धूमसामान्यस्य लिङ्गतयाऽवस्थाप्यमानस्य कार्यदर्शनाश्रयतया तदध्यवसायाच्च । न हि धूमस्वलक्षणस्य लिङ्गताऽवस्थापयितुं युक्ता, तस्यासाधारणस्य सपक्षे वृत्त्यभावात्, तदंशव्याप्त्ययोगात्, साध्यसाधनसंकल्पे वस्तुदर्शनासम्भवाच्चेति ।

यत्तूक्तम् [S. 26a.] 'सामान्यलक्षणविषयमनुमानम्' इति तत्र नैवमवधार्यते – सामान्यलक्षणविषयमनुमानमेवेति । प्रत्यक्षपृष्ठभाविनो विकल्पस्यापि तद्विषयत्वात् तद[1]न्यस्य च विकल्पस्य । किन्तु सामान्यलक्षणविषयमेवानुमानमित्यवधार्यते स्वलक्षणविषयत्वनिषेधार्थमिति । तत्र सह धूमेन वर्तत इति "सधूमः" । पक्षधर्म्मताप्रतिपादनार्थमेतदुक्तम् । विधिविकल्पस्य चैतदेव वीजम् । तं "सधूमं प्रदेशं दृष्टवतः" प्रत्यक्षेणेति सम्बन्धः । कीदृशम् "अर्थान्तरविविक्तरूपम्" अर्थान्तरैः सजातीयविजातीयैर्विविक्तमसङ्कीर्ण्णं रूपमस्येति विग्रहः । सर्व्वभावानां स्वस्वभावव्यवस्थितेः स्वभावसाङ्कर्याभावात् । अन्यथा सर्व्वस्य सर्वत्रोपयोगादतिप्रसङ्गः । [S. 26b.] अनेन प्रतिषेधविकल्पस्य निमित्तमाख्यातम्, सामान्योत्प्रेक्षायाश्च वीजम् । तदुक्तम् –

"इतरेतरभेदोऽन्त्य(स्य[2]) वीजं संज्ञा यदर्थिका" [T. 222a.]

[प्रमाणवा० ३.७१] इति ।

तथा हि – अर्थान्तरव्यावृत्तिं परस्परव्यावृत्तानामपि समानामुत्पश्यतो भिन्नमेषां रूपं तिरोधायाऽभिन्नं स्वभावमारोप[3]यन्ती कल्पनोत्पद्यते । "असाधारणात्मना" इति अर्थान्तरव्यावृत्तेन स्वभावेन । न तु यथा कुमारिलो मन्यते – 'अर्थान्तरविवेकाऽभावप्रमाणग्राह्यो न प्रत्यक्षावसेयः' इति । नहि वस्तुबलभाविना प्रत्यक्षेण अन्यथादर्शनसम्भवो भ्रान्तताप्रसङ्गात् । तेना-

१. स्मृत्यादेः । २. सामान्यस्य । ३. °यनू विकल्प उत्प° –T.

त्मना दृष्टवतः सतः पुंसोऽनन्तरं " स्मार्त्तं लिङ्गज्ञानमुत्पद्यते " इति सम्बन्धः । स्मृतिरेव " स्मार्त्तम् " । लिङ्गप्रतिभासि ज्ञानं " लिङ्गज्ञानम् " । अनेन प्रत्यक्षपृष्ठभाविनि विकल्पे यत्सामान्यमाभाति तस्य लिङ्गव्यवस्थामाह ।

परमार्थतः किं विषयं ? । " यथादृष्टभेदपरमार्थ[विषयम् "] [S. 27a. and S. 27b. ]........................................................................................................................................................................................................................

[ § १४. दर्शनविधिप्रतिषेधविकल्पेषु प्रामाण्याप्रामाण्यव्यवस्था । ]

[S. 28a.] [द]र्शनविधिप्रतिषेधविकल्पानां प्रमाणाप्रमाणचिन्तामारभते । " तत्र " तेषु दर्शनविधिप्रतिषेध[T. 223a.]विकल्पेषु । तदाद्यं यदेतत् –

" अस्ति ह्यालोचनाज्ञानं प्रथमम् –" [श्लोक० प्र० ११२] इति

आदौ विकल्पप्रवृत्तेर्भवमिति " आद्यम् " आख्यातम् " असाधारणविषयम् " स्वलक्षणविषयं दर्शनं तद् " एव " प्रमाणं न विधिप्रतिषेधविकल्पावपि । तस्यैव प्रमाणलक्षणयोगादितरयोश्च तदसम्भवात् । तथा हि – अनधिगतविषयत्वमर्थक्रियासाधनविषयत्वं च प्रमाणलक्षणम् । तद् दर्शनस्यैवास्ति ।

तत्र "आद्यम्" इत्यपूर्वार्थविज्ञानत्वमाख्यातम् " असाधारणविषयम् " इति अर्थक्रियासाधनविषयत्वम् । स्वलक्षणस्यैवार्थक्रियासाधनत्वात् ।

[ § १५. प्रतिषेधविकल्पस्याप्रामाण्यस्थापनम् । ]

तत्र प्रतिषेधविकल्पस्य तावत् प्रत्यक्षगृहीतार्थविषयतया स्मृतित्वं प्रतिपादयन्नाह – " तस्मिन् " असाधारणे " तथाभूते " अर्थान्तरैरसङ्कीर्ण्ण[S. 28b ]रूपे " दर्शनेन " असङ्कीर्ण्णरूपसामर्थ्यभाविना " दृष्टे " अधिगते "सति" । तथा हि – व्यतिरिक्तमपि भावांशादभावांशमिच्छता भावांशः स्वभावेनासङ्कीर्ण्णरूपः कल्पनीयः, [2]अन्यथा स एवाभावांशो न सिध्येत् । न च स्वभावे-

१. प्रथमविशेषणात् प्रतिषेधविकल्पस्याऽध्यवसेयार्थक्रियासाधनविषयत्वेऽपि न प्रामाण्यम् । द्वितीयात् तु धिधिविकल्पस्यानधिगतसामान्यविषयत्वेऽपि न प्रामाण्यम् । २. स्वभावेन संकीर्णत्वे ।

नासङ्कीर्ण्णरूपतायामसत्यां पृथग्भूताभावांशसद्भावेऽपि सा युक्तिमती, स्वहेतुबलायातस्य सङ्कीर्ण्णरूपस्याकिञ्चित्कराभावांशसम्भवेऽपि त्यागायोगात्। न[2] च तेनैव तद्विनाशनम्, विनाशहेत्वयोगस्य प्रतिपादयिष्यमाणत्वात्। तेन सङ्कीर्ण्णरूपविनाशने च वरं स्वहेतोरेव स्वभावतोऽसङ्कीर्ण्णरूपाणामुदयोऽस्तु किं परिव्राड्मो[T. 223b.]दकन्यायोपगमेन ?। तस्मात् स्वभावत एव भावानां पररूप[3]विकलत्वमभावांशः नान्यः। स च तथाभूतो दर्शनेन गृहीत एव। तस्मिंस्तथाभूते [S. 29a.] दृष्टे "स" पदार्थो "येन" वस्तुना "असाधारणः" समानस्वभावो न भवति तद्रूपविकलस्वभावत्वात् "तदसाधारणतां" तेन तेनातद्रूपेणासमानस्वभावतां एतदेव व्यनक्ति। "ततः" अर्थान्तराद् "भेदं" वैलक्षण्यमन्यरूपमिदं न भवतीति "अभिलपन्ती" अभिमुखयन्ती दृष्टवैलक्षण्ये प्रवर्तमानतया "स्मृतिरुत्पन्ना प्रत्यक्षबलेन"। यदि तु लिङ्गबलेनोत्पद्येत व्यवच्छेदविषयाऽपि स्मृति[4]र्न्न स्यादिति भावः। किं विषया ?। "अतद्व्यावृत्तिविषया।" तच्छब्देन दर्शनविषयस्य वस्तुनः परामर्शः कृतः। न तत् अतत् विजातीयम्। अतस्माद् व्यावृत्तिः अतद्व्यावृत्तिः। सा विषयो यस्याः सा तथा। यथादृष्ट एवार्थान्तरेभ्यो भेदो मया ऽपि कल्प्यते इति प्रतिपत्त्र(त्तर)ध्यवसायाच्चैवमुक्तम्। परामर्थतो निर्व्विषयत्वात्। [S. 29b.] सा "न प्रमाणं" नाभावप्रमाण[5]फलमित्यर्थः। न हि स्मृतिजनकत्वेन प्रमाणता युक्ता। कस्मात् न प्रमाणम् ?। यथादृष्टस्याकारोऽभ्यासपाटवादिप्रत्ययान्तरसापेक्षो विशेषस्तस्य ग्रहणात्। न हि दृष्टमित्येव विकल्पेन गृह्यते, दर्शनाविशेषात् सर्व्वाकारेषु विकल्पोदयप्रसङ्गात्, अपि तु कश्चिदेवाभ्यासादिप्रत्ययापेक्ष इत्याकारग्रहणेनाचष्टे।

भ[6]वतु यथादृष्टा[T. 224a.]कारग्रहणम्। प्रमाणं तु कस्मान्न भवतीति प[7]रस्य तदुक्तप्रमाणलक्षणविरहं दर्शयन्नाह– "प्राग्"

---

१. असंकीर्न(र्ण)रूपता। २. नाकिञ्चित्करोऽभावांशः तेनैव संकीर्ण्णरूपताविनाशनात् इति चेदाह। ३. पररूपस्य कल्पितत्वादभावांशः – T. ४. अपि त्वनुमानं स्यात्। ५. परैर्वस्तुदर्शनस्यैव नास्तिताविकल्पजनकत्वेनाभावप्रमाणतयोक्तत्वादित्थं व्याख्यातम्। ६. भवतापि यथा° T.। ७. आलोचनाज्ज्ञानादुत्तरस्य, कुमारिलस्य वा।

आलोचनाज्ञानोदयकाले " असाधारणम् " असङ्कीर्णरूपं दृष्ट्वा असाधारणमर्थान्तररूपं न भवतीति " अभिलपतः " विकल्पयतः " प्रतिषेधविकल्पस्यापूर्व्वार्थाधिगमाभावाद् " अपूर्व्वार्थविज्ञानताविरहात् [S. 30a.]। अपूर्व्वार्थविज्ञानं च प्रमाणं भवतीच्यत इति भावः ।

[ § १६. विधिविकल्पस्याप्यप्रामाण्यव्यवस्थापनम् । ]

यद्युक्तेन प्रकारेण प्रतिषेधविकल्पो न प्रमाणं, विधिविकल्पस्तर्हि प्रमाणं भविष्यति । नहि तस्यापूर्व्वार्थविज्ञानत्वाभावः सम्भवति । तत्प्रतिभासिनोऽनुगतस्य सामान्याकारस्यासाधारणरूपावलम्बिना दर्शनेनानधिगमात् तत् कुतोऽस्याप्रामाण्यम् । तदुक्तम् –

" ततः परं पुनर्वस्तु " [श्लोक० प्र० १२०]

इत्यादि । तदेतत् कुमारिलवचनमाशङ्क्य विधिविकल्पस्यापि प्रामाण्यमनुप(मप)नुदन्नाह – " अर्थक्रियासाधनस्य " स्वलक्षणस्य " आलोचनाज्ञानेन दर्शनादृदृष्टस्य पुनस्तत्साधनस्य " अर्थक्रियासाधनस्य स्वभावस्य " विकल्पेनाप्रतिपत्तेः विधिविकल्पो न प्रमाणम् "। यद्यपि[1] तेनानधिगतं सामान्यमधिगम्यत इति वर्ण्यते तथाऽपि तद् अर्थक्रियासाधनं न भवति इति तदधिगन्ता तैमिरिकादिज्ञानप्रख्यो विधिविकल्पो न प्रमाणम् । [S. 30b.]

" ततः परं पुनर्व्वस्तु धर्म्मैर्जात्यादिभिर्यया ।
बुध्या(द्ध्या)ऽवसीयते " [ श्लोक० प्र० १२० ]

इति चोच्यते । तत्र पुनर्व्वस्तुग्रहणेन निर्व्विकल्पकप्रत्यक्षविषयस्यैव वस्तुनो जात्यादि[T. 224b.]विशिष्टस्य विकल्पबुध्या(द्ध्या)ऽवसाय उच्यते । तस्य च निर्व्विकल्पज्ञानेनैवाधिगमात् न तत्र प्रामाण्यम्, जातेस्त्वर्थक्रियासाधनत्वाभावादनधिगताया अधिगमेऽपि केशादिज्ञानस्येव न प्रामाण्यम् । अत एवार्थक्रियासामर्थ्यविरहिणा सामान्येनेन्द्रियाणां सम्प्रयोगाभावात् प्रत्यक्षताऽप्यसंम्भविनी । 'च'कारेण स्मृतित्वाच्चेति पूर्वोक्तकारणसमुच्चयः । स्मृतित्वं चास्योत्तरत्र प्रतिपादयिष्यते । " अनुमानवद् "

---

१ सामान्यमात्रं वा विधिविकल्पेन गृह्यते तद्विशिष्टं वा स्वलक्षणम्, गत्यन्तराभावात् । तत्र पूर्वपक्षे आह " यद्यपि " इत्यादि । २. उत्तरस्मिन् पक्षे आह ।

इति वैधर्म्यदृष्टान्तः । यथा प्रत्यक्षेणार्थक्रियासाधने प्रदेशाख्ये धर्म्मिण्यधिगतेऽप्यनधिगतस्याग्नेरर्थक्रियासाधनस्य[1] सामान्याकारेण परोक्षस्य स्वलक्षणाकारेण प्रतिपत्तुमशक्यत्वात् प्रतिपत्ति-[2]र्नैवं विधिविकल्पेन सामान्याकारेणानधिगतमर्थक्रियासाधनमधिगम्यते, त[3]स्यालोचनाज्ञानेनैवाधिगमात् । [S. 31a.] तस्मिं(स्मिन्) स्मृतिरेवासाविति न प्रमाणमिति ।

[ § १७. अर्थक्रियासाधनविषयज्ञानस्यैव प्रामाण्यसमर्थनम् । ]

" अर्थक्रियासाधनविषयमेव प्रमाणम् " नेतरदिति कुत एतत् ? इति चेत् " अर्थक्रियार्थी हि " पुरुषो यस्मात् हिताहितप्राप्तिपरिहारार्थी " सर्वो " न काकतालीयन्यायेन कश्चिदेव, " प्रेक्षावान् " बुद्धिपुर्व्वकारी " प्रमाणमप्रमाणं वा " प्रमाणादेव सर्व्वदा प्रवर्त(र्ते)य अप्रमाणात् मा कदाचित्, विप्रलम्भसम्भवाद्, " उभयमन्वेषते " न व्यसनितया । ततोऽयमर्थक्रियासाधनविषयमेव प्रमाणं ब्रवीति, तस्यार्थक्रियासाधने प्रवृत्त्यङ्गत्वात् । नेतरत्, तद्विपरीतत्वात् । तथा हि – प्रमाणमविसंवादकमप्रतारकमुच्यते लोकेऽपि । [ T. 225a. ] यचार्थक्रियासाधनमनधिगच्छन्न तत्र प्रवर्तयति, कुत एव तत् प्रापयेत् तत् कथमविसंवादकतया प्रेक्षापूर्व्वकारी प्रमाणमाचक्षीत ? ।

[ § १८. सामान्यस्य विस्तरेणावस्तुत्वसाधनम् । ]

[S. 31b. ]यद्येवं सामान्यमप्यर्थक्रियासाधनमेव ततस्तद्विषयो विधिविकल्पः प्रमाणं भविष्यतीति चेद् आह – " न च " नैव "सामान्यं काञ्चित् " तत्साध्यतयोपगतामभिन्नज्ञानाभिधानलक्षणामन्यां वा व्यक्तिसाध्याम् " अर्थक्रियामुपकल्पयति " । कीदृशम् ?, " स्वलक्षणप्रतिपत्तेः " व्यक्तिप्रतिपत्तेरालोचनाज्ञानसंज्ञिताया " ऊर्द्धम् " व उत्तरकालं " तत्सामर्थ्योत्पन्नविकल्पविज्ञानग्राह्यम् " इति । तच्छब्देन स्वलक्षणप्रतिपत्तिः सम्बध्यते । ' ततः परं पुनर्व्वस्तु ' इ[4]त्यादि परैरभिधानादेवं ब्रवीति दर्शनपृष्ठभाविनो विकल्पस्य प्रत्यक्षप्रमाणतां निराकर्तुम् । सर्व्वमेव तु सामान्यं न काञ्चिदर्थक्रियामुपक-

१. °धनस्य सामा° T. २. अनुमानेनेति शेषः । ३. वस्तुनः । ४. क्रियाविशेपणमदः ।

ल्पयति। यत् तु सामान्यमनुमानविकल्पग्राह्यं तत् कारणव्यापकसम्बद्धलिङ्गनिश्चयद्वाराऽऽयातं सम्बद्धसम्बन्धादनधिगतार्थक्रियासाधनविषयामर्थक्रियामुपकल्पयतीति तद्विषयो विकल्पः प्रमाणम्। [S. 32a.] इदं तु नैवम्, अधिगतत्वादर्थक्रियासाधनस्यालोचनाज्ञानेनेति। अत्रोदाहरणम् " यथा—नीलं दृष्ट्वा नीलमिति ज्ञाने " प्रतिभासमानमिति शेषः। न सामान्यं काञ्चिदर्थक्रियामुपकल्पयतीति प्रकृतेन सम्बन्धः।

ननु च लिङ्गविकल्पप्रतिभासि [T. 225b.] सामान्यं प्रकृतम् तत् किमन्यदुदाह्रियते ?। सर्व्वस्य दर्शनपृष्ठभाविनो विकल्पस्य परोपगतां प्रत्यक्षप्रमाणतां तुल्यन्यायतया निराकर्तुम्। कां पुनर्न्नीलमिति विकल्पज्ञाने दर्शनपृष्ठभाविनि प्रतिभासमानं सामान्यमर्थक्रियां नोपकल्पयति ?। यदि व्यक्तिसाध्याम्; तदाऽन्योऽपि पदार्थोऽन्यदीयामर्थक्रियां नोपकल्पयतीति तस्याप्यनर्थक्रियासाधनत्वादवस्तुत्वप्रसङ्गः। अथ स्वसाध्याम्; तदसिद्धम्, अभिन्नज्ञानाभिधानलक्षणायाः स्वसाध्यायाः करणादित्याशङ्क्याह – " तदेव हि " [Tt. 356b.] यत् तदालोचनाज्ञानेनोपलब्धं [S. 32b.] " नीलस्वलक्षणम् " नीलव्यक्तिः " तथाविधसाध्यार्थक्रियाकारि "। तथाविधशब्देन सामान्यमत्राभिप्रेतम्, तादृशपर्यायत्वादस्य, साधारणरूपस्य च तादृशत्वात्। तेन तथाविधसाध्यां नीलसामान्यसाध्यामभिन्नज्ञानाभिधानलक्षणामर्थक्रियां कर्तुं शीलमस्य स्वलक्षणस्येति तत् तथोक्तम्।

एवं मन्यते – यथा भिन्ना अपि व्यक्तयः कयाचित् प्रत्यासत्त्या तदेककार्यप्रतिनियमलक्षणया तदेकमभिन्नं सामान्यमुपकुर्व्वन्ति, तदपरसामान्ययोगमन्तरेणापि, अन्यथाऽनवस्थाप्रसङ्गात्, तथाऽभिन्नज्ञानाभिधानात्मिकामप्यर्थक्रियां साधयिष्यन्ति। किमप्रमाणकेन प्रमाणबाधितेन च सामान्येनोपगतेन ?। [T. 226a.] तथा हि – अनुमानादिके ज्ञाने यथाविधमस्यास्पष्टं रूपं प्रतिभासते न तथाविधं व्यक्तिषु दृश्यमानासूपलक्षयामः। एकमेव हि व्यक्तिदर्शनकाले स्पष्टं नीलादिरूपं विभावयामः। [S. 33a.]

१. अनुपकृतस्य तदाधेयत्वाभावात्।

तत् कथमदृष्टकल्पनयाऽऽत्मानं स्वयमेव विप्रलभेमहि ?। व्यक्तिरूपसंसर्गाद् अयोगोलकवह्निवदविभावनमिति चेत्; न, सर्व्वत्र भेदाभेदव्यवस्थाया अभावप्रसङ्गात्। अस्योत्तरस्यान्यत्रापि सुलभत्वात्। न च सामान्यस्य द्वे रूपे स्तः स्पष्टमस्पष्टं च, येनैकेन दर्शने प्रतिभासेत अन्येनानुमानादिज्ञाने, पदार्थद्वयोपगमप्रसङ्गात्, प्रतिभासभेदस्यैव सर्वत्र भावभेदव्यवस्थानिबन्धनत्वात्, सामान्यस्यापरसामान्यप्रसक्तेर्निःसामान्यस्य चास्योपगमात्।

[ § १९. कुमारिलोक्तद्व्यात्मकबुद्धेर्निरसनम्। ]

एतेनैतदपि निरस्तम् यदाह –

" सर्व्ववस्तुषु बुद्धिश्च व्यावृत्त्यनुगमात्मिका।
जायते द्व्यात्मकत्वेन विना सा च न युज्यते ॥ " [ श्लोक० आकृति० ५ ]
" न चात्रान्यतरा भ्रान्तिरुपचारेण चेष्यते।
द्वैढत्वात् सर्व्वदा बुद्धेर्भ्रान्तिस्तद्भ्रान्तिवादिनाम् ॥ " [ श्लोक० आकृति० ७ ]

[S. 33b.] इति। यतो यदीन्द्रियबुद्धिमभिप्रेत्योच्यते; तदासिद्धम्, अस्पष्टस्य नीलाद्याकारस्य स्पष्टनीलाद्याभासायां तत्रानुपलक्षणात्, स्पष्टस्यापि च द्वितीयस्यानुयायिनः। तद्भावे च व्यक्तिद्वयान्तरालमप्याप्नुवतः कथं [T. 226b.] तदनुगमः ?। व्याप्तौ (व्यक्तौ) चोपलभ्यस्य सतः तत्रानुपलक्षणं कुतः ?। नहि तस्य व्यक्ताव्यक्तरूपसम्भवः, एकत्वात्। तथा चाह –

" व्यक्तावेकत्र सा व्यक्ताऽभेदात् सर्व्वत्रगा यदि।
जातिर्दृश्येत सर्व्वत्र [सापि न व्यक्त्यपेक्षिणी] ॥ " [ प्रमाणवा० ३.१५४, ५ ]

इति। एकत्रापि च व्यक्तावुपलभ्यमानायां सकलत्रैलोक्यव्यापि रूपं सकलस्वाश्रयव्यापि वा दृश्येत ?। न ह्येकस्याः किञ्चिद् दृष्टमदृष्टं वा नाम क्षणिकतादिवद्। दृष्टायामप्येकत्रैवाश्रये दर्शनावसायो न सर्व्वत्रेति चेत्; न, विकल्पेन तद्दर्शनाभ्युपगमात्। न हि निश्चयविषयीकृतं चानिश्चितं चेति युक्तम्। ततः सर्व्वगतरूपदर्शने सर्व्वार्थानां दर्शनप्रसङ्गः। न हि [S. 34a.] तद्दर्शने

१. सामान्यस्य। २. दूषणान्तरमाह। ३. अबाध्यमानत्वात्। ४. द्वितीयानुयायि[भावे]। ५. व्यक्तिद्वयं। ६. सामान्य.।

तत्सहचारिण[1] उपलभ्यस्य तदभिन्न[2]स्वभावस्य चानुपलम्भो युक्तः। ततः कथमिन्द्रियबुद्धेर्द्व्यात्मकता ?।

अथानुमानादिबुद्धि[3]म्; तस्यामपि स्वलक्षणाप्रतिभासनात् कुतो द्व्यात्मकत्वम् ?। न हि तासु सामान्यग्राहिणीष्वस्पष्टो व्यक्त्याकार इव लक्ष्यमाणः स्वलक्षणप्रतिभासः। तदभावेऽपि तासां भावात्। आकारान्तरेण च स्वज्ञाने[ऽ]प्रतिभासनात् अनेकाकारायोगाद् एकस्य, अतिप्रसङ्गा[4]च्च। तस्मान्नेयं भिन्नार्थग्राहिण्यभिन्ना सामान्यबुद्धिः प्रतिभाति स्वलक्षणोद्भवा सती। किन्त्वनादिवितथ[T. 227a.]विकल्पाभ्यासवासनाजनिता सती तथाऽवभासते। दृढत्वं च बुद्धेर्नाविनाशित्वम्, क्षणिकत्वाभ्युपगमात् किन्त्वबाध्यमानत्वम्। न चास्यास्तत् सम्भवति, लेशतो बाधकस्योक्तत्वात्। विस्तरतस्तु स्याद्वादभङ्गाद् यथावसरमिहैव तत्र तत्र विधास्यमानाद् बाधकमवधार्यम्। तस्माद् यथा व्यक्तयः सामान्यान्तरमन्तरेण तदेकमुपकुर्व्वन्ति तथाऽभिन्नज्ञानाभिधाने अपि प्रवर्तयिष्यन्तीति तदेव नीलस्वलक्षणं सामान्यसाध्यत्वोपगतार्थक्रियाकारि।

[ § २०. कुमारिलदत्तस्य दोषस्य सौगतबुद्ध्यबाधकत्वदर्शनम्। ]

य[5]स्तु – [S. 34b.]

“ सामान्यं नान्यदिष्टं चेत् त[6]स्य वृत्तेर्नियामकम्।
गोत्वेनाऽपि विना कस्माद् गोबुद्धिर्न नियम्यते॥
यथा तुल्येऽपि भिन्नत्वे केषुचिद् वृत्त्यवृत्तिता।
गोत्वादेरनिमित्ताऽपि तथा बुद्धिर्भविष्यति॥ ” [ श्लोक० आकृति० ३५, ३६ ]

इति पूर्व्वपक्षयित्वा –

“ विषयेण हि बुद्धीनां विना नोत्पत्तिरिष्यते।
विशेषादन्यदिच्छन्ति सामान्यं तेन तद् ध्रुवम्॥
ता हि तेन विनोत्पन्ना मिथ्या स्युर्विषयादृते।
न त्वन्ये[7]न विना वृत्तिः सामान्यस्येह दुष्यति॥ ”
[ श्लोक० आकृति० ३७, ३८ ]

१. भिन्नसामान्यवादिमतम्। २ अभिन्नसामान्यवादिमतम्। ३. ‘अभिप्रेत्योच्यते’ इति प्रागुक्तेन सम्बन्धः। ४. अनेकाकारस्यैकत्वे न क्वचिदनेकत्वं स्यादित्यर्थः। ५. मिथ्यादोष उक्त इति सम्बन्धः। ६. सामान्यस्य प्रतिनियतव्यक्तिषु वृत्तेर्नियामकम्। ७. सामान्येन।

इति मिथ्यात्वप्रसङ्गदोष उक्तो नासौ तथागतसमयनयावदातबुद्धीन् बाधते। सामान्यबुद्धीनां बाधकप्रत्ययनिबन्धनस्य मिथ्यात्वस्योपगतत्वात्। तथा हि –

" कस्मात् सास्नादिमत्स्वेव गोत्वं ? यस्मात् तदात्मकम्।
तादात्म्यमस्य कस्मात् चेत्, स्वभावादिति गम्यताम्॥ "

[ श्लोक० आकृति० ४७ ]

इति वचनात् [T. 227b.] 'व्यक्तिस्वभावं च सामान्यम्। न चासाधारणम् व्यक्त्युदयविनाशयोर्ध्या(योश्च) नोदयव्यययोगि' इत्ययुक्तम्, विरुद्धधर्म्माध्यासतो भेदप्रसङ्गादिति। आह च –

" तादात्म्यं चेन्मतं जातेर्व्यक्तिजन्मन्यजातता।
नाशेऽनाशश्च केनेष्टः[1] ? तद्वच्चा[2]ऽनन्वयो[3] न किम् ?॥
व्यक्तिजन्मन्यजाता[4] [S. 35a.] चेदागता नाश्रयान्तरात्।
प्रागासीन्न च तद्देशे सा तया सङ्गता कथम् ?॥
व्यक्तिनाशे न चेन्नष्टा गता व्यक्त्यन्तरं न च।
तच्छून्ये न स्थिता देशे सा जातिः क्वेति कथ्यताम्॥
व्यक्तेर्जन्मादियोगेऽपि यदि जातेः स नेष्यते।
तादात्म्यं कथमिष्टं स्यादनुपप्लुतचेतसाम्॥ " इति।

[ § २१. नीलविकल्पस्याप्रामाण्यसमर्थनम्। ]

यदि नीलस्वलक्षणमेव सामान्यसाध्यार्थक्रियाकारि तदेव तद्ध्यधिगच्छन् विकल्पः प्रमाणं भविष्यतीत्याह – " तच्च " नीलस्वलक्षणम्। " तेनात्मना " नीलसाध्यार्थक्रियाकारिणा स्वभावेन " दृष्टमेव " आलोचनाप्रत्ययेन। ततो निष्पादितक्रिये कर्म्मण्यविशेषाधायि विकल्पज्ञानं कथं प्रमाणं स्यात् ?। अथ मतम् – सामान्यमेव तर्ह्यधिगच्छन् नीलविकल्पः प्रमाणमस्तु। तच्च सामान्यमर्थक्रियाकारि। यतो नीलसाध्यामेवार्थक्रियां नीलेन सह सम्भूय करिष्यति। व्यक्तिस्वभावान्येव हि सामान्यानीत्याह – [S. 35b.] " न च " नैव " तत् स्वलक्षणग्रहणोत्तरकालभाविनो " नीलव्यक्तिदर्शनोत्तरकालं भवनशीलस्य। लिङ्गग्रहणोत्तरकालभाविनस्तु पूर्व्वोक्तेन प्रकारेण व्यक्तिसाध्यार्थक्रिया सामान्यस्य कल्पि-

१. हेतुना। २. व्यक्तिरिव। ३. अनुवृत्तिः। ४. जातिः। ५. साङ्ख्यमतमाकूत्याह।

तस्य व्यवस्थापयितुं शक्यत इति भावः । " नीलविकल्पस्य विषयेण " नीलसामान्येन [ T. 228a. ] " नीलसाध्यार्थक्रिया " रञ्जनादिका " क्रियते " । तस्य व्यक्तिस्वाभाव्यायोगे सति कल्पितरूपस्य तदसम्भवात् । न च नित्यस्वभावतामाबिभ्राणेन नीलविकल्पस्य विषयेण नीलसाध्याऽन्या वाऽर्थक्रिया क्रियते । क्रमयौगपद्यविरोधादिति मन्यते ।

[ § २२. मीमांसकसंमतप्रमाणलक्षणे दोषदर्शनम् । ]

तदेवं 'नीलं दृष्ट्वा नीलम्' इति ज्ञाने प्रतिभासमानं सामान्यं न काञ्चिदर्थक्रियामुपकल्पयतीति प्रसाध्य अनर्थक्रियाकारिविषयस्यापि विकल्पस्य प्रत्यक्षपृष्ठभाविनः प्रामाण्यप्रसङ्गादतिव्याप्तिरिति " तत्रापूर्वार्थविज्ञानम् " इति [S. 36a.] प्रमाणलक्षणे मीमांसकैर्विशेषणमुपादेयमिति दर्शयन्नाह – " तस्माद् " यत एवमनर्थक्रियासाधनविषयतया दर्शनपृष्ठभाविनो विकल्पस्य प्रामाण्यमयुक्तम् तस्मादस्मदभिमतं " प्रमाणमविसंवादि ज्ञानम् " [प्रमाणवा० १.३] इति प्रमाणलक्षणं व्युदस्य " अनधिगतार्थविषयं प्रमाणम्", " तत्रापूर्व्वार्थविज्ञानं प्रमाणम् " " इति अपि " एतस्मिन्नप्याहोपुरुषिकयाऽन्यस्मिं(स्मिन्) " प्रमाणलक्षणे " क्रियमाणे " अतिव्याप्तिपरिहाराय विशेषणीयं " विशेषणमुपादेयम् । कथं विशेषणीयम् " अनधिगते स्वलक्षणे इति " । अनेन हि विशेषणेनानुमानविकल्पस्य च प्रामाण्यं सिध्यति, आलोचनाज्ञानपृष्ठभाविनश्च विकल्पस्य प्रामाण्यं व्युदस्यत इति सर्व्वं सुस्थम् ।

तदेवं विधिविकल्पस्यानर्थक्रियासाधनविषयतयाऽनधिगतसामान्याधिगमेऽपि प्रामाण्यं निराकृत्य [T. 228b.] चशब्दसमुच्चितं स्मृतित्वं प्रतिषेधविकल्पेन साधारणमप्रामाण्यकारणं [S. 36b.] दर्शयन्नाह – " अधिगते तु स्वलक्षणे " आलोचनाज्ञानेन " तत्सामर्थ्यजन्मा " स्वलक्षणाधिगमबलभावी " विकल्पस्तदनुकारी " साक्षादनुत्पत्तेर्दर्शनसंस्काराधेयवशाचास्प(च स्प)ष्टनीलस्वलक्षणाकारानुकारी दृश्यविकल्प्ययोश्चैकीकरणादेवमुच्यते । वस्तुतस्तु

१. 'न च' इत्यनेन सम्बन्धः ।

न किञ्चिदसावनुकरोति। "स स्मृतिरेव"। कुतः? "कार्यतस्तद्विषयत्वात्" न परमार्थतः। कार्यमत्र स्वलक्षणे पुरुषस्य प्रवर्तनम्, तदध्यवसायश्च। यतश्च कार्यतः तद्विषयत्वात् स्मृतिरेवातो "न प्रमाणम्" दर्शनबलोत्पन्नो विकल्पः। तथा हि – स्मृतेरप्यनुभूतस्वलक्षणांशविषयाया न परमार्थतस्तद्विषयत्वम्। स्वलक्षणस्येन्द्रियबुद्धाविव स्फुटरूपतया स्मृतावप्रतिभासनात्। किन्तु यथोक्तात् कार्यत एव। तच्च विधिविकल्पेऽपि समानमिति कथमसौ स्मृतिर्न स्यादिति।

[ § २३. अनुमानस्य विधिविकल्पवैलक्षण्येन प्रामाण्यसमर्थनम्। ]

तत्रैतत् स्यात् – नन्वनुमानविकल्पः स्मृतिरूपोऽपि प्रमाणमिष्यते। [S. 37a.] तथा हि – यदेवानग्निव्यावृत्तं वस्तुमात्रं महानसादावनुभूतमासीत् तदेव प्रदेशविशेषे धूमदर्शनात् स्मर्यते। तद्वद् विधिविकल्पोऽपि प्रमाणं भविष्यतीत्यत आह – "अनधिगत"स्य "वस्तु"नो "रूप"स्य "अनधिगतेरिति"। एवम्मन्यते – यत् महानसादावनग्निव्यावृत्तं वस्तुमात्रं प्रागनुभूतं न तत् तद्देशादिसम्बन्धितयैवानुमानविकल्पेन [T. 229a.] स्मर्यते किन्तु यत्र प्रदेशे प्रागननुभूतं तत्सम्बन्धितया। ततः साध्यधर्म्मिदृष्टान्तधर्म्मिग्राहिदर्शनद्वयानधिगतस्यानग्निव्यावृत्तस्य वस्तुरूपस्यायोगव्यवच्छेदेनाधिगमाद् युक्तमस्य प्रामाण्यम्। न तु दर्शनपृष्ठभाविनो विकल्पस्य, तद्विपरीतत्वादिति। [S. 37b.]

[ § २४. प्रमाणव्यवस्थायाः वस्त्वधिष्ठानत्वं, स्वलक्षणस्यैव च वस्तुत्वम्। ]

यदि नामानधिगतं वस्तुरूपं नाधिगच्छति, प्रमाणं तु कस्मान्न भवतीति चेद् आह – "वस्त्वधिष्ठानत्वात्" इत्यादि। वस्त्वधिष्ठानत्वं च "प्रमाणव्यवस्थायाः" प्रमाणव्यापारविषयमभिप्रेत्योच्यते नालम्बनलक्षणम्, अन्यथाऽनुमानस्य परिकल्पितसामान्यालम्बनतया वस्त्वधिष्ठानत्वाभावादव्यापिनी प्रमाणव्यवस्था स्याद्[3]। यदि वस्त्वधिष्ठाना प्रमाणव्यवस्था कथं विप्रकृष्टविष-

१. प्रवर्तकत्व०। २. ग्राह्य०। ३. नास्ति प्रधानम्, उपलब्धिलक्षणप्राप्तस्यानुपलब्धेः।

याया अनुपलब्धेः प्रामाण्यम् इति चेत्; तत्रापि प्रधानादिविकल्पस्यैव भावानुपादानतया साध्यत्वात् तस्या अपि वस्त्वधिष्ठानताऽस्त्येवेत्यदोषः ।

अथ वस्त्वधिष्ठानैव प्रमाणव्यवस्थेति कुत एतद् ? इत्याह –" अर्थक्रियायां " सुखदुःखलक्षणायां यद् [S. 38a.] " योग्यं " शक्तं " तद्विषयत्वात् तदर्थिनाम् " अर्थक्रियार्थिनां " प्रवृत्तेः " प्राप्तित्यागलक्षणायाः । यदि नामार्थक्रियायोग्ये तदर्थिनां प्रवृत्तिस्तथापि कथं वस्त्वधिष्ठाना प्रमाणव्यवस्था ?, अर्थक्रियायोग्याधिष्ठाना हि तथा सति स्यात् इति चेत्; आह – " अर्थक्रिया"यां यद् " योग्यं " त"लक्षण"मेव " हि वस्तु " । ततोऽर्थक्रियायोग्याधिष्ठानत्वेन वस्त्वधिष्ठानत्वं कथं न स्यात् इति भावः । [T. 229b.]

इदं च वस्त्वाश्रयेण प्रमाणव्यवस्थाप्रतिपादनमनधिगते स्वलक्षण इत्युक्ते कदाचित् परो ब्रूयात् – वस्तुमात्रनिबन्धना हि प्रमाणव्यवस्था न स्वलक्षणाश्रयैव । ततो यद्यप्यनधिगतं स्वलक्षणं नाधिगच्छति तथाप्यनधिगतवस्तुरूपमधिगच्छतो विकल्पस्य प्रामाण्यं भविष्यतीति तदसिद्धतोद्भावनार्थमुक्तम् – " अनधिगतवस्तुरूपे"त्यादि । [S. 38b.] तदसिद्धतोद्भावने चानधिगतवस्तुरूपाधिगन्तुरेव प्रामाण्यं नेतरस्येति कुतः ? इति पर्यनुयोगे " अर्थक्रियायोग्ये"त्यादि उक्तम् । तथा च वस्तुविषयमपि प्रामाण्यं ब्रुवता स्वलक्षणविषयमेवोक्तं भवति, तस्यैवार्थक्रियासामर्थ्यलक्षणत्वात्, सामान्यस्य च तद्विपरीतत्वात् इति मन्यते ।

पुनरप्यनुभवोत्तरकालभाविनो नीलविकल्पस्य प्रामाण्यमपनेतुमुपचयहेतुमाह – " ततोऽपि " यथोक्ताद् विकल्पाद् न केवलं नीलस्वलक्षणानुभवाद् " वस्तुन्येव " स्वलक्षण एव " तदध्यवसायेन " स्वलक्षणाध्यवसायेन अन्यथा तत्र प्रवृत्त्ययोगात् " पुरुषस्य प्रवृत्तेः " अधिगते स्वलक्षणे तत्सामर्थ्यजन्मा विकल्पो न प्रमाणमिति सम्बन्धः । पूर्वमनधिगतवस्तुरूपानधिगतेरप्रामाण्यमुक्तम् । अधुना त्वधिगतस्यैवाधिगमादिति [S. 39a.] विधिप्रति-

१. प्रधानविकल्पो वस्तुकारणो न भवति, तदभावेऽपि भावात्, खरविषाणादिविकल्पवत् ।

षेधरूपतयोपपत्त्योर्भेदः[1]। यद्वा "कार्यतस्तद्विषयत्वात्" इति यदुक्तं तदेवोपचयहेतुव्याजेन स्फुटीकृतम्।

[§ २५. विकल्पस्य दर्शनात् पृथक्प्रामाण्याभावः।]

[T. 230a.] यदि नाम तदध्यवसायेन वस्तुन्येव पुरुषस्य प्रवृत्तिस्तथाप्यनधिगतसामान्यग्राहिणोऽस्य दर्शनात् पृथक् प्रामाण्यं किमिति नेष्यते? इति चेत्; आह – "प्रवृत्तौ" स्वलक्षण एव सत्यां "प्रत्यक्षेण" आलोचनाज्ञानाख्येन "अभिन्नयोगक्षेमत्वात्"। योगः अप्राप्तस्य विषयस्य परिच्छेदलक्षणा प्राप्तिः, क्षेमः तदर्थक्रियानुष्ठानलक्षणं परिपालनम्। अभिन्नौ योगक्षेमावस्येति स तथोक्तः। तत्र विकल्पस्य निर्विकल्पप्रत्यक्षेणाभिन्नो योगः स्वलक्षणाध्यवसायतः। अभिन्नः क्षेम आलोचनाविज्ञानादिव विकल्पादपि स्वलक्षण एव प्रवृत्तेः। अयमस्याभिप्रायः – यदि विकल्पो निर्विकल्पचेतसः प्रमेयान्तरविषयस्तदा तत्रैव पुरुषं प्रवर्तयतु तत्साध्यामर्थक्रियामधिगन्तुम्। नैव वा प्रवर्तयेत्, तद्विषयत्वाभिमतस्य सामान्यस्याभिन्नज्ञानलक्षणाया एवार्थक्रियाया उपगमाद् [S. 39b.] विकल्पोदयादेव च तत्सिद्धेः। नहि नीलानुभवात् प्रमेयान्तरविषयाः पीतादिप्रत्ययाः पुरुषं नीलवस्तुनि प्रवर्तयन्ति, साधितार्थक्रिया वा काचिदपीति। तस्मादालोचनाज्ञानान्नैवायं प्रमेयान्तरविषयः। विशेषेण यैरेवं व्याख्यायते –

> "निर्विकल्पकबोधेन[2] द्व्यात्मकस्यापि वस्तुनः।
> ग्रहणम्" [श्लोक० प्र० ११८]

इति[3]। ततो नीलदर्शनस्यैव निर्विकल्पस्य प्रामाण्यं युक्तम्, न तदभिन्नोपयोगस्य [T. 230b.] स्मृतेरिव विकल्पस्यापि दर्शनात् पृथगेव[4]। अन्यथा निष्फलां प्रमाणान्तरकल्पनां कुर्वतः स्मृतीच्छाद्वेषप्रयत्नादि प्रमाणमनुषज्यत इति प्रमाणानामियत्ता विशीर्येतेति।

१. युक्त्योः। २. अत्र 'न'कारस्योपरि प्रतावेव '३' इति लिखितं वर्तते। ३. विशेषेण तेषां मते नैवायं प्रमेयान्तरविषय इति संबंधः। ४. प्रामाण्यं युक्तम्।

[ § २६. धारावाहिकज्ञानेषु योगितदितरापेक्षया प्रामाण्याप्रामाण्ये । ]

यदैकस्मिन्नेव नीलादिवस्तुनि [S. 40a.] धारावाहीनीन्द्रियज्ञानान्युत्पद्यन्ते तदा पूर्व्वेणाभिन्नयोगक्षेमत्वाद् उत्तरेषामिन्द्रियज्ञानानामप्रामाण्यप्रसङ्गः। न चैवम्, अतोऽनेकान्त इति प्रमाणसंप्लववादी दर्शयन्नाह – "पूर्व्वप्रत्यक्षक्षणेन" इत्यादि। एतत् परिहरति – "न", उत्तरेषां प्रामाण्यप्रसङ्गः। कुतः?। "नानायोगक्षेमत्वात्"। तथा हि – प्रतिक्षणं विषयपरिच्छेदलक्षणो योगः, तदर्थक्रियानुष्ठानलक्षणश्च क्षेमः परिपालनरूपो भिद्यते। ततो विपक्षे वृत्त्यभावात् न हेतुरनैकान्तिकः। कदा नानायोगक्षेमत्वम्?। "क्षणविशेषसाध्यार्थवाञ्छायाम्"। यदा क्षणविशेषसाध्येऽर्थे हिताहितलक्षणे वाञ्छा प्राप्तिपरिहारेच्छा योगिनां परोपकारमुद्दिश्य भवति कस्यचित् कथञ्चित् क्वचिदुपयोगात् तदा[3]। यथा दर्शनमार्गे[4] दुःखे[5] धर्म्मज्ञान[6]क्षान्तिरिमानामनुशयानां वासनां[7] निरोधयति, तद्विरुद्धाशयोत्पादनात्। दुःखे धर्म्मज्ञानं क्लेशविविक्ततालक्षणां निर्व्वाणप्राप्तिमुत्पादयति, [S. 40b.] अनुशयविरुद्धाशयदार्ढ्योत्पादनात्। तत एषां ग्राहकाणि परचित्त[10]ज्ञानानि पृथगेव प्रमाणानि। [T. 231a.] परहिताधानदीक्षावतां च समस्तवस्तुविस्तरव्यापिज्ञानालोकावभासितान्तरात्मनां भगवतां कश्चिदेवार्थक्षणः कस्यचिदेव परार्थस्यानु[11]ग्राहको विबन्धको वेति सर्व्वभावान् प्रतिक्षणं वीक्षमाणानामध्यक्षचेतसां तद्विषयक्षणानां भिन्नार्थक्रियासूपयोगतो नानायोगक्षेमत्वात्। तद् यदि प्रति[12]क्षणं क्षणविवेकदर्शिनोऽधिकृत्योच्यते तदा भिन्नोपयोगितया पृथक् प्रामाण्यात् नानेकान्तः। अथ सर्व्वपदार्थेष्वेकत्वाऽध्यवसायिनः सांव्यवहारिकान् पुरुषानभिप्रेत्योच्यते तदा सकलमेव [S. 41a.]

१. योगिज्ञानानि क्षणविवर्तलक्षकाणीति कृत्वा न एकयोगक्षेमाणि, विवक्षितदेवदत्तादेः प्रथमः क्षणो धर्म्मायोग्यः द्वितीयस्तु मनागयोग्यः तृतीयस्तु योग्य इति ज्ञायते योगिना। ततश्च क्षणाः भिन्नाः अर्थक्रिया च भिन्ना। २. ज्ञानक्षणस्य। ३. योगिनि। ४. बौद्धमते। ५. अवज्ञाकारिणि म्लेच्छादौ संसारिस्कन्धे। ६. [धर्मज्ञा]नेन क्षान्तिः। समर्थनं यत् सह्यते इत्यर्थः। ७. क्लेशजननशक्तिम्। ८. वैराग्यज्ञानम्। ९. धर्मज्ञानक्षान्त्यादिचित्तानाम्। १०. योगिनः सत्कानि। ११. कश्चित् परचित्तक्षणं दृष्ट्वा भगवान् तस्यैवानुग्रहाय प्रवर्तते। कश्चित्तु दृष्ट्वा औदासीन्यमालम्बते। कश्चित्त्ववबोध्य निग्रहाय। १२. प्रत्यक्षणाम् –T.

नीलसन्तानमेकमर्थं स्थिररूपं तत्साध्यां चार्थक्रियामेकात्मिकामध्यवस्यन्तीति प्रामाण्यमप्युत्तरेषामनिष्टमेवेति कुतोऽनेकान्तः ? इति दर्शयन्नाह – “ साधारणे हि ” इति । तत्सन्तानवर्त्तिनां सर्व्वक्षणानामेकत्वेनाध्यवसितानां व्यवहर्तृभिर्यत् साधारणं प्रतिक्षणमन्यान्यकारणतया विभिन्नमपि परमार्थतो विपर्यासादेकतयाऽभिनिविष्टं रञ्जनादिकं नीलादिककार्यं तत्र “न तेषाम्” उत्तरेषां ज्ञानक्षणानां “सामर्थ्य”स्यार्थप्रापणशक्ते“र्भेदः” । पूर्व्वप्रत्यक्षक्षणविषय एव तेभ्योऽपि प्रवृत्तेराद्यस्यैव तत्र प्रामाण्यम् । तथा हि – अर्थक्रियार्थिनां तत्साधनप्रापणसमर्थे ज्ञाने प्रमाणव्यवहारं [T. 231b.] कुर्व्वतामविकलधियामर्थक्रियासाधनभेदादेव प्रामाण्यभेदव्यवहारो ज्ञानेषु युक्तः [S. 41b.] अन्यथा स्मृत्यादेरपि प्रामाण्यप्रसङ्गः कथमपाक्रियेत ?, आद्रियेत वा निष्फला प्रमाणव्यवस्था प्रेक्षावता इति ? ।

केषामिव साधारणे कार्ये[1] न सामर्थ्यभेदः ? इत्याह[2] – “अपरापरे ” च ते “धूमा”श्च तैः “प्रमिता”श्च ते “सन्निकृष्टाग्नय”श्च तेष्विव तद्विषयाणामिव “अनुमानज्ञानानामग्निमात्रसाध्येऽर्थे” सन्धुक्षणादिके वाञ्छिते तदर्थक्रियासाधनप्रापणव्यक्तिभेदाभावात् यथा प्रामाण्यभेदो न युक्तो विदुषां तथाऽत्रापि । यदा तु पञ्चतपस्तनुकामो भवति तदाऽपरापरधूमप्रमितसन्निकृष्टाग्निविषयाणामप्यनुमानानां सामर्थ्यभेदात् प्रामाण्यमनिवारितमेव ।

[ § २७ विकल्पप्रामाण्यनिरासस्य फलितार्थः । ]

तदेवं ‘ यथा नीलं दृष्ट्वा नीलमिति ज्ञान(म्) ’ इत्युदाहरणे नीलविकल्पस्य प्रामाण्यं निराकृत्य प्रकृते योजयन्नाह – “ एतेन ” नीलस्वलक्षणदर्शनोत्तरकालभाविनो नीलविकल्पस्य प्रामाण्यनिराकरणेन ।

“ तन्नेष्टत्वाद् विकल्पस्याप्यर्थरूपोपकारिणः । ” [ श्लोक० प्र० १११ ]

इति ब्रुवता कुमारिलेन प्रदे[S. 42a.]शादिदर्शनोत्तरकालभा-

१. कार्यं । २. इत्याह–“अपरापरधूम” इति । “अपरापरे” च–T.

विनो धर्म्मिविकल्पस्य, तथा सम्बन्धप्रतिपत्तिकालेऽग्निस्वलक्षणदर्शनसामर्थ्यभाविनोऽग्निसामान्यविषयस्य साध्यधर्म्मविकल्पस्य, धूमालोचनाज्ञानपृष्ठभाविना धूमसामान्यावभासिनो लिङ्गविकल्पस्य, आदिग्रहणाद् धर्म्म[T. 232a.]धर्म्मिसम्बन्धविकल्पस्य च प्रमाणपृष्ठभाविनो " धर्म्म्यादिस्वरूपमात्रविषयालोचनाख्यप्रत्यक्षपूर्व्वकस्य "

" न च्चाविकल्प्यलिङ्गस्य धर्म्मिसम्बन्धयोस्तथा
गृहीतिः " [श्लोक० प्र० ८८]

इत्याक्षेपभयाद् यद् अभ्युपगतं "प्रामाण्यं" तत् "प्रत्युक्तं" प्रत्याख्यातम्। पूर्व्वकमेव स्वलक्षणविषयं दर्शनं यत् परेणालोचनाज्ञानमिति व्यवहृत तत् प्रमाणं न तु तद्बलभावी विकल्पो यथोक्तेन न्यायेनेति स्थितमेतत् – "पक्षधर्म्मस्य साध्यधर्म्मिणि प्रत्यक्षतोऽनुमानतो वा प्रसिद्धिः" निश्चय इति।

तदेवं प्रत्यक्षतः पक्षधर्म्मनिश्चयं ब्रुवता प्रसङ्गेन दर्शनपृष्ठभाविनो विकल्पस्य प्रामाण्यनिराकरणात्

" प्रत्यक्षं कल्पनापोढम् [प्रमाणवा० २.१२३] "

इतिं प्रतिपादितम्।

[§ २८. अनुमानप्राधान्यज्ञापनम्]

यद्येवं कस्माद् " अनुमानव्युत्पादनार्थमिदमारभ्यते " [S. 42b.] इत्युक्तम् न सामान्येन 'सम्यग्ज्ञानव्युत्पादनार्थम्' इति ?। सङ्ख्यादिविप्रतिपत्तिरप्यत्र तद्विषया निरस्तैव। परोक्षार्थप्रतिपत्तेरनुमान[मेवाश्र]यः। कस्माद् ? यतः पक्षधर्म्म एव तदंशेन व्यास एव च हेतुः कारणं तस्याः, नान्य इत्यभिधानात् परोक्षार्थविषयं सर्व्वं प्रमाणमनुमानेऽन्तर्भावितमिति सङ्क्षेपतः सङ्ख्याविप्रतिपत्तिः सम्यग्ज्ञानविषया निरस्ता। तथा, व्यापकांशस्य गम्यत्वप्रतीतेः तदंशव्याप्तिवचनेन सामान्यविषयमनुमानं न स्वलक्षणविषयमित्याख्यातम् [T. 232b.] तस्यासाधारणत्वात्, असाधारणस्य च व्यापकत्वायोगात्, विकल्पाविषयत्वाच्च। " तत्र तदाद्यमसाधारणविषयम्" इत्याचक्षाणेन स्वलक्षणविषयमेव प्रत्यक्षमुक्तम्।

१. अग्नि°।

"दर्शनमेव प्रमाणम्" इत्याख्यानात् प्रमाणमेव फलमिति सूचितम्, [S. 43a.] तस्यार्थप्रतीतिरूपत्वात्। तथा, तस्य द्विधा प्रयोग इति वक्ष्यमाणत्वात् परार्थानुमानं कथयिष्यते, तस्य त्रिरूपलिङ्गाख्यानरूपत्वात्। सङ्क्षेपतश्चानुमानव्युत्पादनमप्यभिमतम्। तच्च [1]सर्वत्रास्त्येवेति कस्मात् "अनुमानव्युत्पादनार्थम्" इत्युक्तम्[2]?।

सत्यम्, प्राधान्यात् तु तद्ग्रहणम्। तथा हि – प्रधानपुरुषार्थोपयोगिनस्तत्त्वस्य [3]चतुरार्यसत्यलक्षणस्यानुमानत एव निश्चयात् तस्य प्राधान्यम्। तथा प्रत्यक्षेऽपि विषये विवादसम्भवे, नानुमानादन्यन्निर्णयनिबन्धनम् इत्यतोऽप्यस्य प्राधान्यम्। प्रवर्तकत्वाच्च प्राधान्यमस्य। तथा हि – यदनुभूतफलं सुखदुःखसाधनम्, अनुभूयमानफलं वा दृश्यमानं न तत्प्रवृत्तिविषयो निष्पन्नत्वात् फलस्य। तस्माद् यदनागतफलं सुखदुःखसाधनं प्रत्यक्षमपि तत्राप्यनुमानमेव प्रवर्तकम्। न हि तस्यानागते सुखदुःखे प्रति योग्यतां प्रत्यक्षं निर्द्धारयति, फलस्य [S. 43b.] परोक्षत्वात्। तदुक्तम् – "न ह्यप्रत्यक्षे कार्ये कारणभावगतिः" इति।

तस्मात् पूर्व्वानुभूतसुखदुःखसाधन[T. 233a.]साधर्म्यात् प्रत्यक्षविषयस्यापि वस्तुनोऽनागतफलयोग्यतानिश्चयः न प्रत्यक्षतः। तथा चाह –"[4]तथा[5]दृष्टसाधर्म्यात् [6]तथाप्रसाधितं नानुमेयतामतिपतति" इति। कथं तर्हि द्वयोरपि प्रवर्त्तकत्वम्?–"न ह्याभ्यामर्थं परिच्छिद्य प्रवर्तमानोऽर्थक्रियायां विसंवाद्यते" इत्युक्तम्। [7]सुखदुःखसाधनस्य जलानलादेः स्वरूपस्य प्रत्यक्षतः प्रसिद्धेः, फलमनागतं प्रति योग्यताया अनुमानत इत्युभयोरपि प्रवर्तकत्वम्। सम्यग्ज्ञानपूर्व्वकत्वं च हिताहितप्राप्तिपरिहारयोरुक्तम् न त्वनागतफलं प्रति योग्यतायाः प्रत्यक्षतोऽनिश्चयात्। [S. 44a.] न ह्यर्व्वाग्दर्शिनां भाविफलयोग्यतायास्ततो निश्चयः, ततः प्राधान्यादनुमानग्रहणमित्यलमतिविस्तरेणेति।

---

१. प्रत्यक्षादौ। २. 'सङ्क्षेपेणैव प्रत्यक्षव्युत्पादनं न विस्तरतः' इत्याशङ्क्याह। ३. दुःख-समुदय-मार्ग-निरोधाः। ४. वस्तु। ५. अन्यत्र। ६. सुखदुःखहेतुतया। ७. उत्तम्।

[§ २९. स्वभावहेतावन्वयनिश्चयः स्वप्रमाणायत्तः।]

तत्र स्वभावकार्यानुपलम्भानां पक्षधर्म्मनिश्चयस्तुल्योपायसाध्यतयाऽभेदेनैवोक्तः अन्वयव्यतिरेकनिश्चयस्य तु भिन्नोपायसाध्यतया भेदेनैव निर्देशः कार्य इति स्वभावहेतौ तावदन्वयनिश्चयं स्वप्रमाणनिबन्धनं दर्शयन्नाह – "अन्वयनिश्चयोऽपि" न केवलं पक्षधर्म्मनिश्चय उक्तः किन्त्वन्वयनिश्चयोऽपि "स्वभावहेतौ" उच्यत इति शेषः। "साधनधर्म्म"स्य यद् "भावमात्रं" सत्तामात्रं मुद्गरादिनिमित्तान्तरानपेक्षं तस्य "अनुबन्धो" अनुगमनं व्याप्तिः तस्य "सिद्धिः" या स स्वभावहेतावन्वयनिश्चयः। कस्य [T. 233b.] साधनधर्म्मभावमात्रानुबन्धसिद्धिः?। "साध्यधर्म्मस्य" [S. 44b.] साध्यश्चासौ असिद्धत्वात् धर्म्मधर्म्मिसमुदयैकदेशत्वात् धर्म्मश्चेति तथोक्तः। यत्र यत्र साधनधर्म्मस्य भावः तत्र तत्र साध्यधर्म्मस्यापि निमित्तान्तरानपेक्षो भाव इत्येतस्यार्थस्य सिद्धिः स्वभावहेतावन्वयनिश्चयः। कथं पुनः साध्यधर्म्मः साधनधर्म्मभावमात्रमनुबध्नाति।? "तद्भावतया" स साधनधर्मो भावः – स्वभावो यस्य तस्य भावतया तद्भावतया। यो हि साधनधर्म्मः साध्यधर्म्मस्य स्वभावः स[1] कथं तं[2] नानुबध्नीयात्, नीरूपत्वप्रसङ्गात्?।

[§ ३०. स्वभावहेतावैक्येपि साध्यसाधनभावव्यवस्था।]

ननु तत्स्वभावत्वे भेदाभावात् कथं साध्यसाधनभावः? इत्याह – "वस्तुतः" परमार्थतः। साध्यसाधनसंकल्पकाले[3] तु परम्परया तत्तद्व्यावृत्तपदार्थनिबन्धनायां कल्पनाबुद्धौ [S. 45a.] भेदेन प्रतिभासनात् साध्यसाधनभावो न विहन्यते। न ह्यसौ[4] पारमार्थिकं साध्यसाधनधर्म्मयोर्द्धर्मिणश्च कृतकत्वादौ भेदमवलम्बते, सम्बन्धाभावेन साध्यसाधनभावायोगात्।

एकार्थसमवायः कृतकत्वानित्यत्वादेः सम्बन्धः इति चेत्; न, तस्यापि ततो[6]ऽर्थान्तरत्वे 'अयमनयोरस्मिन्नर्थे समवायः' इति

१. साध्यधर्मः। २. साधनधर्मम्। ३. °धनविकल्प° T. ४. साध्यसाधनभावः। ५. श्रयते। ६. कृतकत्वानित्यत्वाभ्याम्।

६ हे.

सम्बन्धाभावस्य तदवस्थत्वात्, सम्बन्धान्तरकल्पनायां चानवस्थाप्रसङ्गात्। समवायाद् वृत्तिकल्पनायां च कृतकत्वादयो नित्याभिमतेष्वप्यात्मादिषु वर्तेरन्। य एव हि कृतकत्वादेः शब्दे समवायो [T. 234a.] यद्बलात् तत्रैव तद् वर्तते स एव नित्याभिमतेष्वपि, तस्यैकत्वेनोपगतत्वात् इत्यात्मादौ वृत्तिः कृतकत्वादेः केन निवार्येत?। अथ 'य एवाभूत्वा भवनधर्म्मा भूत्वा चाभवनधर्म्माऽस्थिररूपो भावः तत्रैव कृतकत्वादयो धर्म्मा वर्तन्ते' इति व्यवस्थाप्यते। सैव तर्ह्यभूत्वा भवनस्वभावता भूतस्य चास्थिरस्वभावता तद्विपरीतरूपसमारोपव्यवच्छेदविषयायाः कल्पनाबुद्धेर्निबन्धनं किं नेष्यते?। [S. 45b.] तयैव[1] परमार्थाभेदवतोर्द्धर्म्मयोः साध्यधर्म्मिणि वृत्तेः किमन्तरालगडुना कृतकत्वादिना व्यतिरेकवता[2] उपगतेन?। तथा हि – न सत्तामात्रेण कृतकत्वादयो धर्म्माः साध्यधर्म्मप्रतिपत्तिनिबन्धनम्, तेषां सदा सन्निहितत्वेनानवरतं तद्धर्म्मप्रतीतिप्रसङ्गात्, किन्तु विकल्पप्रतिभासिन एव। स च विकल्पः स्वप्रतिभासिनमेवाकारं[3] बहीरूपतयाऽध्यवसितमनुसरन् कृतकानित्यादिरूपतां वस्तुनः प्रतिपद्यते, परमार्थतोऽसंस्पर्शेऽपि तद्रूपस्य[4], परम्परया तदुपादानत्वात्। व्यतिरिक्तास्तु धर्म्मास्तदुत्पत्तिनिमित्तमात्रतया[5] परिकल्प्यन्ते, तद् वरं यदेव[6] तत्कल्पनानिबन्धनं[7] तदेव तथाविधविकल्पप्रसवनिमित्तमस्तु, तस्यावश्यमभ्युपगमनीयत्वात्[8], तदभ्युपगमे च चरितार्था व्यतिरेकवन्तो धर्म्मा इत्यलं तत्कल्पनया। अवश्यं च व्यतिरिक्ताऽनित्यताद्वारेणापि वस्तुन एवानवस्थायिनमात्मानं प्रतिपद्यते, [S. 46a.] [T. 234b.] तदनुरूपार्थक्रु(क्रि)यार्थितया[9] प्रवृत्तेः, अन्यथा[10] व्यतिरिक्ताऽनित्यतया नित्यत्वात्[11] तदवगमार्थित्वेनायमनित्यसाध्यार्थक्रियार्थी[12] नित्यं शब्दादिकमाशङ्कमानः किमनित्यताविचारं[13] प्रति आहितास्थः[14]?।

१. भूत्वा भवनादिस्वभावतया। २. भिन्नेन। ३. परिच्छेद्यवस्तुन्यविद्यमानम्। ४. वस्तु०। ५. विकल्पोत्पत्तिनिमित्तमात्रतया। ६. अभूत्वा भवनादिकम्। ७. तेषां कृतकत्वादीनां प्रतिनियते शब्दादौ वृत्तिकल्पनाया निबन्धनम्। ८. अभूत्वा भवनादिकस्य। ९. अनित्यस्वभावानुरूपार्थक्रियार्थितया। १०. स्वभावभूतधर्मानभ्युपगमे। ११. शब्दादेः। १२. नित्यशब्दाद्यवगमार्थित्वे[न]। १३. किं अनित्यताव्यापारं प्रति आहितं करोति?–T.। १४. आहिता आस्था येन। कृतयत्न इत्यर्थः।

व्यतिरिक्तायां चानित्यतायामवगतायां तत्रैव प्रवर्तताम्, किमिति नित्ये शब्दात्मनि ?। तद्वा(द्वा)रेण[1] प्रतिपत्तेः इति चेत्; तत् किमनेन व्यवधिना ?। वरमव्यवहितस्यैव प्रतिपत्तिरस्तु, तेनैवार्थित्वादिति । तदेतदतिप्र[2]चर्च्यमानमतिगहनं सम्पद्यत इत्यास्तां तावत् ।

येऽपि जैमिनीया मन्यन्ते – ‘ येषामत्यन्तव्यतिरेकवन्तो धर्म्माः तेषामेवायं नैयायिकादीनां दोषः, अस्माकं तु कथञ्चिद् भेदाभेदवतां धर्म्माणां तत्स्वभावतया नैष दोषः ’ इति; तेषामपि वस्तुतः साधनधर्म्मरूपतोपगमे साध्यधर्म्मस्य, कथञ्चिद् भेदाभ्युपगमे न किञ्चित् [S. 46b.] फलमुत्पश्यामः, साध्यसाधनभावस्य कल्पितभेदद्वारेणाप्युपपत्तेः। न चैकात्म्ये कथञ्चिदपि भेदो युक्तः, एकस्मात् स्वभावादभेदात्। ततोऽपि तयोः कथञ्चिद् भेदाभेदौ स्त एवेति चेत्; न, अनवस्थाप्रसङ्गात्। तथा हि – धर्म्मयोस्तदेकस्वभावाद[3]पि भेदवतोस्तेन स्वभावेन कथञ्चिदभेदनिमित्तमभिन्नोऽपरः स्वभावोऽभ्युपगन्तव्यः, तथा तेनाऽप्यपरः इत्यनन्तैव [T. 235a.] भिन्नाभिन्नस्वभावपरम्परा स्यात्। न च कल्पनाबुद्धावनन्तोभयरूपस्वभावपरम्परा प्रतिभासत इति किमिति तत्कल्पनयाऽऽत्मानं विप्रलभन्ते भवन्तः ?। कथञ्चित् च भेदोपगमात् कथं भेदपक्षभाविनां दोषाणामनवसरः ?। यं चात्मानं पुरोधाय ‘ इमौ धर्म्मौ, अयं धर्म्मी ’ इति व्यवस्थाप्यते यदि तेन भेदस्तदा भेद एवेति कुतोऽनेकान्तवादः ?। अथाभेदः; तदा ‘ अयं साधनधर्म्मः, अयं साध्यधर्म्मः, धर्म्मी चायम् ’ इति कथं पारमार्थिकं तृ(त्रि)तयं सिध्येत् ?। [S. 47a.] तस्मात् तत्तत्पररूपव्यावृत्तिसमाश्रयायां कल्पनाबुद्धौ भेदवतामिव धर्म्मधर्म्मिणां प्रतिभासनात् साध्यसाधनभावः। तन्मात्रानुबन्धस्तु वस्तुतः तत्तत्स्वभावतयैव युक्तः इति मन्यमानेन “ वस्तुतस्तद्भावतया ” इत्युक्तम्।

---

१. अनित्यताद्वारेण। २. प्रपञ्च्यमा० –T. ३. न केवलं धर्म्मिणः।

[ § ३१. बाधकप्रमाणादेव स्वभावहेतौ साध्यसाधनतादात्म्यम् । ]

का पुनरसौ वस्तुतस्तद्भावता यया हेतुभूतया साध्यधर्म्मस्य साधनधर्म्मभावमात्रानुबन्धः सिध्यति ? इत्याह – "सा" वस्तुतस्तद्भावता "साध्य"स्य "विपर्यये" विपक्षः तत्र, "हेतोः" यद् "बाधकं प्रमाणं" तद्विपरीतधर्म्मप्रत्यवस्थापकम्, येन[1] बाध्यमानो हेतुस्तत्र न प्रवर्तते, विरुद्धयोरेकत्र सहभावासम्भवात्, तस्य या "वृत्तिः" प्रवृत्तिः "बाधकप्रमाणवृत्तिः" तत्साध्यत्वाच्च वस्तुतस्तद्भावतायाः सा बाधकप्रमाणवृत्तिरुक्ता । तस्यां हि सत्यां [T. 235b.] विपक्षात् निवृत्तो हेतुः साध्यधर्म्मवत्येव धर्म्मिणि वर्तते इति साध्यधर्म्मस्यानर्थान्तरस्य साधनधर्म्मस्वभावता सिध्यति । "तया च" वस्तुतस्तद्भावतया साधनधर्म्मभावमात्रानुबन्धः साध्यधर्म्मस्य सिध्यतीति [S. 47b.] "अन्वयनिश्चयः" 'यत्र यत्र साधनधर्म्मस्तत्र तत्र साध्यधर्म्मः' इत्येवंरूपो जायते ।

अत्रोदाहरणं "यथा – यत् सत् तत् क्षणिकमेव ।" अवधारणेन व्याप्तिमाह । साधनधर्म्मभावमात्रानुबन्धस्य चैतद्रूपमाख्यातं, निमित्तान्तरमन्तरेण सत् इत्येव कृत्वा क्षणिकमित्युपदर्शनात् । स च वस्तुतस्तद्भावतया सिध्यतीति तत्सिद्ध्युपायं बाधकप्रमाणवृत्तिं दर्शयति – "अक्षणिकत्वे" क्षणिकाविपर्यये सति "अर्थक्रियाविरोधात्" अर्थस्य – कार्यस्य क्रिया – निष्पत्तिस्तस्या विरोधात् "तल्लक्षणं" साऽर्थक्रिया लक्षणं यस्य "वस्तुत्वस्य" अर्थक्रियासामर्थ्यात्मनः, तत्तथोक्तम् । अर्थक्रियया हि तत्सामर्थ्यरूपं वस्तुत्वं लक्ष्यते । "तद्" एवंविधं वस्तुत्वं "हीयते" निवर्तते, तद्विपर्ययरूपस्यासत्त्वस्याऽऽकर्षणात् । एतच्च बाधकं प्रमाणं व्यापकानुपलब्धिरूपमुत्तरत्रावसरप्राप्तं स्वयमेव वक्ष्यति । तदनया बाधकप्रमाणवृत्त्या साध्यधर्म्मस्य [S. 48a.] वस्तुतः साधनधर्म्मस्वभावता सिध्यति । तया च वस्तुतस्तद्भावतया साधनधर्म्मभावमात्रानुबन्ध इति ।

१. सत्त्वा(त्वा)द्यहेतुविपरीतसत्वं(त्त्व)° । २. येन साध्य०–T.

[ § ३२. कार्यहेतावन्वयनिश्चयनिरूपणम् । ]

एवं स्वभावहेतौ [T 236a.] विपर्यये बाधकप्रमाणवृत्त्या तादात्म्यसिद्धितोऽन्वयनिश्चयं प्रतिपाद्य कार्यहेतौ प्रतिपादयन्नाह – "कार्यहेतौ" अन्वयनिश्चयः इति प्रकृतम् । कः पुनरसौ कार्यकारणयोर्भावः ? । "कार्यत्वं" "कारणत्वं" च । तस्य या "सिद्धिः" प्रतीतिः सा कार्यहेतावन्वयनिश्चयः । यथा च कार्यकारणभावसिद्धिर्भवति तथोपदर्शयन्नाह – "यथा" इत्यादि । यथाशब्द उपदर्शनार्थः । "इदं" धूमादिकम् "अस्य" अग्नेः "उपलम्भे" सति "उपलभ्यत" इति सम्बन्धः । अनेन कार्यकारणभावसिद्धौ प्रत्यक्षव्यापारमाह । न च केवलं प्रत्यक्षं कार्यकारणभावमसन्दिग्धं साधयति, किन्तु प्राक्प्रवृत्तानुपलम्भसहायमिति [S. 48b.] दर्शयितुमाह – "उपलब्धिलक्षणप्राप्तमनुपलब्धम्" इति । यदि तद् धूमादिकमुपलब्धिलक्षणप्राप्तं सत्स्वन्यै(न्ये)षूपलम्भप्रत्ययेषु दृश्यात्मकं सत् नोपलब्धं भवति अग्न्यादिसामग्रीसन्निधानात् प्राक् तादात्म्यादिसामग्र्यामुपलभ्यमानायामुपलभ्यमानं तत्कार्यं सिध्यति । न तूपलम्भप्रत्ययान्तरवैकल्यादनुपजातोपलब्धियोग्यरूपं सत्, तद्देशसन्निहितमप्यनुपलब्धिलक्षणप्राप्ततयाग्न्यादिसामग्रीसन्निधानात् प्रागनुपलब्धमिति । उपलब्धिलक्षणप्राप्तस्य चानुपलम्भे नाग्न्यादिसामग्रीसन्निधानात् प्रागन्यत आगमनं, तद्देशकालसंनिहितात् कटकुट्या[T. 236b.]देरुत्पत्तिः, तद्देशे चाऽसन्निधानमिति, त्रितयमपाक्रियते । एतावद्भिश्च प्रकारैरतत्कार्यता भवन्ती भवेत् । ततोऽनुपलम्भेनाऽतत्कार्यताशङ्कानिरासाद् तद्भावे भावग्राहिप्रत्यक्षनिबन्धनः कार्यकारणभावोऽसन्दिग्धः [S. 49a.] सिध्यति ।

न चाग्नीन्धनादिभावे नियतसन्निधेरदृश्यात्मनः कुतश्चित् धूमस्य भावः स्यात् इत्याशङ्कनीयम् । अग्नीन्धनादिभेदानुविधानाद् धूमस्य । चन्दनागुरुकर्पूरकेशोर्णादीन्धनभेदे तदनुरूपभेदस्यास्य दर्शनादल्पमहदिन्धनविकारकारिणश्चाग्नेस्तदनुरूपस्य । न चाग्नीन्धनादिसन्निधावदृश्यात्मनो नियतसन्निधानता युक्ता,

---

१. उपलक्षणार्थः –T. २. अल्पमहदिन्धनरूपस्य ।

प्रतिबन्धाभावात्। प्रतिबन्धे वा तत्कार्यता[1] तत्कारणता वा स्यात्। तत्कार्यत्वे, नाग्नीन्धनसम्पर्कानन्तरं धूमजन्म स्यात्, तद्भावाभावानुविधानादेव चास्यापि तत्कार्यत्वम्। तच्च धूमेऽपि समानम्। नापीन्धनादिकारणत्वम् अदृश्यात्मनः, इन्धनादेः स्वहेतोरेव वृक्षादेर्भावदर्शनात्। तत्रापि तथा[2]भावकल्पनायां तदेवोत्तरं वाच्यम्। पुनश्चोद्ये स एव परिहारोऽनवस्था च। एतेनैकसामग्र्यधीनताऽपि प्रत्युक्ता। तदन्वयव्यतिरेकानुविधानादेव च धूमस्य तत्[3] कारणं कल्पेत। तच्चाग्न्यादावपि तुल्यम्। तदपि तत्र कारणमस्तु इति चेत्; न, अग्न्यादिभावेऽवश्यम्भाविनोऽन्यस्यापि कारणत्वकल्पनायां निमित्ताभावात्, कार्यव्यतिरेकनिबन्धनत्वात् [S. 49b.] कारणभावकल्पनायाः। यथा अग्नीन्धना[T. 237a.]देरेवान्यतराभावे अ[4]भवतः। भवतु वाऽन्यस्यापि तद्भावे नियतसन्निधेः कारणता। न तु तावताग्न्यादेः कारणत्वहानिः, यतो धूमदर्शनात् तन्निश्चयेन प्रवृत्तौ तद्विसंवादः स्यात्। नहि सर्व्वसत्त्वकर्म्माधिपत्यजनितत्वेऽपि जगद्वैचित्र्यस्य दृष्टकारणहानिस्ततस्तत्कार्यदर्शनाद् वा प्रवृत्तानां अतत्प्राप्तिरित्यलमतिप्रसङ्गेन।

किंरूपः पुनरसौ कार्यकारणभावोऽनुपलम्भसहायप्रत्यक्षनिबन्धन इत्याह – " तद्भावे भावः तदभावेऽभावश्च " इति। य[5] एव हि कारणा[6]भिमतस्य भावे[7] भाव एव। कार्यत्वे[8]नाभिमतस्य भावः। " तदभावे " कारणत्वाभिमतस्याऽभावे " अ[9]भाव एव " कार्यत्वेनाभिमतस्याभावश्च। स एव कार्यकारणभावो नान्यः।

स हि ताभ्यामन्यो भवन् स्वभावतोऽप्रतिपन्नकार्यकारणरूपयोर्वा भवेद्, यद्वा स्वभावेनैव कार्यकारणात्मनोः। यद्याद्यः पक्षः तदा सर्व्वत्रैवाकार्यक(का)रणभूतेऽपि वस्तुनि [S. 50a.] भवेत् तन्नियमकारणाभावात्। ततः सर्व्वं सर्व्वस्य कार्यं स्यात्।

१. तेषामग्न्यादीनां तददृश्यात्मकं वस्तु कार्यम्। २. वृक्षादिभ्योऽपीन्धनाद्युत्पत्तिकथनेऽदृश्यात्मन एव कस्यचित् कारणत्वकल्पनायाम्। ३. अदृश्यं। ४. धूमस्य। ५. अवधारणगर्भमिदं वाक्यमिति तथैव व्याख्याति। ६. वह्नेः। ७. न पुनरकारणाभिमतस्य भावे। ८. धूम°। ९. न पुनरकारणाभिमतस्याभावे।

स्वभावेन चातद्रूपस्यान्ययोगेऽपि न तद्रूपता। नहि भावाः प्रतिनियतरूपत्यागेनान्ययोगेऽपि रूपान्तरमाभजन्ते, यतो नान्ययोगस्तेषां पूर्व्वरूपं नाशयति विनाशहेत्वयोगाद् वक्ष्यमाणकात्। नाऽप्यपूर्व्वमुत्पादयति तस्य ततोऽर्थान्तरत्वप्रसङ्गात्। नहि तेषु निष्पन्नेष्वनिष्पन्नो भिन्नहेतुको वा तत्स्वभावो युक्तः। अयं हि भेदो [T. 237b.] भेदहेतुर्वा विरुद्धधर्म्माध्यासः कारण भेदश्च। ततश्चेत् न भेदः, अन्यनिमित्ताभावात् एकं द्रव्यं विश्वं स्यात् इत्यादि प्रसज्येत। प्रतिभासभेदोऽपि हि इतरेतराभावरूपतया विरुद्धधर्म्माध्यासतां नातिक्रामति। ततश्च पूर्व्वके वस्तुनी [S. 50b.] तदवस्थे एवेति न तयोरन्ययोगेऽपि कार्यकारणरूपतापत्तिः।

अथ द्वितीयः पक्षः, तदा स्वभावत एव तयोः कार्यकारणरूपत्वादन्यस्तद्भावः कथं न वैयर्थ्यमनुभवेत्?। कार्यकारणबुद्धी अपि तद्भावभावित्वमात्रनिबन्धने नार्थान्तरनिमित्ते, [1]तस्योपपलब्धिलक्षणप्राप्तस्य कार्यकारणरूपविवेकिना रूपान्तरेणाप्रतिभासनात्। [2]तथाविधस्यापि ग्रहणकल्पनायामतिप्रसङ्गः। अनु[3]पलब्धिलक्षणप्राप्ततायां कथं कार्यकारणभावबुद्धी तन्निबन्धने?। नहि तद् अर्थान्तरं स्वसत्तामात्रेण तद्बुद्धी प्रवर्तयति। सदा सन्निहितत्वेनास्य तयोः सर्वदोदयप्रसङ्गात्। न च विशेषणमगृहीतं [S. 51a.] विशेष्ये स्वविशिष्टप्रत्ययनिबन्धनमित्ययुक्ताऽस्यानुपलब्धिलक्षणप्राप्तता। न च दृष्टस्याप्यनुपलक्षणं युक्तम्, कार्यकारणबुद्ध्योस्तन्निबन्धनतोपगमात्। न हि यन्निमित्तो योऽन्यत्रातद्बुद्धिभाजि तद्व्यवसायः स तदनुपलक्षणे युक्तः[4]। देवदत्ते दण्डिव्यवसायवद् दण्डानुपलक्षणे। न चार्थान्तरस्य कार्यकारणाभ्यां सम्बन्धो घटते, सम्बन्धान्तरकल्पनायामनवस्था[T. 238a.]प्रसक्तेः। कार्यकारणभावाभ्युपगमे कार्यकारणाभ्यामसहभाविता सद्भावस्य। ततश्च कार्यकारणकाले तस्यासन्निधानात् कथं कार्य-

१. तस्योपलब्धिलक्षणप्राप्तत्वं स्यात् तद्विपर्ययो वा। तत्राद्ये आह। २. रूपान्तरेणाप्रतिभासमानस्य। ३. द्वितीये आह। ४. युक्तः दण्डेन दण्डिव्यवसायाभावे देव°– T.।

कारणबुद्धिहेतुता ? । निरुद्धयोरध्याहृत्य तत्प्रत्ययकल्पनायां च कल्पितविषय एव कार्यकारणताध्यवसायः स्यात् न वस्तुविषयः। स च विशिष्टभावाभावनिबन्धनोऽभ्युपगत एवेति किमर्थान्तरकल्पनया ? । कल्पितविषयत्वे तद्व्यवसायस्य, तस्या वैयर्थ्यात् कार्यकारणयोश्चायौगपद्यात् । नहि [S. 51b.] ताभ्यामसौ जन्यते, प्रत्येकजन्यश्च कथं कार्यकारणभावः ? । यदा च कारणेन जन्यते तदा किं स्वकार्यसहितो जन्यते, अथ केवलः ? । केवलोऽपि किं स्वकार्यात् प्राग्, अथ पश्चात् ? । यदि स्वकार्यसहितस्तदुभयोरन्यत एव भावात् परस्परमसम्बन्ध इति कार्यसम्बन्धिताऽस्य हीयेत । अथ केवलः स्वकार्यात् प्राक्; तदा क्षणिकतया कारणस्य तमेव जनयित्वा ध्वंसात् कथं स्वकार्यक्रिया ? । तस्यां चासत्यां कथं तदपेक्षमस्य कारणत्वम् ? । तस्मिंश्चासति कथमकारणेन कार्यकारणसम्बन्धो जन्यते ? । अथ स्वकार्यं कृत्वा पश्चाज्जन्येत तदाऽपि स्वकार्यकाले एव विनष्टत्वाद् असतस्तदुत्तरकालभाविकार्यकारणभावजननं कुतः ? । तद्भावश्च सम्बन्ध उच्यते ।

[S. 52 a. and S. 52 b.]..............................................

......................................................................

......................................................................

......................................................................

......................................................................

......................................................................

......................................................................

......................................................................

[S. 53a.] जन्यतायां वा यदि समग्राः स्वरूपत एव तां जनयन्ति कार्ये क एषां शक्तिव्याघातः ? यतोऽन्यत्र कल्प्यते। तत्राप्यपरसामग्रीयोगापेक्षायां चानवस्थाप्रसङ्गः । ततः समग्रा [T. 239a.] एव जनकाः ।

तेषां च कारणत्वमेकैकापाये कार्यव्यतिरेकतः समुन्नीयत इत्याह – "सत्स्वप्यन्येषु" तत्सामग्र्यन्तर्गतेषु "हेतुषु" जनकेषु

१. °योरारोप्य –T. । २. कार्यकारणबुद्धिहेतुत्वकल्पनायाम् । ३. कार्यकारणभाव° । ४. अर्थान्तरकल्पनायाः । ५. सम्बन्धं । ६. कार्य° । ७. कार्यकारण° । ८. सामग्र्याम् ।

प्रत्येकं तेषां व्य[1]ञ्जनकत्वाद् "अस्याभावे" जनकत्वेन निर्धार्यमाणतया विवक्षितस्याभावे " न भवति " इत्यनेनानुपलम्भस्य विषय उक्तः । प्रत्यक्षवृत्तिस्तु पूर्वोक्तैवाऽनुपलम्भरहिता तद्भावे भावग्राहिणी संबन्ध्यते ।

तथा चायमपि तद्भावे भावः तदभावेऽभावश्च कार्यकारणभावः किंसाधनः ? इत्याह – " प्रत्यक्षानुपलम्भसाधनः " प्रत्यक्षपूर्वकोऽनुपलम्भः तद्विविक्तान्यपदार्थग्राहिप्रत्यक्षात्मकः साधनमस्येति " प्रत्यक्षानुपलम्भसाधनः कार्यकारणभावः " । यस्त्वनुपलम्भसापेक्षेण [S. 53b.] प्रत्यक्षेण साध्यत इति प्रागुक्तः सोऽनुपलम्भपूर्वकं प्रत्यक्षं साधनमस्येति अनुपलम्भप्रत्यक्षसाधन इति वक्तव्यः । " तस्य " कार्यकारणभावस्यान्वयव्यतिरेकात्मनः " सिद्धिः " निश्चयो " यथोक्ताभ्यां " प्रत्यक्षानुपलम्भाभ्यां कार्यहेतावन्वयनिश्चय इति सम्बध्यते ।

ननु चान्वयनिश्चयो नाम कार्यहेतोः सर्वत्र कार्यस्य भवतः स्वकारणसत्तयाऽनुगमनमित्येवं[2]मवसायः तत् कथं कार्यकारणभावसिद्धिरेवाऽसा[3]वुच्यते ? इत्याशङ्क्य कार्य[T. 239b.]कारणभावसिद्धिनिबन्धनत्वादन्वयनिश्चयस्य कारणे कार्योपचारादनन्योपायसाध्यतां दर्शयितुम्, दर्शनमात्रनिबन्धनं ये तमिच्छन्ति तन्मतनिषेधार्थमसावेवमुक्त इति दर्शयन्नाह – " कार्यकारणभाव एव हि " कार्यकारणभावे सत्येव ' हिः ' यस्मात् " अर्थान्तरस्य " साध्याद् व्यतिरिक्तस्य, यस्त्वव्यतिरिक्तः [S. 54a.] तस्य विपर्यये बाधकप्रमाणवृत्त्या तादात्म्यनिश्चयादेवान्वयनिश्चय इति पूर्वमुक्तमेवेत्यर्थान्तरग्रहणम् । तस्यार्थान्तरस्य "एवं स्यात्" । कथम् ? । ' यत्र नाम क्वचिद् धूमः तत्रावश्यमग्निः ' इति नियमेन ' अग्नेः तत्र भावः ' इत्येवंरूपोऽन्वयनिश्चयः । यस्त्वकार्यकारणभावेऽपि रसं[4]स्यार्थान्तरस्य रूपेणान्वयनिश्चयः स एकसामग्र्यधीनतया तस्य स्वकारणाव्यभिचारद्वारक एवेत्यदोषः ।

१. व्यञ्जक० T. २.° मित्येवं साधनावसरः तत् –T. ३. अन्वयनिश्चयः । ४. रस्य (रसस्य)।

अथ यदि नाम कार्यमग्नेर्धूमस्तथापि किमिति यत्रासौ तत्रावश्यमग्निर्भवति यतः कार्यकारणभावसिद्धिनिबन्धनोऽन्वयनिश्चय उच्यत इत्याह – "अग्नेः भावे एव" सत्तायामेव 'हिः' यस्मात् "भावः" सत्ता धूमस्य "कार्यत्वमिति"। तस्मात् कार्यकारणभावे सत्येव यथोक्तोऽन्वयनिश्चय इति। यदि हि यत्र धूमस्तत्रावश्यमग्निर्न स्यात् तदाऽग्निमन्तरेणाप्यस्य भावाद् अग्निभाव [S. 54b.] एव भावलक्षणं कार्यत्वं हीयेत।

[ § ३३. अनुपलब्धावन्वयनिश्चयोपायकथनम् । ]

इदानीमनुपलब्धावन्वयनिश्चयमाह – "अनुपलब्धावपि" [T. 240a.] न केवलं स्वभावकार्यहेतो(त्वो)रन्वयनिश्चय उक्तः किन्त्वनुपलब्धावप्यन्वयनिश्चय उच्यते। किंरूपोऽसौ? इत्याह – "असद्व्यवहारस्य" साध्यधर्म्मस्य योग्यतायाश्च साध्यत्वात् तद्योग्यताऽसद्व्यवहारोऽभिप्रेतः, तस्य, उपलब्धिलक्षणप्राप्तस्य या "अनुपलब्धिः" तदन्योपलब्धिरूपा त"न्मात्रे" निमित्तान्तरानपेक्षणी, या "वृत्तिः" प्रवृत्तिरसद्व्यवहारस्य तस्याः "साधनं" सिद्धिः अनुपलब्धावन्वयनिश्चयः। कुतः पुनरसद्व्यवहारस्य तन्मात्रे वृत्तिर्भवति? इत्याह – "निमित्तान्तराभावोपदर्शनात्" इति। यदा ह्यसद्व्यवहारस्य यथोक्तानुपलब्धिव्यतिरिक्तं बुद्धिव्यपदेशार्थक्रियाविरहादिकं निमित्तं न भवतीति [S. 55a.] साध्यते तदा यथोक्तानुपलब्धिमात्रेऽस्य वृत्तिः सिद्धा भवति। तथा(तया)[1] चानुपलब्धावन्वयनिश्चयः। अन्यथा हि निमित्तान्तरापेक्षाशङ्कायां सत्यामपि यथोक्तानुपलब्धौ नावश्यमसद्व्यवहारस्य भाव इति कुतोऽन्वयनिश्चयः स्यात्?। निमित्तान्तराभावस्तु विस्तरतो वादन्याय उक्त इति तत एवावधार्यः।

अथवा सद्व्यवहारस्य यन्निमित्तमुपलब्धिलक्षणप्राप्तस्य सत्त्वम् तद् असद्व्यवहारनिमित्तादन्यत्वात् निमित्तान्तरं तत्रानुपलब्धेरभाव उपदर्श्यते येन प्रमाणेन तदेवमुक्तम्, तेन, सति वस्तुनि तस्या [T. 240b.] असम्भवनिश्चयाद् अनुपलब्धावन्वयनिश्चयः। तच्च तद्व्यतिरेकचिन्तायां दर्शयिष्यामः।

---

१. तदा च – T.

तदेवं त्रयाणामपि हेतूनां यथास्वं प्रमाणेनान्वयनिश्चय उक्तः। स्वभावहेतौ विपर्यये बाधकप्रमाणवृत्त्या तादात्म्यसिद्धिनिबन्धनत्वात्, कार्यहेतौ प्रत्यक्षानुपलम्भाभ्यां कार्यकारणभावसिद्धिनिमित्तत्वात्, [S. 55b.] अनुपलब्धौ निमित्तान्तराभावप्रसाधकप्रमाणतस्तदभावसिद्धिहेतुत्वाच्चेति।

[ § ३४. कार्यस्वभावयोर्व्यतिरेकनिश्चयोपायकथनम्। ]

सम्प्रति त्रयाणामपि हेतूनां स्वस्वप्रमाणनिबन्धनं व्यतिरेकनिश्चयं प्रतिपादयितुकाम आह – "व्यतिरेकनिश्चयोऽपि" न केवलमन्वयनिश्चयो यथास्वं प्रमाणनिबन्धनस्तयोरुक्तः अपि तु "व्यतिरेकनिश्चयोऽपि कार्यस्वभावहेत्वो"र्यथास्वं प्रमाणनिमित्त उच्यते।

कः पुनरसौ? "साध्याभावेऽभावसिद्धिः"। यावतदात्मक[तदात्मकौ हेतू कारणव्यापकरूपसाध्यस्य साधकौ] साध्याभावे चाभावसिद्धिस्तयोः। केन प्रमाणेन?। "कारणव्यापकानुपलब्धिभ्यां"। कार्यहेतौ कारणानुपलब्ध्या साध्याभावेऽभावनिश्चयः। स्वभावहेतौ व्यापकानुपलब्ध्या। कदा पुनस्ते अनुपलब्धी साधिके तस्य भवतः?। "कार्यकारणव्याप्यव्यापकभावसिद्धौ" प्रत्यक्षानुपलम्भाभ्यां कार्यकारणभावसिद्धौ सत्यां कारणानुपलब्धिः कार्यहेतौ साध्याभावेऽभावस्य साधिका, विपर्यये च बाधकप्रमाणवृत्त्या तद्भावतासिद्धितः। व्याप्यव्यापकभावसिद्धौ सत्यां [S. 56a.] [T. 241a.] व्यापकानुपलब्धिः स्वभावहेतौ साध्याभावेऽभावस्य साधिकेति। तदेवं ब्रुवता उभयत्र तादात्म्यतदुत्पत्तिलक्षणप्रतिबन्धनिश्चयादेव द्वयोरप्यन्वयव्यतिरेकयोः निश्चय इति उक्तं भवति। अत एवान्यत्र – "कार्यकारणभावाद् वा" [प्रमाणवा० ३.३०] इत्यादि उक्तम्। कीदृशीभ्यां? "दृश्यविषयाभ्यां" दृश्यो विषयो ययोस्ते तथोक्ते। यदि कारणव्यापकानुपलब्धिलक्षणप्राप्तौ भवतस्तदा तदनुपलब्धी साध्याभावेऽभावं साधयत इति यावत्। कदा पुनस्तयोः दृश्यविषयताविशेषणमपेक्ष्यते? इत्याह – "उद्दिष्टविषयस्य" उद्दिष्टः – कथितो विषयः – आधारो वैधर्म्यदृष्टान्तलक्षणो यस्य साध्याभावेऽभावस्य तस्योपदर्शने क्रियमाणे। त-

अपि कस्माद् दृश्यविषयताऽपेक्ष्यते ? इति चेत् आह – "अनुपलब्धि" इत्यादि । "अन्यथा" यदि दृश्यविषयताविशेषणमनुपलब्ध्योर्नापेक्ष्यते । यदाऽनुपलब्धिलक्षणप्राप्तं [S. 56b.] विषयं वैधर्म्यदृष्टान्तरूपमुपादत्ते तदाऽनुपलब्धिलक्षणप्राप्तौ तत्र कारणव्यापकावपि भवत इति "अनुपलब्धिलक्षणप्राप्तस्य" कारणस्य व्यापकस्य वा "क्वचिद्" विप्रकृष्टे विषये सुमेर्वादौ "अभावासिद्धेः" कथमाभ्यां साध्याभावेऽभावसिद्धिः स्यात्, कारणव्यापकानुपलब्ध्योरेवासिद्धत्वात् इत्यभिप्रायः ।

अथानुद्दिष्टविषयस्याप्यभावस्योपदर्शनेऽनुपलब्ध्योर्दृश्यविषयताविशेषणं किमिति नापेक्ष्यते ? इत्याह – "अनुद्दिष्टविषयम्" [T. 241b.] अनुद्दिष्टो विषयः – वैधर्म्यदृष्टान्तरूपो यस्मिन् साध्याभावे हेत्वभावख्यापने तत् "प्रतिबन्धमात्रसिद्धौ" सत्यां दृश्यविषयताविशेषणमन्तरेणापि यस्मात् "सिध्यति इति" तस्मात् "न तत्र" अनुद्दिष्टविषये "व्यतिरेकसाधने" अनुपलब्ध्यो "र्दृश्यविषयताविशेषणमपेक्ष्यते" अङ्गीक्रियते । [S. 57a.] तथा हि – अशेषपदार्थपरिग्रहेण सामान्येनापि ब्रुवतो यो यत्र प्रतिबद्धस्वभावः तादात्म्यतदुत्पत्तिभ्यां स तदभावेऽवश्यमेव न भवतीति निःस्वभावत्वाऽहेतुकत्वप्रसङ्गात् । तदुक्तम् –

"स्वभावेऽप्यविनाभावो भावमात्रानुरोधिनि ।
तदभावे स्वयं भावस्याभावः स्यादभेदतः ॥" [प्रमाणवा० ३.३८]

तथा – "कार्यं धूमो हुतभुजः कार्यधर्मानुवृत्तितः ।
स भवंस्तदभावेऽपि हेतुमत्तां विलङ्घयेत् ॥" [प्रमाणवा० ३.३३] इति ।

ततस्तत्र दृश्यविषयताऽपेक्ष्यमाणानुपकारिकैवेति न तया किञ्चिदिति भावः ।

"प्रतिबन्धमात्रसिद्धौ" इत्यनेन ये प्रतिबन्धं हेतोर्न वर्णयन्ति किन्त्वदर्शनमात्रादेव व्यतिरेकमाहुस्तेषां तदसम्भवं च दर्शयति । तथा हि – असति प्रतिबन्धे यदि सर्वे साध्यविरहिणोऽर्था दृश्या भवन्ति तदा तेष्वनुपलब्धस्य साधनस्याभावः सिध्येत् । तदाह कुमारिलोऽपि –

" गत्वा गत्वा तु तान् देशान् यद्यर्थो नोपलभ्यते ।
तदान्यकारणाभावादसन्नित्यवगम्यते ॥" [ श्लोक० अर्था० ३८ ] इति ।

देशादि[1]विप्रकर्षितया त्वदृश्यत्वे सत्यपि तत्र[2] [S. 57b] हेतावनुपलम्भमात्रस्य सम्भवात् सन्दिग्धोऽसावऽशेषे साध्याभावे साधनाभावलक्षणो व्यतिरेकः तथाविधस्यैव[3] यत्र यत्र साध्याभावः [T. 242a. ] तत्र तत्र साधनाभाव इति वीप्सापदाभ्यामभिधानात् । अन्वय[4]निश्चयोऽपि प्राक्प्रतिबन्धनिबन्धन एव वर्णितः ततस्तेनापि[5] परेषां दर्शन[6]निबन्धनामन्वयसिद्धिमिच्छतामभावोऽस्यापि[7] कथित एव, सर्व्वार्थानां हेतुमतां साध्यधर्म्मवत्तया द्रष्टुमशक्यत्वादनुमातृभिः । अशेषदेशादिविषयस्य च साध्यानुगमस्य यत्र यत्र हेतुः तत्र तत्र साध्यम् इति वीप्सया प्रतिपादनात् । न च कतिपयदेशादौ साधनधर्म्मस्य साध्यधर्म्मेण सहभावस्य भूयो दर्शनेऽपि व्याप्तिः सिध्यति, असति प्रतिबन्धे क्वचिद् बहुलं तथादृष्टानामप्यन्यथात्वस्यापि सम्भवात्, तद्[8]असम्भवे बाधकप्रमाणाभावात् ।

[ § ३५. अनुपलब्धौ व्यतिरेकनिश्चयोपायकथनम् । ]

अनुपलब्धिमधिकृत्याधुनाऽऽह – " व्यतिरेकनिश्चयोऽनुपलब्धौ " उच्यत इति शेषः । [ S.58a. ] किमात्मकोऽसौ ? इत्याह " उपलब्धिलक्षणप्राप्ताद् " विद्यमानोपलम्भप्रत्ययान्तराद् दृश्यस्वभावाच्च[9] " सतः " विद्यमानात् साध्याभावरूपाद्[10] " अनुपलम्भस्य " तद्विविक्तोपलम्भात्मनो योऽभावः सतो यद्ग्राहकं प्रत्यक्षं तद्भावलक्षणस्तस्य " दर्शनं " दृश्यते – प्रत्याय्यतेऽनेनेति दर्शनम् उपदर्शकं प्रमाणं तदात्मकोऽनुपलब्धौ व्यतिरेकनिश्चयः । तद्धेतुत्वाच्च तत् प्रमाणं तथोच्यते[11] । यदि हि सन्निहितान्योपलम्भप्रत्ययो दृश्यस्वभावो भावो विद्यमानोऽपि नोपलभ्येत कथमसौ

१. ननु येऽपि न दृश्यास्तेष्वदर्शनमस्ति, अतोऽदर्शनादेव सर्व्वत्र व्यतिरेकनिश्चयः इत्याह । २. साध्ये । ३. अशेषसाध्याभावे साधनाभावलक्षणस्य । ४. दृश्येऽदृश्ये च । ५. प्रतिबन्धनिबन्धनेनान्वयेन । ६. दर्शनमात्रनि० T. । ७. अन्वयस्य । ८. अन्यथात्व० । ९. " उपलब्धिलक्षणप्राप्तिः उपलम्भप्रत्ययान्तरसाकल्यं स्वभावविशेषश्च " – [न्यायबिन्दु परि० २] । १०. अनुपलब्धो (?) साध्यमसत्त्वम् । ११. अनन्योपायसाध्यतां दर्शयितुम् ।

[T. 242b.] दृश्यस्वभावः स्यात् ? । यो हि सत्स्वन्येषूपलम्भप्रत्ययेषु सन् प्रत्यक्ष एव भवति स एव दृश्यस्वभाव आख्यायते । तस्मात् तथाविधे सन्निहितेऽवश्यं[1] प्रत्यक्षवृत्त्या भवितव्यम्, अन्यथाऽस्य न कदाचिदपि प्रत्यक्षता स्यात्, विशेषाभावादिति । प्रयोगः – यद् यन्मात्रनिमित्तं तत् [S. 58b.] तस्मिन् सति नियमेन भवति । तद् यथा – बीजादिसामग्रीमात्रनिमित्तोऽङ्कुरः । यथोक्तोपलब्धिलक्षणप्राप्ततामात्रनिमित्तं च सति वस्तुनि तथाविधे प्रत्यक्षमिति स्वभावहेतुः[2] । [एते]न प्रमाणेन स्वभावानुपलब्धौ साध्याभावेऽभावलक्षणो व्यतिरेको निश्चीयते । एतच्च प्रमाणमन्वयनिश्चयस्यापि निमित्तम् । अनेनैव निमित्तान्तरेऽनुपलब्धेरभावोपदर्शनात् । कारणव्यापकानुपलब्ध्योस्तु वक्ष्यमाणयोः प्रतिबन्धद्वयसिद्ध्युपाय एवान्वयव्यतिरेकनिश्चयनिबन्धनम् । स च कार्यस्वभावहेत्वोरुपदर्शित एवेति पृथङ्नोक्तः । तथा हि – कारणव्यापकयोरभावः कार्यव्याप्याभावाभ्यामवश्यमन्वितः कार्यव्याप्याभावव्यतिरेके च तद्भावलक्षणेऽवश्यं व्यतिरिच्यते[3] कारणव्यापकयोर्भावात् । अन्यथा कार्यव्याप्ययोरहेतुकत्वनिःस्वभावताप्रसङ्गादिति [S. 59a.] न किञ्चित् पृथगभिधानेनेति ।

[ § ३६. हेतोः प्रकारत्रयस्य नामनिर्देशः । ]

तदेतावता ग्रन्थेन "पक्षधर्मस्तदंशेन व्याप्तो हेतुः" इति व्याख्यातम् । [T. 243a.] अधुना "त्रिधैव सः" इत्येतद् व्याख्यातुमाह – "एतल्लक्षणः" 'पक्षधर्मः सन् यस्तदंशेन व्याप्तो हेतुः' इत्येतल्लक्षणं यस्य स एतल्लक्षणः । "त्रिधैव सः" । 'सः' इत्येतस्य व्याख्यानं "हेतु"रिति, । 'त्रिधैव' इत्यस्य विवरणं "त्रिप्रकार एवे"ति । तान् हेतून् स्वेन स्वेन नाम्ना कीर्त्तयति – "स्वभावः कार्यम् अनुपलब्धिश्चेति" । "च"कारो हेतुत्वसमुच्चयार्थः । "इति"शब्दः समाप्तिं सूचयन्नवधारणार्थमेव स्फुटयति । "यथा – अनित्ये" कस्मिंश्चित् शब्दादौ "साध्ये सत्व(त्त्व)मिति" स्वभावहेतूपदर्शनम्,

१. ०वश्यं तथाविधप्र० – T. । २. सति । ३. कारणव्यापकाभावो निवर्तते ।

“ अग्निमति प्रदेशे ” **साध्ये** “ धूम इति ” **कार्यहेतोः प्रदर्शनम्** , “अभावे च ” **अभावस्य व्यवहारे च** “ उपलब्धिलक्षणप्राप्तस्यानुपलब्धिरिति ” **अनुपलब्धेरुपन्यासः ।**

[ § ३७. त्रिविधहेतुबाह्यानां हेत्वाभासत्वे प्रमाणोपदर्शनम् । ]

**कस्मात् पुनः त्रिविध एव हेतुः ? इत्याशङ्क्य** [S. 59b.] **त्रिविधहेतुव्यतिरिक्तानामर्थानां हेत्वाभासतया हेतुविरुद्धया व्याप्तेस्त्रिष्वेव हेतुत्वं नियतं भवतीति हेत्वाभासतां प्रमाणवतीं तद्व्यतिरेकिणां दर्शयन्नाह** – “ अत्रैव ” **स्वभावकार्याऽनुपलब्ध्याख्ये** “ त्रिविधहेतौ अविनाभावस्य नियमादिति ” **त्रिविधहेतुव्यतिरिक्तेष्वर्थेष्वविनाभावाऽभावादित्यर्थः । ततश्चाविनाभावविकलत्वात् स्वभावकार्यानुपलब्धिव्यतिरेकिणोऽर्था हेत्वाभासाः प्रमेयत्वादिवत् इत्युक्तं भवति । अविनाभावाभावश्च त्रिविधहेतुव्यतिरिक्तत्वादेव तादात्म्यतदुत्पत्त्योरविनाभावव्यापिकयोरभावाद् व्यापकानुपलब्धितोऽवगतः ।**

[ § ३८. अविनाभावनिरूपणम् । ]

**अथ कोऽयमविनाभावः ? कस्य चासौ ? कथं वाऽत्रैव नियत उच्यते ? इत्यत आह** – “ यथोक्ता व्याप्तिः व्यापकस्य ” – **तत्कारणतया तद्भावतया च । यत्र तद्व्याप्यं कार्यं स्वभावो वा सन्निहितस्तत्र भाव एव ।** “ व्याप्यस्य वा ” – **कार्यस्य स्वभावस्य वा । यत्र तत्कारणस्वभावाख्यं व्यापकं सन्निहितं तत्रैव धर्म्मिणि न तदभावेऽपि भाव इति या व्यापकव्याप्यधर्म्मतया व्याप्तिरुक्ता सा ।** “ यथोक्ता व्याप्तिरविनाभावः ” । **कस्य ? ।** “ पक्षधर्म्मस्य ” **साध्यधर्म्मिधर्म्मस्य ।** “ स ” **एवंरूपोऽविनाभावः** [S. 60a.] “तृ(त्रि)विधाद्” **यथोक्ताद् हेतोः** “अन्यत्र” **तद्व्यतिरेकिण्यर्थे** “नास्ति” । **यतोऽत्र च तृ(त्रि)विधेऽस्ति, तादात्म्यतदुत्पत्त्योराविनाभावेन व्याप्तयोर्भावात् , कृतकत्वानित्यत्ववदनयोर्व्याप्यव्यापकभावादिति ,** “ तस्मादत्रैव ” **त्रिविधे हेतौ तदन्यत्राभावमुखेन** “ नियतः ” **उच्यते । तदनेन** “हेत्वाभासास्ततोऽपरे” **इत्यस्य** “अविनाभावनियमात्” **इत्युपपत्तिसहितस्यार्थः प्रदर्शितः । यथा च त्रिविधाद् हेतोरन्यत्राविनाभावो नास्ति तथा प्रागेवोक्तम् ।**

यदि वा स्वभावादन्योऽर्थोऽर्थान्तरम्, तच्च[1] कार्यादप्यन्यत् – कारणमनुभयं [T. 244a.] वा। अनुपलब्धेरप्यन्यद् यथोक्तायाः – अनुपलब्धिमात्रमुपलब्धिर्व्वा प्रतिषेध्यस्य तदन्यस्यापि विरुद्धस्याविरुद्धस्य वा। तत्रार्थान्तरम् यद्यनन्तरकार्यं[2] तस्यार्वाग्दर्शिभिः इतरविवेकेन लक्षयितुमशक्यत्वात् अलिङ्गत्वम्। कार्यदर्शनात् [S. 60b.] विवेकावसायेऽपि साध्यसिद्ध्युत्तरकालभावी पक्षधर्म्मतावसायोऽन्वयानुगमनं च व्यर्थं। व्यवहितकार्यमपि कारणं न कार्यस्य लिङ्गम्, अन्तरालप्रतिबन्धवैकल्यसम्भवेन व्यभिचारात्। तदुक्तम् –

"सामग्री[3]फलशक्तीनां परिणामानुबन्धिनि।
अनैकान्तिकता कार्ये प्रतिबन्धस्य सम्भवात्" [प्रमाणवा० ३. ७] ॥

इति। योग्यतानुमाने तु नार्थान्तरं लिङ्गम्।

नाप्यनुभयम्, अप्रतिबन्धेन गमकत्वायोगात्। कथं कृत्तिकोदयविज्ञानाद् रोहिण्यासत्तिकॢप्तिः? इति चेत्। ननु साऽपि नैवासति प्रतिबन्धे युक्ता विशेषाभावेन सर्व्वतः सर्व्वप्रतीतिप्रसङ्गात् इत्युक्तत्वात्। तस्मान्नक्षत्रचक्रस्य सङ्क्रान्तिहेतुरेव कालव्यवधानेन कश्चित् कल्पयितव्यः, यथा भूतसंक्षोभः पश्चात्कालभाविनो वर्षस्येति हेतुधर्म्मानुमानेन कार्यलिङ्गजैव कल्पयितव्या।

अनुपलब्धिमात्रमपि संशयहेतुः, [S. 61a.] [T. 244b.] प्रमाणनिवृत्तावप्यर्थाभावासिद्धेः। उपलब्धिरपि प्रतिषेध्यस्य कथमभावं साधयेत्?, अभ्रान्तोपलम्भस्याभावायोगात्। विरुद्धोपलब्धिस्तु प्रतियोग्यभावं साधयति। किन्तु स विरोधस्तद्भावे सत्यन्यानुपलम्भादेव सिद्ध इति तद्द्वारेणानुपलब्धिरेव प्रयुक्ता भवति। अन्यथाऽनिषिद्धोपलब्धेरभावासिद्धेः। अविरुद्धोपलब्धिः पुनः प्रतिषेधेऽनैकान्तिकी, सहभावसम्भवादविरुद्धानाम्। न चापरः प्रकारः सम्भवतीति नाविनाभावोऽन्यत्र विद्यत इति।

१. कार्यहेतोरपि यदन्यदभ्युपगम्यते तदपि तच्च.........ऽर्थान्तरमेवेत्यर्थः। २. अनन्तरं कार्यं यस्मात् कारणात्। ३. सामग्र्याः फलं च ताः शक्तयश्च।

# [ २. स्वभावहेतुनिरूपणम् । ]

## [ § १. स्वभावहेतोर्लक्षणाभिधानम् । ]

इदानीं स्वभावहेतोस्तावल्लक्षणमाह – " तत्र " हेतुत्रये स्वभावहेतोस्तावल्लक्षणमुच्यते । साध्यते येन तत् साधनम् । तच्चासौ धर्म्मश्च तस्य भावस्तद्भावः । स एव "साधनधर्म्मभावमात्र"म् । तस्य "अन्वयः" । स यस्यास्ति साध्यधर्म्मस्यावयवे समुदायोपचारात्, तस्मिन् । " स्वभावो हेतुः " । साध्यधर्म्मस्य श्रुतत्वात् तस्यैव स्वभाव इति गम्यते । कथं पुनरसौ साध्यधर्म्मस्वभावो ? यावता भेदेन प्रतीयत इत्यत आह[1]– "अपरस्मादपरस्माच्च" असतोऽक्षणिकाच्च या "व्यावृत्ति"स्तस्या यो [S. 61b.] "भेदः" अवधिभेदोपकल्पितस्तेन हेतुभूतेन " साध्यधर्म्मात् साधनधर्म्मस्य " यो "भेद"स्तस्मिन् " सत्यपि " " वस्तुतः " परमार्थतो " लिङ्गस्वभाव एव " साध्यधर्म्मस्वभाव [T. 245a.] एव । तथा हि – य एवासतो व्यावृत्तः स एवाक्षणिकादपि । तत एकस्माद् धर्म्मिणो भेदाभावात् साध्यसाधनधर्म्मावपि परमार्थतो नैव भिद्येते इति ।

## [ § २. परमतनिरासार्थं साध्यधर्मे साधनधर्मभावमात्रेत्यादिविशेषणम् । ]

यदि वस्तुतो लिङ्गिस्वभाव एव साधनधर्म्मः, तत् कस्मात् " साधनधर्म्मभावमात्रान्वयिनि" इति साध्यधर्म्मो विशेष्यते ? । यो हि यस्य स्वभावः स कथं तन्मात्रान्वयी न स्यात् ?, नीरूपत्वप्रसङ्गादतत्स्वभावता वा इत्यत आह – हेतुः स्वभावो यस्य साध्यधर्म्मस्य तस्मिन् " हेतुस्वभावे " " साध्यधर्म्मे " सति " अन्वयव्यभिचाराभावात् " साधनधर्म्मभावमात्रस्य योऽन्वयस्तस्य व्यभिचाराभावात् । [S. 62a.] सम्भवे व्यभिचारे च विशेषणं युक्तम् । अत्र तु सम्भव एव न व्यभिचार इति " विशेषणमयुक्तमेव । तथापि " स्वभावहेतुलक्षणे क्रियमाणे यदेतत् " साध्यधर्म्मस्य " "तन्मात्रान्वयेन" साधनधर्म्मभावमात्रानुगमनेन विशेषणं " तत् परमतापेक्षं " नैयायिकादीनां विप्रतिपत्तेस्तन्मतापेक्षं न तु स्वमतापेक्षम् ।

---

१. आह परस्परेति । अप° T.

तामेव परविप्रतिपत्तिं दर्शयन्नाह – "परे हि" नैयायिकादयः "अर्थान्तरनिमित्तं" जनकादर्थादन्यो योऽर्थो वेगवद्द्रव्ययोगादिः तन्निमित्तम्। ते ह्येवमाहुः – वेगवद्द्रव्ययोगादवयवेषु कर्म्माण्युत्पद्यन्ते। तेभ्योऽवयवविभागः। ततस्तत्संयोगविनाशस्तदारब्धं कार्यद्रव्येऽपि(कार्यद्रव्यमपि) नश्यतीति। [T. 245b.] एवमर्थान्तरं निमित्तं। तत एव "अर्थान्तरनिमित्तमपेक्षमाणं" कृतकत्वादिभावेऽप्यभावाद् "अतद्भावमात्रान्वयिनं" तस्य कृतकत्वादेः भावः सत्ता सैव तन्मात्रं तस्यान्वयः स यस्यास्ति [S. 62b.] साध्यधर्म्मस्य अनित्यत्वलक्षणस्य तद्विपरीतम् "अपि" कृतकत्वादेः "स्वभावमिच्छन्ति" यतः ततो विशेषणं कृतम्। तेन च विशेषणेन तथाविधस्यार्थान्तरनिमित्तस्य विनाशस्यातत्स्वभावतामाह लक्षणे विशेषणकारः। स्वसत्तामात्रभाविन्येव स्वभावत्वं नान्यत्रेति विशेषणेन सूचनात्।

[§ ३. हेतुमति विनाशे साध्ये कृतकत्वस्य व्यभिचारित्वम्।]

तथा, "तस्मिन्" अर्थान्तरनिमित्ते साध्ये "हेतोः" कृतकत्वादेः व्यभिचारमनैकान्तिकतां चाह। अत्रोदाहरणं "यथा – हेतुमति विनाशे" साध्ये "कृतकत्वस्य" हेतोः "अतत्स्वभावता व्यभिचारश्चेति."।

ननु च कृतकत्वस्वभावता अनित्यताया भेदोपगमात् नेष्टैव परैस्तत् किमुच्यते – "अतद्भावमात्रान्वयिनमपि स्वभावमिच्छन्ति" इति?। एवं मन्यते – व्यतिरिक्तावपि कृतकत्वानित्यत्वाख्यौ धर्म्मावभ्युपगच्छद्भिरवश्यम् 'अभूत्वा भवनं भूत्वा चाभवनमनवस्थायिस्वभावत्वम्' अभ्युपगन्तव्यम्, [S. 63a.] अन्यथाऽऽत्मादिष्वपि कृतकत्वानित्यत्वे विशेषाभावाद् भवेताम्। ततो यदेव 'अभूत्वा भवनं भूत्वा[ऽभवनं] चानवस्थायित्वम्' उपादीयते भावस्य तयोरेव तद्दर्शनबलोत्पन्नकृतकत्वानित्यत्वभेदावभासिकल्पनाद्वारेण साध्यसाधनभावोऽस्तु, किं व्यतिरिक्तधर्म्मकल्पनया?। [T. 246a.] कल्पयित्वाऽपि वस्त्वात्मन एवार्थक्रियानिबन्धनतया तदर्थिभिः चिन्त्यत्वात्। तदुक्तम् –

“ सदसत्पक्षभेदेन शब्दार्थानपवादिभिः ।
वस्त्वेव चिन्त्यते ह्यत्र[1] प्रतिबद्धः फलोदयः ॥
अर्थक्रियाऽसमर्थस्य विका(चा)रैः किं तदर्थिनाम् ? ।
षण्ढस्य रूपवैरूप्ये कामिन्याः किं परीक्षया ? ॥ ”
[प्रमाणवा० ३. २०९-२११]

इति। तस्माद् दृष्टा अपि भावाः[2] केनचिदात्मना तदन्यव्यावृत्तेन कथञ्चिन्निश्चिताः[3] तदन्येनाप्यतद्रूपव्यावृत्तेनात्मना[4] भ्रान्तिकारणसद्भा[5]वादनिश्चीयमानाः, [6]निश्चितानि[7]श्चितयो रूपयोः प्रमाणान्तरतः [8]प्रतिबन्धावसायपुरोवर्त्तिनोऽनुमानतो निश्चीयते इति अनित्यतास्वभावभूतस्यैव कृतकत्वस्य विनाशं प्रति लिङ्गता युक्ता। तथा च विनाशस्वभाव एव कृतकत्वाख्यो हेतुः तैर्यथोक्तन्यायादिष्टो भवति। तस्या[9]ऽतन्मात्रान्वयित्वेऽर्थान्तरनिमित्ततया विशेषणेनातत्स्वभावता [S. 63b.] कथ्यते।

स्यान्मतम् – कृतकत्वेन साक्षाद् हेतुमान् विनाशोऽनुमीयते ततः प्राक्प्रध्वंसाभावविशेषणा सत्ता तत्समवायो वाऽनित्यता व्यवस्थाप्यते। अत एवात्मादिष्वनित्यताप्रसङ्गाभावः। विनाश इति च न भावाभावं प्रध्वंसलक्षणं मन्यामहे। कृतकत्वं तु स्वकारणसत्तासमवायम्। तस्य[10] विशेषणेन विनाशोऽस्वं[11](शास्व)भावताख्यापने न किञ्चिदनिष्टमिति।

तदयुक्तम्, तथा[12]विधस्य विनाशस्य हेतुमत्ताविरोधात्, स्वयमेव चैतदाचार्यो [T. 246b.] वक्ष्यति। न च तेनानुमितेन किञ्चित्, तस्यार्थक्रियासामर्थ्यविकलत्वात्। सुखदुःखसाधने ज्ञात्वा यथार्हं प्रतिपित्सवो हि किञ्चित्[13] परीक्षन्ते न व्यसनितया। तस्मादनेनास्थिरस्वभावतैव भावस्यानुमातव्या। सैव च हेतुमती

१. वस्तुनि। २. कृतकत्वादिना। ३. अनित्यत्वादिना। ४. सदृशापरापरोत्पत्ति°। ५. °द्भावसंभवादनि० T.। ६. [कृत]क°। ७. अनित्य°। ८. निश्चितानिश्चितयोर्यः प्रतिबन्धावसायः स पुरोवर्ती यस्य तस्मात्। ९. विनाशस्य। १०. कृतकत्वस्य। ११. विनाशस्व° T.। १२, प्रध्वंसरूपस्य। १३. किञ्चिद्वस्तु ज्ञात्वा यथार्हं सुखदुःखसाधनप्राप्तिपरिहारप्रतिपित्सवः सुखदुःखसाधने परीक्षन्ते इत्यर्थः। यद्वा सुखदुःखसाधने ज्ञात्वा तत्प्राप्तिपरिहारप्रतिपित्सवः किञ्चिद् वस्तु परीक्षन्ते इति सम्बन्धः।

कल्पनीया। अन्यथा भावविलक्षणस्य प्रध्वंसाभावस्य मुद्गरादेरुदयेऽपि तस्य भावेऽनुपयोगात् स भावस्तदवस्थ [S. 64a.] एवेति कथं तद्विशेषणा सत्ता तत्समवायो वा अनित्यता स्यात्?। अविचलितरूपस्य च भावस्य मुद्गरादिकृतप्रध्वंसाभावविशेषणौ सत्तासमवायौ यद्यनित्यता, किं नात्मादेरपि? इति प्रसङ्गः तदवस्थ एव। स्वकारणसमवायोऽपि चाभूत्वा भवनमनिच्छतो न सिध्यति। अभूत्वा भवत एव च या सत्ता सैव कृतकत्वं वर्ण्यते। न च सत्तासमवाययोर्नित्यतयोपगतयोर्निरतिशयत्वात् प्राक्प्रध्वंसाभावौ विशेषणं युज्येते। अभूत्वा भवनोपगमे च तदेव कृतकत्वमस्थिरस्वभावता च विनाशोऽस्तु। किं निष्फलया अप्रमाणिकया प्रमाणबाधितयाऽर्थान्तरकल्पनया?। एवं कृतकत्वविनाशयोस्तादात्म्योपगमोऽवश्यम्भावी परेषामपि। ततो विनाशस्यास्थायित्वलक्षणस्यार्थान्तरनिमित्ततोपगमे कृतकत्वस्यातत्स्वभावता विशेषणेन ख्याप्यते। तन्निष्पत्तावनिष्पन्नस्य भिन्नहेतुकस्य च तत्स्वभावत्वायोगात्।

तथा, तस्मिन् साध्ये [S. 64b.] कृतकत्वस्य व्यभिचारः। तथा हि – ये यत्र हेत्व[T. 247a.]न्तरापेक्षिणो न ते तत्रावश्यम्भाविनः, यथा वाससि रागः। हेत्वन्तरापेक्षी च कृतकेष्वपि भावेषु प्रध्वंसाभाव इति विरुद्धव्यासोपलब्धिः।

ननु वाससि रागस्य परिमितहेतुत्वात् तस्य च स्वकारणायत्तसन्निधानत्वात् तदाश्रयस्य च विधुरप्रत्ययोपनिपातेनास्थिरतया नावश्यम्भाविता युक्तैव। न पुनर्विनाशस्य, तद्धेतूनामानन्त्यादवश्यं कस्यचिद् घटादिषु सन्निधेः। न च विनाशस्याश्रयं प्राक् तद्धेतुसन्निधेः केचिदुपघ्नन्ति, यतस्तदभावाद् विनाशो नारभ्येतेति।

तदयुक्तम्, यतो यद्यपि बहुलं विनाशकारणानि सन्ति तथापि तेषां स्वकारणायत्तसन्निधित्वात् तथा तत्कारणानां च सन्निहितानामपि विरोधिनामप्यानन्त्यात् तद्भावे तच्छक्तिप्रतिबन्धान्नावश्यं हेतवः फलवन्त इति कश्चिन्न विनश्येदपीति व्यभि-

१. भावविविक्तक्षण° T.

चारो न निवर्तते । नन्वयं वाससि रागः सापेक्षोऽपि यदि सर्व्वत्रोपलभ्येत ततः किमवश्यम्भावी न स्यात् ? । स्याद्, यदि तथोपलभ्येत । स त्वन्यथाऽपि [S. 65a.] गृह्यते । यद्ये[1]वं न तर्हि सर्व्वत्रोपलब्धस्य विनाशस्यान्यथा[2]भावशङ्कया मनसि खेद आधातव्यः । किं वा पुनर्भवान् समस्तवस्तुविस्तरव्यापिज्ञानालोकः ?, येनैवं वदति । तथाभावे वा कथमनुमानवृत्तिर्दृष्टे न वैफल्यमश्नुवीत ? । कस्यचित् तु [T. 247b.] हेतुकृतविनाशदर्शनेऽपि हेत्वायत्तजन्मनामन्यथाऽपि दर्शनाद् उपजाताशङ्को देशकालस्वभावविप्रकृष्टेषु कथं तथाभा[3]वं निश्चिन्वीत ? । कृतकमपि चायं भावाभावलक्षणं विनाशं नित्यमुपैति, तद्विनाशोपगमे भावस्योन्मज्जनप्रसङ्गात् । न चास्य घटादेरिव विनाशहेतुरुपलभ्यते कश्चिदिति । तदुक्तम् –

"घटादिषु यथा दृष्टा हेतवो ध्वंसकारिणः ।
नैवं नाशस्य सो[4]ऽहेतुस्तस्य[5] संजायते कथम् ? ॥"

इति । ततः कृतकत्वस्य विनाशे साध्ये तेनैव व्यभिचारः किं नेष्यते ? ।

भावानामयमैकान्तिक एव धर्म्म इति चेत्, कुतः पुनरेतदवसितम् ? । तेषामन्यथाभावस्यानुपलम्भादिति [S. 65 b.] चेत् । नन्वयमनुपलम्भो भवन्नप्यात्मादेरनिवर्त्तकः सत्तायाः, कथमन्यत्रान्यथाभावं निवर्त्तयति ? । त[6]स्यानुमानेनोपलम्भादिति यदुच्येत तदा त[7]त्राप्यनुमाने विपक्षे वृत्तिमनुपल[8]म्भ एव हेतोः कथं निवर्त्तयति ? इति यत्किञ्चिदेतत् । तस्मात् साधूक्तम् – 'हेतुमति विनाशे कृतकत्वस्यास्वभावतां व्यभिचारं चाह' इति अलमतिजल्पितेनेति ।

[ § ४. परार्थानुमाने साधर्म्यवैधर्म्यप्रयोगोदाहरणम् । ]

इदानीं यद्यपि स्वार्थानुमानं प्रकृतं तथापि कश्चित् प्रयोगदर्शनाभ्यासात् प्रयोगभङ्ग्यैव प्रतिपद्यत इति स्वार्थानुमानेऽपि

१. परः । २. अवश्यम्भावित्वाशङ्कया । ३. अवश्यम्भाविविनाशित्वम् । ४. नाशः । ५. नाशस्य । ६. आत्मादेः । ७. आत्मानुमानेऽपि । ८. अप्रमाणकः सन् (प्रथमं टिप्पनम्) आत्मादेः संशयापनिवर्त्तकत्वेनाभिमतो यः स एव (द्वितीयं टिप्पनम्) ।

तत्सम्भवात् प्रसङ्गेन परार्थानुमानं[2] च व्युत्पादयितुमाह – "तस्य" स्वभावहेतोः " द्विधा " त्रैलक्षण्यप्रतिपादको [T. 248a.] वचनोदाहारः " प्रयोगः "। तमेव दर्शयति – समानो धर्म्मो यस्य तस्य भावः तेन " साध्य(ध)र्म्येणैकः " प्रयोगः। " अपरो " विसदृशो धर्म्मो यस्य तस्य भावः तेन " वैधर्म्येण "।

यथाक्रममनयोरुदाहरणमाह[3] – " यथा यत् सत् "। यद्यत्सदिति वीप्साप्रधानो यच्छब्दः। "तत् सर्व्वम्" इति तच्छब्दोऽपि वीप्साप्रधान एव। अत्र सर्व्वग्रहणेन चाशेषपरिग्रहाद् [S. 66a.] वहिर्व्याप्तेर्निरासः। " यथा घटादयः " इति। यस्य सत्त्वक्षणिकत्वयोः प्रतिबन्धप्रसाधकं प्रमाणं घटादौ प्रवृत्तं तं प्रति तत्र स्मृतिसमाधानार्थं दृष्टान्तवचनं न साध्यसिद्ध्यर्थम्। दृष्टान्तमात्रतः साध्यसिद्धेरभावात्। न ह्येकस्य तथा भावे सर्व्वस्तथा भवति, अतिप्रसङ्गात्। " संश्च शब्दः " इति पक्षधर्म्मोपसंहारः।

वैधर्म्यप्रयोगस्योदाहरणम् – " तथा " इत्यादि। तथाशब्दः समुच्चये। वैधर्म्येण च प्रयोग उदाहृियते। अत्रापि सर्व्वग्रहणं विभक्तिविपरिणामेन सम्बन्धनीयम् " क्षणिकत्वाभावे " सर्व्वस्मिन् " सत्वा(त्त्वा)भावः " इति।

प्रयोगद्वयेऽपि सर्व्वग्रहणस्य फलं दर्शयन्नाह– "सर्व्वस्मिन् साधनधर्मवति " धर्म्मिणि न दृष्टान्तधर्म्मिण्येव "साध्यधर्म्मस्यो"पसंहरणं " उपसंहारो " ढौकनं तेन या " व्याप्तिः " 'व्यापकस्य तत्र भाव एव' इत्यादिरूपा तस्याः प्रदर्शनं प्रतिपादनं तदेव "लक्षणं" ययोः तौ तथोक्तौ। ततश्च ये [T. 248b.] [S. 66b.] साध्यधर्म्मिणं परिहृत्य वहिर्व्याप्तिं प्रदर्शयन्ति ते – यद्यपि दृष्टान्तधर्म्मिणि साध्यधर्म्मेण साधनधर्म्मो व्याप्तः तावताऽस्य सर्व्वत्र तथाभावाभावात् साध्यसिद्धिरयुक्तेति – निरस्ता भवन्ति। सर्व्वत्र वा साध्यधर्म्मेण साधनधर्म्मस्य व्याप्तिः तद्भावे, सा तथाविधैव किन्न प्रदर्श्यते येनासमर्था वहिर्व्याप्तिराख्यायते?। न हि 'स श्यामः, तत्पुत्रत्वात्, परिदृश्यमानपुत्रवद्' इति तत्पुत्रत्वस्य

१. प्रयोग°। २. °मानप्रयोगं व्यु° T.। ३. °माह यद्यत्सदिति – T.।

श्यामत्वेन साध्याद् बहिः परिदृश्यमानपुत्रे व्याप्तिप्रदर्शनेऽपि साध्यसिद्धिर्भवति । तस्माद् यैव सर्व्वोपसंहारेण व्याप्तिः प्रमाणसिद्धप्रतिबन्ध[1]निबन्धना साध्यसिद्धौ समर्था सैव तत्स्मृतये प्रदर्शनीया । न च सर्व्वोपसंहारेण व्याप्तिप्रदर्शनेऽपि धर्म्मविशिष्टो धर्म्यपि तदैव प्रतीयते, यतः पक्षधर्म्मोपदर्शनोत्तरकालभाविनोऽनुमानस्य स्मृतित्वं [S. 67a.] स्यात् । त[2]स्याः साध्यधर्म्मिणि साध्यधर्माविनाभूतसाधनधर्म्मप्रतीतिनिबन्धनत्वेन तदुपदर्शनात् प्रागसम्भवात् । त[3]त्पूर्व्विकायां च व्याप्तौ अ[4]नन्तरं विशेषविषयमनुमानं कथं स्मृतिः स्यात् ? इति ।

[ § ५. वैधर्म्यप्रयोगेऽपि व्याप्तिप्रदर्शनं संगतम् । ]

ननु च साधर्म्यप्रयोगस्य व्याप्तिप्रदर्शनलक्षणत्वं युक्तम्, साधनधर्म्मे सति साध्यधर्म्मस्यावश्यम्भाविताप्रदर्शनात्; वैधर्म्यप्रयोगस्य तु कथम् ? । तत्र हि केवलं साध्याभावे हेत्वभावः कथ्यते, न तु हेतौ [T. 249a.] सति साध्यस्य भाव एवेति । नैष दोषः । न ह्यत्र साध्याभावे हेत्वभावस्तुच्छरूपो[5] दर्श्यते, त[6]स्य हेतुरूपताविरोधात् । वस्तुधर्म्मो हि सत्त्वादिको हेतुः । त[7]स्यात्मन एवाभावः कथं [हेतुस्व]रूपं भविष्यति, यतस्त्रिरूपो हेतुर्भवेत् । किन्तु निवृत्तौ निवृत्तिधर्म्मकत्वं स्वगतो धर्म्म उपदर्श्यते वैधर्म्यप्रयोगेण, त[8]थाविधे च साधनधर्म्मेऽवश्यंतया साध्यधर्म्मस्य भावः प्रतीयत एव, अन्यथा तन्निवृत्तौ निवृत्तिधर्म्मकत्वस्यैवायोगादिति न व्याप्तिप्रदर्शनलक्षणत्वं वैधर्म्यप्रयोगस्य न युज्यते । [ S. 67 b. ]

[ § ६. प्रतिज्ञाप्रयोगस्य नैरर्थक्यम् । ]

ननु द्विविधेऽपि प्रयोगे प्रतिज्ञाप्रयोगो नोपदर्शितः तत् कथं तदर्थावगतिः ?, तदर्थप्रत्यायनाय च साधनप्रयोगोऽभिमतः इत्यत आह – "अत्र" अनयोः प्रयोगयोः " पक्षधर्म्मसम्बन्धवचनमात्रसाम-

१. प्रतिवन्ध° । २. साध्यधर्मविशिष्टधर्म्मिप्रतीतेः । ३. पक्षधर्म्मोपदर्शनपूर्व्विकायाम् । ४. व्याप्तिस्मरणात् । ५. तुच्छरूपस्य । ६. तस्य हेतुव्याप्तिनिर्देशलक्षणरूपसम्बन्धित्वाभावात् – T. । ७. सत्व(स्व)स्य । ८. विपक्षनिवर्त्तनधर्म्मस्वभावे ।

र्थ्यादेव " वक्ष्यमाणकात् " प्रतिज्ञार्थस्य " धर्म्मधर्म्मिसमुदायलक्षणस्य साध्यस्य "प्रतीतेः" हेतोः "न" " प्रतिज्ञायाः प्रयोग उपदर्शितः " । परः सामर्थ्यमनवबुध्यमान आह – " अप्रदर्शिते " वचनेन "प्रमेये" साध्ये " कथं " न कथञ्चित् "तत्प्रतीतिः" प्रतिज्ञार्थप्रतीतिः "इति" एवं " चेद् " यदि मन्यसे तदा स्वार्थानुमानकाले " स्वयं " परं प्रतिपादकमन्तरेण " प्रतिपत्तौ " प्रमेयस्य " क उपदर्शयिता " ? नैव [T. 249b.] कश्चित् । स्वयमेव तु साध्याविनाभूतसाधनधर्म्मदर्शनात् प्रमेयं प्रतिपद्यते तथा परार्थानुमानेऽपि तत एव तत्प्रतीतिरस्तु किं प्रतिज्ञावचनेन ? ।

यदि स्वयंप्रतिपत्तिकाले न कश्चित् प्रमेयस्योपदर्शयिता कथं [S. 68a.] तर्हि तत्प्रतिपत्तिः ? इत्यत आह – " प्रदेशस्थं " साध्यधर्म्मिणि स्थितं " धूमं " साधनधर्म्मं " उपलऽधवतः " प्रत्यक्षेण दृष्टवतः सतः " तस्य " धूमस्य " अग्निना " साध्यधर्म्मेण प्रमाणतः प्रतिबन्धनिश्चयबलात् प्राक्प्रतिपन्नायाः " व्याप्तेः " अविनाभावस्य " स्मरणे " सति " तत्सामर्थ्यादेव " पक्षधर्म्मग्रहणव्याप्तिग्रहणसामर्थ्यादेव प्रतिज्ञाप्रयोगरहिताद् " अग्निरत्र इति " एवंरूपा " प्रतिज्ञार्थप्रतीतिर्भवति " ।

स्यान्मतम् – तत्राप्यस्य कर्णपिशाचिकादिः प्रमेयं कथयत्येवेत्यत आह – " न च " नैव " तत्र " स्वार्थानुमानकाले " कश्चित् " कर्णपिशाचिकादिरदृश्यो " 'अग्निरत्र' – इति" एवम् "अस्मै" प्रतिपत्त्रे(त्रे) प्रमेयं " निवेदयति " कथयति । यदि भवान् सत्यवादी नैवं वक्तुमर्हति । तथा हि – वयमपि प्रदेशस्थधूमदर्शनात् तस्याग्निना व्याप्तिस्मरणसापेक्षादग्निं [S. 68b.] प्रतिपद्यामहे । न चास्मभ्यं कश्चित् निवेदयति 'अग्निरत्र' इति, भवति च तत्प्रतिपत्तिः, तथा तदन्यस्यापि सा युक्तरूपैवेति ।

यद्यपि न कश्चित् निवेदयति तथापि स्वयमेव प्रमेयं व्यवस्थाप्य तत्प्रतिपत्तये लिङ्गमनु[T. 250a.]सरिष्यतीति चेत्, आह – " नापि " न केवलं न कश्चित् निवेदयति "स्वयमपि प्रागेव" लिङ्गव्यापारात् न प्रतिपद्यते " किञ्चिद् " अग्न्यादिकम् । कस्मात् ?

इति चेत्, “प्रमाणं” हेतुम् “अन्तरेण” विना ‘अग्निरत्र’ इत्येवं प्रतीतेः “निमित्ताभावात्”। त्रिरूपो हि हेतुः परोक्षार्थप्रतीतेर्न्निमित्तम्, तदभावे सा कथं भवेत्?। अथ लिङ्गमन्तरेणाप्येवं प्रतीतिर्भवतीति ब्रुयात् तदा प्रतीताविष्यमाणायां लिङ्गस्य वैयर्थ्यम्, तस्यानुमेयप्रतिपत्त्यर्थत्वात्, तेन विना तत्प्रतिपत्तौ कथमस्य निष्प्रयोजनता न स्यात्?।

अत्यन्तमूढतां च परस्य दर्शयन्नाह – “स्वयमेव” स्वतन्त्र एव ‘अग्निरत्र’ – इति व्यवस्थाप्य। कथं [S. 69a.] स्वतन्त्रो व्यवस्थापयति?। “अकस्मात्” प्रमाणमन्तरेण व्यवस्थापनात्[1] “तत्प्रतिपत्तये” निर्न्निमित्तव्यवस्थापितप्रमेयप्रतिपत्त्यर्थं “पश्चात्” “लिङ्गं” तन्निमित्तम् “अनुसरतीति कोऽयं प्रतिपत्तेः क्रमः” परिपाटिः?। तथा हि – प्रथमं लिङ्गानुसरणम्, ततः साध्यप्रतिपत्तिरिति विपश्चितां क्रमः। अयं त्वपूर्व्वोऽनुमाता यस्तद्विपर्ययमाश्रयत इति उपहसति। यत्तल्लोके गीयते – शिरो मुण्डयित्वा नक्षत्रं पृच्छतीति तत्तुल्यत्वादस्य क्रमस्य। तस्मात् पक्षधर्म्मग्रहणव्याप्तिस्मरणसामर्थ्यादेव स्वयं प्रतिपद्यते। तच्च प्रतिपादकं कथितमेवेति न किञ्चित् प्रमेयनिर्देशेन।

यदि नाम स्वार्थानुमानकाले स्वयमेव साध्यं [T. 250b.] प्रतिपद्यते तद् युक्तमेव, लिङ्गस्यापि तत्र स्वयमेव प्रतिपत्तेः। परार्थानुमाने तु परतो यथा लिङ्गं प्रत्येति तथा प्रमेयमपि परत [S. 69b.] एव प्रत्येतव्यम्। अतो युक्त एव प्रतिज्ञाप्रयोग इत्यत आह – “परेणापि” न केवलं स्वयमेव प्राग् व्यवस्थाप्यमानं प्लवते परेणापि वादिना “तत्” प्रमेयम् “उच्यमानं प्लवत एव” तद्वचनस्य सन्दिग्धार्थाभिधायकतया साध्यनिश्चयानङ्गत्वात् प्रमेयगाम्भीर्यानवगाहिनः परम्परयाऽप्यतत्सम्बद्धस्य विवक्षामात्रनिबन्धनतयोपर्य्येवावस्थापनात्। कस्मात् प्लवते? इति चेत्, “उपयोगाभावात्” नास्य साध्यप्रतीतिं प्रति कश्चिदुपयोगः, तत्प्रत्यायनसमर्थस्यानभिधानादिति यावत्।

१. व्यवस्थापयिष्यति – T.

परस्तूपयोगमात्रं कदाचिद् ब्रूयाद् इत्याशङ्क्याह – "विषयोपदर्शनं" हेतोर्यो विषयः साध्यं तदुपदर्शनं प्रतिज्ञावचनस्योपयोगः "चेत् मतम्"। अत्राह "तेनैव" विषयेण, "ताव"च्छब्दः क्रमे। विषयस्योपदर्श्यमानस्यार्थवत्तायां तदुपदर्शनं प्रतिज्ञावचनस्य प्रयोजनं भवेत्। विषयेणैव तु दर्श्यमानेन "कोऽर्थः" किं [S. 70a.] प्रयोजनम्?।

ननु साध्यप्रतीतिः साधर्म्यवत्प्रयोगादिप्रतीतिश्च विषयोपदर्शनस्यार्थः। ततस्तदुपदर्शनं प्रतिज्ञावचनस्य प्रयोजनम्। तथा हि – असति साध्यनिर्देशे 'यत् कृतकं तदनित्यम्' इत्युक्ते 'किमयं साधर्म्यवान् प्रयोगः? [T. 251a.] उत वैधर्म्यवान्?' इति न ज्ञायेत। उभयं ह्यत्राशङ्क्यते – कृतकत्वेनानित्यत्वे साध्ये साधर्म्यवान्, नित्यत्वेनाकृतकत्वे वा वैधर्म्यवान् इति। 'अनित्यः शब्दः' 'अकृतको वा' इति तु प्रतिज्ञावचने सत्युभयमसन्दिग्धमवगम्यते। हेतुविरुद्धानैकान्तिकप्रतीतिश्च न स्यात्। प्रतिज्ञापूर्व्वके तु प्रयोगे 'अनित्यः शब्दः, कृतकत्वात्' इति हेतुभावः प्रतीयते, 'नित्यः, कृतकत्वात्' इति विरुद्धता, 'प्रयत्नानन्तरीयकः कृतकत्वात्' इत्यनैकान्तिकत्वम्। हेतोश्च त्रैरूप्यं न गम्येत, तस्य साध्यापेक्षया व्यवस्थानात्। सति प्रतिज्ञावचने अवयवे समुदायोपचारात् साध्यधर्म्मी पक्ष इति तत्र [S. 70b.] वृत्तस्य कृतकत्वस्य पक्षधर्म्मत्वं; साध्यधर्म्मसामान्येन च समानोऽर्थः सपक्ष इति तत्र वर्त्तमानस्य सपक्षे सत्त्वम्; न सपक्षोऽसपक्ष इति साध्यधर्म्मविरहिण्यवृत्तस्यासपक्षेऽप्यसत्त्वं प्रतीयेत इत्याशङ्क्याह – "यदि प्रतीतिः" साध्यस्य निश्चयलक्षणा साधर्म्यवत्प्रयोगादेश्च स्वरूपावधारणात्मिका। "अन्यथा" प्रतिज्ञावचनमन्तरेण "न स्यात् तदा" यदुक्तं साध्यसिध्यर्थं साधर्म्यवत्प्रयोगादिज्ञानार्थं च विषयोपदर्शनम् इति तत् "सर्व्वं शोभेत" यावता स्वार्थानुमानकाले प्रतिज्ञावचनमन्तरेणापि पक्षधर्म्मग्रहण[T. 251b.]सम्बन्धस्मरणतः साध्यसिद्धिलक्षणा भवत्येव प्रतीतिः इत्याख्यातमेव। तद्वत् परार्थेऽप्यनुमाने भवि-

ष्यति । यत एवं "तस्मात्" "एष" प्रतिज्ञाप्रयोगवादी यदा स्वयं साध्यं प्रत्येति तदा स्वयं साध्यस्य [S. 71a.] "प्रतीतौ" विषय उपस्थाप्यते येन प्रतिज्ञावचनद्वारेण पुंसा "केनचित्" तेन "विनापि" "प्रतियन्" साध्यं निश्चिन्वन् लिङ्गसामर्थ्यादेव । यदाऽस्माभिः प्रतिपाद्यते तदा "अस्मान् कार्यिणो दृष्ट्वा व्यक्तं" प्रतिज्ञाप्रयोगलक्षणं "मूल्यं मृगयते" । क इव ? "पर्व्वब्राह्मण इव" । यथा दक्षिणामन्तरेणाप्यन्यदा और्ध्वरथिको ब्राह्मणो भुञ्जानोऽन्यदा श्राद्धादिपर्व्वण्यर्थिनं श्रद्धालुं ब्रवीति – यदि मे घृतपूरं घृतपूरं प्रति रूपकं ददासि ततोऽहं भुञ्जे नान्यथेति । तेन तुल्यो भवानपीति ।

किञ्च, यदपि ब्रवीषि – परार्थानुमानकाले यथा लिङ्गं परेणानभिधीयमानं न प्रत्येति प्रतिपाद्यस्तथा साध्यमपीति । तदैतद् युज्यते यद्यसौ वादिवचनमात्रेण लिङ्गमपि निश्चित्य तदनुसारेण साध्यमवगच्छेत्, परप्रतीत्यर्थिनश्च तदा वयमपि प्रतिज्ञां किन्न प्रयुञ्ज्महे लिङ्गवचनरहिताम् ? । [S. 71b.] अस्मद्वचनस्यैव तं प्रति प्रमाणतया, तत एवानुमेयप्रतीतेः, तद्वचनस्य चरितार्थत्वात् । न चैतदस्ति, यतः "अस्मद्वचनादपि" न केवलं स्वार्थानुमानकाले अस्मद्वचनमन्तरेण इत्यपिशब्दः । किन्तु [T. 252a.] यदाप्यस्मद्वचनं प्रवृत्तं तदापि "नैव" अस्मद्वचनात् "लिङ्गमपि प्रत्येति", कुत एव साध्यसिद्धयेऽनुसरिष्यति ? । अपि तु स्वयमस्य यदि तल्लिङ्गं कुतश्चित् प्रमाणतः सिद्धं भवति "अस्मद्वचनेन तु" केवलं तत्र "स्मृतिसमाधानमात्रं क्रियते" । तदा स्वयं सिद्धमेव लिङ्गमनुसृत्य साध्यं प्रत्येति । नास्मद्वचनात् पानीयमपि पिबतीति । "तस्मात्" "कोऽनयोः" प्रतिज्ञावचनावचनात्मिकयोः "अवस्थयोर्व्विशेषः" ?, उभयत्र स्वयंसिद्धलिङ्गसामर्थ्यादेव साध्यप्रतीतेर्न कश्चित् । ततः स्वपरार्थानुमानयोः स्वयंसिद्धलिङ्गानुसरणम्, ततः साध्यप्रतीतिं च प्रति विशेषाभावात् प्रतिज्ञोपन्यासः परार्थानुमानेऽपि व्यर्थ [S. 72a.] एव । लिङ्गमपि हि तावदत्र नाभिधीयते यदि तत्

१. लिङ्ग° ।

पूर्व्वप्रसिद्धं स्वयमनुस्मरेत् किमङ्ग पुनः सन्दिग्धार्थाभिधायकं प्रतिज्ञावचनमुपादीयते ? ।

स्यान्मतम् – यदि नाम साध्यसिद्धौ प्रतिज्ञावचनस्य नोपयोगस्तदर्थोऽस्य प्रयोगो मा भूत, साधर्म्यवत्प्रयोगादिज्ञानार्थं तु तदुपादानमवस्थितमेव, तस्यान्यथा प्रतीत्यभावात् इत्यत आह – "दृष्टा च साधर्म्यवत्प्रयोगादेः प्रतिज्ञावचनमन्तरेणापि प्रतीतिः," ततस्तदर्थोऽपि प्रतिज्ञोपन्यासो न शोभते ।

कुतः पुनः साधर्म्यवत्प्रयोगादेरसति साध्यनिर्देशे प्रतीतिः? [T. 252b.] इत्याह – पक्षधर्म्मसम्बन्धवचनमात्रादिति" । एवं मन्यते – नैव हि कश्चित् 'यत् कृतकं तदनित्यम्' एतावन्मात्रमभिधीयाऽऽस्ते, साधनन्यूनतयैवास्य पराजयात्, किन्त्ववश्यं हेतोर्द्धर्म्मिण्युपसंहारं करोतीति । तत्र यदि 'कृतकश्च शब्दः' इति ब्रूयात् तदा [S. 72b.] साध्य(ध)र्म्यवत्प्रयोगप्रतीतिः, अथ 'नित्यश्च' इत्यभिदध्यात् तदा वैधर्म्यवत इति सम्बन्धवचनपूर्व्वकात् पक्षधर्म्मवचनात् प्रयोगद्वयावगतिः ।

हेतुविरुद्धानैकान्तिका अपि पक्षधर्म्मवचनमात्रेण न प्रतीयन्ते । यदा तु सम्बन्धवचनमपि क्रियते तदा कथमप्रतीतिः ? । तथा हि – 'यत् कृतकं तदनित्यम्' इति पक्षधर्म्मवचने सत्युक्ते हेतुरवगम्यते, विधीयमानेनानूद्यमानस्य व्याप्तेः । 'यत्कृतकं तन्नित्यम्' इत्यभिधाने विरुद्धः, विपर्ययव्याप्तेः । 'यत् कृतकं तत् प्रयत्नानन्तरीयकम्' इति प्रदर्शने व्यभिचारादनैकान्तिकाध्यवसायः ।

त्रैरूप्यमपि हेतोर्गम्यत एव, यतो व्याप्तिप्रदर्शनकाले व्यापको धर्म्मः साध्यतयाऽवगम्यते । यत्र च व्याप्यो धर्म्मो धर्म्मिण्युपसंह्रियते स व्यापकधर्म्मविशिष्टतयाऽवगम्यमानः साध्यसमुदायैकदेशतया पक्ष इत्युपसंहृतस्य व्याप्यधर्म्मस्य पक्षधर्म्मत्वावगतिः, [S. 73a.] सा च व्याप्तिर्यत्र धर्म्मिण्युपदर्श्यते स साध्यधर्म्मसामान्येन समानोऽर्थः सपक्षः प्रतीयत इति सपक्षे

सत्त्वमवगम्यते, सामर्थ्याच्च [T. 253a.] व्यापकनिवृत्तौ व्याप्यनिवृत्तिर्यत्रावसीयते सोऽसपक्ष इत्यसपक्षेऽप्यसत्व(त्त्व)मपि निश्चीयत इति, यदि पक्षादिभिरपि ज्ञातैः किञ्चित्प्रयोजनं। न तु व्यवहर्तृणां पक्षादिसङ्केतापेक्षा परोक्षार्थगतिर्भवति। तथा हि – यत् क्वचिद् दृष्टं तस्य यत्र प्रतिबन्धः तद्विदस्तस्य तद् गमकं तत्र इति हि लोके वस्तुगतिर्भवति, न पक्षादिसङ्केतग्रहणापेक्षा। तत्र यथेष्टं शास्त्रकारा गमकरूपप्रतिपत्तये स्वसङ्केतेनान्यथा वा लक्षणं प्रणयन्तु। न तु व्यवहारकाले तदनुसरणं क्वचिदुपयुज्यते। तत्सङ्केतप्रतिपादितमेव तु यथोक्तं गमकं रूपमुपयोगि व्यवहर्तृणाम्। तच्चेत् प्रतिपन्नं तावतैव साध्यसिद्धिः सञ्जाता इति पक्षसपक्षादिसङ्केतापरिज्ञानेऽपि [S. 73b.] न किञ्चित् प्लूयते। अत एवाचार्यपादैः 'नान्तरीयकार्थदर्शनं तद्विदोऽनुमान' मिति गमकरूपमात्रमेव पक्षादिसङ्केतानपेक्षं प्रतिपादितम्। स्वप्रज्ञापराधास्तु तत्रापि कैश्चिदसन्त एव दोषाः प्रकीर्त्यन्त इति किमत्र ब्रूमः?। "तस्मात्" साधर्म्यवत्प्रयोगादिज्ञानार्थमपि प्रतिज्ञावचनं पक्षधर्म्मसम्बन्धवचनमात्र [T. 253b.] एव यथोक्तेन प्रकारेण प्रतीतेरयुक्तमिति "कस्तस्य" प्रतिज्ञावचनस्य "उपयोगः" नैव कश्चित्।

स्वयं चायं वादी येन क्रमेणानुमेयं प्रतिपन्नवांस्तमुल्लङ्घ्य परप्रतिपत्तये क्रमान्तरमाश्रयन् परवञ्चकतया धूर्त्त एव प्रतीयते, न सद्वृत्त इत्युपदर्शयन्नाह – "स्वनिश्चयवत्" इत्यादि। यथाऽऽत्मनो निश्चयस्योत्पादनं कृतं तथैव "अन्येषामपि निश्चयोत्पादा(द)नाय" च परहितनिरतैः "साधनमुच्यते", "तत्र" एतस्मिं(स्मिन्) न्याये सति स्वयमयं वादी "प्रमेयस्योपदर्शनेन" उपदर्शकेन वचनेन "विनाऽपि" स्वार्थानुमानकाले "प्रतिपद्य" प्रमेयं "परं" संशयितादिकं "प्रतिपादयन्" स्वप्रतिपन्नं प्रमेयमवबोधयन् "अपूर्व्वं" स्वप्रतिपत्तिकाले पूर्व्वं [S. 74a.] यः प्रमेयप्रतिपत्तौ "क्रमः" उपायोऽनुभूतस्तस्मादन्यम् "आश्रयत इति किमत्र" क्रमान्तराश्रयणे "कारणम्"? नैव किञ्चित् परव्यामोहनं मुक्त्वा। तथा हि – यदि स्वप्रतिपत्ति-

क्रमः प्रतीतिनिबन्धनं किं तत्परित्यागेन क्रमान्तराश्रयणम् ?, कथं तेन स्वयं प्रतिपन्नवानसीति ? । यत एवं "तस्मान्न प्रमेयस्य" साध्यस्य "वचनेन" प्रतिज्ञाख्येन "किञ्चित् प्रयोजनम्" । कुतः ? । 'अन्यथापि' [T. 254a.] विनाऽपि तेन "प्रतिपत्तेः" साध्यप्रतीतेः "उत्पत्तेरि"त्युपसंहारः ।

[ § ७. उपनयनिगमनादेरपि साधनवाक्यानङ्गत्वम् । ]

एवं प्रतिज्ञां साधनवाक्यादपनीयापरमप्युपनयनिगमनादिकं परपरिकल्पितं साधनवाक्यादपनेतुमुक्तमेव न्यायमतिदिशन्नाह – "एतेन" 'अन्यथाऽपि प्रतिपत्तेरुत्पत्तेः' इति न्यायेन "उपनयनिगमनादिकं" आदिग्रहणात् संशयजिज्ञासादिकं "प्रत्युक्तं" प्रत्याख्यातम् । [S. 74b.] तत्र "उदाहरणापेक्षः 'तथा' इत्युपसंहारो 'न तथे'ति वा साध्यस्योपनयः" [न्याय० १.१.३८], "प्रतिज्ञायाः पुनर्व्वचनं निगमनम्" [न्याय० १.१.३९] इत्यनयोर्लक्षणम् । "साध्यनिर्देशः प्रतिज्ञा" [न्याय० १.१.३३] इति तु प्रतिज्ञायाः । एतेनेत्येतदेव दर्शयति – "एतावतैव" पक्षधर्म्मसम्बन्धवचनमात्रेणैव उपनयादिरहितेन "साध्यप्रतीतेः भावात्" उत्पत्तेरिति ।

अत्रोद्यो(द्द्यो)तकरः प्राह – प्रतिज्ञा तावद्विषयनिर्देशार्थमवश्यकर्त्तव्या, यतो लोकः प्रथमं कर्म्म च्छेद्यादिकं निरूपयति । ततः कुठारादिकं साधनं व्यापारयति । उपनयेनापि यावद् दृष्टान्ते दृष्टसामर्थ्यो हेतुर्द्धर्म्मिणि नोपसंह्रियते तावत् कुतः साध्यप्रतीतिः ? । स्वार्थानुमानदृष्टश्च प्रत्यवमर्शप्रत्ययार्थोऽनेन दर्श्यते । तथा हि – स्वार्थानुमाने प्रथमं प्रदेशे धूमं पश्यति, ततो 'यत्र यत्राहं धूममद्राक्षं तत्र तत्राग्निमपि' इति व्याप्तिं [T. 254b.] स्मरति । ततो 'धूमश्चात्र' इति पुनः प्रत्यवमृशति, स प्रत्यवमर्शार्थः परार्थानुमाने उपनयेनोच्यते । [S. 75a] निगमनमप्यवश्याभिधानीयम्, यतो यद्यपि पूर्वं अनित्यः शब्द इत्युक्तम्, न तु तावताऽस्य निश्चयो जातः । सम्प्रति तु प्रमाणबलायातोऽर्थः तत्सम्प्रत्ययार्थमनेन निगम्यते । अशेषप्रमाणव्यापारश्चानेनोपसंह्रियते । तथा हि – आगमः प्रतिज्ञा, हेतुरनुमानं,

दृष्टान्तः प्रत्यक्षमुपमानमुपनयः । तदेतस्य प्रमाणचतुष्टस्यापि व्यापारो निगमनेनोपसंह्रियते – इति कथमस्य न साफल्यम् ? इत्येतदाशङ्क्याह – “ डिण्डिकरागं परित्यज्य ” डिण्डिकाः – नग्नाचार्याः ते निष्फलमुपर्युपरि नामलेखने प्रसक्ताः ततस्तेषामिव ‘ परेणोक्ते तस्योपरि मयाऽवश्यमयुक्ततया निष्फलमप्यभिधानीयम् ’ इत्यस्थानाभिनिवेशं त्यक्त्वा “ अक्षिणी निमील्य ” बहिर्विक्षेपमुपसंहृत्य “ चिन्तय तावत् ” – “ किमियता ” पक्षधर्म्मसम्बन्धवचनमात्रकेण वाक्येन साध्यस्य “ प्रतीतिः स्यात् न वा ? ” इति । यावता यावानेव [S. 75b.] परार्थानुमानेऽर्थोऽभिधानीय इत्यस्माभिरनुज्ञायते तावानेवान्यूनानतिरिक्तः स्वार्थानुमानेऽपि प्रतीतिहेतुर्दृष्टः, तस्य क इह शक्तेर्व्याघातः ? येनासौ परार्थानुमानेऽपि प्रतीतिं न कुर्यात् । “ भावे ” प्रतीतेः “ किं प्रपञ्चमालया ” प्रतिज्ञोपनयनिगमनलक्षणया [T. 255a.] , बालप्रतारकतदुपयोगोपवर्णनलक्षणया वा ? । तथा हि – प्रतिज्ञोपनयनिगमनप्रयोगेऽपि यदि प्रमाणनिश्चिता स्वसाध्यव्याप्तिः साधनधर्म्मस्य न स्यात्, साध्यधर्म्मिणि वा सद्भावस्तदाऽस्य नैव प्रतीतिहेतुता । तत्सम्भवे तु प्रतिज्ञाद्यभावेऽपि स्वार्थानुमान इव गमकरूपावैकल्यात् सा न निवार्यत इति किमस्थाननिर्बन्धेन इति ? । नहि साध्यधर्म्माक्षेपणसामर्थ्यविरहे साधनधर्म्मस्य वादिवचनमात्रात् साध्यनिश्चयो युक्तः, हेतूपन्यासवैयर्थ्यप्रसङ्गात्, तस्य तदाक्षेपसामर्थ्ये वा प्रतिज्ञावचनस्येति ।

यत्तूक्तम् ‘ विषयप्रदर्शनाय प्रतिज्ञा ’ इत्यत्र शास्त्रकृतैव दत्तमुत्तरम् । यश्च साधनं प्रयुङ्क्ते तेन ‘ अहमनेन [S. 76a.] साधनेनामुष्मिं(ष्मिन्) साध्ये प्रतीतिं साधयिष्यामि ’ इति कर्म्म निरूप्यैव तत् प्रयुक्तमिति न लौकिकन्यायातिक्रमः, अन्यथा यदि साधनाद् यस्य साध्यप्रतीतिरुपजायते तेनैव कर्म्म निरूपणीयम् कथं तदभावे स्वार्थानुमाने [T. 255b.] साध्यसिद्धिः सा-

१. प्रतिज्ञादि° । २. हेतोः । ३. व्याप्त्यादिसम्भवे । ४. [प्रती]तिहेतुता । ५. उपन्यासवैयर्थ्यप्रसङ्गात् । ६. साधनम् ।

धननिबन्धना स्यात् ? । यश्चाग्निधूमयोः सम्बन्धं चेतसि व्यवस्थाप्य ‘ क्वाग्निः क्वाग्निः ? ’ इत्यग्निं पर्येषते[1] स प्रदेशे धूमदर्शनमात्रादेवाग्निं प्रतिपद्यत इति कथं स्वार्थानुमाने प्रत्यवमर्शप्रत्ययः स्यात् ? । अथ कदाचिदसौ दृष्टस्तत्रे[2]ति परार्थेऽप्यस्योपादानं तदा दध्यादिकमपि भुक्त्वा कदाचिद् धूमादग्निं प्रतिपन्नवानिति किन्न दधिभोजनादेरपि कादाचित्कस्योपादानम् ? ।

यत् पुनरुक्तम् ‘ आगमः प्रतिज्ञा ’ इति, तत्र यदि वादिवचनमेवागमस्तदा तत एव साध्यसिद्धेर्हेत्वाद्युपादानमनर्थकम् । अथ प्रतिज्ञार्थस्यागमे पाठादागमः प्रतिज्ञा, तदा न क्वचिदागमे पठ्यते अत्र प्रदेशेऽग्निरिति [S. 76b.] कथमागमत्वं प्रतिज्ञायाः ? ।

‘ हेतुरनुमानम् ’ इत्यप्ययुक्तम्, न हि पक्षधर्म्मत्वमात्रं हेतुः, तस्य त्रिरूपत्वात् । दृष्टान्तोऽपि न सर्व्वः प्रत्यक्ष इति कथं ‘ दृष्टान्तः प्रत्यक्षम् ’ भवेत् ? । उपमानं तु प्रमाणमेव न भवति, कथं तद्व्यापार उपसंह्रियेत निगमनेन ? । यदि चावश्यं दृष्टान्ते दृष्टसामर्थ्यो हेतुर्द्धर्म्मिण्युपनेयः तदोपनय एवास्तु किं ‘ कृतकत्वात् ’ इति पक्षधर्म्मनिर्द्देशेन ?, स एव दृष्टसामर्थ्यं हेतुमुपसंहरिष्यति पक्षधर्म्मतां च दर्शयिष्यतीति न किञ्चित्तेन । ततो यत्र च प्रतिज्ञायाः प्रथमत एव प्रयोगो नेष्यते तत्र तस्याः पुनर्व्वचनं कुतो निगमनं भविष्यति ? इत्याह – “ इति ” तस्माद् “ इयानेव ” पक्षधर्म्मसम्बन्धवचनमात्रात्मकः [T. 256a.] साधनवाक्ये “ प्रयोगो ज्यायान् ” न पञ्चावयवात्मक इति स्थितम् ।

[ § ८. न्यायवाक्ये हेतुदृष्टान्तवचनयोः क्रमस्यानियमः । ]

अत्र साधनवाक्ये न केवलं प्रतिज्ञादिप्रयोगो न युक्तः परोपगतः [S. 77a.] ‘ पूर्व्वं हेतुः प्रयोक्तव्यः पश्चाद् दृष्टान्तः ’ इति क्रमनियमोऽपि न कश्चित् । कुतः ? सर्व्वथा यदि पूर्व्वं हेतुः पश्चाद् व्याप्तिः अथ पूर्व्वं व्याप्तिः पश्चात् पक्षधर्म्मः प्रयुज्यते, तथापि गमकत्वात् ।

१. °पते सधूमप्रदेशदर्शन° – T । २. स्वार्थानुमाने ।

[ § ९. हेतोस्त्रिधाप्रयोगस्य खण्डनम् । ]

ननु तस्य द्विधा प्रयोग इत्ययुक्तमुक्तम् । यतस्त्रिविधो हेतुः – अन्वयी व्यतिरेकी अन्वयव्यतिरेकी चेति नैयायिकाः, ततस्तस्य त्रिधा प्रयोगः – साधर्म्येण वैधर्म्येण साधर्म्यवैधर्म्याभ्यां चेति वक्तव्यमित्यत आह – "सम्बन्धवचनेऽपि" न केवलं क्रमनियमो न युक्तः किन्तु "अर्थ भेदोऽपि न कश्चिद्" उभयत्रापि त्रिरूपसद्भावात् । ततः सर्व्व एव हेतुरन्वयव्यतिरेकी, न त्वन्वयी व्यतिरेकी वा कश्चिद्धेतुरस्तीति भावः । तत् कुतस्त्रैविध्यं प्रयोगस्य स्यात्? इति मन्यते । कुतः पुनरर्थभेदो नास्तीति? चेत्, आह – "उभयथा" साधर्म्येण वैधर्म्येण च प्रयोगे यद्यपि विधिप्रतिषेधरूपतया धर्म्मभेदः [T. 256b.] प्रतीयते तथापि "तद्भावस्यैव" साधनधर्म्मस्य साध्यस्वभावतायाः एव साधर्म्यवैधर्म्यप्रयोगाभ्यां "ख्यापनात्" ।

ननु साधर्म्यप्रयोगे हेतुभावे [S. 77b.] साध्यस्य भावः, वैधर्म्ये च साध्याभावे हेत्वभावः शब्दादवगम्यते, न तादात्म्यम् । तत् किमुच्यते 'तद्भावस्यैव ख्यापनात्'? इत्यत आह – "न हि" इत्यादि । यदि साधर्म्यप्रयोगे तद्भावो नाक्षिप्येत तदा साधनस्य "अतत्स्वभावस्य भावे" किमिति "एकान्तेन" अवश्यन्तया "साध्यस्य भावः?" । कादाचित्कस्तु भवतु नाम? । 'यत् कृतकं तदनित्यम्' इत्येकान्तभावश्च हेतौ सति साध्यस्य व्याप्त्या साधर्म्यप्रयोगेऽभिधीयते । स च तादात्म्यमन्तरेणानर्थान्तरस्य न सम्भवतीति सामर्थ्यात् तदाक्षिपति ।

कथमिवातत्स्वभावस्य भावे न एकान्तेनान्यभाव इति आह – "कृतकत्वे"त्यादि । यदि प्रयत्नानन्तरीयकत्वमन्तरेणापि कृतकत्वस्य भावादतत्स्वभावत्वम् अनित्यत्वेऽप्ययमेव वृत्तान्तः । ततश्च तादात्म्यविरहात् प्रयत्नानन्तरीयकत्वस्यानित्यत्वेनान्वयो न स्यात्, तन्निवृत्तौ वा निवृत्तिरिति कथं ततस्तत् [S. 78a.]

१. एकान्तभावः । २. प्रयत्नानन्तरीयकत्वमन्तरेणापि अनित्यत्वस्य भावात् । ३. साध्य° । ४. हेतोः । ५. हेतोः । ६. साध्यम् ।

प्रतीयते ? । नैष दोषः, प्र[1]यत्नानन्तरीयकपदार्थस्वभावस्यैवानित्यत्वस्य तेन साधनात्, तत्र च तादात्म्यसद्भावाद् अन्वयव्यतिरेकावनिवारितौ अनित्य[3]त्वकृतकत्वमात्रापेक्षया [T. 257a.] तु तादात्म्यविरहोऽस्या[4]भिहित इति ।

नन्वग्निनिवृत्तावतत्स्वभावस्यापि धूमस्य निवृत्तिर्दृष्टाऽन्वयश्चेत्याह – "कार्यस्य" इति । अन्वयव्यतिरेकयोर्हि प्रतिबन्धो निबन्धनम्, तेन तयोः व्याप्तेः, तदभावे तयोरप्यभावात् । तत्रार्थान्तरस्य धूमस्याग्नौ "तदुत्पत्तिलक्षणः प्रतिबन्धोऽन्वयव्यतिरेकनिमित्तम"स्तीति भवेतां तौ[5] । यत्र त्वनर्थान्तरस्य तावुच्येते तत्रावश्यं तादात्म्येन भवितव्यमित्यभिप्रायः । अत्रोदाहरणम् "यथा – अनयोरेव कृतकत्वप्रयत्नानन्तरीयकत्वयोर्विपर्ययेण नैक[6]निवृत्ताव[7]न्यनिवृत्तिः" – 'यत् प्रयत्नानन्तरीयकं न भवति [S. 78b.] तत् कृतकमपि न भवति' इत्येवंरूपा । यत एवं तस्मादन्वयव्यतिरेकयोर्यथालक्षणं हेतुभावे साध्यस्यावश्यं भावः, साध्याभावे च हेतोरवश्यमभावः इत्येकोऽपि साधर्म्यमुखेण वैधर्म्यमुखेण वा प्रयुक्तो द्वितीयमाक्षिपति, सर्वव्यापकप्रतिबन्धाक्षेपात्, तस्यापि चेतरेण[10] व्याप्तेः । तस्मादुभयत्र त्रैरूप्यप्रतीतेरेकस्य शब्दे(ब्द)तोऽपरस्यार्थत इति सम्बन्धवचनेऽपि प्रयोग एव विधिमुखेन प्रतिषेधमुखेन वा भिद्यते नार्थ इति सिद्धं ततस्तस्य द्विधा प्रयोगः साधर्म्येण वैधर्म्येण च । न तु साधर्म्यवैधर्म्याभ्यामपि, तदर्थस्यान्यतरेणैव [T. 257b.] प्रकाशनात् ।

सर्वो हेतुरन्वयव्यतिरेकयेव वस्तुतो न कश्चिदन्वयी व्यतिरेकी वा नामेत्येतदुपसंहरन्नाह – "इति नैकत्रा"न्वयमुखेन व्यतिरेकमुखेण [S. 79a.] वा साधनवाक्ये "द्वयो"रन्वयव्यतिरेकयोः "प्रयोगः" साक्षाच्छब्देन प्रतिपादनमिष्यते, "वैयर्थ्यात्" प्रतीतप्रत्यायने प्रयोजनाभावात् ।

---

१. न तु समग्रपदार्थस्वभावस्य । २. प्रयत्नानन्तरीयकत्वेन । ३. प्रयत्नानन्तरीयकः शब्दः, कृतकत्वात् अनित्यत्वाच । ४. प्रयत्नानन्त° । ५. अन्वयव्यति° । ६. प्रयत्न° । ७. हेतु° । ८. रूपाव्यतिरेक° (?) । ९. प्रतिबन्धस्य । १०. अन्वयेन व्यतिरेकेण वा ।

तामेवार्थतोऽपरस्य प्रतीतिं स्फुटयन्नाह – "तत्स्वभावतया" इत्यादि। यदि तत्स्वभावतया साध्येन हेतोरन्वयः सिध्यति तत एव "तदभावेऽभावोऽपि सिध्यत्येव"। तत्स्वभावस्य तदभावे स्वयं नैरात्म्येन भावायोगात्। "तथा" तत्स्वभावतया साध्याभावे साधनस्याभाव"सिद्धौ" "च" सत्यां तत एव साध्येन हेतोः "अन्वयस्यापि सिद्धेरिति"।

यैस्तु व्याख्यायते – "साधर्म्य[1]वति प्रयोगे तदभाव एव विपक्षे हेतोरभावख्यातिर्यथा स्यात् नान्यत्र विपक्षे विरुद्धे वा हेत्वभावप्रसङ्गात् विरु[2]द्धत एव व्यवच्छेदप्रसङ्गाच्चेति नियमख्यापनार्थो व्यतिरेकप्रयोगः" इति। स तदर्थोऽप्ययुक्तः। कुतः? "अन्यविरुद्धयोरपि" न केवलं तदभावस्य "विपक्षत्वात्" यस्य हि – अन्य एव विपक्षोऽन्यधर्मयोगी वाऽन्यो, न वि[3]वक्षितधर्म्मानाश्रयः, [S. 79b.] विरुद्ध एव वा सह[4]ानवस्थानलक्षणेनैव [T. 258a.] विरोधेन, न परस्परपरिहारस्थितलक्षणतयापि विपक्षः – तस्यानित्यत्वाद[5]न्यानात्मादिधर्म्मवति अर्थे, कृतकत्वादिवृत्तेः, हेत्वभावप्रसङ्गः। औष्ण्ये च साध्ये[6]ऽग्निलक्षणस्य हेतोर्विरुद्धादेव शीतात् नानुष्णशीतादप्यन्यतो व्यवच्छेदप्रसङ्गात् नैकान्तेनौष्ण्यमग्निर्ग्रसयेदिति तस्यायं दोषः स्यात्। तं प्रत्या[7]चार्येणोक्तम् – यद्येक[8]स्य विपक्षत्वमिष्यते तदा तद[9]भावस्यैवेष्यताम्, न विरुद्धस्य अन्यस्य वा, तस्या[10]न्यत्रापि विवक्षितधर्म्मानाश्रये विरुद्धे च भावात्, तद[11]भावमन्तरेण तयो[12]रन्यविरुद्धत्वायोगात्। न त्वस्मा[13]कं त्रिविधमपि विपक्षमिच्छता[14]म्, विवक्षितधर्म्मानाश्रयं चाऽन्यमिति भावः।

[ § १०. सत्त्वस्य क्षणिकत्वस्वभावतायाः समर्थनम्। ]

यदि स्वभावहेतावन्वयव्यतिरेकयोः साधनधर्म्मस्य साध्यस्वभावता निबन्धनमित्यन्वयेन व्यतिरेकेण वा साधर्म्यवैधर्म्यवतोः

१. वैधर्म्ये तु तदभावेऽभावस्य प्रतीतत्वान्न शङ्का। २. ....................रेव सकाशाद्व्यावृत्तिः (?) ३. अनित्यत्वं। ४. शीतवह्निवत्। ५. निरवयवत्वादि। ६. उष्णोऽयं पदार्थः, अग्नित्वात्। ७. दिग्नागेन। ८. साध्याभावे तदभावान्यविरुद्धलक्षणात् त्रितयान्मध्यादेकस्य। ९. साध्याभावे साधनाभावस्य। १०. तदभावस्य। ११. साध्याभावम्। १२. अन्य°। विरु०। १३. दोषः १४. यश्च युज्यते एतन्मध्यात् स प्रहीष्यते।

प्रयोगयोरभिधीयमानेन तादात्म्याक्षेपद्वारेणार्थादितराक्षेप उच्यते, तदा प्रमाणसिद्धैव तत्स्वभावता तयोर्निबन्धनं [S. 80a.] न शब्दमात्रतः प्रतीयमानेत्यभिप्रायवानाह – [१]"कथमिदम्" इत्यादि। "येने"ति सतो नश्वरस्वभावत्वेन। सत्व(त्त्व)लक्षणस्य हेतोः क्षणिकत्वस्वभावत्वेनेति यावत्। पृच्छतश्चायमभिप्रायः – इह [T. 258b.] द्विविधाः सन्तः – कृतकाश्च घटादयः अकृतकाश्चाकाशादयः। तत्र ये तावदकृतकास्ते "सदकारणवत् नित्यम्" [वैशे० ४·१·१.] इति नित्यलक्षणयोगादनित्या एव न भवन्ति कुत एव क्षणिकाः? इति न सत्व(त्त्व)स्य क्षणिकत्वस्वभावता। येऽपि सन्तः कृतकास्तेषामपि मुद्गराद्यन्वयव्यतिरेकानुविधायितया विनाशस्य सहेतुकत्वात् तद्धेत्वसन्निधावविनाशात् कृतकात्मनोऽपि सत्व(त्त्व)स्य क्षणिकत्वस्वभावता न समस्त्येवेति नान्वयव्यतिरेकयोः सम्भव इति। अवश्यं च विनाशो दण्डाद्यन्वयव्यतिरेकानुविधायी, दृष्टत्वात्। तथा हि –

"अभिघाताग्निसंयोग[२]नाशप्रत्ययसन्निधिम्।
विना संसर्गितां याति न विनाशो घटादिभिः॥" [S. 80b.]

अन्य[३]त्रापि चान्वयव्यतिरेकानुविधानमेव हेतुमत्ताव्यवहारनिबन्धनमभ्युपेयते सौगतैरपि, तदिहा[४]प्यस्तीति किन्न तद्व्यवहारः प्रवर्त्त्यते? इति।

ननु चान्वयनिश्चयं प्रतिपादयता बाधकप्रमाणवृत्तिवशात् तत्स्वभावता पूर्वमेव प्रतिपादिता 'अन्वयनिश्चयोऽपि स्वभावहेतौ' इत्यादिवचनात्। तत् कुतोऽस्य पूर्वपक्षस्यावसरः?। सत्यम्, किन्तु पूर्वाचार्यैः कृतकत्वस्य क्षणिकतायां साध्यायां परैः कृतकानामन्तेऽवश्यं हेतुनिबन्धनविनाशोपगमात् तद्धेत्वयोगप्रतिपादनेनानपेक्षा विनाशं प्रति विपर्यये बाधकं प्रमाणं तादात्म्यप्रसाधकमुक्तं तत् प्र[५]सङ्गमुखेन कृतकलक्षणस्यैव सत्त्वस्य त[६]दात्मतां गमयति नान्यस्य [T. 259a.] इति दर्शयितुम्। अर्थक्रियाविरोधलक्षणं[७] तु सर्वस्य सत्त्वस्य इति व[८]स्तुमात्रेण

१. परः। २. एव। ३. अङ्कुरादौ। ४. विनाशे। ५. आपत्ति°। ६. क्षणिक°। ७. प्रमाणम्। ८. सामान्येन।

प्रागुक्तमपि विपञ्चयितुं पूर्व्वपक्षोपन्यासः । अकृतकलक्षणं तु सत्त्वं न सम्भवत्येव, नियामकं हेतुमन्तरेण देशकालस्वभावनियमायोगात् । ततः पूर्व्वाचार्यैर्न्न [S. 81a.] तस्यैकाङ्गवैकल्यादेव "सदकारणवत् नित्यम्" [वैशे० ४·१·१.] इति नित्यतासम्भव इति न तदात्मतां[1] प्रति यत्नः कृतः । शास्त्रकारस्तु सामान्येन[2] सत्त्वस्य क्षणिकस्वभावतां, कृतकलक्षणस्य अपि च, देशकालस्वभावविप्रकृष्टस्यापि वस्तुस्थित्यैव तदात्मताम् अर्थक्रियाविरोधेन, न परोपगतावश्यम्भाविविनाशस्याहेतुकतया विशेषाभावात् उत्पन्नमात्रस्याभाव[3]प्रसङ्गेन प्रतिपादयिष्यति ।

[ § ११. सहेतुकं विनाशं निरसितुं तस्य भावस्वभावतायाः समालोचनम् । ]

तत्र पूर्व्वाचार्योक्तं ' सर्व्वस्य सतः कृतकस्यावश्यमन्ते हेतुकृतो विनाश इति ' यः परैरिष्यते तं प्रत्यनपेक्षत्वं ख्यापयितुमुपक्रमते – " विनाशहेत्वयोगादिति " ।

यदि तर्हि नाशस्य हेतुर्न्नास्ति, स तेषां कृतकानां सतामवश्यम्भावी विनाशः कुतः ? । न ह्याकस्मिकः कश्चित्स्वभावो युक्त इत्याह – " स्वभावत एव " । भवत्यस्मात् कार्यम् इति भावशब्दो हेतुवचनः । तेन स्वहेतुभ्य एव " नश्वराः " नशनशीलाः, सूच्यग्रे सर्षपा इवानवस्थायिनः स्वात्मनि " भावा जायन्ते " । " नैषां " कृतकलक्षणानां सतां भावानां " स्वहेतुभ्यो निष्पन्नानां " " अन्यतः " अभिघातादे"र्व्विनाशोत्पत्तिः " । कुतः ? [S. 81b.] [T. 259a.] "तस्या"भिघाताग्निसंयोगादेस्तद्धेतुतयोपगतस्य " असामर्थ्यात् " । तथाहि – अग्निसंयोगादिकाले त्रितयं लक्षयामः । तदेव काष्ठादिकं विनाश्यम्, अङ्गारादिकमवस्थान्तरम्, काष्ठादिनिवृत्तिलक्षणं चाभावं तुच्छरूपं, नापरं यत्राग्निसंयोगादेर्व्यापारः चिन्त्येत । एतावत्यां च वस्तुगतौ न क्वचिदत्र विनाशहेतोः सामर्थ्यं युज्यते । यतो " नहि विनाशहेतुर्भाव"स्येन्धनादेः स्वहेतुभ्यः स्थिररूपस्योत्पन्नस्य " स्वभावमेवा"स्थिरात्मतालक्षणं " करोति " । कुतः ? "तस्ये"न्धनादेः " स्वहेतुभ्य " एव " निर्वृत्तेः " । नहि स्थिरा-

१. क्षणिकत्व° । २. कृतकाऽकृतकविशेषविरहेण । ३. विनाशस्य ।

तमनो[1] निर्वृत्तस्यान्यथा[2]भाव[3]: तदात्मा[4] शक्यते कर्तुम्, तस्य हेत्वन्तरात् पश्चाद् भवतोऽर्थान्तरत्वप्रसङ्गात्, तस्यैवान्यथात्वायोगात्, तत्र हेतुव्यापारस्य कल्पयितुमशक्यत्वात्।

अथवा त्रितये समीक्ष्यमाणे यत् तावत् विनाश्यं काष्ठादि न तत्स्व[5]भावमेवाग्निसंयोगादिर्विनाशहेतुः करोति तस्य स्वहेतुभ्य एव निर्वृत्तेरिति।

[ § १२. कुमारिलेष्टभावान्तरस्वभावपक्षस्य समालोचनम् ]

कुमारिलस्तु मन्यते – नाग्निसंयोगादिना भावस्वभाव एव क्रियते किन्त्विन्धनादेः [S. 82a.] प्रध्वंसाभावः। स चेन्धनादिरूपविकलमङ्गारादिकमुत्तरं भावान्तरमेव। तदुक्तम् –

" नास्तिता पयसो दध्नि प्रध्वंसाभाव[6]लक्षणम्॥ "

[ श्लोकवा० अभाव ३ ] इति।

तथाविधस्य चाभावस्य हेतुमत्तोपगमो नैव विरुध्यते। तथा चाह कश्चित् –

" भावान्तरविनिर्मुक्तो भावोऽत्रानुपलम्भवत्।
अभावः सम्मतस्तस्य हेतोः किन्न समुद्भवः ?॥ " इति।

तदेतत् कौमारिलं [T. 260a.] दर्शनमपनुदन्नाह – " नाऽपि " इत्यादि। यद्युत्तरं कार्यात्मकं "भावान्तरमेव" अभावस्तदाऽग्निसंयोगादयोऽङ्ग(ङ्गा)रादिजन्मनि व्याप्(प्रि)यन्त इतीष्टमेवास्माकम्, किन्तु " भावान्तरकरणे " अभ्युपगम्यमानेऽग्न्यादीनामिन्धनादावव्यापारात् तदवस्थमेवेन्धनादिकम्। ततश्च यथाऽग्निसंयोगात् प्राग् इन्धनादेरुपलब्धिः अन्या च तत्साध्याऽर्थक्रिया तथाऽङ्गाराद्युत्पत्तावप्युपलब्ध्यादेः प्रसङ्गः।

ननु भावान्तरस्य प्रध्वन्सा(ध्वंसा)भावरूपतायां तदुत्पत्ताविन्धनादीनां [S. 82b.] प्रध्वस्तत्वादसतां कथं तथोपलब्ध्यादिप्रसङ्गः ?। सत्यम्, एवं मन्यते–सर्वस्येन्धनादेरन्यस्य गवादेरपि तथाभावो मा भूत् इत्यङ्गारादेः ध्वंसव्यवस्थायां निबन्धन-

१. नोऽनिवृत्तस्या° – Tib. २. अन्यथाऽभाव – Tib. ३. अस्थिरस्वभावता। ४. स्थिरात्मा। ५. काष्ठत्वम्। ६. °साभाव इष्यते–श्लोकवा०।

मभिधानीयम्। तस्मिं(स्मिन्) सति तन्निवृत्तिरिति चेत्, अहो वचनकौशलम् यतो निवृत्तेस्तुच्छस्वभावतानङ्गीकरणात् तदेव भावान्तरमङ्गारादिकं निवृत्तिं ब्रूषे। तदयमर्थः सम्पन्नः – अङ्गारादिभावेऽङ्गारादिभावादङ्गारादिकं ध्वंसः काष्ठादेरिति। न चाङ्गारादिभावे तद्भावः स्वात्मनि हेतुभावायोगात्। अग्न्यादिभ्यश्च तदुत्पादवचनादिन्धनाद्युपमर्देनाङ्गारादि[T. 260b.]भावात् अस्य ध्वंसरूपतेति चेत्। कोऽयमुपमर्दो नाम ?। यदि निवृत्तिः साऽङ्गारादिलक्षणैवेति न पूर्वस्माद् विशिष्यते। तस्मात् [S. 83a.] स्वरसतो निवर्त्तते काष्ठादिः, अग्न्यादिभ्यस्त्वङ्गारादिजन्म इत्येव भद्रकम्, अन्यथा काष्ठादे"स्तथोपलब्ध्यादिप्रसङ्गः" कथं न स्यात् ?।

अपि च – यदि भावान्तरं प्रध्वंसाभावो य एतेऽनुपजातविकाराः प्रदीपबुद्ध्यादयो ध्वंसन्ते तेषां कतरद् भावान्तरं प्रध्वन्सो(ध्वंसो) व्यवस्थाप्येत ?। तेऽप्यव्यक्ततामात्मभावं च विकारमेव ध्वंसं समालम्बन्त इति चेत्। न, प्रदीपादेर्भावरूपाव्यक्तताभावे प्रमाणाभावात्। यदि हि शक्तिरूपतापत्तिरव्यक्तता तदा शक्तेः कार्यदर्शनोन्नीयमानरूपत्वात् तदभावे कथं प्रदीपादयः शक्त्यात्मनाऽवस्थिताः कल्पेरन् ?। अथोपलब्धियोग्यताविकलात्मतापत्तिरव्यक्तिः; अत्रापि तदात्मनाऽवस्थितौ नैव प्रमाणमस्ति। न चाप्रमाणकमाद्रियन्ते वचो विपश्चितः। आत्मनश्चासत्त्वात् कथं तद्भावो बुद्ध्यादीनां [S. 83b.] विकारः परिणामश्च ?। अन्यत्र विहितप्रतिक्रियत्वात् नेह प्रतन्यत इत्यलं प्रसङ्गेन।

स्यान्मतम् – भावान्तरेणाङ्गारादिनाऽऽवृतत्वात् इन्धनादेस्तथोपलब्ध्यादयो न भवन्तीत्यत आह – "नापि" इत्यादि। स्वभावान्तरम् "अन्यस्ये"न्धनादेरा"वरणमपि" न "युज्येत" "तदवस्थे" अविचलित[T. 261a.]रूपे "तस्मिन्नि"न्धनादौ स"त्यावरणस्यापि" न केवलमनुपलब्ध्यादे"रयोगात्"।

१. प्रदीप° । २. बुद्धिः । ३. कार्य° । ४. कल्प्येरन् – Tib. ५. आत्मता।

[ § १३. भावाभावपक्षस्यापि समालोचनम् । ]

न केवलं भावस्वभावो भावान्तरं वा विनाशहेतुना न क्रियते भावाभावोऽपि न क्रियत इत्याह – "नापि" इत्यादि। कुतः ? इति चेत्, "अभावस्य विधिना" पर्युदासेन विवक्षितात्भावाद"न्य"तया कार्यत्वो"पगमे" क्रियमाणे किमिन्धनादिरूप एवासौ ? अथार्थान्तरम् ? इति "व्यतिरेकाव्यतिरेकविकल्पानतिक्रमात्"। तत्र चोक्त एव दोषः।

ननु प्रसज्यप्रतिषेधात्मा तुच्छरूपोऽसावग्न्यादिजन्योऽभ्युपेयते। तद्भावे चेन्धनादीनां नैःस्वाभाव्यात् कुतः पूर्व्वदोषावसरः ?। स चावश्यमग्न्यादिभावाभावानुविधायितया [S. 84a.] तत्कार्यस्तद्भावव्यवहारस्यान्यत्रापि तन्निबन्धनत्वात्। तदुक्तम् –

"सन् बोधगोचरप्राप्तस्तद्भावे नोपलभ्यते।
नश्यन् भावः कथं तस्य न नाशः कार्यतामियात्॥
प्रागभूत्वा भवन् भावो हेतुभ्यो जायते यथा।
भूत्वाऽपि न भवंस्तद्वद्धेतुभ्यो न भवत्ययम्॥" इति।

अत आह – "भावप्रतिषेधे"त्यादि। अयमभिप्रायः – यद्यनपेक्षितभावान्तरसंसर्गश्च्युतिमात्रमेव तुच्छरूपं ध्वंसः तदा तत्र कारकव्यापारो नैव सम्भवति भवनधर्म्मिण्येव तत्सम्भवात्। तस्याप्य[T. 261b.]भूत्वा भावोपगमात् कार्यता न विरुध्यत इति चेत्। न। भवनधर्म्मणो भावरूपताप्राप्तेरभावत्वहानेः। यतो भवतीति भावो भण्यते, नापरमङ्कुरादेरपि भावशब्दप्रवृत्तिनिमित्तम्। अर्थक्रियासामर्थ्यमिति चेत्। सर्व्वसामर्थ्यविरहिणस्तद्ध्वंसस्य कथं प्रतीतिविषयता ?। नह्यकारणं प्रतीतिविषयः, अतिप्रसङ्गात्। तदविषयस्य वा कथं हेतुमत्तावगतिः ? वस्तुता वा ?, येनोच्यते 'तुच्छरूपमेव तद् वस्तु' इति। प्रतीतिजनकत्वे वा कथं न [S. 84b.] सामर्थ्यसम्बन्धिता ?। सदिति प्रत्ययाऽविषयस्य कथं भावतेति चेत्। कार्यताऽप्यस्य कथम् ?। स्वहेतुभावे भावात् इति चेत्। कथं तर्हि सत्प्रत्ययाऽविषयता ?।

१. अग्निः। २. अग्न्यादेः। ३. भावः। ४. भावशब्दप्रवृत्तिनिमित्तं अभावस्यापि यदि सामर्थ्यमस्ति तदा भावत्वम् अथ नास्ति तत्राह।

तथा हि – यदि स्वहेतुभावे भवतीति प्रतीयते सदित्यपि प्रतीयेत। यतोऽस्तीति सद् इति वदन्ति विद्वांसः। न चास्ति, भवति, भावः, सन्[1]निति शब्दानामर्थभेदः परमार्थतः कश्चित्। अभावात्मकतयैव भवत्यसाविति चेत्। न। व्याहतत्वात्, यतो न भवतीत्यभाव उच्यते स कथं भवतीति व्यपादिश्यते ?। प्रतिष्ठितेन केनचिद् रूपेण स्वज्ञानात्मन्यप्रतिभासनात् न भाव इति चेत्। अत्यन्तपरोक्षाणां चक्षुरादीनामभावताप्रसङ्गः। न। तेषां ज्ञानहेतुरूपतया प्रतिभासनात् इति चेत्। न। अस्यापि भवितृरूपतयाऽवभासनात्। [T. 262a.] सर्व्वरूपविवेकस्य च कथं भूत्या सम्बन्धः ?। केनचिद् रूपेणोन्मज्जनं हि भवनम्। ज्ञानविषयतयाऽस्यापि च तद्धेतुरूपतयाऽवभासनस्य तुल्यत्वात्[2], अहेतोश्च विषयत्वायोगात्। अस्माकं त्वभावबुद्धयः स्ववासनापरिपाकान्वया निर्व्विषया एव। अभावस्य च भवितृत्वे कथं पर्युदासात् प्रसज्यप्रतिषेधो भिद्येत। असद्रूपस्य विधानेन पर्युदासात् [S.85a.] स भिद्यत इति चेत्। न। असद्रूपस्य भवनविरोधात्। भवतीति हि भूत्या सत्तयाऽभिसम्बध्यते। तत्र कथं सद्रूपस्य विधानम् ?। पर्युदास एवैको नञर्थश्च स्यात्, सर्व्वत्र विधेः प्राधान्यात्। सोऽपि वा न भवेत्। यदि हि किञ्चित् कुतश्चित्[3] निवर्त्येत तदा तद्व्यतिरेकि[4] संस्पृश्येत तत्पर्युदासेन। तच्च नास्ति। सर्व्वत्र निवृत्तिर्भवति इत्युक्ते वस्त्वन्तरस्यैव कस्यचित् विधानात्। तथाऽनेन वस्त्वन्तरमेवोक्तं स्यात्, न तयोर्व्विवेकः। अविवेके च न पर्युदासः। अप्रस्तुताभिधानं च स्यात्। भावनिवृत्तौ[5] प्रस्तुतायां असदात्मनो वस्त्वन्तरस्यैव विधानात्। न चास्य स्वरूपेणासदात्मकत्वम्, स्वरूपेणाप्यसतः कार्यत्वविरोधात्। पररूपेण तु सर्व्वमेव वस्त्वसदात्मकमिति नास्य घटादेः कश्चिद् विशेषः। [T. 262b.] भवतु वाऽयमभावोऽग्न्यादिभ्यस्तद्भावे किमिति नोपलभ्यन्ते काष्ठादयः ?। तथा हि – अग्न्यादीनामन्यक्रियायां चरितार्थत्वादनिवृत्ता एव तेभ्यः

१. सन्निति सामान्यशब्दनाम् – Tib. २. चक्षुरादिभिः। ३. ब्राह्मणादि (प्रथमं टिप्पणम्) क्षत्रिया° (द्वि. टि.)। ४. निवर्त्यव्यतिरेकि। ५. तुच्छरूपायाम्।

[S. 85b.] इन्धनादयः प्रागवदुपलभ्येरन्। तदुपमर्द्देन ध्वंसस्योत्पत्तेः इति चेत्, कथं तदुपमर्द्दः?। न तावत् प्रध्वंसाभावेन, इन्धनसत्ताकाले तस्याभावात्। नाग्न्यादिभिः, ध्वंसाविर्भाव एव तेषां व्यापारोपगमात्। न चोत्पन्नः प्रध्वंसाभाव इन्धनादीन् विहन्ति, यौगपद्यप्रसङ्गात्। ध्वंसेन विनाशने च विकल्पत्रयस्य तदवस्थत्वात्। ततश्चानवस्था। स एव ध्वंस इन्धनादेरग्न्यादिजन्मा निवृत्तिः, अतोऽस्यानुपलब्धिरिति चेत्। कथमन्योऽन्यस्य निवृत्तिः?, अतिप्रसङ्गात्। यदि चायं हेतुमांस्तद्भेदादात्मभेदं किं नानुभवति?। शालियवाङ्कुरादयोऽपि कारणभेदादेवात्मभेदमत्यन्तविलक्षणमनुभवन्तोऽध्यक्षत एवावसीयन्ते। न त्वेवमनपेक्षितभावान्तरसंसर्ग्गः च्युतिमात्रलक्षणो ध्वंसः। तस्याभिघाताग्निसंयोगादिकारणभेदेऽपि तुच्छरूपतयैकरूपस्य स्वज्ञानात्मन्यवभासनात्। नहि भावशून्यतां विहायापरं तत्र किञ्चिद् रूपमीक्षामहे। विस्तरतश्चैतत् क्षणभङ्गसिद्धौ विचारितमित्यास्तां तावदिह। [S. 86a.] तस्मादग्न्यादिसंयोगकाले "न तस्य किञ्चिद् भवति न भवत्येव केवल"मित्येवोपगन्तुं युक्तम्। यतो नायं कस्यचिद् [T. 263a.] भावेन नष्टो नाम। किन्तु यतः स्वयमस्थिररूपतया भूतस्ततो नष्टो नाम। तेन नास्याऽभवनम् अन्यद्वा किञ्चिद् भवति। तथा च भवनधर्म्मणः कस्यचिदभावाद् भावं भवन्तं कुतश्चिन्न करोतीति क्रियाप्रतिषेध एवाग्निसंयोगादेः स्यात्। "एवं च" सति "कर्त्ता" अग्निसंयोगादिः "न भवति इत्यकर्तुरहेतुत्वमिति" तस्मा"न्न विनाशहेतुः कश्चित्।"

[§ १४. वैयर्थ्यादपि विनाशे हेत्वयोगः।]

न केवलमसामर्थ्याद्विनाशहेत्वयोगः, किन्तु "वैयर्थ्याच्च", तदेवाह – "यदि स्वभावतो नश्वरो" नशनशीलः स्वात्म"न्यनवस्थायी" स्थातुमशक्तो यथा सूच्यग्रे सर्षपः "तस्य न किञ्चिन्नाशकारणैः"। किं कारणम्?। "स्वयं नाशात्"। "तत्स्वभावतयैव" अस्थिरस्वभावतयैव। नहि प्रकृत्यैव स्थातुमशक्ते सूच्यग्रे सर्षपे तदस्थितये प्रयासः फलवान् भवेत्।

अत्रैव व्याप्तिमादर्शयति – " यो हि " इत्यादि । " न पुनः तद्भावे " तत्स्वभावत्वे जनकात् [S. 86b.] हेतो"र्हेत्वन्तरमपेक्षते । " " न हि प्रकाशादयः " इत्यादिना दृष्टान्तविवरणम् । तदात्मताया हेत्वन्तरानपेक्षणेन व्याप्तिं तादात्म्यसाधकेन प्रमाणेन दर्शयति – " तदात्मनो " यो यस्य स्वभावः तत्स्वभावस्य " तादात्म्याभावे " हेत्वन्तरमपेक्षमाणस्य स्वहेतोर्न्निष्पन्नस्यापि तत्स्वभावत्वाभावे " नैरात्म्यस्य " निःस्वभावतायाः प्रसङ्गात् । " तद्वत् " प्रकाशादिवत् " न पुनः " पश्चात् [T. 263b.] " तदात्मतायां " अस्थितिधर्म्मात्मतायां " हेत्वन्तरमपेक्षत " इति प्रमाणफलम् । " अस्थितिधर्म्मा चेत् " नश्वरस्वभावश्चेत् । " स्वभावतः " स्वहेतुभ्यो " निष्पन्नो " भाव इति पक्षधर्म्मोपसंहारः । विरुद्धव्याप्तोपलब्धिश्चेयम्, हेत्वन्तरापेक्षानपेक्षयोः परस्परपरिहारस्थितलक्षणतया विरोधात्, हेत्वन्तरानपेक्षया च तत्स्वाभावताया व्याप्तत्वात् ।

[ § १५. स्वतो विनश्वरत्वसाधकहेतावनेकान्तदोषोद्धारः । ]

अत्र च परस्य वचनावकाशमाशङ्क्याह – " बीजादिवत् " इत्यादि । " स्यादेतत् " इत्यादिना एतदेव विभजते " केवला न जनयन्ति " इति । कुतः ? इति चेत्, सलिलक्षित्यादेः स्वहेतुव्यतिरिक्तस्याङ्कुरादिजननस्वभावानामपि [S. 87a.] बीजादीनां तदात्मतायामपेक्षणात् । ततश्च न पुनस्तद्भावे हेत्वन्तरमपेक्षन्त इत्यनेकान्तः । " तद्वद् भावोऽपी"न्धनादिः स्वहेतोर्न्नश्वरात्मा निष्पन्नोऽपि " विनाशे " विनश्वरात्मतायां स्यादिति दार्ष्टान्तिकम् । " न " बीजादिवदनेकान्तः । कुतः ? " तत्स्वभावस्य " अङ्कुरादिजननस्वभावस्य बीजादेरङ्कुरादिजननात्, तदात्मतायां हेत्वन्तरानपेक्षणात् । यश्च क्षित्यादिकमपेक्षमाणो न जनयति कुशूलाद्यवस्थः तस्य "अजनकस्य च अतत्स्वभावत्वात्" अङ्कुरादिजननस्वभावत्वाभावात् । तत्र तदात्मतालक्षणो हेतुः न वर्तत एवेति न तेनानेकान्तः ।

[ § १६. प्रत्यक्षेण बाधात् न प्रत्यभिज्ञया स्थिरैकभावसिद्धिः । ]

ननु प्रत्यभिज्ञाप्रत्यक्षत एव बीजादिरेकस्वभावो लक्ष्यते । तत्र कुतोऽयं जननस्वभावत्वाजननस्वभावस्वलक्षणो भेदः ? य-

तोऽनेकान्तो [T. 264a.] न स्यात्। न चाप्रमाणं प्रत्यभिज्ञा, "तत्रापूर्व्वार्थविज्ञानम्" इत्यादिप्रमाणलक्षणयोगात्, सत्सम्प्रयोगेणेन्द्रियाणां भावतश्च प्रत्यक्षमेव प्रत्यभिज्ञानम्। न च प्रत्यक्षाद् गरिष्ठं प्रमाणमस्ति, यतस्तद्विषयस्य भेदसिद्ध्या बाधामनुभवदप्रमाणमेतत् [S. 87b.] स्यात् इत्याशङ्क्याह – 'अत एव' जनकत्वाजनकत्वादेव विरुद्धधर्म्माध्यासात् 'तयोरवस्थयोः' जनकाजनकावस्थयोः बीजादेः "वस्तुभेदः" स्वभावभेदो "निश्चेयः" अध्यवसातव्यः। यथा हि शालिबीजं तदङ्कुरजननस्वभावं तद्भावे शाल्यङ्कुरभावदर्शनात् प्रत्यक्षतोऽवगम्यते, यवबीजं चातज्जननस्वभावम् तद्भावे शाल्यङ्कुरानुपलब्ध्या [T. 265a.] तद्विविक्तयवबीजग्राहिप्रत्यक्षरूपया प्रतीयते तथाऽत्राप्यवस्थाद्वये शालिबीजस्य तदङ्कुरविविक्ताविविक्तावस्थाग्राहिप्रत्यक्षबलादेव स्वाङ्कुरजनकाजनकस्वभावता किन्न निश्चीयते?। इष्यत एवावस्थयोर्भेदोऽवस्थावतस्त्वभेद इति चेत्। न। तस्यावस्थारूपाविवेकिना रूपान्तरेण प्रत्यक्षे प्रतिभासनप्रसङ्गात्। न हि यदनात्मरूपविवेकेन स्वज्ञाने न प्रतिभासते तस्य प्रत्यक्षता युक्ता। अवस्था तद्वतोः स्वभावभेदाभावात् [S. 88a.] कथं रूपान्तरेण प्रतिभासनम्? इति चेत्। नन्ववस्थाभ्योऽनवासरूपभेदस्यावस्थानामिवात्मनस्तद्भेदे सत्यभेदो न सङ्गच्छते। [T. 265b.] ततश्चास्यावस्थानामिवात्मभेदमनुभवतः कथमवस्थातृत्वम्?। अवस्थाभेदेऽप्यभिन्नरूपस्य तथा व्यवस्थानात् कथञ्चिद्भेदस्यापि भावाददोष इति चेत्। यदि यमात्मानं पुरोधाय 'अयमवस्थाता, अवस्थाश्चेमाः' इति भण्यते तेनावस्थातद्वतोर्भेदस्तदा भेद एवेति 'कथञ्चित्' इत्यन्धपदमेतत्। ततोऽस्य प्रत्यक्षतायां अनात्मरूपविवेकिना रूपान्तरेणावभासनप्रसङ्गो न निवर्त्तते। अथ तेनात्मनाऽभेदः[२]। अवस्थावद्भेदप्रसङ्गोऽवस्थातुः, तद्वदवस्थानामभेदस्य वा। तयोरपि कथञ्चिद् भेदाभेदाविति चेत्। तयोस्तर्ह्यवस्थातद्वदात्मनोर्भेदवतोः कथञ्चिदभेदनिमित्तं रूपान्तरमिष्टं स्यात्।

१. In Tib. this passage °अनुपलब्ध्या to तयोः (p. 85. line 15) is read after स्वभावः (p. 86. line 22) २. तदा।

तथा च तस्यापि ताभ्यां कथञ्चिद्भेदः, अन्यथा तदेकस्वभावादत्यन्तमभेदादवस्थातद्वतोः परस्परमत्यन्तं[1] भेदाभेदौ प्रसज्येयाताम् । रूपान्तरस्य कथञ्चिद्भेदे [S. 88b.] तन्निबन्धनमपरं रूपम्, तथाऽस्यापि तदन्यद् इत्यपरिमितरूपतैवैकैकस्य वस्तुनः समासज्येत । न चापरिमितरूपप्रतिभासि प्रत्यक्षमनुभवामः । अननुभवन्तश्च कथं तत्कल्पनयाऽऽत्मनैवात्मानं विप्रलभेमहि ? । तस्मादवस्थारूपविवेकेनोपलब्धिलक्षणप्राप्तस्यानुपलम्भाद् अपरिमितरूपताप्रसङ्गाच्च कथञ्चिद्भेदाभेदवतोऽवस्थातुरसत्त्वमेव । ताश्चावस्था जनकाजनकस्वभावभेदवत्यः [T. 266a.] प्रत्यक्षत एवावगम्यन्त इति तदेकत्वाध्यवसायि प्रत्यभिज्ञानं तद्बाधामनुभवत्[2] कथं प्रमाणं स्यात् ?, यतो बीजादीनामङ्कुरादिजननस्वभावानामपि तदात्मतायां हेत्वन्तरापेक्षणात् प्राक्तनस्य[3] हेतोरनैकान्तिकता भवेत् ।

भवतु वाऽवस्थाता कश्चित्, तस्याप्येतदेव[4] भेदं साधयति । तथा हि – "तयोः" [T. 264a.] जनकाजनकावस्थयोरिति सप्तमीद्विवचनमेतत् तदा भवति । तदयमर्थो – जनकावस्थायामजनकावस्थायां च " वस्तुनः " धर्म्मिलक्षणस्य " भेदः " स्वभावनानात्वम् "अत एव " जनकाजनकस्वभावत्वादेव प्रत्यक्षावसितात् " निश्चेयः " निश्चयलक्षणस्तत्र व्यवहारः कर्तव्यः, विषयस्य [S. 89a.] विरुद्धधर्म्माध्यासलक्षणस्य दर्शनादिति ।

न च शक्यते वक्तुम् – अवस्था एवाङ्कुरादिजननस्वभावा नावस्थाता इति । तस्य सर्व्वसामर्थ्यविरहलक्षणस्यासत्त्वप्रसङ्गात् । [T. 264b.] ततो यद् एकरूपतया प्रत्यभिज्ञानं भावेषु तत् पूर्व्वोत्तरकालयोर्जनकाजनकस्वभावभेदव्यवस्थापकप्रत्यक्षनिबन्धनामनुभवद्बाधां कथमिव प्रमाणं स्यात् ? । तत्प्रतिभासिनश्चाभिन्नरूपस्यालीकत्वेऽक्षसमुद्भवामपि वृत्तिमनुभवतोऽस्य सत्सम्प्रयोगजत्वाभावात् तैमिरिकादिधियामिव कुतः प्रत्यक्षता ? । न चार्थ-

१. परम्परयात्यन्तं भेदाभेदौ वस्त्वन्तरे प्रसज्ये° T. २. प्रत्यक्ष । ३. " यो हि यत्स्वभावः " इत्यादिना कथितस्य । ४. प्रत्यक्षम ।

क्रियानिबन्धनं रूपमपास्य बीजादेरपरः परमार्थतः स्वभावोऽस्ति, यस्याधिगमात् प्रत्यभिज्ञानं प्रमाणं भवेत्, अर्थक्रियासामर्थ्यलक्षणत्वात् परमार्थसतः। तस्मात् सदृशापरभावनिबन्धन एवायं केशकदलीस्तम्बादिष्विवाकारसाम्यतामात्रापहृतहृदयानां भ्रान्त [S. 89b.] एव तत्त्वाध्यवसायो मन्तव्यः। ततः सतोऽपि प्रतिक्षणं भेदस्यानुपलक्षणं वालानाम्। यदा तु विधुरप्रत्ययोपनिपाताद् विसदृशापरभावप्रसवः तदाऽस्य तत्त्वाध्यवसायी प्रत्यभिज्ञाप्रत्ययो न भूतिमवलम्वते। न च तदेकाकारपरामर्शप्रत्ययजनकत्वादपरं सादृश्यम्। भेदाऽविशेषेऽपि च स्वहेतुवलायातप्रकृतिवशात् केचिदेव[1]ैकाकारपरामर्शप्रत्ययलक्षणामर्थज्ञानादिलक्षणां वाऽर्थक्रियां कुर्वन्ति नापर इति विपश्चितं प्रमाणवार्तिक एव शास्त्रकृतेति नेह प्रपञ्च्यते।

[§ १७. अनुमानेनापि प्रत्यभिज्ञाया बाधात् न ततः स्थिरभावसिद्धिः।]

अवश्यं च बीजादेर्जनकाजनकावस्थयोर्वस्तुभेदो यथोक्तोऽवगन्तव्य इति दर्शयितुमनुमानमभेदस्य [T. 265a.] बाधकमाह – "भावानां" बीजादीनां स्वकार्यजनको यः "स्वभावः" तस्य तेषु सत्सु "अन्यथात्वाभावात्" कदाचिदजनकत्वासम्भवात् [S. 90a.] "तत्स्वभावस्य" अङ्कुरादिजनकस्वभावस्य "पश्चादिव" सलिलादिकारणसन्निधान इव "प्रागपि" कुशूलाद्यवस्थितिकालेऽपि स्वकार्य"जननप्रसङ्गात्"। तथा हि – सलिलादिसन्निधानेऽपि बीजादिः स्वरूपेणैव कार्यं करोति, न पररूपेण। यश्चास्य तदा [T. 266a.] कार्यजनकः स्वभावः, स चेत् प्रागप्यस्ति, 'स एवायम्' इति प्रत्यभिज्ञायां पुरोऽवस्थायिनो जनकस्वभावस्य प्राच्यरूपाभेदाध्यवसायात्, ततः किमिति प्रागपि तत्कार्यं न कुर्यादिति?। प्रयोगः – यद् यदा यज्जननस्वभावं तत् तदा तज्जनयत्येव। अजनकस्य जनकत्वस्वभावविरोधात्। अन्यस्यापि वा तत्स्वभावतापत्तेः। यथा – तदेव बीजादिकं सलिलादिसन्निधिकाले। कुशूलाद्यवस्थास्वपि चेदं बीजादिकं स्वकार्यजननस्व-

१. रूपालोकादयः।

भावमेव प्रत्यभिज्ञया व्यवस्थाप्यत इति स्वभावहेतुप्रसङ्गः। न च जनयति। तस्मान्न तज्जननस्वभावमिति। विपर्ययप्रयोगः – यद् यदा यज्जननस्वभावं निर्व्वर्त्त्यं कार्यं न जनयति न तत् तदा तज्जननस्वभावम्, तद्यथा – शाल्यङ्कुरजननस्वभावनिर्वर्त्यं[1] कार्यमजनयत् कोद्रवबीजम्। न जनयति च सलिलादिकारणसन्निधेः प्राक् तत्कार्यजननस्वभावनिर्व्वर्त्त्यं [S. 90b.] स्वकार्यं बीजादिकमिति [T. 266b.] व्यापकानुपलब्धिः। ततोऽनुमानतोऽपि बाधामनुभवत् प्रत्यभिज्ञानं कथं प्रमाणं स्यात्?।

ननु चानेन[2] बाध्यमानस्यानुमानस्याप्रामाण्यात् कथं बाधकत्वम्?। [3]अनिश्चितप्रमाणभावेन कुतो बाधा?। नापि इतरेतराश्रयत्वम्। नहि प्रत्यभिज्ञानस्याप्रामाण्यादेतदनुमानं प्रमाणम्, किन्तु स्वसाध्यप्रतिबन्धात्। स च विपर्यये बाधकप्रमाणबलान्निश्चित इति।

[ § १८. प्रत्यक्षस्यानुमानात् गरीयस्त्वनिरासः। ]

न प्रत्यक्षादन्यद् गरिष्ठं प्रमाणमिति चेत्। न। प्रत्यभिज्ञायाः प्रत्यक्षत्वासिद्धेः। न हीयमनुमानेन प्रत्यक्षात्मिका सती बाध्यत इति ब्रूमहे। किं कृतं च प्रत्यक्षस्य गरीयस्त्वम्?। तद्ध्यर्थस्यासम्भवेऽभावात् प्रमाणमुच्यते तच्चानुमानस्याप्यर्थप्रतिबद्धलिङ्गजन्यतया समानमिति नास्य कश्चिद्विशेषः। यदि चानुमानविरोधमश्नुवानापि प्रत्यभिज्ञा प्रमाणं तदाऽऽकारस्य सास्यात् तदेकतां प्रतियती नीलेतरकुसुमादेः[4] [प्रतीतिः] किं न प्रमाणम्?। नहि कुसुमफलादिकार्यदर्शनोन्नीयमानो भेदः प्रत्यक्षतस्तथाभावमनुभवति। विस्तरतश्च प्रत्यभिज्ञाप्रामाण्यनिरासः [S. 91a.] क्षणभङ्गसिद्धावेव विहित इत्यास्तां तावदिह।

"यतः एवम्" उक्तेन प्रकारेण जनकाजनकावस्थयोः बीजादेर्व्वस्तुभेदः "तस्माद् योऽन्त्योऽवस्थाविशेषो" यदनन्तरं अङ्कुरादिकार्य-

१. च शाल्यादिका° T. २. प्रत्यभिज्ञानेन। ३. उत्तरम्। ४. गिरिकान्तका (?) *कर्त्ति (?)

प्रसवः "स एवाङ्कुरजननस्वभावः", [T. 267a.] कार्यदर्शनोन्नीयमानरूपत्वात् तज्जननस्वभावतायाः।

यदि तर्हि स एवाङ्कुरजननस्वभावः, पूर्वभाविनामवस्थाभेदानामतज्जननस्वभावत्वात् कथं तेषु तत्कारणव्यपदेशः ? अङ्कुरार्थिभिर्वा तदुपादानम् ? इत्यत आह – 'पूर्वभाविनस्तु' कुशूलाद्यवस्थितिकालभाविनस्तु "अवस्थाविशेषा अङ्कुरकारणस्या"न्त्यस्यावस्थाविशेषस्य "कारणानि" प्रत्ययान्तरोपधीयमानविशेषेभ्यः परम्परया "तेभ्यस्तदुत्पत्तेः"। अतस्तेषूपचारतः कारणव्यपदेशोऽङ्कुरार्थिभिश्चोपादानम्। यतस्तत्स्वभावस्य बीजादेर्जननं न हेत्वन्तरापेक्षम्, यच्चाजनकमपेक्षते न तस्य [S. 91b] तज्जननस्वभावत्वम् इति। "तस्मान्नानेकान्तो" बीजादिवत् 'तत्स्वभावत्वात्' इत्यस्य हेतोः इत्युपसंहारः।

तदेवं यदा तावत् प्रत्यभिज्ञानं प्रत्यक्षप्रमाणतया स्थैर्यसिद्धये परैरुच्यते बीजादिवदनेकान्तं प्रतिपादयितुम्, तदा तस्योक्तेन प्रकारेण प्रत्यक्षानुमानाभ्यां बाध्यमानत्वात् तदात्मता नास्तीति कुतस्तत एकता भावानाम् ?, यतोऽनेकान्तः स्यादिति प्रतिपादितम्। यदा तु प्रत्यभिज्ञायमानत्वात् पूर्वापरकालयोरेकस्वभावा बीजादय इति हेतुतयोच्यते परैः, तदाऽयमसिद्धो हेतुः। न च स पक्षे क्वचिद् वर्त्तत इत्याह – "क्षणिकेषु भावेषु" अस्माभिरिष्यमाणेषु "ऐक्याभावा"दिति सम्बन्धः।

[ § १९. तत्स्वभावत्वात् इत्यत्र पुनरपि अनेकान्तदोषोद्धारः। ]

अथ यस्यापि क्षणिका भावास्तस्यापि बीजादीनां [T. 267b.] प्रतिक्षणमैक्याभावेऽपि विशेषानुपलक्षणादन्त्यक्षणवत् सर्व्वेषां जनकस्वभावानामपि तद्भावं प्रति सलिलाद्यपेक्षत्वात् तदवस्थमनैकान्तिकत्वम् इत्याशङ्क्याह – "अपरापरोत्पत्तेः" क्षणिकैरपि [S. 92a.] नानेकान्तः, अपरेभ्योऽपरेभ्यश्च प्रत्ययेभ्यः प्रतिक्षणमुत्पत्तेः क्षणिकानां भिन्नशक्तित्वादन्त्यक्षणवज्जनकस्वभावताविरहात् कुतस्तैरप्यनेकान्तः स्यात् ?। न हि कारणभेदोपधीयमानजन्मनां विशेषानुपलक्षणेऽप्यभिन्नस्वभावता युक्ता, हेतु

भेदाननुविधानेऽहेतुकताप्रसङ्गात्। तथा च वक्ष्यति – ‘अपरापरप्रत्यययोगेन प्रतिक्षणं भिन्नशक्तयः सन्तन्वन्तः संस्कारा यद्यपि कुतश्चित् साम्यात् समानरूपाः प्रतीयन्ते तथापि भिन्न एव एषां स्वभावः, तेन किञ्चिदेव कस्यचित् कारणम्’ इति।

यदुक्तं ‘तत्स्वभावस्य जननात्’ इत्यस्यानेकान्तमुद्भावयन्नाह परः – “ते” बीजक्षित्यादयः “अन्त्याः” अन्ते भवाः प्रत्येकमङ्कुरजनने ‘समर्थाः’ खण्डशः कारणेभ्यः कार्योत्पादाभावाद् भवद्भिरिष्यन्त इति “किन्न जनयन्ति प्रत्येकम्”?। ततश्चैषामेक एव कश्चिदङ्कुरं जनयति, तदन्ये तु तत्स्वभावा अपि न जनयन्तीति ‘तत्स्वभावस्य जननात्’ इत्यनेकान्तः। तद्वत् कुशूलाद्यवस्था अपि बीजादयोऽङ्कुरादिजननस्वभावा अपि न जनयिष्यन्तीति तैरनेकान्तः [S. 92b.] तदवस्थ एवेति मन्यते परः।

अत्राह – “इति” यदेवं त्वं मन्यसे। परेण सामान्येनाभिधानात् सामान्येनैवोत्तरमाह – “जनयन्त्येव” [T. 268a.] “नात्र” स्वकार्यजनने “अन्यथाभावः” अजनकत्वमाशङ्कनीयम्। कुतः? “स्वभावस्यावैपरीत्यात्”। यदि हि न जनयेयुर्जननस्वभावा एव न स्युः। तत्स्वभावाश्चेष्यन्त इत्यवश्यं जनयन्ति, तथा च कुतोऽनैकान्तः? इति भावः।

[§ २०. एकेनैव समर्थेन कार्यजनने परेषामनुपयोगमाशङ्क्य तदुद्धारः।]

प्रत्येकमन्त्यानां जनकत्वे कार्यस्यैकेन जननादपरेषामुपयोगस्य निर्विषयत्वादजननमेवेति मन्यमान आह परः – “तेषु” अन्त्येषु “सहकारिषु” सह – युगपत् करणशीलेषु “समर्थस्वभावेषु” तत्कार्यक्रियायोग्येषु अभ्युपगम्यमानेषु सत्सु “कार्यस्यैकेनैव जनितत्वात् कोऽपरस्योपयोगः?” नैव कश्चित्। तत् किमुच्यते ‘जनयन्त्येव’ इति?। एतत् परिहरति – ‘न वै’ नैव “भावानां” बीजादीनां काचित् “प्रेक्षापूर्व्वकारिता” बुद्धिपूर्व्वकारिता, “यतः” प्रेक्षापूर्व्वकारित्वात् ‘अयमस्मास्वन्यतम एकोऽपि समर्थः कार्यजनने, किमत्रास्माभिः कर्त्तव्यम्?’ इत्यालोच्य “अपरे निवर्तेरन्”[1] [S. 93a.] औदा-

१. ‘निवर्तेरन्’ इत्येतद् व्याख्याति।

सीन्यं भजमानास्तत्कार्यजनने न व्याप्रियेरन्। यस्मात् "ते" बीजादयो भावाः "निरभिप्रायव्यापाराः" पर्यालोचनाशून्यव्यापारा एकत्र उत्पद्यमाने "कार्ये सर्व्वे एव व्याप्रियन्ते"। भवनधर्म्मणि च कार्ये तेषां प्राग्भाव एव व्यापारः। तदन्य[1]स्यायोगात्। यदि हि व्यापृतादन्य एव व्यापारः [T. 268b.] तदा तत एव कार्योत्पादाद् व्यापारवतः कारकत्वमेव हीयते।

तस्यासौ व्यापारः ततस्तस्य कारकत्वम् इति चेत्। नन्वेवं व्यापारोपयोगस्य कार्यानुपयोगिनि तत्र[2]ोपचारात् पारमार्थिकमस्य कारकत्वं हीयेत। कश्चास्य[3] व्यापारेण सम्बन्धः?। समवायश्चेत्। न। तस्य प्रागेव निरस्तत्वात्। समवायाच्च व्यापारवत्त्वे अन्य[4]स्यापि तत्[5]कार्यानुपयोगिनस्तद्[6]भावप्रसङ्गः, समवायस्येहेति बुद्धिहेतोरेकत्वेन सर्व्वत्र समानत्वात्। अभिमतेनैव व्यापृतेन तद्व्यापारोत्पादनात् नातिप्रसङ्गः इति चेत्। ननु तेन[7] तद्[8]उत्पादनं तत्र[9] समवायादेवोच्यते। स च [S. 93b.] सर्व्वत्र समानः। येन च परिश्रमेण व्यापारं जनयति तेन कार्यमेव किन्नोत्पादयति? येन व्यवधानमाश्रीयते। यथा च स्वसन्निधिमात्रेणैवायं व्यापारं जनयति न व्यापारान्तरेण, अनवस्थाप्रसङ्गात्, तथा तत एवं[10] कार्यमपीत्युक्तप्रायम्।

तस्माद् भाविनि कार्ये प्राग्भाव एव कारणस्य व्यापारः। स च सर्व्वेषामस्तीति सर्व्वे एव कार्योत्पत्तौ व्याप्रियन्त इति व्यपदिश्यन्ते।

"तदपि कार्यं सर्व्वेभ्य एव जायते" सर्व्वेषां भाव एव तद्भावात्। न हि कार्यस्य कारणाभिमतभाव एव भावमन्तरेणापरं जन्म। तथाभावे[11] हि तत्रैव कारणव्यापारात् कार्यक्रियैवैषां न सम्भवेत्। ततश्च सत्स्वपि कारणेषु कथमस्य भाव उपलब्धिर्व्वा स्यात्?। तत्सम्बन्धिनो जन्मनः करणात् इति चेत्। न। असता

१. क्रियारूपस्य। २. व्यापारवति कारणे। ३. व्यापृतस्य। ४. घटादेः। ५. अङ्कुर°। ६. अङ्कुरजनन°। ७. बीजा°। ८. व्यापारोत्पाद°। ९. बीजादौ। १०. एव स्वसंनिधिमात्रादेव का° T. ११. अपरजन्मसद्भावे।

तेन[1] सम्बन्धायोगात्। स्वत एव सत्त्वे वा [T. 269a.] जन्मार्थानुपपत्तेः। जन्मकाले चोप[2]लभ्यस्यात्मनः प्रा[3]गपि भावात् तथोपलब्धिप्रसङ्गः, रूपा[4]न्तरेण भावे न [S. 94a.] तस्य भावः स्या[5]त्। रूपभेदलक्षणत्वाद् भा[6]वभेदस्य। तस्मादुपलभ्यात्म[7]नो जन्मनः प्रागनुपलम्भादसत्त्वम्। ततोऽस्य[8] जन्मसम्बन्धिता कुतः?। तस्मात् कार्यमेवाभूत्वा हेतुभावे भवतीति भाव एवास्य[9] ततो जन्मेति सर्व्वेभ्यस्तत् जायते।

नन्वेकस्यापि तज्जनने सामर्थ्यात् अपरेषां तत्र सन्निधिलक्षणो व्यापारो व्यर्थ एवेति न तत्रापरेषां भावः सङ्गच्छत इति चेदाह – "स्वहेतोः" क्षितिबीजसलिलादिसामग्रीलक्षणस्य "परिणामः" कार्योत्पादानुगुणविशेषवतः प्रतिक्षणमुपधीयमानातिशयस्य क्षणान्तरस्य प्रसवः, ततः "उपनिधिः" कार्यदेशे सन्निधानं "धर्म्मो" येषां ते "तथाभवन्तः" कार्यदेशे सन्निधीयमानाः "नोपालम्भमर्हन्ति" – 'एकस्याप्येतत्कार्यकरणे समर्थत्वात् किमत्र भवन्तः सन्निहिताः?' इति न पर्यनुयोगमर्हन्ति। न हि तद[10]परसन्निधिमन्तरेण तत्रै[11]कस्यापि भाव उपपद्यते। कुतः? "तत्प्रकृतेः" तत्प्रकृतित्वात् इति भावप्रधानो [S. 94b.] निर्देशः। क्षितिबीजसलिलादिसामग्रीपरिणामजन्यस्वभावत्वादेकैकस्य समर्थस्य तद[12]भावे कुतः केवलस्य सम्भवः[13]?, सामग्रीशब्दवाच्यैः कारणभेदैः समर्थस्वस्वलक्षणान्तरारम्भात्। तैश्च[14] प्रतिक्षणमुपधीयमानातिशयस्योत्पादात् केवलानां [T. 269b.] च तज्जननस्वभाववैकल्यात् तदपरप्रत्यययोगजन्यस्वभावत्वात् समर्थजनकस्य हेतोः। एतच्च यथावसरं तत्र तत्र व्यक्तीकरिष्यति। तस्माद् यत्सामग्रीजन्यस्वभावो यो भावः स तत्रैकाभावेऽपि कारणवैकल्यान्न सम्भवतीत्येकसामग्रीजन्मनां सहभावो नियतः। सर्व्वेषां तेषां भाव एव कार्यस्य भावात् सर्व्व एव जनयन्तीति 'तत्स्वभावस्य जननात्' इत्यत्र नानेकान्तः इति।

---

१. कार्येण। २. कार्यसम्बन्धिनः। ३. कार्यजन्मनि। ४. अव्यक्तेन। ५. अव्यक्तादव्यक्तमेव रूपं जातं यतः। ६. अव्यक्तरूपाद् व्यक्तरूपं भिन्नमेव। ७. कार्यस्य। ८. कार्य°। ९. कार्य°। १०. तदन्यतर°। ११. कार्यदेशे। १२. अपरसन्निधानाभावे। १३. कुतः। १४. नोपालम्भमर्हन्ति।

येनाभिप्रायेण 'तेऽन्त्याः समर्थाः किन्न जनयन्ति' इत्युक्तं तं प्रकटयन्नाह – "समर्थाः" इत्यादि। सिद्धान्तवाद्यपि 'जनयन्त्येव' इति यदभिप्रायवतोक्तं तमादर्शयति – "न, तत्रैव" इत्यादि। एतदेव व्याचष्टे – "तस्यैव" इत्यादि। [S. 95a.] अयमभिप्रायः – 'इदमत्र समर्थम्, इदमसमर्थम्' इति प्रत्यक्षानुपलम्भसाधनाभ्यामन्वयव्यतिरेकाभ्यां व्यवह्रियते, अन्यनिमित्ताभावात्। तौ चान्वयव्यतिरेकावेकत्रैव कार्ये दृश्येते नापरापरत्रेति तस्यैवैकस्य जनने समर्था गम्यन्त इति नापरापरजननम्। ते तु यदवस्था जनयन्तो दृश्यन्ते–किं तज्जननस्वभावास्तदैव? आहोस्वित् प्रागपि? इत्यत्र विवादः। तत्र प्रागपि तत्स्वभावत्वे पश्चादिव प्रागपि जननप्रसङ्ग इति प्रतिक्षणं भेद उच्यत इति।

[ § २१. कारणभेदात् कार्यभेदं स्वीकुर्वद्भिः क्षपणकजैमिनीयैरनेकान्तस्योद्भावनम्। ]

पुनरन्यथा क्षपणकजैमिनीया अनेकान्तमुद्भावयन्त [T. 270a.] आहुः – "भिन्नः" परस्परव्यावृत्तः "स्वभावो" येषां तेभ्यश्चक्षुरादिभ्यः "सहकारिभ्यः" युगपत्कर्तृभ्यः "एकस्य" विज्ञानलक्षणस्य "कार्यस्योत्पत्तौ" सत्याम्, बहूनि भिन्नस्वभावानि कारणानि कार्यं त्वेकमभिन्नस्वभावमिति "न कारणभेदात् कार्यभेदः स्यात्"। ततश्चक्षुरादयो न भिन्नेनात्मनैकस्य कार्यस्य जनका एष्टव्याः। किन्त्वभिन्नमेषामेककार्यजनकं सामान्यभूतं रूपमुपेयं येनाभिन्नं कार्यं जनयन्ति। तच्च समग्रावस्थायामेव तत्कार्यं जनयति न व्यग्रावस्थायाम्। न चैकैकाभावे तस्याभावः, सामान्यात्मनः [S. 95b.] कदाचिदभावविरोधात्। न च तदाऽस्याऽजनकस्वभावता, जनकाजनकरूपवतः समग्रेतरावस्थयोर्भेदप्रसङ्गात्। तथा च सामान्यात्मना हानिः। ततो यदस्य समग्रेषु चक्षुरादिषु जनकं रूपं तदेकैकाभावेऽपि विद्यते न च जनयतीति 'तत्स्वभावस्य जननात्' इत्यनेकान्त इति।

[ § २२. सिद्धान्तवादिना दूषणोद्धारः। ]

सिद्धान्तवाद्याह – "न, यथास्वम्" इत्यादि। एवं मन्यते – किं पुनरिदं कारणमभिमतं भवतः?। यदि प्रत्येकं चक्षुरादिकम्;

तदयुक्तम् । सामग्रीजन्यस्वभावत्वात् कार्यस्य, तस्या एव कारणत्वात् । ननु तदवस्थायां प्रत्येकमेव सामग्रीशब्दवाच्यानां जननस्वभावत्वाभ्युपगमात् प्रत्येकमेव चक्षुरादिकं कारणम् । [T. 270b.] यद्येवं कोऽयं नियमो यदनेकस्माद् भवताऽनेकेन भवितव्यम् विपर्यये बाधकप्रमाणाभावात्, एकेनैव तत् कार्यं कर्तव्यमिति च न नियमकारणमुत्पश्यामः । एकं च तत्कार्यं करोतीति कुतोऽवसितम् ? । तद्भावे भावात् इति चेत् । अनेकत्रापि समानमेतत् । तदुक्तम् – " तस्यैवैकस्य जनने समर्थाः नान्यस्य इति नापरापरजननम् " इति । न चानेकस्माद् भवदनेकं प्राप्नोति । यतो नास्माकं भवतामिव कारणमेव [S. 96a.] कार्यात्मतामुपैति, यतोऽनेकपरिणतेरनेकरूपत्वात् कार्यस्यानेकता स्यात् । किन्तु अपूर्वमेव केषुचित् सत्सु भवति । तच्चानेकभाव एव भावात् तत्कार्यमुच्यते तस्य कुतोऽनेकताप्रसङ्गः ? । यत्त्वभिन्नं रूपं जनकमुच्यते तस्यैकास्थितावपि भावात् तत्कार्यजननस्वभावाच्च ततः कार्यप्रसवप्रसङ्गः, तदन्यसन्निधौ तस्य विशेषाभावात् तदापि वा न जनयेत् । तस्माद् येषु भावाभाववत्सु कार्यं भावाभाववद् दृष्टं त एव विशेषा जनका इति कुतोऽनेकान्तः ? ।

अथ सामग्रीं कारणमाश्रित्योच्यते ' न कारणभेदात् कार्यभेदः स्यादिति ', " तन्न ", " यथास्वं " यस्याः सामग्र्याः य आत्मीयः स्वभावस्तद्भेदेन " तद्विशेषोपयोगतः " तस्य – विज्ञानलक्षणस्य कार्यस्य, विशेषाः–सामग्रीभेदाद् भिन्नाः स्वभावाः, तेषूपयोगतः [T. 271a.] तदुपयोगैः भिन्नसामग्रीव्यापारैः कार्याः ये स्वभावविशेषाः—कार्याणां विशिष्टाः स्वभावाः [S. 96b ] तेषामसङ्करात्-परस्परव्यावृत्तरूपत्वात् । सामग्रीभेदाद् भिन्नरूपतैव कार्याणामिति कथन्न कारणभेदाद् कार्यभेदः स्यात् ? । तथा हि – एका सामग्री मनस्कारतत्सांद्गुण्यादिलक्षणा, ततो विकल्पविज्ञानमात्रं जायते; अपरा मनस्कारेन्द्रियमात्रलक्षणा, ततो भ्रान्तेन्द्रियविज्ञानसम्भवः ; तदन्या विषयेन्द्रियमनस्कारात्मिका, ततोऽप्यभ्रान्तविज्ञानसम्भूतिरिति भिन्नसामग्रीजन्मनां कार्यस्वभाव-

१. चारुत्वम् । २. देशकालादयः । ३. अर्थाभावेऽप्यान्तरो विकल्पः । ४. मरुमरीचिकासु जलज्ञानम् ।

विशेषाणामसाङ्कर्यादस्त्येव सामग्रीलक्षणकारणभेदात् कार्याणां भेद इति।

ननु यदा विषयेन्द्रियमनस्कारेभ्यो विज्ञानसम्भवः तदा तेषामुपयोगविषयस्यैकत्वात् कथमसाङ्कर्यम्?। तथाविधस्य साङ्कर्यस्येष्टत्वात् अदोषः। तदुक्तम् – "तत्रैवैकत्र सामर्थ्यात्" इत्यादि।

कथं तर्हि तेषां तज्जनकत्वम्?, यदि तद्भेदात् [S. 97a.] न भिद्यते कार्यम्। किं नु वै समग्राणामन्यान्यकार्यजननेन जनकत्वम् यतस्तदभावे तन्न स्यात्। जनकत्वं ह्येषां तद्भाव एव कस्यचिद् भावात्। तत्रैकस्यानेकस्य वा भावे तेषामेकानेकजनकत्वमुच्यते।

[ § २३. एकसामग्रीजन्येष्वपि कार्येषु भेदोपपादनम्। ]

नन्वेकस्याः सामग्र्या अनेकस्य भावे सामग्र्यन्तरजन्येभ्यो भवतु भेदः, परस्परतस्तु कथम्?। [T. 271b.] तदतद्रूपहेतुजत्वाद्धि भावास्तदतद्रूपिण इष्यन्ते। तत्र यदा चक्षूरूपमनस्कारेभ्यो विज्ञानजन्म तदा चक्षूरूपक्षणयोरपि भावाद् विज्ञानेनाभिन्नहेतुजत्वात् तयोर्विज्ञानात्मता, विज्ञानस्य वा तद्रूपता कथं न प्रसज्येत?। आह च –

"तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः।
तद्रूपादि[1] किमज्ञानं विज्ञानाभिन्नहेतुजम्॥" [प्रमाणवा० २.२५१.] इति।

नैष दोषः। तेषां यथास्वं स्वभावभेदेन निमित्तोपादानतया तदुपयोगात्। मनस्कारो हि विज्ञानस्योपादानकारणम्। चक्षुषस्तु स्वविज्ञानजननयोग्यस्य जन्मनि सहकारिकारणम्। एवमितरत्रापि यथायोगम्वाच्यम्। ततोऽन्यादृशी सामग्री चक्षुःक्षणस्य जनिका, अन्यादृशी च विज्ञानादेरिति तद्वैलक्षण्यादेव [S. 97b.] कार्याणां वैलक्षण्यम्।

स्यादेतत् – सर्व्वेषामन्वयव्यतिरेकावनुविधीयेते तदा चक्षुरादिक्षणैरिति कुतोऽयं भेदः – इहोपादानभावे भेद(०भावेनेद)मुपयुज्यते, अन्यत्र तु सहकारिभावेनेति?। बोधरूपतादेरनुकारा-[2]

१. तत्सुखादि–प्रमाणवा०। २. उत्तरमाह।

ननुकाराभ्यां तद्भावे[1] व्यभिचाराव्यभिचारतश्च। तथा हि – विज्ञानं मनस्कारस्य बोधरूपतामनुकरोति, न चक्षुरादेर्जरा(डा)दिभावम्। एवमन्यदपि प्रत्येयम्। नियमेन च विज्ञानमात्रभावे समनन्तरप्रत्ययस्य व्यापारो न चक्षुरादेः। चक्षुःक्षणान्तरोदये[2] च पूर्वभाविनश्चक्षुषो[3] न स्वविज्ञानयोग्यताहेतोः [T. 272a.] समनन्तरप्रत्ययस्य। एवं रूपस्यापि वाच्यम्। तस्मादवस्थाभेदेऽपि यद् एकाकारपरामर्ष(र्श)प्रत्ययनिबन्धनतया स्वसन्ततिपतितकार्यप्रसूतिनिमित्तं तद् उपादानकारणं। यत् सन्तानान्तरे प्रागवस्थापेक्षविशेषोदयनिबन्धनं तत् सहकारिकारणम्। सा चेयं भावानां स्वहेतुपरम्परायाता प्रकृतिर्यया किञ्चित् कार्यं स्वसन्तानव्यवस्थानिबन्धनं जनयन्त्यपरं च सन्तानान्तरव्यपदेशनिबन्धनमिति तस्या एव सामग्र्या अवान्तरविशेषकृतत्वाच्चक्षूरूपविज्ञानक्षणानां परस्परतो [S. 98a.] वैलक्षण्यं न विरुध्यते।

[ § २४. कारणानेकत्वेऽपि कार्यस्यैकत्वं सामग्रीभेदे च कार्यभेदः। ]

तस्माद् यदि ‘कारणभेदात्’ कारणानेकत्वात् “कार्यस्य भेदः” अनेकत्वं तदा प्रतिबन्धाभावादनेकान्तः। न च तदभ्युपगम्यत इति न काचित् क्षतिः।

अथ सामग्रीलक्षणस्य कारणस्य भेदः सामग्र्यन्तराद् वैलक्षण्यं कार्यस्यापि भेदोऽतत्कारणेभ्यो भिन्नस्वभावतोच्यते। तदा तस्येह भावात् कथं न कारणभेदात् कार्यभेदः स्यात्? इति अभिप्रायवता ‘न[6]’ कारणभेदात् कार्यभेदो न स्यात्। कुतः?। “यथास्वम्” इत्याद्यभिहितम्।

[7]उभयं चैतत् कार्येषु प्रमाणपरिदृष्टमिति दर्शयन्नाह – “यथा” इत्यादि। मृत्पिण्डादिभ्यो हि भवतो घटस्य न कारणानेकत्वेऽप्यनेकरूपता। नाऽपि सामग्र्यन्तरजन्यादभिन्नस्वभावतेत्युदाहरणार्थः। तत्र [T. 272b.] सामग्र्यन्तरजन्यात् तावद् भेदं दर्शयति – “मृत्पिण्डात्” इत्यादि। इह मृत्पिण्डकुलालसूत्राणि

१. कार्यभावे। २. °क्षणानन्तरोदये T.। ३. नियमेन व्यापार इति सम्बन्धः। ४. वैलक्षण्यस्य। ५. सामग्र्याम्। ६. “न” इति सूत्रांशस्य व्याख्या ‘कारण’इत्यादि। ७. कारणानेकत्वे कार्यस्यैकत्वम्, सामग्रीवैलक्षण्यात् कार्यवैलक्षण्यं च।

त्ययग्रस्वभावानि कारणान्तरसहितानि इष्टकादिलक्षणानि तदन्यजन्येभ्योऽभिन्नस्वभावानि [S. 98b.] यानि कार्याणि साधयन्ति तेभ्यो विलक्षणमेव समग्राणि घटात्मकं कार्यं जनयन्ति। तथा हि – कुलालादिनिरपेक्षो मृत्पिण्डः तदन्यजन्याद् वृक्षादेर्विलक्षणमेवोपादानभावेन मृदात्मकं कार्यं जनयन् दृष्टः। कुलालादिसहितोऽपि तदात्मकमेव घटम्। तत्कारणाहितविशेषश्च केवलमृत्पिण्डाद् भिन्नस्वभावतया तत्कार्यादपीष्टकादेर्विलक्षणमेव करोति। एवं कुलालादिकमपि तदन्योपादानसहितं सहकारिभावेन यत्कार्यं करोति तद्विलक्षणमेव मृत्पिण्डसहितं तत्कारणाहितविशेषं घटात्मकं कार्यं जनयतीति समुदायार्थः। तत्र मृत्पिण्डाद् भिन्नः स्वभावो घटस्य ये तदन्योपादानकारणतया मृत्स्वभावा न भवन्ति वृक्षादयस्तेभ्यो भवति। "कुलालात्" मृत्पिण्डोपादानाहितातिशयात् सहकारिभावेनोपयुज्यमानात् "तस्यैव घटस्य" मृत्पिण्डोपादानतया मृदात्मनः सतः "संस्थानविशेषः" पृथुबुध्नोदराद्याकारः तदात्मतया तदन्येभ्यो येषां मृत्पिण्डस्तदन्यनिमित्तसहित [S. 99a.] उपादानमिष्टकादीनां तेभ्यो भिन्नः स्वभावो भवति। "सूत्रात्" मृत्पिण्डकुलालकारणाहितविशेषात् [T. 273a.] तस्यैव घटस्य "मृत्संस्थानविशेषात्मनो" मृत्पिण्डकुलालयोस्तज्जननस्वभावत्वात् घटस्य तद्रूपयोगात् "तयोश्च[1]" सूत्रकारणोपहितविशेषयोस्तन्निरपेक्षावस्थातो भिन्नात्मकतया "चक्रादेर्विभक्तो" विच्छिन्नः "स्वभावो भवति" तस्मादनु[क्रा]न्तकारणत्रयजन्यो घटः तदन्यस्मादेकैककार्याद् द्विद्विकार्याच्च भिन्नस्वभाव एव जायत इति सामग्रीभेदाद् भिन्नान्येव कार्याणि परस्परमसङ्कीर्णस्वभावानि भवन्तीति तदु[2]पयोगकार्यविशेषासङ्करः सिद्धः। त[3]स्य चैकैकतदवस्थाभाविकारणभेदान्वयव्यतिरेकानुविधायितया खण्डशोऽनुत्पादाच्च। तदेकैकजन्यत्वेऽपि[4] वस्तुतस्तदेकैकसजातीयकारणान्तरसन्निधावदृष्टस्य विशेषस्येतरसन्निधौ तद्दर्शनात् 'त[5]ज्जन्योऽयम्'इति तत्त्वचिन्तकैर्विवेच्यते। य[6]तः

१. मृत्पिण्डकुलालयोः। २. तेषां कारणानामुपयोगैः व्यापारैः कार्या ये स्वभावविशेषाः तेषाम्। ३. घटस्य। ४. 'तज्जन्योऽयम्'इति तत्त्वचिन्तकैर्विवेच्यते इति सम्बन्धः। ५. मृदादि°। ६. विवेकात्।

कार्यविशेषार्थिनोऽनेककारणपरिग्रहं कुर्वन्ति परस्पराहितोपकारकार्यपरम्परया वाञ्छितकार्यजननयोग्यकारणसामग्रीभावार्थम्। यत [S. 99b.] एवं सामग्रीभेदाद् भिन्नान्येवेष्टकाचक्राविभक्तघटतद्विभक्तघटलक्षणानि कार्याणि भवन्ति "तत्" तस्मात् "एवम्" उक्तेन प्रकारेण कुलालात् मृत्पिण्डरहितादन्यसामग्र्यन्तर्भूतात् न मृत्स्वभावता कस्यचित् कार्यस्य, मृत्पिण्डकारणोपकृतात्मन एव तस्य तद्विशेषहेतुत्वात्। न मृदः केवलायाः, तत्सामग्रीबहिर्भूतायाः संस्थान[T. 273b.]विशेषः कुलालोपादानोपकृताया एव मृत्संस्थानविशेषात्मककार्यहेतुत्वात्।

[§ २५. सहकार्यनेकत्वेऽपि कार्यस्य ऐक्यम्।]

तदेवं सामग्रीभेदाद् भेदं कार्यस्योदाहरणे प्रतिपाद्य सहकारिणामनेकत्वेऽप्यनेकात्मताविरहं प्रतिपादयन्नाह – "न च तयोः" मृत्कुलालयोः सहितयोः परस्परोपादानोपकृतात्मनोः यः शक्तिविशेषः प्रत्ययान्तरसहितावस्थातो विशिष्टा योग्यता तद्विषयस्य तदन्यावस्थाविषयाद् भेदे सत्यपि यथा तदन्यस्माद् भेदः, एवं "स्वभावेन न भेदः"। "स्वरूपतोऽपि न नानात्वं" नानेकात्मकता "कार्यस्य"। ताभ्यां जनितो यो विशेषो मृत्संस्थानविशेषात्मकः स एव तदन्यसामग्रीजन्याद् भिद्यत इति भेदो अस्य।

कथं पुनरेत[द्] ज्ञायते 'तदन्यस्मादिव [S. 100a.] स्वभावतोऽप्यस्य भेदो नास्ति' इत्यत आह – "मृत्संस्थानयोः" इत्यादि। यदि हि मृत्कुलालयोः तदवस्थाभाविनोः "शक्तिविशेषविषयो" मृत्संस्थानविशेषात्मको "भेद"स्तदन्यस्मादिव स्वरूपतो भिद्येत तदा मृत्संस्थानयो"रपरस्परात्मतया" परस्परात्मताविरहेण कारणेन संस्थानविशेषेण मृत् न प्रतिभासेत, न मृत्स्वभावेन च संस्थानविशेषः, यथा तदन्यरूपेण। न हि यो यस्य स्वभावो न भवति स तेनात्मना स्वग्राहिणि ज्ञाने प्रतिभासते, रूपरसवत्; ज्ञानं वा तद्रूपविकलार्थसामर्थ्येनोत्पद्यमानं तद्रूपमनुकर्तुं युक्तम्,

१. शक्तिविशेषविषयस्य। २. व्यतिरेकी।

भ्रान्तताप्रसङ्गेन तद्वशादर्थव्यवस्थानाभावप्रसक्तेः। तस्मात् मृत्संस्थानयोरेकात्मतैवेति [T. 274a.] न कारणानेकत्वात् कार्यस्यानेकात्मकता ऐकान्तिकी, यतो भिन्नस्वभावेभ्यश्चक्षुरादिभ्यः सहकारिभ्यः एककार्योत्पत्तिविरोधादेकरूपतया तेषां साधारणैककार्यक्रिया, भिन्नरूपतया वा साधारणकार्यकरणमिष्येत। [S. 100b] एतच्चैकसामग्र्यपेक्षयैककार्यकर्तृत्वमुच्यते। परमार्थतस्तु तत्सामग्र्यन्तर्गतानां सजातीयस्याऽपि क्षणान्तरस्यारम्भात् सामग्र्यन्तरावयवत्वेन च कार्यान्तरस्यापि यथा एकप्रत्ययजनितं किञ्चिदेकं नास्ति तथाऽनेकप्रत्ययजनितमपीति कारणानेकत्वात् कार्यानेकत्वोपगमेऽपि न काचित् क्षतिः। तत एककार्यापेक्षयाऽनेकत्वप्रसञ्जने सन्दिग्धव्यतिरेकता, सामान्येन साधने सिद्धसाध्यतेति च।

[ § २६. अह्रीकादिसंमतस्य द्रव्यपर्याययोः भेदाभेदपक्षस्य निरासः। ]

ननु च मृत्संस्थानविशेषयोरेकस्वभावत्वेऽप्यह्रीकादिभिः सङ्ख्यादिभेदाद् भेद इष्यते तत्कथमनेकप्रत्ययजनितस्यैकत्वे एतदुदाहरणम् स्यात्?। सर्व्वत्रैव हि द्रव्यपर्याययोः सङ्ख्यासंज्ञालक्षणकार्यभेदाद् भेदो देशकालस्वभावाभेदाच्चाभेद इष्यते, यथा घटस्य रूपादीनां च। तथा हि – एको घटः रूपादयो बहव इति सङ्ख्याभेदः। घटः रूपादयः इति संज्ञाभेदः। अनुवृत्तिलक्षणं द्रव्यन्नित्यं च, व्यावृत्तिलक्षणा [S. 101a.] भेदाः क्षणिकाश्च; जैमिनीयस्य तु [T. 274b.] केचित् कालान्तरस्थायिनोऽपीति लक्षणभेदः। घटेनोदकाहरणं क्रियते, रूपादिभिः पुनर्व्वस्तुराग इति कार्यभेदः। एवं सर्व्वत्र द्रव्यपर्याययोः सङ्ख्यादिभिर्भेदः देशादिभिस्त्वभेद इति मृत्संस्थानयोः कथञ्चित् भेदात् मृत्कुलालाभ्यां जनितस्य कार्यस्यानेकताऽस्त्येव। यथा त्वेकता[1] तथा ताभ्यां[2] तस्य अभिन्नात्मजन्यतैवेति यदनेककारणं तदनेकमेव, यत् पुनरेकं तत् सहकारिणामभिन्नरूपजन्यतयैककारणमेवेति न व्यभिचार इति।

१. मृत्संस्थानयोर्देशादिभिः। २. मृत्कुलालाभ्याम्।

तदयुक्तम्। स्वभावतो भेदानभ्युपगमे [1]अन्यथा भेदासिद्धेः अनेकस्मादेककार्योत्पत्तेरबाधनात्। स्वभावतो भेदोपगमे वाऽपरस्परात्मतया मृत्संस्थानयोः संस्थानमृत्स्वभावविशेषाभ्यां तयोरप्रतिभासनं दुर्निवारम्। यदि हि स्वभावतो न भेदो धर्म्मधर्म्मिणोः, सङ्ख्यादिभेदादपि नैव भेदः। न हि पररूपाः भिद्यमाना अपि सङ्ख्यादय आत्मभूतमभेदं बाधितुं समर्थाः।

सङ्ख्याभेदस्तावदसमर्थः, एकस्मिन्नपि द्रव्ये बहुत्वेन व्यवहारदर्शनात्। यथा गुरव इति। न च बहुवचनस्य नियमेनादर्शनाद् रूपादयोऽत्र निमित्तम्, रूपादिनिमित्तत्वे हि गुरुः इति न कदाचिदेकवचनं स्यात्। [S. 101b.] सम्भवि धर्म्मिरूपमात्रमभिधेयत्वेन विवक्षितम् इति चेत्। न। तस्यैकत्वेन विवक्षायां कात्स्न्यगौरवयोरप्रतीतिप्रसङ्गात्। व्रीहय इति च जातिवचने [T. 275a.] धर्म्मिणो रूपादीनां चानभिधानात् न किञ्चिदुत्तरम्। उभयरूपस्य च वस्तुनो गुरुशब्दवाच्यत्वात् कथं सम्भविनो धर्म्मिरूपस्यैकत्वेन विवक्षा?। ततश्चैको गुरुरिति सामानाधिकरण्यदर्शनात् पर्याया अप्येकसंख्याविषयाः। ते च पर्यायरूपेण भिद्यन्ते। तत् कथं संख्याभेदाद् भेदसिद्धिः? इति।

संज्ञाऽपि सङ्केतनिबन्धना। स चेच्छायत्तवृत्तिरिति कुतस्ततोऽर्थभेदः?। एकस्मिन्नपि च संज्ञाभेददृष्टेः कथमस्य भेदनिमित्तता?। यथा इन्द्रः शक्रः पुरन्दरः इति। अत्रापि इन्दनात् शकनात् दारणाच्च शक्तिभेदो गम्यत इति चेत्। न। समस्तस्य कार्यकर्तृत्वात्। न हि शक्तिरेव इन्दति शक्नोति दारयति च। किं तर्हि?। धर्म्मिरूपमपि, तयोरेकस्वभावोपगमात्, शक्नोत्यादिपदैस्तद्वाचिनां सामानाधिकरण्यदर्शनाच्च। न[2] चास्खलद्वृत्तिप्रत्ययविषयत्वादुपचारकल्पना युक्तेति। येषां च पर्यायाणां न काचिदर्थानुगममात्रा तत्र किं वक्तव्यम्?।

लक्षणभेदोऽप्यहेतुः असिद्धत्वात्। नह्येको भावः क्वचिदप्यन्वयी सिद्ध इति। तथा हि – न कूटस्थनित्यतया नित्यं द्र-

१. संख्यादिभिः। २. शक्त्योर्भेदेऽपि तदाधारस्यैक्यात् औपचारिकं सामानाधिकरण्यमित्याशङ्क्य ह – "न च" इत्यादि॥

व्यमह्रीकैरिष्यते, परिणाम[S. 102a.]नित्यतोपगमात्। सा च पूर्वोत्तरक्षणप्रबन्धवृत्त्या। नह्यस्य पर्यायाणामिवोच्छेदः तद्रूपेण[1], पर्याया [T. 275b.] एव पर्यायरूपेण निरुध्यन्ते न तु द्रव्यमिति नित्यमभ्युपगम्यते। न चेयं[2][3] कूटस्थनित्यता वा द्रव्ये सम्भवति, पर्यायव्यतिरिक्तस्य द्रव्यस्यासिद्धेः तस्योपलब्धिलक्षणप्राप्तस्य तद्विवेकानुपलक्षणात्। पर्यायेष्वेव तुल्यरूपकार्यकर्तृषु द्रव्याभिमानो मन्दमतीनाम्। न पुनस्तत् ततो विलक्षणमुपलक्ष्यते।

कार्यभेदस्त्वस्मान् प्रति असिद्ध एव। रूपादीनामेव केषाञ्चित् तत्कार्यकर्तृत्वात्[4]। तथाप्यभ्युपगम्योच्यते – कार्यं हि द्विविधम्। भिन्नकालमभिन्नकालं च। तत्र पूर्वं भवति भेदनिबन्धनम् यदीह सम्भवेत्। तत्तु न सम्भवति धर्म्मधर्म्मिणोस्तुल्यकालत्वात्। अभिन्नकालस्तु कार्यभेदेऽनैकान्तिकः, विभक्तपरिणामेषु पटादिषु सम्भवात्। पटादयोऽपि हि विभक्तपरिणामा अनेकं कार्यं कुर्वन्तो दृष्टाः। न च धर्म्मिरूपेण भिद्यन्ते, एकस्यानेकक्रियाविरोधाभावाच्च। नह्यत्र कारणमेव कार्यात्मतामुपैति, यत एकस्य कारणात्मनः एककार्यरूपतोपगमे तदन्यरूपाभावात् तदन्यकार्यात्मतोपगतिर्न्न स्यात्। किन्त्वपूर्व्वमेव कस्यचिद् भावे प्रागविद्यमानं भवत् तत्कार्यम्। तत्र विषयेन्द्रियमनस्काराणामितरेतरोपादानाहितरूपभेदानां [S. 102b.] सन्निधौ विशिष्टस्वेतरक्षणभावे प्रत्येकं तद्भावाभावानु[T. 277a.][5]विधानादनेकक्रियोपगमो न विरुध्यते। यत एकक्रियायामपि तस्य[6] तद्भावभावितैव निबन्धनम्। सा चानेकक्रियायामपि समानेति।

ननु च तत्सन्निधौ विज्ञानलक्षणकार्यसम्भवात् तज्जननस्वभावतैवैषामवध्रियते, कार्यस्वभावापेक्षया कारणस्य जनकरूपतावस्थानात्। ततो विज्ञानजननस्वभावेभ्यः प्रत्येकं कथं तद्-

---

१. द्रव्यरूपेण। २. °यं परिणामिनित्यता कूटस्थनित्यतावत् सम्भ° T. ३. परिणामनित्यता। ४. द्रव्यकार्यकर्तृत्वात्। ५. The order of the Tib. Fol. should be 275, 277, 276 and 278 according to the S. Mss. । ६. द्रव्यस्य।

न्यकार्यसम्भवः?। तद्भावे वा तेषां तदन्यजननस्वभावता स्यात्। ततश्च विज्ञानमेव न कुर्युः, तदन्यजननस्वभावत्वात्।

नैष दोषः, तेषामनेककार्यक्रियास्वभावत्वात्। तथा हि – ते तदवस्थायां प्रत्येकं विशिष्टसजातीयेतरक्षणजननात्मकाः, तेषां तत्सत्तानन्तर्यदर्शनात्। तत्र विज्ञानजननस्वभावतैवेति तस्याजननस्वभावता व्यवच्छिद्यते तस्या एव प्रतियोगित्वात् नान्यजननस्वभावता। न चातस्तेषामनेकात्मता स्यात्, एकस्यैवात्मातिशयस्यानेककार्यहेतुत्वात्। न हि तदन्यापेक्षया विपर्ययव्यावृत्तिमुपादायानेकेन शब्देनाभिधीयमानं वस्तु अनेकरूपतां प्रतिपद्यते, प्रतिविशिष्टस्यैकस्यैवात्मनस्तथाभिधानात्। यथा [S. 103a.] रूपं सनिदर्शनं सप्रतिघमिति। नह्यत्र स्वभावभेदनिबन्धना ध्वनयः, सामानाधिकरण्याभावप्रसङ्गात्। तन्निमित्तानामेकत्र भावात् अदोष इति चेत्। न। तेषां तदेकोपकारानपेक्षिणां तदयोगात्। अपेक्षायां वा कथमेकमनेक[T. 277b]कार्यं न स्यात्?। अनेकेनैवात्मनोपयोगात् इति चेत्। न। सामानाधिकरण्याभावदोषस्य तादवस्थ्यप्रसङ्गात्। न च नीलादीनामात्मभेदमध्यक्षमीक्षामहे। नापि कार्यभेदादेवात्मभेदानुमानम्, प्रतिबन्धाभावात्, तद्ग्राहकप्रमाणाभावात्। प्रत्यक्षतोऽनेककार्याणामपि भावानामेकात्मतयैवोपलक्षणात् प्रदीपादीनाम्। नानुमानतः, तत्रापि विपर्यये बाधकप्रमाणाभावात्। एकस्यानेकक्रियाऽनभ्युपगमे च योऽयं रूपरसगन्धस्पर्शविशेषाणां क्वचित् सहभावनियमः प्रमाणपरिदृष्टः स न स्यात्। भिन्ननिमित्तानां सहभावनियमायोगात्। तन्निमित्तानामपि तदेककारणानायत्तजन्मनां [S. 103b.] नियतसाहित्यासम्भवात्। तदेकधर्म्मिस्वभावतयैकत्र सहभावनियम इति चेत्। न। एकस्यानेकस्वभावताया एव चिन्त्यत्वात्। अनेकेनैकस्वभावतां चानुभवतः तद्वदनेकताया दुर्निवारत्वात् अन्यथा धर्म्मधर्म्मिणां कथं

१. शब्द°। २. अवयविनि। ३. निमित्तानाम्। ४. एकत्र समवायायोगात्। ५. यथा भवति। ६. कार्यभेदस्यात्मभेदे प्रतिबन्ध इत्यपेक्ष्यते। ७. रूपादिपाश्चात्यक्षणानाम्। ८. रूपादिवद्।

नैकान्तिको भेदः ? । तथा हि – यमात्मानं पुरोधायाऽयं धर्म्मी पर्यायाश्चैते इति व्यवस्थाप्यते, यदि तस्य भेदस्तदा भेद एवेति ।

अनेकस्याप्येककार्यता[1] न स्यात्[2] । न हि परस्परोपादानकृतोपकारानपेक्षा विषयेन्द्रियमनस्कारा: सहैककार्यारम्भिणो युक्ताः । न चैकमेव किञ्चित् क्वचित् जनयति । ततश्च सर्वत्र कार्यकारणभाव एवोत्सीदेत्, अनेकस्यैकस्य[3] चैकानेकक्रियाविरहात् प्रकारान्तराभावाच्च ।

नाप्यहेतुकमेव विश्वम्, [T. 276a.] देशकालप्रकृति[4]नियमात् । तस्मादेकसामग्र्यधीनजन्मनामेव सहभावनियमो भावानामेककार्यक्रियानियमो वा । ततश्च स्वसन्तानक्षणमितरोपादानं[5] च युगपदुपकुर्व्वतः कथमेकस्यानेककार्यता न स्यात् ? । ततः कथं कार्यभेदाद् भेदः कल्प्येत ? । द्रव्यपर्यायाणां चैकस्वभावतामाचक्षाण [S. 104a.] एकस्यानेककार्यतां प्रतिक्षिपतीति कथं नोन्मत्तः[6] ?, स्वभावस्यैव[7] वस्तुत्वात्, अन्यथा तस्य निःस्वभावताप्रसङ्गात् । एकस्वभावत्वे च द्रव्यपर्यायाणां तत्कार्यभेद[8] एकवस्तुनिबन्धन एवेति कार्यभेदाद् भेदमभिदधानः स्फुटमह्रीक एवायमित्युपेक्षामर्हति ।

[ § २७. वैशेषिककृतोऽप्येकस्यानेककार्यकारित्वाक्षेपो न युक्तः । ]

वैशेषिकोऽपि द्रव्यस्यैकस्य द्रव्यगुणकर्म्मणां समवायिकारणतां ब्रुवाणः कर्म्मणश्चैकस्य संयोगविभागसंस्कारनिमित्ततामेकस्यानेककार्यक्रियां प्रतिक्षिपन् स्वकृतान्तकोपेनैव प्रतिहतः । न चात्र शक्तिभेदो निबन्धनम्, यतस्तदेकोपकारनिरपेक्षाः कथमेताः शक्तयो नियतार्थाधाराः ?, न पुनरनवयवेन[10] व्यक्तीर्व्वाऽश्नुवीरन् ? । ततो यत एवास्या[11]ऽऽत्मा[12]तिशयादनेकशक्त्युप-

१. प्रकृते दूषणान्तरमाह । २. एकस्यानेकक्रियाऽनभ्युपगमे चेति पूर्वेण योगः । ३. प्रत्येकमेकानेकक्रियाविरहः । ४. °कृतिप्रतिनिय° T. । ५. इतर उपादानं यस्य । ६. नोत्पन्नः T. । ७. स्वभावस्यैव भेदो न वस्तुन इति चेदाह । ८. द्रव्यपर्यायकार्यभेदः । ९. °गविशेपसं° – T. । १०. कार्त्स्न्येन । ११. एकस्या° – T. । १२. द्रव्यस्य ।

कार तत एवानेककार्यक्रियाऽपि, इत्यलमतिविस्तारिण्या कथयेति।

[ § २८. देशकालस्वभावाभेदस्याभेदसाधकत्वनिरासः । ]

देशकालस्वभावाभेदादभेदस्तु योऽभ्युपगम्यते सोऽप्यनुपपन्न एव । तथा हि – देशकालयोरभेदेऽपि रूपरसगन्धस्पर्शाः पर्यायरूपेण भिद्यन्ते ततः कथमभेदसिद्धिः ?। स्वभावोऽपि यदि द्रव्यपर्याययोर्द्वयोरपि प्रत्येकमनुवृत्तिव्यावृत्तिरूपता; तदा पदार्थद्वयं [T. 276b.] [S. 104b.] स्याद् घटपटवद्, न त्वेकं द्विरूपमिति कथन्तस्मादभेदसिद्धिः ?। न चानुवृत्तिव्यावृत्ती स्वभावो युक्तः, तयोरनुवर्त्तमानव्यावर्त्तमानाधीनत्वात् । ततश्चानुवर्तमानव्यावर्त्तमानयोः स्वभावोऽन्यो वक्तव्यः, न तु तयोरनुवृत्तिव्यावृत्ती एव स्वभावः, भावत्वेन भवित्रधीनत्वात्। नहि स्मृतिः स्मर्त्तुः स्वभावो भवति । अनुवृत्तिव्यावृत्त्योश्च स्वभावत्वे लक्षणात् स्वभावस्य भेदो वक्तव्यः । मृदादिरूपता स्वभाव इति चेत्। अत्राप्यभेद इति यदि सादृश्यमुच्यते; तद् भेद एव सम्भवति, सादृश्यस्य सदृशाधिकरणत्वात् । ततश्च पदार्थद्वयमेव स्यात् न त्वेकं द्विरूपमिति । अथैक्यं द्वितीयरूपरहितताऽभेदोऽङ्गीक्रियते कथं तर्हि द्विरूपता ?। रूपशब्देन ह्यत्र स्वभावोऽभिधीयते । तस्य चैक्ये कथं द्विरूपता ?। विप्रतिषिद्धं ह्येतत् एकस्वभावता द्विरूपता चेति । अथ पुनः स्वभावत ऐक्यं नोपेयते । कथं तर्हि स एक इत्युच्यते अनेकः सन् ?। न तावदेककारणजन्यत्वात्, सर्व्वत्रोपादाननिमित्तकारणभेदेन हेतुभेदसिद्धेः । नाप्येककार्यकर्तृत्वात्, एकस्यापि विभक्तपरिणामाविभक्तपरिणामकार्यभेदाऽभ्युपगमात् । एकाभिधानाभिधेयत्वादपि नैकत्वम्, एकस्याप्यनेकपर्यायसम्भवात् । योग्यत्वाच्च विश्वस्य कृताकृतानामेकाभिधानाभिधेयत्वस्य क्वचिदसम्भवात् शक्तिभेदाच्च विषयभेदं ब्रुवाणं [S. 105a.] प्रति अभिहितम् । नाप्येकविज्ञानविषयत्वादेकम्, एकत्राप्यनेकविज्ञानप्रसूतेः । तथा हि – शशाङ्कोदयं बहवो निरीक्षन्ते [T. 278a.] तस्य कथमेक-

१. देशकालभेदात् । २. क्रियात्वेन । ३. °वत्वेन ल° T. । ४. संकेतितासंकेतितानाम् । ५. देश-भेदाद् भेद इत्यस्य दूषणावसरे । ६. शशाङ्कादयः T.

त्वमभ्युपगतम् ?। बहूनां चैकविज्ञानविषयत्वसम्भवात् नीलपीतादीनामेकताप्रसङ्गः। सर्व्वथेदं न कथञ्चिदपि सङ्गच्छते यदुत एकस्य द्वैरूप्यमिति। विज्ञानं तु नीलप्रतिच्छायतयोत्पद्यमानं पीतादिप्रतिभासव्यवच्छेदेन प्रतिविशिष्टं ख्याप्यते, न पुनरस्य भावतो[1] द्वे रूपे स्तः।

अथ पुनर्द्रव्यपर्याययोः सम्मूर्च्छितत्वात् नरसिंहवदेकं शबलरूपत्वात् द्विरूपमुच्यते। तदयुक्तम्, नरसिंघ[ह]स्य शबलरूपत्वासिद्धेः। स ह्यनेकपरमाणुसङ्घातरूपः, ते च परमाणवः प्रत्येकं नरसिंहरूपा न भवन्ति, ऊर्ध्वभागस्तस्य सिंहरूपः, अधोभागस्तु नररूपः, जात्यन्तरं च स एव नरसिंहाभ्यां स्यात्, न शबलरूपः। विचित्रं हि रूपं शबलमुच्यते। [S. 105b.] विचित्रता च नानास्वभावता। नानास्वाभाव्ये चैकत्वं कुतः? इति केवलमनेकत्वेऽपि बहुष्वेककार्यदर्शनात् सेनादिवदेकव्यवहार[2]दर्शनकृतोऽयं विपर्यासो जडमतीनाम्।

तदेवं तावत् प्रत्येकमहेतुत्वं देशकालस्वभावानामेकत्वप्रसाधने। समुदितानामपि व्यभिचारित्वं पर्यायैः। तथा हि – पर्याया अभिन्नदेशकालस्वभावाश्च पर्यायरूपेण च भिद्यन्ते पूर्वोक्ताच्च धर्म्मधर्म्मिणो[3]र्न्निषेधान्नोभयवादसम्भव इति।

[ § २९. द्रव्यपर्यायानेकान्तवादखण्डनम्। ]

आह च –

" द्रव्यपर्यायरूपत्वात् द्वैरूप्यं वस्तुनः किल।
तयोरेकात्मकत्वेऽपि भेदः संज्ञादिभेदतः॥ १॥
इन्द्रियज्ञाननिर्भासि वस्तुरूपं हि गोचरः।
शब्दानां नैव, तत् केन संज्ञाभेदाद् विभिन्नता॥ २॥
'परमार्थैकतानत्व'[4] [T. 278b.] इत्यादिवचनात् तथा।
शब्देनाव्यापृताक्षस्य बुद्धाव[5]प्रतिभासनात्॥ ३॥
अर्थस्य, दृष्टाविव तच्छब्दाः कल्पितगोचराः।
कल्पितस्यैव तद्भेदः[6] संज्ञाभेदाद् भवेद् यदि॥ ४॥

१. भवतो – T.। २. सेनावनादि° T.। ३. स्वभावहेतुव्याख्यायाम्। ४. "शब्दानामनिबन्धना। न स्यात् प्रवृत्तिरर्थेषु दर्शनान्तरभेदिषु॥" [प्रमाणवा° ३. २०६, २०७]। ५. स्वलक्षणस्य शब्दाविषयत्वे युक्तिमाह। ६. – – मद्रव्यपर्यायरूपेण भेदः।

व्यावृत्तिभेदः काश्चित्[1] स्याद्, वस्तुनो न कथंचन [S. 106a.]।
संख्याभेदोऽपि नैवान्यो मतो वचनभेदतः ॥ ५ ॥
ततोऽपि[2] कल्पितस्यैव कथञ्चित् स्याद् विभिन्नता।
'येषां[3] वस्तुवशा वाच' [प्रमाणवा० ३.६४] इत्यादेर्न तु वस्तुनः[4] ॥ ६ ॥
अविनाशोऽनुवृत्तिश्च[5] व्यावृत्तिर्नाश उच्यते।
द्रव्याविनाशे पर्याया नाशिनः किं तदात्मकाः? ॥ ७ ॥
नष्टाः पर्यायरूपेण ते चेद् द्रव्यस्वभावतः।
किमन्यरूपता तेषां न चेन्नाशस्तथा कथम्? ॥ ८ ॥
द्रव्यात्मनि स्थिते पश्चाद् भवन्तश्च तदात्मकाः।
विरुद्धधर्माध्यासेऽपि, केन, भूतं[6] च किं, यतः[7] ॥ ९ ॥
पर्यायास्तत्र कल्प्यन्ते, भेदरूपं यदीष्यते।
भिन्नं पर्यायरूपं हि द्रव्यरूपाद् भवेद् यदि ॥ १० ॥
तदैतत् स्यादभेदे तु नैतत् संवध्यते वचः।
एकं जातमजातं च नष्टानष्टं प्रसज्यते ॥ ११ ॥
द्रव्यपर्याययोरेकस्वभावोपगमे सति।
ततो लक्षणभेदेन तयोर्नैव विभिन्नता ॥ १२ ॥
कार्यभेदात् स्वभावस्य तयोर्भेदो भवेद् यदि।
स्वभावाभेदतो न स्यादभेदस्तु तथा सति ॥ १३ ॥
स्वभावस्यैव भेदेन किं भेदश्च न कीर्त्तितः?।
न हि पश्चाद्भवन् भेदः कार्याणां तस्य भेदकः ॥ १४ ॥
स्वभावस्याऽपि कार्यत्वान्नाशहेतोरयोगतः।
एकान्तेन विभिन्ने च ते स्यातां वस्तुनी स च[10] ॥ १५ ॥
तयोः केन, विभिन्नाभ्यामभिन्नस्य विभेदतः।
तेषामभेदसिद्ध्यर्थमभिन्नो [T. 279a.] यदि तूच्यते ॥ १६ ॥
अन्यः स्वभावस्तस्यापि तदभेदप्रसिद्धये।
कल्पनीयः स्वभावोऽन्यः तथा स्यादनवस्थितिः [S. 106b.] ॥ १७ ॥
न चानन्तस्वभावत्वमर्थसामर्थ्यभाविनि।
ज्ञानेऽवभासते येन तथैवोपगमो भवेत् ॥ १८ ॥
ऐकान्तिकस्त्वभेदः स्यादभिन्नाद् भिन्नयोर्यदि।
भेद एव विशीर्येत तदेकाव्यतिरेकतः ॥ १९ ॥

१. प्रौढोक्तिपदम्। २. संख्याभेदात् वचनभेदस्यात्। ३. वचनभेदाद् वस्तुभेदः परेणापि क्वचित्कल्पितः, यथा दारा इत्यादौ इत्याह। ४. विभिन्नता। ५. °शोऽनिवृत्ति° T. ६. अनुपपद्यमानं च किम् इति यावत्। अनुपपद्यमानं हि गमकं भवतीति भावः। ७. अनुपपद्यमानात्। ८. यदि कार्यभेदाद् भेदः इष्यते तदा दूषणान्तरमाह। ९. स्वभाव°। १०. यः पूर्वः स्वभावो, यश्च कार्यभेदानुमितः, ते द्वे वस्तुनी स्यातामिति चार्थः।

[1]अभेदस्यापरित्यागे भेदः स्यात् कल्पनाकृतः।
[2]तस्याऽवितथभावे वा स्यादभेदे मृषार्थता ॥ २० ॥

अन्योन्याभावरूपाणामपराभावहेतुकः।
एकभावो यतस्तस्मान्नैकस्य स्याद् द्विरूपता ॥ २१ ॥

अन्योन्याभावरूपाश्च पर्यायाः स्युर्न्न भेदिनः।
तद्विनाशोऽविनाशि स्याद् द्रव्यं वा कथमन्यथा[3] ? ॥ २२ ॥

कूटस्थनित्यता द्रव्ये भेदेषु क्षणनाशिता।
कस्मान्नेष्टा ? विरोधश्चेत् नेष्यते भेदलक्षणम् ॥ २३ ॥

[4]तदिष्टौ किन्न सामान्यं सर्व्वव्यक्त्यनुयायि च।
एकमिष्टं जनन्या च जायायाः किं न चैकता ? ॥ २४ ॥

भेदाभेदोक्तदोषाश्च तयोरिष्टौ कथं न वा ?।
प्रत्येकं ये प्रसज्यन्ते द्वयोर्भावे कथं न ते ? ॥ २५ ॥

गुडश्चेत् कफहेतुः स्यान्नागरं पित्तकारणम्।
तन्मूलमन्यदेवेदं गुडनागरसंज्ञितम् ॥ २६ ॥

मधुरं न हि सर्व्वं स्यात् कफहेतुर्यथा मधु।
तीक्ष्णं वा पित्तजनकं यथा मागधिका मता ॥ २७ ॥

प्रत्येकं यन्निदानं यत् स्वतो मिश्रं तदात्मकम्।
किन्न दृष्टम् ? यथा माषः स्निग्धोष्णः कफपित्तकृत् ॥ २८ ॥

शक्त्यपेक्षं च कार्यं स्याद् गुणमात्राऽनिबन्धनम्।
सर्व्वत्राभावतस्तासां कस्यचित् किञ्चिदेव च ॥ २९ ॥

ये भेदाभेद[T. 279b.]मात्रे तु दोषाः सम्भविनः कथम् ?।
तत्सद्भावेऽपि ते न स्युरिति ब्रूयाद् विचक्षणः [S. 107a.] ॥ ३० ॥

विरोधिसन्निधेर्द्दोषः तज्जन्मा न भवेदपि।
सति तस्मिंस्तदात्मा तु नानिष्टोऽपि निवर्त्तते ॥ ३१ ॥

भागा एव च भासन्ते सन्निविष्टास्तथा तथा।
तद्वान् कश्चित् पुनर्न्नैव निर्भागः प्रतिभासते ॥ ३२ ॥

अन्योन्यप्रत्ययापेक्षास्ते तथास्थितमूर्त्तयः।
कर्म्मणां चापि सामर्थ्यादविनिर्भागवर्त्तिनः ॥ ३३ ॥

[5]सन्निवेशेन ये भावाः [T. 280a.] प्राणिनां सुखदुःखदाः।
कर्म्मभिर्जनितास्ते हि तेभ्य एवाविभागिनः ॥ ३४ ॥

ते चैकशब्दवाच्याः स्युः [6]कथञ्चिन्न त्वभेदिनः।
न च स्वलक्षणज्ञाने शब्दार्थः प्रतिभासते ॥ ३५ ॥

---

१. भेदाभेद इष्यते चेत् तत्राह। २. भेदस्य सत्यत्वे। ३. भेदाभेदयोरन्योन्याभावरूपयोरप्येकत्रावस्थिताविष्यमाणायाम। ४. कूटस्थनित्यतेष्टौ। ५. संस्थानविशेषेण। ६. कल्पनयेत्यर्थः।

अस्पष्टरूपा गम्यन्ते शब्देभ्योऽपि त एव हि ।
ततः केन सहैषां स्याद् भिन्नाभिन्नत्वकल्पना ? ॥ ३६ ॥

निर्विभागस्य चानेकभिन्नदेशांशयोगिता ।
कथमिष्टा ? प्रतीतिश्चेत् क्षणध्वंसानुभाविनः ॥ ३७ ॥

पर्याया ये प्रतीयन्ते स्थेमानन्दवतो मताः ।
कुतोऽन्यतः प्रमाणाच्चेद् बाधकादिह तत्समम् ॥ ३८ ॥

ऐकान्तिकावनन्यत्वाद् भेदाभेदौ तयोर्ध्रुवम् ।
अन्योन्यं वा तयोर्भेदो नियतो धर्म्मधर्म्मिणोः [S. 107b.] ॥ ३९ ॥

तयोरपि भवेद् भेदो यदि येनात्मना तयोः ।
पर्यायो द्रव्यमित्येतद् यदि भेदस्तदात्मना ॥ ४० ॥

भेद एव तथा च स्यान्नैवैकस्य द्विरूपता ।
द्रव्यपर्यायरूपाभ्यां न वान्योऽस्तीह कश्चन ॥ ४१ ॥

स्वभावो यन्निमित्तात् स्यात् तयोरेकत्वकल्पना ।
ततस्तयोरभेदे हि स्वात्महानिः प्रसज्यते ॥ ४२ ॥

तस्य भेदोऽपि ताभ्यां चेद् यदि येनात्मना च ते ।
धर्म्मी धर्म्मस्तदन्यश्च यदि भेदस्तदात्मना ॥ ४३ ॥

भेद एवाथ तत्रापि तेभ्योऽन्यः परिकल्प्यते ।
तेषामभेदसिद्ध्यर्थं प्रसङ्गः पूर्व्ववद् भवेत् ॥ ४४ ॥

धर्म्मित्वं तस्य चैवं स्यात् तत्तन्त्रत्वात् तदन्ययोः ।
न चैवं गम्यते तेन वादोऽयं जालमकल्पितः ॥ ४५ ॥ ”

इत्यलं बहुभाषितया । तदेवं मृत्संस्थानयोरेकस्वभावत्वे न कथञ्चिद्भेदसम्भव इति सहकारिणामनेकत्वेऽपि न कार्यस्यानेकत्वमित्यत्र भवत्येतदुदाहरणमिति ।

[ § ३०. द्रव्यगुणयोरभेदे वैशेषिककृतपूर्वपक्षस्योल्लेखः । ]

अत्र वैशेषिकमतमाशङ्क्याह – “ अन्यदेव ” इत्यादि । “ संस्थानं ” ह्यवयवसन्निवेश उच्यते । स च संयोगलक्षणत्वाद् गुणरूपः । “ ततो ” मृद्द्रव्यादस्यान्यत्वं [S. 108a.] द्रव्यगुणयोरसंकीर्ण्णस्वभावत्वात् । तेन यदि मृत्पिण्डस्य मृदात्मतायां व्यापारः कुलालस्य तत्संस्थानविशेषे कथ्यते, तदा तयोरत्यन्तभेदात् कारणानेकत्वात् कार्यानेकत्वं प्राप्तमिति । सिद्धान्तवाद्याह – “ उक्तमत्र ” इति । मृत्संस्थानयोः स्वभावभेदे दूषणमुक्तम् “ मृत्सं-

१. विकल्पकल्पितं स्पष्टमस्पष्टं रूपम् । २. द्रव्यसंस्थानयोर्यथाकार्यस्वभावत्वात् – T.

"स्थानयोरपरस्परात्मतया" इत्यादिकमिति न संस्थानस्य मृद्द्रव्यादन्यत्वम्। ततो मृत्पिण्डोपादानाहितातिशयेन तत्कार्यक्षणसहकारिणा कुलालेन तदुपादानोपकृतात्मना तत्कार्यक्षणसहकारिणा मृत्पिण्डेन च प्रत्येकं सकलमेव मृत्संस्थानात्मकं कार्यं क्रियत इति न कारणानेकत्वेऽप्यनेकत्वमस्य। अत्रैवोपचयहेतुमाह – "अपि च" [T. 280b.] इत्यादि। यत् तद् घटगतं संस्थानं "यदि तत" मृदो "भिन्नं स्यात्" तदा कुलालः पृथगेव किमिति न करोति?। नहि भिन्नानामावश्यकमपृथक्करणम्, कुलालश्चान्वयव्यतिरेकाभ्यां तस्य संस्थानस्य गुणात्मनः कारणतया गम्यत इति "स पृथगपि" तत् "कुर्यात्"। पर आह – "गुणस्येत्यादि। "द्रव्याश्रय्यऽगुणवान् संयोगविभागेष्वकारणमनपेक्ष" [वैशे० १. १. १६] इति गुणलक्षणात् सर्व्वदा [S. 108b.] गुणो द्रव्यपरतन्त्रः, स कथं कदाचित् पृथक् क्रियेत?। वैशेषिक एव बौद्धीयं चोद्यमाशङ्क्याह – "तत्संस्थान" इत्यादि। यदि स्वभावेनैव तस्य गुणात्मनः संस्थानस्य "क्रियावद् गुणवद्" [वैशे० १. १. १५] इत्यादिवचनादाधारस्वभावं तत् मृद्द्रव्यं, संस्थानं वा तथाविधं कपालाधेयात्मकं तदा किमिति कुलालव्यापारमपेक्षते?। स्वत एव किं न भवति? इति चोदकाभिप्रायः।

एवं चोद्यमाशङ्क्य वैशेषिकः परिहारमाह – "न, ततः" इत्यादि। यत् तत् मृद्द्रव्यं पृथुबुध्नोदराद्याकारं च संस्थानं तयोर्यः सम्बन्ध आधाराधेयलक्षणः तत्र या "योग्यता" तां "द्वयमप्येतत् कुलालाद्" यतः प्रतिलभते तस्मात् "कुलालमपेक्षते" कुलालानपेक्षायां दोषमाह – "अन्यथा" यदि तयोः परस्परसम्बन्धयोग्यतायां कुलालापेक्षा न स्यात् तदा स्वभावत एव मृत्पिण्डस्य [T. 281a.] तथाविधसंस्थानसम्बन्धयोग्यत्वं भवेत्। तस्मिंश्च सति वस्तुन एव तत्संस्थानसम्बन्धयोग्यतालक्षणा धर्म्मताऽस्तीति कुलालसन्निधेः प्रागपि संस्थानविशेषेण सम्बन्धः स्यादिति वैशेषिकीयश्चोद्यपरिहारः।

[ § ३१. द्रव्यगुणयोरभेदस्योपपादनम् । ]

सिद्धान्तवाद्याह – " एवम् " इत्यादि । यदि [S. 109a.] परस्परसम्बन्धयोग्यतायां कुलालमपेक्षते " एवं तर्हि सा योग्यता मृद्द्रव्यस्य कुलालाद् भवति इति " आपन्नम् । न च " अनयोः " मृद्द्रव्ययोग्यतयोः स्वभावस्य " भेदः " नानात्वम् । यदि हि स्यात् तदा योग्यतायाः द्रव्यात् पृथक्करणं " प्राग्वत् प्रसज्येत " । अथ योग्यताया अपि योग्यपारतन्त्र्यादपृथक्सिद्धिं ब्रूयात् तदा तस्या अपि वस्तुधर्म्मतयैव प्रागपि समावेशो मा भूदिति द्रव्येण सह सम्बन्धयोग्यताया अन्या योग्यता कुलालाद् भवतीत्येष्टव्या । साऽपि पृथक्करणप्रसङ्गा[त्] द्रव्याद् भिन्नस्वभावा नोपगन्तव्या । पृथक्करणप्रसङ्गे वा पुनः स एव परिहारः तदीयः, पुनस्तदेवोत्तरम्, इत्यनवस्थाप्रसङ्गादवश्यमभिन्नस्वभावता कपालात्मकमृद्द्रव्ययोग्यतयोरभ्युपगन्तव्या । किमेवं सति सिद्धं भवति ? इत्यत आह – " अस्ति तावत् " इत्यादि । मृत्पिण्डकुलालाभ्यां कपालद्रव्यस्य [S. 109b.] संयोगविशेषसम्बन्धयोग्यस्यारम्भात् यदैकस्वभावत्वेऽप्येकस्यानेकप्रत्ययोपाधेयविशेषता तदा सिद्धः आस्माकीनः पक्षः । ततश्च किमस्माकं मृत्संस्थानयोरेकस्वभावत्वसाधनाय अतिनिर्व्वन्धनेन ? । [T. 281b.] यदि योग्यतामप्याश्रित्यानेकप्रत्ययजन्यत्वेऽप्येकत्वात् नानात्वप्रसङ्गाभावः सिध्यति कार्यस्य, न किञ्चिद् द्रव्यगुणवादनिराकरणेनेह प्रयोजनम्, अन्यत्रैव तन्निराकरणस्य कृतत्वादित्यभिप्रायः। निर्वन्धग्रहणेन च मृत्संस्थानयोरपरस्परात्मतया संस्थानमृत्स्वभावविशेषाभ्यां तयोरप्रतिभासनप्रसङ्गात् इत्यनयोपपत्त्या साधितमेवानयोरेकत्वम्, युक्त्यन्तराणां सम्भवेऽपि तदभिधानलक्षणो निर्व्वन्धो न क्रियते, प्रकृतसिद्धेरन्यथाऽपि भावादित्याचष्टे ।

[ § ३२. सामग्रीभेदे कार्यभेदस्य कारणभेदेऽपि च कार्यस्यैक्यस्योपसंहारः । ]

तदेवं सामग्रीभेदात् [S. 110a.] सामग्र्यन्तरजन्येभ्यो भेदः सहकारिणामनेकत्वेऽपि च कार्यस्यैकत्वमविरुद्धमिति प्रतिपाद्य

१. इत्युपपन्नम् – T.

उपसंहरन्नाह – "तेन सहकारिणः" इत्यादि। येन – प्रत्ययान्तरप्रचये तद्विकलसामग्र्याः सामग्र्यन्तरं सम्पद्यते, तच्च पूर्वसामग्रीजन्याद् भिन्नं कार्यान्तरमेव जनयति; एकसामग्रीव्यपदेशविषयाणां च सहकारिणामनेकत्वेऽप्यनेकस्यैकक्रियाविरोधाभावात् तदन्वयव्यतिरेकानुविधायिनश्च कार्यस्यैकस्य दर्शनात् स्वभावत एकत्वं साधितम् – तेन कारणेन सहकरणशीला एकसामग्र्यन्तर्गताः प्रत्ययाः सामग्र्यन्तरैः सह "नैकोपयोगविषयाः" एक उपयोगस्य विषयो येषां ते न भवन्ति, सामग्र्यन्तरैरेव सह भिन्नोपयोगाविषयत्वस्य न्यायबलात् प्रतीतेः। अनेन यत् प्राग् विकल्पितं 'यदि कारणशब्देन सामग्री भण्यते तदा तद्भेदादस्त्येवातत्सामग्रीजन्येभ्यः कार्यस्य भेद इति किमुच्यते–न कारणभेदाद् भेदः [T. 282a.] स्यात्' इति एतदुदाहरणोपदर्शितं निगमितम्। अथ कारणशब्देन सामग्रीव्यपदेशविषयाः सहकारिण उच्यन्ते तदा तद्भेदादनेकत्वलक्षणात् कार्यस्यानेकत्वलक्षणो भेदो नेष्यत एव, अनेकस्यैकक्रियाविरोधाभावात्, एकस्यानेकत उत्पत्तिदर्शनाच्चेति मृत्संस्थानयोरेकात्मकतोपदर्शितं [S. 110b.] निगमयति – 'कार्यस्वभावस्य' मृत्संस्थानात्मन 'एकत्वेऽपि' नानात्वाभावेऽपि 'वस्तुतः' परमार्थतः कल्पनाबुद्धौ मृत्संस्थानयोर्भिन्नयोरिव प्रतिभासनेऽपीति '

एवम् उदाहरणे सामग्रीभेदात् कार्याणां भेदो नैकसामग्रीविषयप्रत्ययभेदादनेकत्वं कार्यस्येति प्रतिपाद्य प्रकृते चक्षुरादौ योजयन्नाह – "यथा इहो"दाहरणे "कारणभेदः" सामग्रीभेदः कुलालविकलमृत्पिण्डतत्सहितसूत्राधिकसामग्रीत्रितयलक्षणो 'भिन्नेषु' नानास्वभावेषु 'विशेषेषु'[2] इष्टकादिचक्राविभक्तघटतद्विभक्तघटलक्षणेषूपयोगा"न्नैककार्यः" किन्तु भिन्नकार्य एव, "तथा" तेनैव प्रकारेण चक्षुरादिभ्यो विज्ञानस्योत्पत्तौ सामग्र्यन्तरात् सामग्रीलक्षणकारणभेदोऽनेककार्य इत्युन्नेयः।

१. °णोपदर्शनात् निग° – T. २. विषयेषु T.

एतदेव विभजन्नाह – “ तथाहि ” इत्यादि । या चक्षूरूपरहिता समनन्तरप्रत्ययाख्याविज्ञानलक्षणा प्रत्ययान्तरसापेक्षा सामग्री, ततो विज्ञानस्य [T. 282b.] विकल्पकस्येतरस्य वा तदुपादेयत्वेन या बोधरूपतोपलब्धा सा चक्षुर्विज्ञानस्यापि भवति । “ तस्यैव ” चक्षुर्विज्ञानस्य । कीदृशस्य ? । “उपलम्भात्मनः सतो भवतः ” जायमानस्य तदैव तदेककार्यप्रतिनियतस्य चक्षुरिन्द्रियस्य सन्निधानात् [S. 111a.] समनन्तरप्रत्ययोपादानोपकृतात् ततो “ रूपग्रहणप्रतिनियमो ” रूपाकारताप्रतिनियमः, शब्दाद्याकारविवेकवत एवं[1](व) कार्यस्य चक्षुःसहितसमनन्तरप्रत्ययसामग्र्याः जनकत्वाद् । “ विषयाद् ” विषयाधिकात्[2] समनन्तरप्रत्ययादिन्द्रियाच्च “ तेन ” विषयेण “ तुल्यरूपता ” न केवलैव रूपप्रतिभासिता भ्रान्तविज्ञानस्यैवेति विषयेन्द्रियमनस्कारलक्षणसामग्रीकार्यमेवं प्रदर्शितम् । तदन्यदेकद्वयजन्यं तु कार्यं स्वयमभ्यूह्यम् । अत्राभिन्नत्वेऽपि वस्तुतः “कार्यस्य” चक्षुर्विज्ञानलक्षणस्य “ कारणानां ” विषयेन्द्रियमनस्काराणां भिन्नेभ्यः स्वभावेभ्यः केवलानामेषां यः स्वभावस्ततो भिन्ना एवातज्जन्येभ्यो[3] विधिशे(°न्येभ्योऽपि विशे)षा बोधरूपतादिलक्षणा “ भवन्ति ” । अतज्जन्यापेक्षया[4] चैकात्मका अपि बहुत्वेन निर्दिष्टाः । यत एवम् “इति” तस्मात् न कारणभेदेऽपि । [S. 111b.] यथैकसामग्र्यन्तर्गतप्रत्ययभेदेऽप्यभेदो नैवं सामग्रीलक्षणकारणभेदेऽप्यभेदः सामग्र्यन्तरजन्येभ्यः “कार्यविशेषस्य” विशिष्टस्य कार्यस्येति ।

तेन यदुच्यते – [T. 283a.] ‘यदि सहकारिणां भेदेऽप्यभिन्नं कार्यं भवति सामग्रीभेदेऽप्यभिन्नमस्तु, अथ सामग्रीभेदाद् भिन्नं भवति सहकारिभेदादपि किमिति भिन्नं न भवति विशेषाभावात्?’ इति तदपास्तं भवति । तथा हि – परस्परोपसर्पणाद्याश्रयात् प्रत्ययविशेषादेककार्योद्देशेनेतरेतरसन्तानोपकाराच्च सहकारिणां प्रतिनियतशक्तीनामुदयादेकं कार्यं[5] समाजायते । साम-

१. एव T. । २. °धिकारात् T. । ३. एव तज्ज° T. । ४. अतो जनकापेक्षया T. । ५. कार्यं न जायते – T. ।

ग्र्यन्तरस्य तु कार्यान्तरप्रभवशक्तिनिबन्धनेभ्यो हेत्वन्तरेभ्यः स्वभावभेदवतो भावाद् भिन्नकार्यप्रसूतिरिति कुतो विशेषाभावः ?।

[ § ३३. जनकत्वमेवाधारत्वं न तु स्थापकत्वम्। ]

ननु च सर्व्वं कार्यं साधारं यथा उपादायरूपम्। तद्धि भूतेभ्यो जायमानं तान्येवाश्रयत इति भवद्भिरिष्यते। तथाऽन्यदपि विज्ञानादिकं कार्यम्। अतोऽनेनापि किञ्चित् कारणमाश्रयणीयम्। तस्य च कारणस्य पूर्व्वं जनकत्वं पश्चात् [S. 112a.] कार्यं प्रत्याधारभाव एव, न जननम्, ततस्तत्स्वभावस्य जननादिष्वनेकान्तः तदवस्थ एवेत्यत आह – "त एवैते" येऽनन्तरमुक्ताः "कारणशक्तिभेदाः" कारणानां शक्तिविशेषाः। कीदृशाः ? "यथास्वं" येषां कारणशक्तिभेदानां सहकारिलक्षणानां यदात्मीयं सामग्र्यन्तरजन्यात् प्रतिविशिष्टं कार्यं तस्य जननेऽव्यवधेया व्यवधातुं [T. 283b.] प्रतिबन्धुमशक्या शक्तिर्येषां तद्भावस्तया "अव्यवधेयशक्तितया" अवश्यं कार्यकारिशक्तितया "प्रत्युपस्थिताः" उद्युक्ताः सन्तः "सामग्रीकार्यस्य" एकप्रत्ययजनितस्य कस्यचिदभावात् सर्व्वं सामग्र्या एव कार्यमिति कृत्वा सामग्रीकार्यस्य स्वभावस्थित्याश्रय इत्युच्यन्ते। कस्मात् पुनरव्यवधेयशक्तिता ? "क्षणिकत्वात्"। नहि क्षणिकस्य शक्तिः प्रतिबन्धुं शक्यते, स्वभावान्तरोत्पादने यावत्प्रतिबन्धको व्याप्रियते तावत् क्षणिकस्य स्वकार्यं कृत्वैव निरोधात्।

कथं पुनरसमानकालं कारणमाधारो युज्यते ?, इत्यत आह – "तथा हि" इत्यादि। यस्मात् "तत्" विज्ञानलक्षण कार्यं "तेभ्यः" चक्षुरादिभ्य "समस्तेभ्यो" बोधरूपतया तदन्यस्मात् तदजन्यात् [S. 112b.] "प्रतिविशिष्टस्वभावमेकं" खण्डशः कार्यस्यानुत्पादादेकैकस्मात् सकलस्यैव भावादेकं जातम्, तस्मात् ते आधारा उच्यन्ते। नहि जनकादन्य एवोपकारकः। न चानुपकारक आ-

१. साधनाधारम् T.। २. °भानम् अन्यमेवाश्रयते T.। ३. °र्येषां स्वभावस्तया – T.। ४. °स्य कचिदप्यभावात् – T.। ५. °न्तरमाश्रित्य या° – T.।

धारः, अतिप्रसङ्गात्। ततो भिन्नकालस्याधारभावो न विरुध्यते। यदपि भूतानामुपादायरूपं प्रत्याश्रयत्वमुच्यते[1] तदपि स्वदेशस्यास्य जनकत्वमेवेति न किञ्चित् प्राग्जनकं भूत्वा पश्चात् [2]स्थापकतामुपैति, यतोऽनेकान्तः स्यादिति।

[ § ३४. अतिशयोत्पादनं न सहकारित्वं किन्तु एकार्थकारित्वम्। ]

पुनरन्यथा तत्स्वभावस्य जननादित्यनेकान्तोद्भावनं परस्याशङ्क्याह – "अप्रतिरोधशक्तिकेषु" अविद्यमानः प्रतिरोधः– प्रतिबन्धो यस्याः शक्तेः सा येषाम् [T. 284a.]। अप्रतिरोधशक्तिकत्वं चानन्तरकार्यत्वात्। ये ह्युत्पन्नाः कालक्षेपेण कार्यं कुर्व्वन्ति तेषां स्यादपि शक्तिप्रतिबन्धो, न तु य उदयानन्तरमेव कार्यं कुर्व्वन्ति। अनेन क्षणक्षयिणामुपघातकाभावमाह। अनुग्राहकाविरहमप्याह – "अनाधेयविशेषेषु"। तच्चानाधेयविशेषत्वं "क्षणिकेषु" इत्यनेनाह। नहि क्षणिकानां विशेष आधातुं शक्यते, विशेषाधायकेन तत्सहभाविना तदनन्तरं तदुत्पादनात्। तदा [S. 113a.] च तस्य निरोधात्। तेष्वेवंविधेषु "प्रत्ययेषु परस्परं कः सहकारार्थः" येन सहकारिण उच्यन्ते?। नन्वनाधेयविशेषत्वेनैव सहकारित्वाभावः प्रतिपादित इति किमर्थमिदमप्रतिरोधशक्तिकेष्विति?। नहि शक्तिप्रतिरोधकः सहकारी भण्यते। सत्यम्। सर्व्वथा तु तत्राकिञ्चित्करत्वज्ञापनार्थमेतदुक्तम्। शक्तिप्रतिबन्धकापनयनेन चोपकारित्वकल्पनां सहकारिणां निरस्यति। तस्मादतिशयाधायिनः सहकारिणोऽसम्भवात् क्षणिकानां स्वहेतुमात्रप्रतिबद्धमेव जनकत्वम्। तच्चैवंविधं सर्व्वदाऽस्ति। न च केवला जनयन्तीति तत्स्वभावस्य जननादित्यनेकान्त एवेति मन्यते।

एतत् परिहरति – "न वै" नैव अतिशयोत्पादनं[3] सहक्रिया यतस्तदभावात् सहकारिणो न स्युः। क्व पुनरतिशयोत्पादनं सहक्रिया प्रत्ययानां न भवति?। "सर्व्वत्र"। नहि क्वचिदपि सहभाविनामतिशयोत्पादनलक्षणा[4] [T. 284b.] सहक्रिया सम्भ-

१. °रूपं प्रवृत्तित्वं T.। २. स्थापनाहेतुर्भवति T.। ३. °योपादानम्–T.। ४. °योपादान°–T.।

वति । का तर्हि सहक्रिया ? इत्याह – "एकार्थकरणम्" एककार्यनिष्पादनं यद् "बहूनाम्" । "अपिः" सम्भावनायाम् । [S. 113b.] न्यायबलादेवंविधामेव सर्व्वत्र सहक्रियां सम्भावयामः, नान्यामिति । अत्रोदाहरणम् – "यथा अन्त्यस्य" अनन्तराङ्कुरादिकार्यस्य "कारणकलापस्य" प्रत्ययसामग्र्या इति ।

[ § ३५. एककार्यकारित्वमेव मुख्यं सहकारित्वमितरत्तु गौणम् । ]

स्यादेतत् – औपचारिकमेतत् सहकारित्वम्, अतिशयोत्पादनमेव तु मुख्यम् इत्यत आह – "तदेव" एककार्यकरणलक्षणं "मुख्यं सहकारित्वम्" नातिशयोत्पादनलक्षणम्, तस्यैव गौणत्वात् । एतच्चोत्तरत्र वक्ष्यते । कुत एतत् ? इत्याह – "तस्यैव अन्त्यस्य" विवक्षितकार्यं प्रति "कारणत्वात्" । कारणस्य च सहकारिव्यपदेशः नाकारणस्य । यतः सह – युगपत् कुर्व्वन्तः सहकारिण उच्यन्ते, अन्त्यश्च कारणकलाप एवंविध इति । यथा चान्त्यस्यैकार्थकरणं सहकारित्वम् एवं पूर्व्वस्यापि कारणकलापस्योत्तरोत्तरविशिष्टक्षणान्तरारम्भिण इत्यवसेयम्, अन्त्यस्योदाहरणतया निर्देशात् । तस्मात् सर्व्वं कार्यमङ्कुरादिकं विशेषलक्षणं वाऽनेकप्रत्ययजन्यमिति । सर्व्वत्रैकार्थक्रियैव चोपचीयमानापचीयमानकार्यकारिणः कारणकलापस्य सहकारित्वम्, न विशेषोत्पादनमिति ।

स्यादेतत् – एकार्थकरणमपि तत्र [S. 114a.] सहकारित्वमस्तु अतिशयोत्पादनलक्षणमपीत्यत आह – "तत्र च" क्षणेऽन्त्ये "विशेषस्य कर्त्तुमशक्यत्वात्" नातिशयोत्पादनमपि सहकारित्वम् । कुतो विशेषस्य [T. 285a.] कर्त्तुमशक्यत्वम् ? इत्यत आह – "एकस्य" अनंशस्य "स्वभावस्याविवेकात् । न हि तत्र 'अयमनाहितातिशयो भागः स्वहेतुभ्यो जातः, अयं तु सहकारिभिराहितातिशयः' इति विवेकोऽस्ति । यदि नामाविवेकः, विशेषस्तु किमिति न क्रियते ? इत्यत आह – "स्वभावान्तरोत्पत्तिलक्षणत्वाद् विशेषोत्पत्तेः", निर्भागे च कुतः स्वभावान्तरस्य व्यवस्था ? ।

स्यान्मतम् – भिन्नस्वभाव एवान्त्यस्य विशेषोऽस्तु इत्यत आह – "भावान्तर-"इत्यादि । यदि भावान्तरलक्षणो विशेषो

भवेत् तदा तस्यान्त्यत्वमेव हीयेत। हीयेतां(हीयतां) को दोषः? इति चेत्; "ततश्च" अनन्त्यत्वात् "न साक्षात् कारणं स्यात्"। यत एवं "तस्मान्न कारणस्य" मुख्यस्य "सहकारिभ्यः" सकाशाद् "विशेषस्योत्पत्तिः" इत्येकार्थक्रियैव सहकारित्वमिति।

नन्वसत्यां सहकारिभ्यो विशेषोत्पत्तौ कार्यजनने सामर्थ्यमेषां न युज्यत इत्यत [S. 114b.] आह – "ते समर्थाः" इत्यादि। यदि हि ते स्वभावेनासमर्था उत्पद्येरन् तदैषां सहकारिभ्यः सामर्थ्योत्पत्तिरभ्युपगम्येत। यावता "तेऽन्त्याः स्वभावेनैव समर्थाः प्रत्ययाः संहिता जायन्ते" क्षणमात्रविलम्बिनो। [2]"येषा"मेकक्षणनियतत्वात् ततः "प्राक्पश्चात्पृथक्त्वभावो नास्ति। येभ्यश्चानन्तरमेव कार्यमुत्पद्यते" न कालान्तरेण "तत्र" तेष्वेवंविधेषु "एकार्थक्रियैव सहकारित्वम्" नातिशयोत्पादनलक्षणम्।

स्वभावतः सामर्थ्यस्य [T. 285b.] भावविरोधात्, परस्परतश्चानभ्युपगमात् समर्थस्य जन्मैवायुक्तमिति मन्वानः परः आह – "समर्थः कुतः" इत्यादि। सिद्धान्तवाद्याह – "स्वकारणेभ्यः" इति। परमतापेक्षया तु स्वभावत इत्युक्तम्। परो ह्य[3]त्यन्तस्य(ह्युत्पन्नस्य) कारणस्य सहकारिभ्यः सामर्थ्यमिच्छतीति तन्नि[4]षेधपरं स्वभावत इति वचनम्। न तु स्वभावतः किञ्चिज्जायते, तस्याहेतुकत्वप्रसङ्गात्।

[ § ३६. क्षणिकेष्वेकार्थक्रियानियमस्य व्यवस्थापनम्। ]

एकार्थक्रियानियम एव क्षणिकानामयुक्तः, केवलानामप्यन्त्यक्षणसरूपाणां दर्शनात्। तथाहि –'इदमेवंरूपं नैवं च' इति दर्शनादर्शनाभ्यां [S. 115a.] विभज्यते। तत्र यादृशाः क्षित्यादयस्तदन्यप्रत्ययसन्निधावुपलभ्यन्ते तादृशा एव केवला अपि। ततस्तदन्यसहिता इव केवला अपि समर्थमङ्कुरजनने स्वं स्वं क्षणान्तरमारभेरन्। ततः केवलस्याप्यङ्कुरादिजननस्वाभाव्यादजननाच्च 'तत्स्वभावस्य जननात्' इत्यनेकान्त एवेति मन्यमानः पर

१. साक्षाद् T.। २. °लम्बिनो जन्मनस्तेषामेक° – T.। ३. ह्युत्पाद[ने]स्य – T.। ४. तन्निषेधाय परं – T.।

आह – "तानि" स्वकारणानि क्षितिबीजादीनि "एवं" समर्थम् "अपरस्य" अन्यस्य प्रत्ययस्य "सन्निधान एव किं" कस्मात् "जनयन्ति" ? न केवलानि ?, सहितानामेव सर्व्वदा सम्भवात् इति चेत् आह – "कदाचित्" कस्मिंश्चित् काले "अन्यथाऽपि" केवला अपि "स्युः" भवेयुः। तथा हि – दृश्यन्त एवाध्यात्मिकबाह्याः क्वचित् कार्ये यादृशा यत्सहिताः तादृशा एव तद्रहिता अपीति। [T. 286a.] जनयन्तु केवला अपि सम्भवन्तः समर्थम्, को दोषः ? इति चेदाह – "ततश्च" केवलानामपि समर्थजनकानां सम्भवात् "एकोऽपि" न केवलमनेकः "क्वचि"देशादौ [S. 115b.] समर्थः उत्पन्नः क्षितिबीजादिरङ्कुरादिकार्यं "जनयेत्" यदि तत्स्वभावस्यावश्यं जनकत्वम्। न च केवलो जनयति तत्स्वभावसम्भवेऽपि ततोऽनेकान्त इति परः।

एतत् परिहरन्नाह – "अपरापर–"इत्यादि। अपरैश्चापरैश्च कुशूलतदपनेतृपुरुषप्रयत्नपिटकादिप्रक्षेपक्षेत्रनयनप्रकिरणादिभिः "प्रत्ययै"र्यो "योगः" तेन कारणेन "प्रतिक्षणं भिन्नशक्तयो" न कदाचित् पूर्व्वापरकालभाविन एकशक्तयः अपरापरप्रत्यययोगलक्षणहेतुभेदेऽप्यभिन्नशक्तितायामहेतुकत्वप्रसङ्गात्[1]। अन्यत्रापि च शालियवबीजादौ शक्तिभेदस्य हेतुभेदनिबन्धनत्वात्।

"संस्काराः" समेत्य सम्भूय च प्रत्ययैः क्रियमाणाः "सन्तन्वन्तः" सन्तानेन भवन्तो "यद्यपि कुतश्चित् साम्याद्" वर्णेन संस्थानेन अन्येन वा केनचित्प्रकारेण सादृश्यादेकाकारपरामर्शप्रत्ययजननलक्षणात् समानं रूपमेषामिति "सरूपाः" सदृशाः "प्रतीयन्ते" प्रत्यभिज्ञायन्ते "तथापि" कृत्रिमाकृत्रिमाणामिव मणिमुक्तादीनामपरापरप्रत्यययोगलक्षणसामग्रीभेदाद् "भिन्न एव" विसदृश एव न प्रत्यभिज्ञानवशादभिन्नः तुल्यरूप "एषां" बीजादीनां "स्वभावः" [T. 286b.] यत एवं "तेन" भिन्नस्वभावत्वेन भिन्नशक्तितया वाऽपरापरसामग्रीजन्यत्वेन क्षणानां सिद्धया "किञ्चिदेव" क्षितिबीजादिकं "कस्यचि"देव कार्यस्याङ्कुरादेस्तज्ज-

१. °भेदेपि भिन्न° – T.।

ननसमर्थस्य वा " कारणम् "। न सर्व्वं सर्व्वस्य। तथा च व्यग्राणां क्षितिबीजादीनामङ्कुरजननस्वभावता समर्थक्षणजननस्वभावता वा नास्त्येवेति तत्स्वभावस्य जननादजनकस्य चातत्स्वभावत्वादित्यत्र नानेकान्तः यतो यो यत्स्वभावः स स्वहेतोरेवोत्पद्यमानः तादृशो भवति न पुनस्तद्भावे हेत्वन्तरमपेक्षत इत्यत्रानेकान्तः स्यादिति। प्रत्यभिज्ञानस्य च सरूपताविषयस्य सामग्रीभेदादनुमितभिन्नशक्तिस्वभावत्वेन बाध्यमानतया प्रामाण्याभावात् न ततः सरूपतासिद्धिः क्षणक्षयिणामिति।

पूर्व्वं च 'अत एवान(एव त)योरवस्थयोर्व्वस्तुभेदो निश्चेयः'[1] इत्यादिना [S. 116b.] एकत्वविषयं प्रत्यभिज्ञानं निरस्तम्। अधुना तु तुल्यस्वभावताविषयमिति भेदः। एतदपि तत्र 'अपरापरोत्पत्तेः'[2] इत्यनेनोक्तमेव। विपञ्चनार्थं[3] तु पुनः इह उपन्यस्तम्।

[§ ३७. क्षणिकेषु हेतुफलभावव्यवस्थायाः कथनम्।]

किञ्चिदेव कस्यचित् कारणम् इत्युक्तम् तत्र किं कस्य कारणमिति शक्यपरिच्छेदमप्याध्यात्मिकेषु तावद् दर्शयन्नाह – "तत्र" – इत्यादि। " तत्र " तेषु प्रतिक्षणं शक्तिस्वभावेषु क्षणिकेषु भावेषु। व्यवधानं – व्यवधीयते येन, तदादिर्येषां अतिदूरात्यासन्नत्वादीनां ते[4]ऽविद्यमाना यस्मिन् देशे सोऽव्यवधानादिः देशो यस्य सोऽव्यवधानादिदेशः, [T. 287a.] रूपमिन्द्रियं चादी यस्य मनस्कारादेः स रूपेन्द्रियादिः स चासौ कारणकलापश्च सामग्रीलक्षणस्तथोक्तः, अव्यवधानादिदेशश्चासौ रूपेन्द्रियादिकारणकलापश्च स " विज्ञानजनने समर्थो हेतुः " नान्यः, तद्भाव एव तस्य भावात्, अन्यभावेऽपि चाभावात्, एतन्मात्रनिबन्धनत्वाच्च समर्थासमर्थव्यवस्थायाः। "यस्तेषा"मिन्द्रियादीनां "परस्परोपसर्प्पणस्य" अन्योन्यढौकनस्य। "आदि"ग्रहणाद् व्यवधानापनयना....

[S. 117a.]..................................................................

[S. 117b.]..................................................................

[सा]मग्र्यधीनत्वेनासंभवादिति।

---

१. पृ. ८४. पं० ५। २. पृ. ८८. पं० २५। ३. विषयनिवेदनार्थम् – T.। ४. अव्यवधीयमाना – T.। ५. सरूपे° – T.

इममेवंविधं [S. 118a.] हेतुफलभावप्रतिनियमं निरवद्यमाध्यात्मिकेषु दर्शितम् [T. 288a.] अन्यत्राप्यतिदिशन्नाह – "अनेन न्यायेन" इत्यादि। योऽयमनन्तरं हेतुफलभावप्रतिनियमे न्याय उक्तः सोऽन्यत्राऽपि "सर्व्वत्र" द्रष्टव्यः। सर्व्वत्रेति वचनात् अक्षणिकेष्वपि प्रतीतिर्म्मा भूत् इत्याह – "प्रतिक्षणम्" इत्यादि। याः क्षणे क्षणेऽन्याश्चान्याश्च स्वभावभेदान्वयिन्यः शक्तयो भवन्ति तत्रायमेकार्थक्रियाप्रतिनियमः सहकारिणां द्रष्टव्यः। न तु ये स्थिरैकस्वभावा भावाः परैः कल्प्यन्ते तेष्वपि। स्थैर्यं सन्तानाश्रयेणापि व्यपदिश्येतेत्येकग्रहणम्। क्षणेऽप्येकत्वमस्तीति स्थिरग्रहणम्।

[§ ३८. अक्षणिके एकार्थक्रियाकारित्वस्याभावः।]

कस्मात् पुनः स्थिरैकस्वभावेषु नेष्यते? इत्याह – "स्वभाव–" इत्यादि। कामं भावः स्वयं न भवेत्। न तु स्वत एव स्वभावस्यान्यथात्वं सम्भवति। ततश्च स्थिरः पदार्थो यदि कार्योत्पादनसमर्थस्वभावः ततोऽस्याक्रिया नोपपद्यते इति सर्व्वदैव कुर्यात्। अथासमर्थस्वभावः, तदापि क्रियाऽनुपपन्ना, सर्व्वदैव न कुर्यादिति भावः। यत्तु कदाचित् करोति कदाचिन्न [S. 118b.] इत्येतन्न लभ्यते। ततश्चाक्षणिकानां तत्कार्यक्रियासमर्थस्वभावत्वे सहितासहितावस्थयोरेकरूपत्वात् केवलानामपि तत्कार्यक्रियाप्रसङ्गेन कुत एकार्थक्रियाप्रतिनियमलक्षणं [T. 288b.] सहकारित्वं सम्भवेत्?।

अत्र पर आह – "अन्यसहितः" इत्यादि। यद्यपि केवलस्याप्यक्षणिकस्य समर्थः स्वभावः तथापि अन्यसहितः करोति न केवलः। अयमपि ह्यस्य स्वभावः यद्–'अन्यसहितेन स्वकार्यं कर्त्तव्यम् न समर्थस्वभावेनापि सता केवलेन' इति।

सिद्धान्तवाद्याह – "किं केवलस्य" इत्यादि। अन्यसहितेनैव स्वकार्यं कर्त्तव्यं न केवलेन इत्येतत् केवलस्यासमर्थस्वभावत्वे युज्यते नान्यथेति मन्यमानस्य प्रश्नः। परस्त्वनवगताभिप्राय आह – "समर्थ" इति। केवलस्याप्यक्षणिकस्य समर्थ एव स्व-

भावः अन्यथाऽस्याक्षणिकतैव हीयेतेति। सिद्धान्तवाद्याह – "किन्न करोति" इति। नहि समर्थस्याक्रिया, सहितस्यावस्थायामिव युज्यत इति सहितस्यैव क्रियामिच्छता केवलस्यासमर्थस्वभावतैवोपगन्तव्या।

अथ मतम् – केवलस्य यदि शिरश्छिद्यते तथापि न करोतीत्यत आह "अकुर्व्वन्" इत्यादि। कार्यानुमेयं हि सामर्थ्यं न च केवलस्य कदाचिदपि कार्यक्रियाऽस्तीति कथं सामर्थ्यं कल्प्यते ?। नायं नियमः यत् समर्थस्वभावेनावश्यमेव कार्यं कर्त्तव्यम्, अन्यथाऽपि दर्शनात् इति मन्यमान [S. 119a.] आह परः – "कुविन्दादयः" इत्यादि। सिद्धान्तवाद्यपहसन्नाह "क्रीडनशीलः" इत्यादि। देवानांप्रियः ऋजुः मूर्खो वा [T. 289a.] सुखसंवर्द्धितत्वात् रमणस्वभावः, क्रीडनं बालधर्म्मः, तत्साधर्म्येण प्रज्ञावैकल्यं दर्शयति, सुखैधितत्वेन शास्त्रेष्वनभियोगम्। यो ह्यनभियुक्तो दुर्बुद्धिश्च स "कृतमपि" वस्तु विस्मरणप्रकृतित्वात् पुनः पुनः "कारयतीति" पुनः प्रतिविधापयति। क्व पुनरेतत् प्रतिविहितम्? इत्याह – "तथाहि" – इत्यादि। 'बीजादिवदनेकान्तः' इत्यनेन प्रस्तावेन निर्लोठितमेवैतत्।

तदेवमक्षणिकस्य समर्थस्वभावत्वे सहितस्यैव[2] कार्यक्रियास्वभावत्वविरोधात् केवलस्याक्रियाऽनुपपन्नेति प्रतिपाद्योपसंहरन्नाह – "तस्मात् तत्स्वभावस्य" कार्यक्रियासमर्थस्य "अन्यथात्वासम्भा(म्भ)वात्"[4] कदाचिदसमर्थत्वाभावात् "तद्धर्म्मणः" कार्यक्रियाधर्म्मणः तथाभावः कार्यक्रिया "अन्त्यावस्थावत्" सहितावस्थायामिव "अनिवार्यः।

[ § ३९. मीमांसकसंमतस्य भावस्वभावरूपसामर्थ्यस्य निरासः। ]

स्यान्मतम् – केवलोऽयमक्षणिकोऽसमर्थ एव। ततः केवलो न [S. 119b.] करोति, सहितावस्थायां त्वस्य सामर्थ्यं सहकारिभ्यो जायते। ततः सहित एव करोतीत्यत आह – "अन्त्यावस्थायां सामर्थ्योत्पत्तौ" कीदृशस्य "प्रागसमर्थस्य" सतः "तस्य सामर्थ्यस्य" यस्य तदुपजायते "तत्स्वभावत्वे" मीमांसकादिभिरिष्य-

१. पृ. ८३. पं. १५। २. °स्यैवैककार्य° T.। ३. °स्य क्रिया°– T.। ४. °विरुन्न° – T.।

माणे। नहि तेषां समर्थस्य सामर्थ्यस्य च स्वभावभेदोऽभिमतः। कथञ्चित् तद्भेदेऽपि तत्स्वभावतयैव प्रतीयमानत्वादिति ते मन्यन्ते। "अपूर्वोत्पत्तिरेव सा" [T. 289b.] अपूर्वस्यैव वस्तुनः सा उत्पत्तिर्या तत्स्वभावस्य सामर्थ्यस्य। नह्येकस्वभावत्वे सामर्थ्यमेवापूर्वमुपजातं न समर्थः इति युक्तम्, तयोः स्वभावभेदप्रसङ्गात्, विरुद्धधर्माध्यासस्य भेदलक्षणत्वात्।

ननु प्रतीयमाने एव सामर्थ्यतद्वतोरुत्पत्त्यनुत्पत्ती एकस्वभावता च कथं निह्नोतुं शक्यते? इति चेत्। न। अप्रमाणेन प्रतीतेः, अन्यथा प्रतीत्यनुसारिणा भवता द्विचन्द्रादयोऽपि न निह्नोतव्याः। बाधकप्रमाणसम्भवात् तेऽपह्नूयन्त इति चेत्। इहापि वस्तुन एकस्वभावस्योत्पत्त्यनुत्पत्ती परस्परविरुद्धे बाधिके किं नेष्येते?। व्यवस्थितस्यैव वज्रोपलादेर्द्धर्म्मिणः [S. 120a.] तत्स्वभावं सामर्थ्यमुत्पन्नमिति च पूर्वापरकालयोरप्रतिभासमानविवेकः कथं प्रतीयात्?।

विज्ञानादिकार्यस्यानुत्पत्तियौगपद्योदयप्रसङ्गात् चक्षुरादिसान्निध्ये प्रागसत् तत् सामर्थ्यमुत्पन्नं क्रमवच्चेति निश्चय इति चेत्। यद्येवमेकाकारतया पूर्वापरकालयोरधिकृतं प्रत्यभिज्ञानमुपजायमानमपूर्वसामर्थ्यप्रतिभासविविक्तोपलादिग्राह्यप्यनुमानादर्थापत्तितो वा बाधामनुभवन्न प्रमाणमित्युपगतं स्यात्। तथा, उत्पत्त्यनुत्पत्त्योरेकस्वभावतायां विरोधात् समर्थस्यैवापूर्वस्योत्पत्तिः सदृशापरभावग्रहकृतश्चार्वाग्दर्शनानामेकत्वविभ्रमो लूनपुनर्ज्जातेष्विव केशनखादिष्विति किं नेष्यते?।

[§ ४०. नैयायिकाभिमतस्य भावास्वभावरूपसामर्थ्यस्य निरासः।]

अथ सामर्थ्यं सहकारिप्रत्ययसान्निध्यलक्षणमेवेत्यतत्स्वभावमिति नापूर्वोत्पत्तिप्रसङ्ग [T. 290a.] इति नैयायिकादयो मन्येरन् अत्राह – "अतत्स्वभावत्वे" सामर्थ्यस्येष्यमाणे "स" बीजादिः[4] पदार्थः "प्रागिव" तद्रूपापरित्यागात् "पश्चादप्यकारक एव"।

१. °तेषां सामर्थ्यस्यासाम° – T.। २. °रहित°। ३. °स्यैवाननुभूतपूर्व° T.। ४. °दिः समर्थः पदा° T.।

कुतः ?। सामर्थ्यमित्याख्या यस्य पदार्थान्तरस्य सहकारिप्रत्ययसान्निध्यलक्षणस्य स एवातिशय[शब्द]वाच्य इति नैयायिकैरभ्युपगमात्। तत एव तद्भावभावित्वेन कार्योत्पत्तेः। तेऽपि सहकारिणः प्रत्ययाः यद्यक्षणिकाः तेष्वप्येवं [S. 120b.] प्रसङ्गोऽनिवारित एवेति क्षणिकतैवैकार्थ[क्रिया]प्रतिनियमलक्षणं सहकारित्वमिच्छतोऽभ्युपेया।

पुनरप्यक्षणिकानामेकार्थक्रियाप्रतिनियमं निराकर्तुमुपचयहेतुमाह – "अपि च" इत्यादि। योऽसावक्षणिको भावः सकलेषु सहकारिषु स्वकार्यं करोतीतीष्यते, स तदैव तावत् कस्मात् करोति ?। येन हि कारणेन तत्कार्यक्रियास्वभावत्वेन तदा करोति तेने(नै)व स्थिरस्वभावत्वात् प्रागपि कुर्यात्, ततः कुतोऽस्यैकार्थक्रियाप्रतिनियमः ? इति भावः।

"का चान्या मृग्यते युक्तिः यथा तद् दृश्यते तथा" इति सर्वत्रेयमप्रतिहता युक्तिरिति मन्यमानः कुमारिलः प्राह – "कुर्वन् दृष्टः" इत्यादि। यतस्तदैव कार्यं कुर्वन्म्(न्) दृष्टो मया "तेन दर्शनबलेन करोतीति ब्रूमः", किमत्रान्ययोपपत्त्या[T. 290b.]ऽभिहितया ?, प्राक् तत् कुर्वन्न दृष्टः तेन न करोतीत्येकार्थ[क्रिया]प्रतिनियमः सिध्यति अक्षणिकानामपीति। भावो हि कार्यं करोति तज्जननस्वभावतया न दर्शनबलेनादृष्टस्यापि स्वकार्यकरणात् अतो नेदमुत्तरं सम्बध्यत इत्युपहसन्नाह – "अहो महासामर्थ्यम्" इत्यादि। महाप्रभावस्य भवतो महासामर्थ्यं दर्शनम्, यस्मादेतद्भावान् कार्यकरणस्वभावविकलानपि-यदि कार्यकरणस्वभावत्वाद् भावाः कार्यं कुर्युः तदैतदेवोत्तरं किं नोक्तम् ?, यतः [S. 121a.] कार्यकरणे दर्शनमुत्तरीकृतमिति कृत्वा – "स्वभावमात्रेण" आत्मसत्तामात्रेण "नानाप्रकारेषु व्यापारेषु नियुङ्क्ते" तत् कथं महासामर्थ्यं न स्यात् ?। न चात्र मे काचिदक्षमा किन्तु "यदि नाम किञ्चित्" कारणं "कथञ्चिद्"-अनादृतस्य वा व्याक्षिप्तस्य वा "अत्र भवत" इति पूजावचनम्

१. तदेवैकमर्थं कुर्वन् T.। २. किमत्र न्यायोपपत्त्या दृष्टया – T.। ३. [illegible] – T.।

"दर्शनस्य विषयतामतिक्रामेत्" तदा "हन्त" इति दैन्योद्भावनमेतत्, अप्रसवो धर्म्मोऽस्य तदिदम्– "अप्रसवधर्म्मकं" ततोऽपेतसन्तानं "स्यादि"ति इयमस्माकं चिन्ता चित्तं दुनोति।

पर आह – "न वै वयम्" इत्यादि। नैव वयं कार्यकरणस्वभावरहितानां "भावानामस्मद्दर्शनवशात् कार्यक्रियां ब्रूमः, किन्तु" स्वभावेनैव ते भावाः तत्कार्यकरणस्वभावाः, ततः स्वकार्यं कुर्व्वन्ति। "तान् पश्यन्तः केवलं जानीमहे" त एते कारकस्वभावा इति। दर्शनस्य हि यथावस्थितवस्तुविज्ञाने व्यापारः, नाविद्या(द्य)मानस्वभावक्रियायामिति।

सिद्धान्तवाद्याह – "सत्यम्, इदमप्यस्ति"। किं वयं न्यायानुरागितया न्याय्यं [T. 29ta.] वचनमुपलक्षयामः, उत भवानेव सर्व्वदा न्याय्यवचनरहितोऽपि कथञ्चिन्न्याय्यमुक्तवान् इति सञ्जातपरितोषः पृच्छति–किं तद्? इत्याह – "स्वभावस्तेषां" भावानां "कार्यक्रियाधर्म्मा" कार्यकरणधर्म्मा "तेन" कारणेन "समस्ताः" समग्राः प्रत्ययाः सहकारिणो येषां तेषामकृत्वा कार्यं "नोपेक्षापत्तिः" नौदासीन्यप्रतिपत्तिः इति सत्यम्–इदमप्यस्ति भवतो न्याय्यं वचनमिति, किन्तु इदमसि प्रष्टव्यः – [S. 121b.] "सो[ऽक्षेप]क्रियाधर्म्मो स्वभावः किं तेषां तदैवान्त्यावस्थायां" समग्रावस्थायां यदनन्तरं कार्यमुत्पद्यते तदैव "उत्पन्नः? आहोस्वित् प्रागपि" परस्परविरहावस्थायामपि "आसीत्"?।

तत्र तदैवोत्पन्ने तत्स्वभावत्वेऽपूर्व्वोत्पत्तिरेव, अतत्स्वभावत्वे सोऽकारक एवेति प्रागुक्तदोषभयात् पर आह – "आसीत्"। कुतः? प्रच्युतश्च उत्पन्नश्च प्रच्युतोत्पन्नः, तस्य प्रतिषेधः "अप्रच्युतोऽनुत्प(अप्रच्युतोत्प)न्नः" स्थिर एकः स्वभावो येषां भावानां तेषां कस्मिंश्चित् काले "कस्यचित्" स्वभावस्य तत्रोपलब्धस्य "अभावविरोधात्"। क्षणिकेष्वेव ह्येकदा दृष्टः स्वभावोऽन्यदा न भवेत् तदा तस्यान्यत्वात्। नाप्रच्युतानुत्पन्नपूर्व्वापररूपेषु स्थिरेषु भावेष्विति।

१. केवलं न जनयन्ति। त० – T.। २. कर्मधारयो ज्ञेयः।

अत्राह – "तत् किमिदानीम्" इत्यादि। स्यान्मतम् – नैवेदमनेन वाक्येन सदृशमस्मद्वाक्यमित्याह – "को वाऽस्य" इत्यादि। यद्येतदनेन तुल्यं [T. 291b.] न भवति तदा सकलसहकार्यवस्थायाः "प्रागपि" अयम् "अक्षेपक्रियास्वभावः" अविलम्बितकार्यकरणस्वभावः "कार्यं च न करोती"त्यस्य भाषितस्यार्थो वक्तव्य इति।

नैयायिकास्तु मन्यन्ते – भावानां सहकारिसन्निधानासन्निधानापेक्षया कारकाकारकस्वभावव्यवस्था, न स्वभावतः, तेनायमप्रच्युतोत्पन्नस्थिरैकस्वभावत्वेऽपि [S. 122a.] न प्रागपि स्वकार्यजननस्वभावः, किन्तु सन्निहितसकलसहकारिप्रत्यय एवेति। तन्मतमाशङ्कमान आह – "सहितः" इत्यादि।

एतन्निरस्यति – "अन्यस्तर्हि" इत्यादि। यदि नाम सहितस्य स्वकार्यजननस्वभावता, केवलस्य च तद्विपरीतरूपता, अन्यत्वं तु कस्माद्भवति? इत्यत आह – "स्वभावभेद" इत्यादि। "स्वभावभेद एव हि भावभेदस्य लक्षणम्"। स चेत् तत्कार्यजनकाजनकरूपतया भिद्यते, शालियवबीजादीनामिव कथमिव भावभेदो न स्यात्?। नहि स्वभावादन्यो भावः यतस्तद्भेदेऽपि न भिद्येत, निःस्वभावताप्रसङ्गात्।

ननु चोक्तं स्वतो जनकाजनकस्वभावताविरहात् प्रत्ययान्तरभावाद्यपेक्षत्वात् जनकाजनकरूपतायास्तद्भेदेऽपि कुतो भावभेदप्रसङ्गः?, तस्य[3]ापरापेक्षस्वभावभेदलक्षणत्वात् इत्यत आह – "नहि स साहित्येऽपि" इत्यादि। तदेतदुत्तरं भावत्कं सम्बध्येत यदि भावो योऽसौ परः सहकारित्वाभिमतः [T. 292a.] सन्निधीयते तद्रूपेण कर्त्ता स्यात् न स्वरूपेण। न चैतदस्ति, तथाभावे हि परमार्थतः स एव [5]परः कर्त्ता स्यात्। तत्र तु कर्तृत्वव्यपदेशः [S. 122b.] कल्पनानिर्म्मित एव भवेत्। न च कल्पनानुविधायिन्योऽर्थक्रियाः। नहि माणवको दहनोपचाराद्दाधीयते पाके। ततश्च नास्यानुपकारिणो भावमपेक्षेत कार्यमिति तद्रहितेभ्य एव

१. °कारिकार्यव° – T.। २. भावभेदस्य। ३. भावभेदस्य अपरापेक्ष[स्वभावत्वे] यः स्वभावभेदः तन्निमित्तत्वात्। ४. संधायते – T.। ५. परस्य कर्ता – T.।

सहकारिभ्यो भवेत्। यद्वा तेभ्योऽपि न भवेत्। तेषामपि पररूपेण कर्तृत्वे स्वयमकारकत्वात्। ततः सर्व्वेषामेवं स्वयमकारकत्वे पररूपेणाप्यकारकत्वात् सर्व्वथा कारकोच्छेद एवेति न किञ्चित् कुतश्चित् जायेत। तस्मात् स्वरूपेणैव भावः स्वकार्यस्य कर्त्ता न पररूपेणेति नास्योत्तरस्यावकाशः। ततोऽन्यः सहितोऽन्यश्च केवलः इत्येतदविचलमेवेति।

अथ येन स्वरूपेणायं जनकस्तदस्य सहितासहितावस्थयोः सर्व्वदाऽस्ति तदा स्वरूपं च स्वकार्यजनकमस्य स्थिरस्वभावस्य प्रागपि सहितावस्थायास्तदेव यत्सहितावस्थायामक्षेपक्रियास्वभावमिति तस्मात् न कथंचित् कार्यक्रियाविरामः। अथवा कदाचित् परो ब्रूयात् स्वहेतुभिरेवायं प्रत्ययान्तरापेक्षः [T. 292b.] स्वकार्यजननस्वभावो जनित इति केवलो न करोति। न चास्य सहितासहितावस्थयोः स्वभावभेदः, प्रत्ययान्तरापेक्षस्वकार्यजननस्वभावतायाः [S. 123a.] सर्व्वदा भावात् इत्यत आह — "नहि स साहित्येऽपि" इत्यादि। स्वरूपेणैवास्य कर्तृत्वात् तस्य च प्रागपि भावात् प्रत्ययान्तरापेक्षायाश्च ततो लभ्यस्यात्मातिशयस्याभावेनायोगात् उपकारलक्षणत्वादस्य, अन्यथाऽतिप्रसङ्गात्, केवलस्य कार्यकरणमनिवार्यमिति अकुर्व्वतः कथं सहितावस्थाया न भेदः स्यात्? इति भावः। प्रत्ययान्तरापेक्षस्वकार्यकरणस्वभाव इत्यपि पररूपेणाकारकस्य प्रत्ययान्तरसन्निधानोपलक्षितकाले कारकत्वं न प्रागित्ययमर्थः। ततश्च कदाचित् कार्यक्रियास्वभावो न सर्व्वदा इति ब्रुवता कथं सर्व्वदा कार्यजननस्वभावताऽस्योक्ता भवति?। नन्वेवं स्वभावभेद एवास्य तदतत्कालयोः समर्थितः स्यात्। तस्मान्नाक्षणिकानामेकार्थक्रियाप्रतिनियमलक्षणं सहकारित्वमिति स्थितम्।

परः समानदोषतामापादयन्नाह — "यस्यापि" इत्यादि सुबोधम्। यदि नाम क्षणिकस्तथापि किन्न भवति? इत्याह — "उक्तं यादृशस्य" सहकारिभिरपृथग्भाविनः "क्रिया"। 'ते[2] स-

१. तां विरक्षन्नाह — T.। २. पृ. '११४ पं. ६।

मर्था [S. 123b.] एव स्वभावतोऽन्त्याः प्रत्ययाः सह जायन्ते क्षणिका येषां [T. 293a.] प्राक्पश्चात्पृथग्भावो नास्ति' इत्यत्र। "स कथमेकक्षणभावी" एकस्मिन्नेवान्त्ये क्षणे भवनशीलः "अन्यथा भवेत्" अन्त्यक्षणात् प्राक् पश्चात् पृथग्वा भवेत्? "यश्च" अन्यथा "भवति स" एवान्त्यक्षणभावी सहकारिसन्तानोपकृतस्वभावोऽक्षेपक्रियाधर्म्मा "न भवतीति नायम्" अक्षणिकपक्षोदितः "प्रसङ्गः" क्षणिकपक्षे। कुतः?। "कारकाकारकयोः" इत्यादि। कारकोऽन्त्यः अकारकस्तदन्यः तयोर्यः "स्वभावः" स भिन्नोऽपि भेदाविवक्षयैकत्वेनोक्तः। तथा कारकस्य यो हेतुरुपान्त्यः, अकारकस्यापि यो हेतुस्तदन्यः स भिन्नोऽप्यभेदविवक्षयैकत्वेनोक्तः। तेन कारकाकारकयोर्यौ स्वभावौ तयोरेकत्र धर्म्मिणि विरोधात्। तथा तयोः स्वभावयोर्जनकौ यौ हेतू – एकः कारकस्वभावजनकोऽन्यश्चाकारकस्वभावजनकः–तयोरप्येकत्र धर्म्मिणि विरोधात्, अन्यत्वे सति। अकारकस्वभावजनकहेतोरुत्पन्नस्याकारकस्य स्वभावस्यान्यत्वात् "यश्च भवति स एव न भवतीति नायं प्रसङ्ग" इति।

[ § ४१. कार्यस्यैव सहकार्यपेक्षेति मतस्य निरासः। ]

अपरस्त्वन्यथा स्थिररूपेष्वेकार्थक्रियाप्रतिनियमं [S. 124a.] कल्पितवान् तमुपन्यस्यति "योऽपि मन्यते" इत्यादि। भावस्य ह्यक्षेपक्रियाधर्म्मैव सर्व्वदा स्वभावः, न तु [T. 293b.] यथा केचिद् ब्रू(ब्रु)वते – सहकारिसन्निधानापेक्षा वस्तूनां कारकस्वभावव्यवस्था, न स्वत इति। स्वतोऽकारकत्वे पररूपेण कारकत्वायोगात् कारकव्यवस्थोच्छेदप्रसङ्गात्। स एवंविधस्वभावो न कदाचित् साहित्यं स्वकार्यकरणेऽपेक्षते यतोऽन्यः सहितोऽन्यश्च केवलः कारकाकारकस्वभावभेदात् स्यात्। स तर्हि सर्व्वदा तत्स्वभावः कार्यं किन्न करोति? इति चेत्। कार्यस्य प्रत्ययान्तरापेक्षस्वभावतया तस्मिं(स्मिन्) सर्व्वदा जनकत्वेनावस्थितेऽपि केवलादभावात्, तेनात्र कार्यमेवापराध्यति, यत् तस्मिं(स्मिन्) केवले जनकतयाऽवस्थितेऽपि प्रत्ययान्तराण्यपेक्षत इति। ननु

१. °भावापेक्षक्रि° – T.। २. दोषः – T.। ३. ह्यपेक्षक्रि° T.। ४. धर्मः T.।

तदात्मनः कार्यस्य सहितेभ्य एव भावादेकार्थक्रियालक्षणं सहकारित्वमक्षणिकानामप्युपपद्यत इति। सिद्धान्तवादी पूर्व्वदोषानतिक्रमसस्य दर्शयन्नाह – "तस्यापि" एवंवादिनः "कथं स" नित्याभिमतो भावः "केवलः करोत्येव" 'अक्षेपक्रियाधर्म्मैव स तस्य स्वभावः' इति [S. 124b.] वचनात्। कार्यं च सहितेभ्य एव भवति, 'सामग्रीजन्यस्वभावत्वात् तस्य' इति वचनात्। तस्मात् केवलान्न भवतीति "तदवस्थो विरोधो" यः पूर्व्वमुक्तः। तथाहि – यद्यक्षेपक्रियाधर्म्मो तदाऽवश्यमनेन कार्यं कर्तव्यम् न चेदवश्यं करोति कथमक्षेपक्रियास्वभावः।

अक्षेपेण कार्यदर्शनादक्षेपक्रियास्वभावताऽवगम्यते [T. 294a.] नान्यथा इति पराभिप्रायाशङ्कयाऽऽह – "न केवलः" इत्यादि। नैवं मयोक्तं केवलः करोत्येवेति किन्त्वक्षेपक्रियास्वभाव इति। अत्राह – "कथमिदानीम्" इत्यादि। यदि करोत्येवेति नेष्यते कथमक्षेपक्रियास्वभाव इति कथ्यते?। अथ तथोच्यते तदा नन्वेतदेवानेन "वचसा परिदीपितम्" अभिहितं भवति। किं तत्?। करोत्येवेति। स एव ह्यक्षेपक्रियास्वभावो यः करोत्येव, यस्तु नावश्यं करोति स कथं तद्रूपः स्यात्?। यदप्युक्तं 'कार्यस्यैवायमपराधो यत् तस्मिं(स्मिन्) जनकतयाऽवस्थिते प्रत्ययान्तराण्यपेक्षते' इति तदप्ययुक्तम्, यतः "कार्यं" चायमक्षणिको भावः "केवलोऽपि समर्थः सन् परं" प्रत्ययान्तरम् "अपेक्षमाणं कथमुपेक्षेत ?" नैव। अनुपेक्षमाणेन किं कर्त्तव्यम्?। आह – "परं" प्रत्ययान्तरम् "अनादृत्य" तिरस्कृत्य एतत् [S. 125a.] कार्यं "प्रसह्य" हठात् "कुर्यात्"। क एवं सत्यस्य गुणो भवति? इति चेत्, आह – "एवं हि" परमनादृत्य हठात् स्वकार्यं "कुर्व्वताऽनेन" केवलेनापि समर्थेन सता यत् तदात्मनः केवलस्यापि "सामर्थ्यं" तद् "दर्शितं" प्रकाशितं भवति। अन्यथाऽन्यसहितस्यैव करणात् केवलस्य च कदाचिदप्यकरणात् न 'अयं केवलोऽपि समर्थः' इति परेषां बुद्धिः स्यात्। ततोऽयं तिरस्कृतप्रभाव इव कथं भ्राजेत?। तस्मादयुक्तमुच्यते कार्यं [T. 294b.] प्रत्ययान्तरापेक्षमिति।

---

१. प्रसव – T.। २. भजेत? T.।

कार्यापेक्षयाऽपि विरोधस्य तादवस्थ्यं दर्शयन्नाह – " कार्यं परम् " इत्यादि । कार्यस्य परापेक्षां ब्रुवन् केवलात् कारणादनुत्पत्तिमस्य कथयसि, ' स केवलोऽपि समर्थः ' इतीदं वदंस्ततः केवलादुत्पत्तिं कार्यस्य ब्रूषे । एते चैकस्यैव कार्यस्य । तत एवैकस्मात् कारणादुत्पत्त्यनुत्पत्ती परस्परविरुद्धे " कथमेकत्र " कार्याख्ये धर्म्मिणि " स्याताम् ? " विरुद्धधर्म्माध्यासस्य भेदलक्षणत्वात् । एकत्र ते ब्रुवाणो 'माता च वन्ध्या च' इत्यनेन सदृशं ब्रूष इति न [S. 125b.] पूर्व्वोक्तदोषान्मुच्यसे, यत एवमपि ब्रुवाणो विरुद्धमेव ब्रूते न च लक्षयति " तत् " तस्मात् "अयम्" अक्षणिकवादी क्षणिकपक्षस्यानवद्यतया तद्वादिनां निर्द्दोषतासम्पत्सु अमर्षलक्षणेर्ष्या एव शल्यं अन्तर्दुःखहेतुत्वात् तेन वितुद्यमानानि व्यथ्यमानानि मर्म्माणि यस्य सो"ऽयमीर्ष्याशल्यवितुद्यमानमर्मा " वराकोऽस्वस्थचित्ततया विरुद्धाभिधानमप्यलक्षयन् "विक्लवम्" आकुलं पूर्व्वापरासम्बद्धं " विक्रोशति " विरौदिति "इति" कृत्वा अस्वस्थचित्तवचनेष्वनादरात् तद्दोषोद्भावनस्य सुतरां दुःखोत्पादनेन क्षतक्षारनिषेकतुल्यत्वात् "उपेक्षामेव" विपश्चितानां(°श्चितां) कृपाधनानाम् "अर्हतीति" ।

तदेवमक्षणिकेषु न कथञ्चिदेकार्थक्रियाप्रतिनियमलक्षणं सहकारित्वं [T. 295a.] सम्भवतीति प्रतिपाद्योपसंहरन्नाह – " तस्मादिदम् " इत्यादि । येषां हि स्थिररूपतया पृथगपि भावः सम्भवति तेषामक्षणिकानां "पृथक्" केवलानां "कार्यकरणसम्भवेन" हेतुना सहैव कुर्वन्तीति सहकारित्वानियमायोगादिदमेकार्थक्रियालक्षणं सहकारित्वं [S. 126a.] क्षणिकानामेव । तेषां स्वहेतुपरिणामोपनिधिधर्म्माणां परस्परोपादानसहकारिप्रत्ययैकसामग्रीजन्यानां पृथगसम्भवात् ।

[ § ४२. क्षणिकपक्षे एव एकार्थक्रियारूपसहकारित्वस्य व्यवस्था । ]

ननु अतिशयोत्पादनलक्षणमपि सहकारित्वं भावेषु दृश्यते तत् कथमुक्तं प्राक् ' सर्व्वत्र नैवातिशयोत्पादनं सहक्रिया, किं तर्हि बहूनामेकार्थकरणमेव' इत्यत आह–" यत्र तु सन्तानोपकारेण " इ-

१. °भवद्यं क° T. । २. पृ० ११३ पं० २७ ।

त्यादि। एकार्थक्रियालक्षणमेव सहकारित्वं सर्व्वत्र न क्वचिदतिशयोत्पादनं सम्भवति। यत्र तु सन्तानोपकारेण पूर्व्वपूर्व्वप्रत्ययेभ्यो विशिष्टविशिष्टतरोत्तरोत्तरक्षणजननेन भावाः सहकारिणो विवक्षितकार्यस्य हेतुतां प्रतिपद्यन्ते – यथा तण्डुलादिभ्य ओदनादिजन्मनि दहनोदकादयः, बीजादिभ्यश्चाङ्कुरादिजन्मनि पृथिव्यादयः – तत्र विशेषोत्पादनं प्रत्ययानां सहक्रियोच्यते लोके। सन्तानाश्रयेण पूर्व्वक्षणेभ्यो द्वितीयादिविशिष्टक्षणलक्षणं सन्तानाख्यं कार्यमाश्रृ(श्रि)त्य [T. 295b.] पूर्व्वोत्तरक्षणयोरेकत्वाध्यवसायेन तस्यैवायमतिशय इति न द्रव्याश्रयेण। औपचारिकमेव न तु पारमार्थिकम्। पूर्व्वपूर्व्वक्षणेभ्यस्तु [S. 126b.] स्वहेतुपरिणामोपनिधिधर्म्मेभ्य उत्तरोत्तरविशेषोत्पत्तौ पूर्व्वकारणकलापस्यैकार्थक्रियालक्षणमेव तत्र परमार्थतः सहकारित्वमिति न काचित् क्षतिरिति। कस्माद् द्रव्याश्रयेणातिशयोत्पादनं नेष्यते?। क्षणिके द्रव्ये वस्तुनि विशेषस्यानुत्पत्तेः तस्यानन्तरक्षणभावरूपत्वाद्।

यदि तर्हि क्षणिके तण्डुलादिद्रव्ये विशेषो नोत्पद्यते, अनन्तरमप्यसौ मा भूत्। ततो यथा परस्परतो विशेषमनासादयन्तोऽपि क्षणिकाः सहिता एव कुर्व्वन्ति न केवलाः, एवमक्षणिका अपि। तेनैषामेकार्थक्रियालक्षणमेव सहकारित्वं भविष्यति। न च शक्यं वक्तुम्–यो यस्य प्रागकारकः स्वभावः स पश्चादपीति। तथा हि – प्रभास्वरादपवरकं प्रविष्टस्येन्द्रियमर्थप्रतिपत्तिमकुर्व्वदपि पश्चात् कुर्व्वाणमुपलभ्यते। तदुक्तम् –

" न हि प्रविष्टमात्राणामुष्णाद् गर्भगृहादिषु।
अर्था न प्रतिभान्तीति गृह्यन्ते नेन्द्रियैः पुनः॥" [श्लोक० प्रत्यक्ष० १२६] इति।

अत आह – "नहि तण्डुलादीनाम्" इत्यादि। विशेषानुत्पत्तौ सन्निधानस्याप्यसन्निधानतुल्यत्वात् [S. 127a.] दहनादिभावेऽपि तण्डुलादिभ्यो नौदनजन्म स्यात्। [T. 296a.] तथा प्रभास्वरादपवरकं प्रविष्टस्य यदीन्द्रियं स्वोपकारिभ्योऽतिशयं क्रमेण न प्रतिपद्यते तदा प्रागिव पश्चादप्यर्थप्रतिपत्तिं नैव जनयेत्। त-

१. पूर्वपूर्वक्ष° – T.

स्माद्यदसम्भवि कार्यं यत्र दृश्यते तस्य ततोऽन्यत्वमेव, शालिबीजादिव कोद्रवबीजस्येति निरतिशयादन्यत्वमेव सातिशयतया तत्कार्यकारिण इति । एवं तावद् यत्र सहकारिभ्यः क्रमेण कार्यं भवति तत्रातिशयोत्पादनलक्षणमौपचारिकं सहकारित्वमेकार्थक्रियालक्षणमेव तु मुख्यं तत्रापीति प्रतिपादितम् ।

यत्र त्वक्षेपेणैवार्थसन्निधिमात्रेण सहकारिणः कार्यं कुर्वन्ति किं तत्रापि सन्तानाश्रयमतिशयोत्पादनमस्ति ? इत्यत आह – "अक्षेपकारिषु" इत्यादि । 'ये ह्यव्यवधानादिदेशा इन्द्रियादयः स्वहेतुभ्यो जातास्तेष्वविलम्बितकारिषु न विशेषोत्पत्तिः परस्परतः सम्भवति, क्षणिकत्वात्' इत्युक्तं [S. 127b.] प्राक् ।

यदि न विशेषोत्पत्तिः तदा कथं निर्विशेषा ज्ञानस्य कारणीभवन्ति ? इत्यत आह – "तत्र यथास्वं" यस्य ये आत्मीयाः प्रत्ययाः तैः, "परस्परोपसर्प्पणव्यवधानादिविरहादेराश्रयभूतैर्ये जाताः" योग्यश्चासावत्यासन्नत्वातिविप्रकर्षविरहाद् देशश्च स आदिर्यस्याव्यवहितदेशादेः तत्रावस्थानमवस्था येषां "ते सह स्वभावनिष्पत्त्या" [T. 296b.] स्वभावनिष्पत्तिर्विद्यत[1] इत्येव कृत्वा "ज्ञानहेतुतां प्रतिपद्यन्ते" तत्र किं परस्परतो विशेषोत्पत्त्या प्रार्थितया ? । यदि हि स्वहेतुभ्य एव परस्परोपसर्प्पणाद्याश्रयेभ्यः स्वकार्यजननक्षमा योग्यदेशाद्यवस्थानलक्षणविशेषयोगिनो नोत्पद्येरन्, तदैषां परस्परतो विशेषोत्पत्तिः प्रार्थ्येत, न तु स्वहेतुभ्य एव तथाविधानामुत्पत्तौ । यत एवम् "इति" तस्मात् "तत्र" तेषु अक्षेपकारिष्विन्द्रियादिषु "एकार्थक्रियैव" मुख्यं "सहकारित्वं" न सन्तानाश्रयेण [S. 128a.] व्यवस्थाप्यमानमतिशयोत्पादनलक्षणं गौणमिति ।

अथ विशेषोत्पादनलक्षणं सहकारित्वं कथं न व्यवस्थाप्यते ? । तदपि हि लोके प्रतीतत्वाद् व्यवस्थापनीयमेवेत्यत आह – "यत्र तु" कार्ये नाव्यवधानादिदेशोपनिपातमात्रेणैवेन्द्रियादय इव सहकारिणः प्रत्ययतां प्रतिपद्यन्ते, किन्तु विव-

---

१. °त्तिर्भिद्यते – T. ।

क्षितकार्योत्पादानुगुणं प्रतिक्षणं प्रकृष्यमाणं विशेषमुत्पादयन्तः "तत्र" कालक्षेपभाविनि कार्ये कर्त्तव्ये "हेतुसन्तानो"ऽपरापरक्षणभावलक्षण आत्मातिशयासादनार्थं सहकारीणि प्रत्ययान्तराण्यपेक्षते, न तु तत्समानकालः कारणक्षण इति। "तत"स्तेभ्यः कारणान्तरेभ्यः "स्वभावान्तरस्य" कार्योत्पादानुगुणविशेषपरम्परालक्षणस्य "प्रतिलम्भः" सन्तानस्यैकत्वेनाधिमुक्तस्योच्यते लोके। परमार्थतस्तु तत्रापि पूर्व्वः पूर्व्वः प्रत्ययकलाप उत्तरोत्तरकार्योत्पादानुगुणे [T. 297a.] विशिष्टक्षणे प्रतिनियत इत्येकार्थक्रियालक्षणमेव सहकारित्वमनुभवति।

कथं पुनः स्वभावान्तरप्रतिलम्भस्तेषाम्?, यतः क्रमेण कार्यं निर्व्वर्त्तयन्तीत्यत आह – "तत्र स्वरसतः" इत्यादि। "तत्र" तस्मिन् हेतुसन्ताने ये हेतव उपादानकारणाख्याः ये च प्रत्ययाः सहकारिसंज्ञितास्तेषां ये पूर्व्वे [S. 128b.] प्रथम उपनिपातक्षणाः तेषां विनाशहेत्वनपेक्षितया स्वरसतो निवृत्तौ सत्यां तेभ्य एव स्वरसतो निवर्त्तमानेभ्यः प्रथमक्षणेभ्यः कार्योत्पादानुगुणेन विशेषेण विशिष्टस्य क्षणस्योत्पत्तिः तेभ्योऽनुगुणतरविशेषवतां तृतीयक्षणानां तेभ्योनुगुणतमविशेषवतां चतुर्थक्षणानाम्; एवं यावदत्यन्तातिशयवानन्त्यः कारणकलापो जातः ततः कार्यस्योत्पत्तिः इत्येवं सहकारिभ्यः स्वभावान्तरप्रतिलम्भः, क्षेपवती च कार्योत्पत्तिरिति।

अत्र परश्चोदयन्नाह – "सहकारिणः" सह करणशीलात् कारणात्, जातावेकवचनम्, यत् समुत्पन्नविशेषमनन्तरोक्तेन प्रकारेण कारणं अन्त्यसामग्रीक्षणलक्षणं ततोऽङ्कुरादिकार्योत्पत्तौ इष्यमाणायां तस्यैव विशेषस्याद्यस्य कार्योत्पादनानुगुणस्य यः क्रमेणाभिवर्द्धमानः कार्यस्य जनक इष्यते तस्यैव उत्पत्तिर्न्न स्यात् प्रथमक्षणोपनिपातिनां [T. 297b.] परस्परतो विशेषानासादनात् क्षणानामविवेकात् अनभ्युपगमाच्च।

परस्परतोऽनवाप्तविशेषा एव कार्योत्पादनानुगुणं विशेषमारप्स्यन्त इति चेदाह – "अविशिष्टाद"विशिष्टेभ्यः परस्परतो "विशे-

परस्य" कार्योत्पादानुगुणस्योत्पत्ताविष्यमाणायां "कार्यस्य" अङ्कुरादेः स्यात्, विशेषाभावादित्यभिप्रायः। ततश्च परस्परतो विशेषोत्पादानपेक्षिण एव सहकारिणः [S. 129a.] कार्यं कुर्व्वीरन्।

किमेवंसति सिद्धं भवति? इति चेत्, आह – "तेन" येन क्षणिका अपि परस्परतो विशेषोत्पादाऽनपेक्षा एव स्वकार्यं कुर्व्वन्ति एककार्यप्रतिनियमलक्षणं च सहकारित्वं प्रतिपद्यन्ते तेन कारणेन "अक्षणिकानामपि कारणता स्यात्, अपेक्षणीयेभ्यः स्वभावातिशयोत्पत्तिश्च न स्यात्" इत्यक्षणिकवादी क्षणिकपक्षेण स्वपक्षस्य साम्यमापादयति। यदाह –

"कः शोभेत वदन्नेवं यदि न स्यादह्रीकता।
अज्ञता वा यतः सर्व्वं क्षणिकेष्वपि तत्समम्॥
विशेषहेतवस्तेषां प्रत्यया न कथञ्चन।
नित्यानामिव युज्यन्ते क्षणानामविवेकतः॥"

इति। तत्रैतत् स्यात् प्रथमक्षणेऽपि क्षितिबीजादयः परस्परतः समुत्पन्नविशेषा एव सन्निधीयन्ते –

"येन यस्याभिसम्बन्धो दूरस्थस्यापि तेन सः।"

इति न्यायाद्धि दूरदेशवर्त्तिनामपि हेतुफलभावात् इत्याशङ्क्याह – "अथ सहकारिणा" इत्यादि। सहकारिणः [T. 298a.] परस्परसम्पर्क्कविकला अपि वस्तुधर्म्मतयैवान्योन्यमुपकुर्व्वन्तीति सहकारिणा कार्योत्पादानुगुणविशेषजननाय कृतविशेष एव सम्पर्क्ककाल उपतिष्ठेत, एवं [S. 129b.] सत्यनवस्था स्यात्। तथा हि – तद्विशेषोत्पत्तावप्यपरः सहकारिकृतो विशेषोऽभ्युपगन्तव्यः, तथा तदुत्पत्तावप्यन्य इति।

अथ नैवं सहकारिणः परस्परस्य कार्योत्पादानुगुणविशेषनिमित्तमपरं विशेषं कुर्व्वन्ति, स्वभावत एव तत्र तेषां योग्यत्वात् इत्यत आह – "न च" इत्यादि। नैव हि सहकारिणः क्षितिबीजादयः परस्परस्य कार्योत्पादानुगुणो यो विशेषः तदुत्पादने "नित्यं" सर्व्वकालं योग्यावस्था "येन" योग्यावस्थत्वेन "नित्यानुषक्ताः" नित्यानुबद्धः "एषां" क्षितिबीजादीनां कार्योत्पा-

१. क्षणिकापेक्षणात् स्व°– T.।

दानुगुणविशेषजनको विशेषः स्यात् यतः 'अविशिष्टाद् विशेषोत्पत्तौ कार्यस्यापि स्यात्' इत्येतदपि परिह्रियेत।

कुत एतद्? इत्याह – "तदुपाय" इत्यादि। तेषां क्षितिवीजादीनामुपाये – योग्यदेशोपनिपाते कार्यव्यक्तिदर्शनात्[1] अपाये च–परस्परसम्पर्कविरामे कार्यानुत्पत्तिदर्शनात्। यदि हि कार्योत्पादानुगुणविशेषोत्पादने सर्व्वदा योग्यावस्थाः स्युः तदा सोऽपि विशेषः सर्व्वदा [T. 298b.] स्यात्। ततस्तत्परम्पराभावि कार्यमिति तदुपायापाययोः कार्यस्योत्पत्त्यनुत्पत्ती न स्याताम्। [S. 130a.] तस्मान्न सहकारिणः कार्योत्पादानुगुणविशेषोत्पादने योग्यावस्थाः सर्व्वदेति। यतः सहकारिणा पृथगवस्थितेनानवस्थाभयात् कृतविशेषो नोपतिष्ठते परस्परतश्च प्रथमसम्पर्कक्षणभाविनां नोपेयते[2] युज्यते वा। तेन कारणेनाद्यो विशेषः कार्योत्पादानुगुणः सहकारिभ्यः समानकालतया निरुपकारस्य क्षितिवीजादेः "नोत्पद्यते"[3], उत्पद्यते चासौ इतीष्यते। तेन समग्रावस्थावत् सर्व्वेषां व्यग्रावस्थाभाविनामपि क्षणानामविशेषात् तज्जननस्वभावत्वेऽप्यजननात् समग्रावस्थायामेव जननाद्। यथा क्षणिकानामेकार्थक्रियाप्रतिनियमलक्षणं सहकारित्वं तथा स्थिरस्वभावानामपि भविष्यतीति क्षीणसर्व्वोपायोऽक्षणिकवादी साम्यमेवातुर इव वहुमन्यमानस्तत्रैव भरं[4] कृतवान्।

सिद्धान्तवादी भङ्ग्या परमुपहसन्नाह – "नास्माकं पुनः पुनः" इत्यादि। यदि पुनः पुनर्व्वचनेऽपि लोकस्य न्यायप्रतीतिर्भवति शतशोऽपि व्रूमः। किमङ्ग पुनर्द्वौ त्रीन् वा वारान्?। नहि परार्थप्रवृत्तानामस्माकं पुनः पुनरभिधाने कश्चिदुद्वेगो भवति। एवंवादिनश्च शास्त्रकृतः क्वचित् प्रकारान्तरेण[5] तमेवार्थं [T. 299a.] स्फुटीकुर्व्वतो ये पुनरुक्ततापरिहाराय यतन्ते स तेषामस्थानपरिश्रम एव। यदि नोद्वेगो हन्त तर्ह्युच्यताम् इत्यत आह – "न विशेषोत्पादनादेव" इत्यादि। नैव विशेषोत्पादनात् सहका-

१. कार्योत्पाददर्शनात् – T.। २. नोपायता – T.। ३. नोपपद्यते – T.। ४. परं कृत°–T.। ५. पर्यायान्तरेण – T.।

रिणां सहकारित्वं परमार्थतः क्वचित् [S. 130b.] सम्भवति, यतः प्रथमक्षणभाविनां बीजादीनां तदभावात् कार्योत्पादानुगुणे विशेषे कर्त्तव्ये सहकारिताविरहः स्यात्। किन्त्वेकार्थक्रियैव सहकारिणां पारमार्थिकं सहकारित्वं पूर्व्वोक्ताभिर्युक्तिभिः सम्भाव्यते। सा च प्रथमसम्पर्क्कभाजामस्त्येवेति किं न सहकारिणः स्युः ?।

पर आह – साऽप्येकार्थक्रिया न भवेत् परस्परतो विशेषरहितानाम्। यदि पुनः परस्परतो विशेषरहितानामपि तदेकार्थक्रियाऽङ्गीक्रियते तदा प्रत्येकं तदवस्थायां तदुत्पादनसामर्थ्याभ्युपगमात् तदवस्थायामिव पृथगपि सा भवेत्। तथाहि – ते तदवस्थायामपि परस्परतो निर्व्विशेषा एव कुर्व्वन्ति। तेषां पृथगपि तद्विशेषक्रिया कथमिव न प्रसज्येत ?। नह्येषां संहतासंहतावस्थयोः कश्चिद्विशेषोऽस्तीति। भवतु, को दोषः ? इति चेत्; "तथा च" कार्योत्पादानुगुणविशेषस्य पृथक्करणप्रसङ्गे सति "तस्माद् विशेषाद् भवनशीलम्" अङ्कुरादि "कार्यमपि" विशेषवत् केवलात् सहकारिणः स्यात् इति चेन्मन्यसे, अत्रापि सर्व्वमुक्तमुत्तरम्। तथा हि – संहतासंहतावस्थयोर्न्निर्व्विशेषा एव क्षणक्षयिणो भावा इति यदुच्यते तत् किं तावद्विशेषमात्रापेक्षया ? आहोस्वित् [T. 299b.] कार्योत्पादानुगुणविशेषजनकविशेषापेक्षया ?। यदि प्राच्यो विकल्पः तदयुक्तम्। न हि काचिद् विशेषमात्ररहिताऽवस्था [S. 131a.] सम्भवति, सर्व्वदाऽपरापरप्रत्यययोगनिबन्धनस्यापरापरविशेषस्य भावात्। नहि कदाचित् किंचिदेकमेव, आधारच्छायातपवातशीतादेर्यथासम्भवं भावात्। न च तद्भावेऽपि तत् तादृशमेव, कारणभेदात्। एतावत्तु स्यात् – कश्चिद् विशेषः क्वचित् कार्येऽनुगुणो न सर्व्वः सर्वत्रेति। एतच्च प्रागेवोक्तमिति दर्शयन्नाह – "प्रतिक्षणमपरापरैः प्रत्ययैः"[1] इति। 'अपरापरप्रत्यययोगेन प्रतिक्षणं भिन्नशक्तयः संस्काराः सन्तन्वन्तो यद्यपि कुतश्चित् साम्यात् सरूपाः प्रतीयन्ते, तथापि भिन्न एवैषां स्वभावः, तेन किञ्चिदेव कस्यचित् कारणम्' इति[2]। 'क्षणिकेषु

१. पृ० ११६ पं० १३ । २. पृ० ८८ पं० १९ ।

भावेष्वपरापरोत्पत्तेरैक्याभावात्' इति चात्र संक्षिप्ततरमुक्तम्। एवं च 'नास्माकं पुनः पुनर्व्वचन' इत्यत्र द्विः पुनर्ग्रहणं युज्यते। यथा येन प्रकारेण भावसन्ताने विशेषस्योत्पत्तिः [त]दप्युक्तम्-'तत्र[1] स्वरसतः पूर्व्वक्षणनिरोधे तेभ्य एव विशिष्टक्षणोत्पादाद् विशेषोत्पत्तिः' इति। अथ कार्योत्पादानुगुणविशेषजनकविशेषापेक्षया प्राग्वत् प्रथमसम्पर्कभाजः परस्परतो निर्व्विशेषा इत्यभिमतं तदप्ययुक्तम्। यतः कार्योत्पादानुगुणस्य विशेषस्य जनकाः [S. 131b.] क्षितिबीजादयः कीदृशाः ये [T. 300a.] व्यवधानादिरहितत्वेनोपनिपातिनः। तद्भाव एव तस्य भावात् एतावन्मात्रनिबन्धनत्वाच्च जनकं व्य(०कव्य)वे[2]स्थायाः। ते च तथाविधाः सर्वदा न भवन्तीति कथं पृथगपि कार्योत्पादानुगुणविशेषारम्भ एषां स्यात्?, यतः केवलानामपि कार्यक्रिया प्रसज्येत तद् दर्शयति – योग्यो देशो येषां ते योग्यदेशाः, तद्भावो योग्यदेशता, सा आदिर्येषामव्यवहितदेशत्वादीनामवस्थाभेदानां ते तथोक्ताः, ते च ते अवस्थाभेदाश्च तथोक्ताः। "योग्यदेशता अ(०ताद्य)व्यवहितदेशतादयो" ये "अवस्थाविशेषाः" क्षितिबीजादीनामुपजायन्ते ते कार्योत्पादानुगुणविशेषलक्षणकार्यकरणशीलाः, नैवंविधाः सर्व्वदा बीजादय इति कथमेषां पृथगपि तथाविधविशेषारम्भः स्यात्?। एतदपि प्रागेवोक्तम्[3] 'तत्र योऽव्यवधानादिदेशो रूपेन्द्रियादिकलापः स विज्ञानजनने समर्थो हेतुः' इति वचनात्। तस्य चोदाहरणमात्रत्वात्। इहापि तत्र योऽव्यवधानादिदेशः क्षितिबीजादिकलापः स कार्योत्पादानुगुणविशेषजनने समर्थो हेतुरिति प्रतीयत एव। स च [S. 132a.] तथाविधो विशेषः सर्व्वदा न भवति, तज्जनकस्य हेतोरभावात्। परस्परोपसर्प्पणाद्याश्रयस्यैव [T. 300b.] प्रत्ययविशेषस्य तद्धेतुत्वात्। एतदपि पूर्व्वमेवोक्तमित्याह – तेषां च कार्योत्पादानुगुणविशेष[जनने] विशेषवतां यत उत्पत्तिस्तदप्युक्तमसकृदेव 'यस्तेषां परस्परोपसर्प्पणाद्याश्रयः प्रत्ययविशेषः स तद्धेतुजनने समर्थो हेतुः' इति[4]। तथा 'यथास्वं[5] प्रत्ययैः परस्परोपसर्प्पणाद्याश्रयैर्ये यो-

१. पृ० १२० पं० ११। २. जनकव्यव° T.। ३. पृ० ११७ पं० १५। ४. पृ० ११७ पं० २४। ५. पृ. १२९ पं० १२।

ग्यदेशाद्यवस्था जातास्ते सह स्वभावनिष्पत्त्या ज्ञानहेतुतां प्रतिपद्यन्त ' इत्यनेन, इहापि गम्यमानत्वात् । ततो यद्यप्येषां परस्परतोऽनुप[1]पत्तेर्विशेषो न भवति, स्वहेतुकृतस्तु केन वार्यते ? । न च स्वहेतुत एव सञ्जातविशेषाणां भावे परस्परतस्तदाशंसा, यतः परस्परतो वि[2]शेषायोगः प्रतिपाद्यमानः शोभेत । तेषां च कार्योत्पादानुगुणविशेषजनकानां प्रत्ययानां प्रत्येकं सामर्थ्येऽपि खण्डशः कार्योत्पादायोगात् सकलस्यैव प्रत्येकं करणात् । यथा केवलानामक्रिया कर्तृविशेषस्याव्यवधानादिदेशक्षितिबीजादिकलापस्य पृथगेकैकस्य समर्थस्य भावस्याभावादित्येतदप्यसकृदेवोक्तम् ' तेषां च न पूर्व्वं न पश्चात् न पृथग्भाव इति समर्थानपि [S. 132b.] पूर्व्वापरपृथग्भावभाविनो दोषा नोपलीयन्ते ' इत्यादिवचनात् । ततस्तथाविधविशेषस्य स्वोपादानमात्रनिबन्धनस्यानभ्युपगमेन [T. 301a.] केवलानामप्रसङ्गात् कुतः कार्योत्पादानुगुणविशेषारम्भद्वारकं कार्यमपि स्यादिति ? ।

कुतः पुनरयं कामचारो लभ्यते यदङ्कुरादिकार्यं सहकारिणः परस्परस्य कार्योत्पादानुगुणां विशेषपरम्परां जनयन्तः कुर्व्वन्ति, कार्योत्पादानुगुणं तु विशेषं व्यवधानादिरहित[3]देशोपनिपातमात्रेणेत्यत आह – " कार्यद्वैविध्यं च यस्मात् तस्मादेवं विभज्यते " । कथं द्वैविध्यं कार्याणामिति ? अत आह – सहकारिभिरव्यवधानादिदेशैरनन्तरं सञ्जनिताः परस्परस्य प्रागवस्थापेक्षविशिष्टक्षणभावलक्षणा ये विशेषास्तत्परम्परया उत्तरोत्तरविशिष्टविशिष्टतरादिक्षणभावरूपया उत्पत्तिर्द्धर्म्मो यस्य तदात्मकमेकं कार्यम् । अन्यच्च तद्विपरीतं यत् सहकारिसन्निधिमात्रेण भवति न परस्परकृतां विशेषपरम्परामपेक्षते । अत्रोदाहरणम् – " अङ्कुरादिवत् ", आदिग्र[4]हणादोदनादिवत् । तथाऽक्षेपेण करणशीलं यदिन्द्रियं [S. 133a.] तद्विज्ञानादिवच्च । प्रभास्वरादपवरकप्रविष्टेन्द्रियनिरासार्थं चैतद् विशेषणम् । कुत एतद् ? इति चेत् ; का-

१. गुपत्ते° – T. । २. विशेषयोग – T. । ३. °देशक्रमान्ते° T. । ४. °दि गृह्णे । ग्रहे° T. ।

र्यकारणयोः स्वभावभेदात्। किंचिद्धि कार्यं कारणसामग्रीसन्निधिमात्रजन्यस्वभावम्, तदन्यत्तु तत्परिणामापेक्षमिति। कारणमपि किञ्चित् [T. 301b.] स्वसन्निधिमात्रेण कार्यजननस्वभावं स्वकारणेभ्य एव भवति, येन परस्परकृतां विशेषपरम्परां स्वकार्यकरणे नापेक्षते। अन्यत्तु तद्विपरीतस्वभावम्। यथा किञ्चिदेव शाल्यङ्कुरजननस्वभावम्, तद्विपरीतं चापरम्। शाल्यङ्कुरश्च तद्बीजजन्यस्वभावो न यवादिबीजजन्यस्वभाव इति न भावानां स्वहेतुबलायाताः प्रमाणाधिगताः स्वभावाः पर्यनुयोज्याः। ये तु यज्जननस्वभावाः प्रमाणतोऽधिगताः ते किं सर्व्वदैव तत्स्वभावाः? आहोस्वित् तदैव? इत्यत्र चिन्ता प्रवर्त्तते। तत्र सर्व्वदा तत्स्वभावत्वे पश्चादिव प्रागपि तत्कार्यक्रियाप्रसङ्गेन पररूपेणाकारकस्य [S. 133b.] भिन्नस्वभावता कारकाकारकावस्थयोः शालियवबीजादीनामिव तत्त्वचिन्तकैरुच्यते। सदृशापरभावनिबन्धनं चैकतया प्रत्यभिज्ञानं लूनपुनर्जातेष्विव केशनखादिषु[1] इत्यत्र विरोधाभावादिति। यदा च तत्कार्यकारणस्वभावभेदात् कार्यद्वैविध्यम्, "तत्रे"तस्मिं(स्मिन्) सति "सहकारिभ्यः" क्षितिबीजादिभ्यस्तेषां परस्परसन्तानोपकारमपेक्षते यत् कारणमन्त्यावस्थाप्राप्तं तस्य यत् कार्यमङ्कुरादिकं तज्जन्मनिमित्तं "सहकारिणां" प्रथमक्षणानन्तरं विशिष्टद्वितीयक्षणभावरूपो यो [T. 302a.] विशेषः कार्योत्पादानुगुणः "आद्यो" भवति "स तेषां" सहकारिणां प्रथमसम्पर्कभाजां परस्परकृतो यो विशेषस्तज्जन्मा न भवति परस्परोपसर्प्पणाद्याश्रयादेव प्रत्ययविशेषात् तस्य भावात्। ततः कार्योत्पादानुगुणादाद्याद् विशेषात् प्रथमक्षणोपनिपातिभिः सहकारिभिरन्यतः [S. 134a.] समासादितविशेषैः जनितात् तत्प्रभृति "ये विशेषाः" प्रकृष्यमाणतदुत्तरोत्तरक्षणभावलक्षणा जायन्ते "ते तज्जन्मानः" सहकारिकृतविशेषजन्मानः। कुतः? "तत्प्रकृतित्वात्" तस्याद्यस्य विशेषस्य परस्परोपसर्प्पणाद्याश्रयात् प्रत्ययविशेषादासादिततदनुकूलविशेषैः सहकारिभिः परस्परोपकारनिरपेक्षैर्जन्यस्वभावत्वात्, तदुत्तरेषां च विशेषाणां सहका-

१. °पु अत्रापि वि° T.।

रिकृतकार्योत्पादानुगुणविशेषजन्यस्वभावत्वात्। यत एवम् "इति" तस्मात्[1] "नानवस्था" प्रागुक्ता। अथ सहकारिणा क्षित्यादिना कुशूलाद्यवस्थोऽपि बीजादिः तेनापि क्षित्यादिः कृतविशेष एवोपतिष्ठेतानवस्थैवं स्यात् इति। तस्य प्रकारस्यानभ्युपगमात् पुरुषप्रयत्नादेरेव [T. 302b.] क्षेत्रप्रकिरणहेतोरव्यवहितस्निग्धपृथिवीबीजसम्पर्कलक्षणस्य कार्योत्पादानुगुणविशेषजनकस्य विशेषेऽस्योपगमात्। तत्र यदुक्तं परेण 'यथा प्रथमसम्पर्कभाजः क्षितिबीजादयः परस्परस्य विशेषमनादधानाः कार्योत्पादानुगुणं विशेषं जनयन्ति, तथा [S. 134b.] स्थिररूपा अपि भावाः तदेककार्यप्रतिनियताः परस्परकृतविशेषनिरपेक्षा एव भविष्यन्ति' इति, तदभ्युपगच्छन्नाह "तथा यद्यक्षणिकोऽपि" इत्यादि। क्षणिकवदक्षणिकोऽपि यदि कार्यं करोति करोतु नाम। न कश्चिद् वारयति। किन्तु येन स्वभावेन कार्यं करोति स यदि "अविलम्बितकार्यकर्तृधर्म्मा" अक्षेपेण करोतीत्येवंशीलो धर्म्मो यस्य स तथोक्तः, तदा "पृथग्भावस्य सम्भवात् केवलोऽपि" न केवलं सहितः "तथा स्यात्" तत्कार्यकारकः स्यादित्युक्तं बहुशः। "अतत्स्वभावस्तु" अक्षेपकर्तृस्वभावविकलस्तु "तदाऽपि" सहितावस्थायामपि प्राग्वत् "अकारक एव" पररूपेण कर्तृत्वस्य पूर्व्वमेव निषेधात्।

तदेवमेकार्थक्रियया विशेषोत्पादनेन चाक्षणिकानां सहकारित्वं निषिध्योपसंहरन्नाह – "तस्मात्" इत्यादि। द्विविधस्यापि सहकारित्वस्यायोगान्नैवाक्षणिकस्य कश्चित् [T. 303a.] सहकारीति केवलोऽपि स्वकार्यं कुर्यादिति सहकारिप्रत्ययापेक्षस्याक्षणिकस्य हेतुतां ब्रुवाणस्य किं युक्तमिति [S. 135a.] दर्शयन्नाह – "प्रायस्तु" इत्यादि। यो हि स्थिरहेतुवादी तस्य यदि स हेतुः प्रत्ययान्तराण्यपेक्ष्य कार्यं करोति तदा "व्यक्तम्" अवश्यं तस्य स्थिरस्य हेतोः प्रत्ययान्तरापेक्षकारकस्य स्वभावान्तरस्योत्पत्तिरिति। "नाकार्यस्य" कार्यतामननुभवतो अपेक्षेत्युच्यते। यतः सहकारिणां यः "संघातः" सन्निपातः "तत्स्थायी" तत्र वर्त्तमानो भावसन्तानः "प्रायः" बाहुल्येन "सहकारिप्रत्ययैरुपजनितविशेषः" सन् "स्वकार्यं कुर्वन् दृष्टो बी-

१. तस्मात् न पटाभाव इति नानावस्था प्रा° T.।

जादिवत्" तस्मादेवं विभज्यते । प्रायोग्रहणं चाक्षेपकारीन्द्रियादिसङ्घातव्यवच्छेदार्थम् । तत्सम्भविनो न्यायस्याक्षणिकेषु पृथग्भावसम्भवेन कथञ्चिदपि कल्पयितुमशक्यत्वात् । प्रागकारकस्य पश्चात् कारकस्वभावान्तरोत्पत्तिस्तु न विरुध्यते । तस्यैव ह्यकारकस्य तदात्मा कारकः स्वभावो न युज्यते न त्वतदात्मा । अत एव स्वभावान्तरग्रहणम् । तत्र केवलमकारकस्वभावस्य स्वरसनिरोधितामात्रमुपेयम् । [T. 303b.] ततः सर्व्वं सुस्थमिति ।

अथ मतम् – कारकस्वभावान्तरोत्पत्तिरिष्येत यदि स्थिरस्य हेतोः प्रागपि कारकस्वभावो [S. 135b.] न स्यात् । तस्य तु प्रागपि भावात् प्रत्ययान्तरापेक्षा तदुत्पत्तिरप्ययुक्तेति अत आह – "कारकस्य" इत्यादि । यदि हि समग्रावस्थायाः प्रागपि कारकस्वभावो भवेत् तदाऽस्याक्रिया न युज्यते, संहतावस्थायामपि तत्स्वभावतयैव करणात्, पररूपेण कर्तृत्वस्य प्रागेव निषिद्धत्वात् । न च करोति । तस्मात् सोऽस्य स्वभावः प्राङ्नैवासीत् । यदि च प्रत्ययान्तरैरप्यसौ न क्रियेत तत् किमिति मुधैव[1] तान्यपेक्षते ? इति ।

[ § ४३. निर्हेतुकविनाशचर्चाया उपसंहारः । ]

तदेवं 'तत्स्वभावस्य जननात्'[2] इत्यस्य 'यो यत्स्वभावः स स्वहेतोरेवोत्पद्यमानः तादृशो भवति न पुनस्तद्भावे हेत्वन्तरमपेक्षते'[3] इत्यस्यानेकान्तपरिहारायोक्तस्य प्रकारान्तरेणानेकान्ते उद्भाविते तत्परिजिहीर्षया "अपरापरप्रत्यययोगेन"[4] इत्याद्यभिहितम् । तत्र येन न्यायेन क्षणिकानां हेतुफलस्वभावः तस्याक्षणिकेष्वसम्भवं प्रतिपादयितुं प्रासङ्गिकं यदुपक्रान्तं तत् परिसमापय्य प्रकृतमनुबध्नन्नाह – "तस्माद् यो यदात्मा" इत्यादि । यदि स्वभावेनास्थितिधर्म्मणो भावस्य [S. 136a.] न नाशकारणैः प्रयोजनं स्वभावेन स्थितिधर्म्मणो भविष्यतीत्यत आह – "स्थितिधर्म्मणोऽपि" इत्यादि । स्थितिधर्म्मणोऽपि हि नैव नाशकारणैः किञ्चित् प्रयोजनम् । तस्य स्वहेतुभ्यः समुपजातो यः स्थिरः स्वभावः तद्-

१. किमिति तथाऽन्यान्यपेक्षते – T. । २. पृ. ८३ पं. २२ । ३. पृ. ८३ पं. १ । ४. पृ. ११६ पं. १३ ।

न्यथात्वस्यास्थिरात्मतापत्तेः केनचित् कर्त्तुमशक्यत्वात् । कामं हि भावाः स्वयं न भवेयुः । न तु सन्त एव स्वं स्वभावं परित्यजन्ति । अथ स्थितिधर्म्मणोऽप्यन्यथात्वप्रतिपत्तिरिष्यते तदाऽन्यथात्वप्रतिपत्तौ वा "तत्स्वभाव एव" स्थितिधर्म्मैव "न स्यात्", आत्मभूतस्यास्थितिधर्म्मणः स्वभावस्य पश्चात् सम्भवे प्रागप्यभावायोगात् । नहि तदात्मनस्तस्मिं(स्मिन्) सन्निहिते कदाचिदभावो युक्तः, अतत्स्वभावताप्रसङ्गात् 'विरुद्धधर्म्माध्यासस्य भेदलक्षणत्वात्' इत्युक्तम् । तथा च सति "पूर्व्व" एव "विकल्पः" स्वभावेनास्थितिधर्म्मा भाव इति । "तत्र च" पूर्व्वविकल्पे प्रागेवोक्तं दूषणं विनाशहेतोर्व्वैयर्थ्यमिति ।

अथासौ स्थिरस्वभाव एव, केवलमस्यास्थिरस्वभावता प्रागसति विनाशहेतोरुपजायते, अन्यथा निवृत्त्ययोगादित्यत आह –"यश्च परस्मात्" नाशहेतोः स्थितिधर्म्मणः [S. 136b.] सतः "अन्यथाभावः" अस्थितिधर्म्मतालक्षणो भवति, स पूर्व्वकात् स्थितिधर्म्मणः स्वहेतुसमुद्भूतात् स्वभावात् "अपरः" अन्यः "स्वभावस्तस्मिन्निष्पन्ने" पश्चा[ज्जन्य]त्वाद् भिन्नहेतुकत्वाच्च "कथं तस्य" स्वभावः "स्यात्"?। तदात्मतया प्रतिभासनादिति चेत् । सारूप्यादलक्षितविवेकस्य तथा प्रतिभासनं स्यात् यद्यसौ [T. 304b.] पूर्व्वस्वभावे सत्येवान्यतो भवेत् । अन्यथा विरोधः कथं परिह्रियेत ?। भवत्वपरः स्वभाव इति चेत् । यश्चापरः स्वभावः स कथं तस्य ?। न ह्यन्योऽन्यस्य स्वभावो युक्तः, अतिप्रसङ्गात् । योऽपरः स्वभावः स किमिति तस्य न भवति ? इत्यत आह –"स्वभावभेद–"इत्यादि । भवतु वस्त्वन्तरमेव तदपरस्वभावतया को दोषः? इत्यत आह –"तथा च" वस्त्वन्तरत्वे सति विनाशहेतोरुपजायमानस्य स्वभावस्य पूर्व्वको भावः स्वहेतुभ्यो यः स्थितिधर्म्मा [S. 137a.] जातः सोऽच्युतिधर्म्मे स्थितो निवृत्तिभाङ्न भवति, विनाशहेतोर्व्वस्त्वन्तरोत्पत्तौ व्यापृतत्वादिति न "तस्य" स्थितिधर्म्मणो"ऽन्यथाभावो" निवृत्तिः । नहि मुद्गरादेर्व्वस्त्वन्तरस्य भावेऽपरस्य निवृत्तिर्युक्ता, अतिप्रसङ्गात् । तदुपमर्द्देन तदुत्पत्तौ च प्रागेव प्रोक्तम् ।

ननु च दृश्यत एव कठिनादिरूपस्य ताम्रादेरग्न्यादेर्व्विनाश-हेतोर्द्रवादिस्वभावान्तरोत्पत्तिः । न च पूर्व्वकस्य प्रच्युतिधर्म्मता इत्यत आह – " एतेन " अनन्तरोक्तेन " कठिनादीनाम् " आदिशब्दाद् द्रवादीनां' ताम्रसुवर्णादीनामग्निशीतवातादिभ्यो द्रवत्व-कठिनत्वादिस्वभावान्तरोत्पत्तिर्व्यवस्थितरूपस्य ताम्रादेः " प्रत्युक्ता " प्रत्याख्याता, तुल्यदूषणत्वात् ।

कथं तर्हि स्वभावान्तरोत्पत्तिः पूर्व्वस्य चाप्रच्युतिधर्म्मे स्थितस्याभावो [T. 305a.] युक्तः ? इत्याह – " तत्रापि " कठिनादिरूपे ताम्रादौ " पूर्व्वकस्य " कठिनद्रवादिरूपस्य " स्वरसनिरोधित्वात् " विनाशहेत्वयोगेन । " विनाशे " सति " अग्न्यादेः " आदिग्रहणाज्जलनिषेकशीतवातादेः । सहकारिणः परस्परोपसर्प्पणाद्याश्रयप्रत्ययविशेषोपजातातिशया"दुपादानाच्च" यत् तत् कठिनादिरूपं ताम्रादि स्वरसतो निरुध्यते । तत एव उपादानकारणादग्न्यादिसहकारिकारणोपादानप्रत्ययोपजातविशेषाद् " अपर एव " अन्य एव द्रवकठिनादिस्वभावो द्रवग्रहणस्योपलक्षणत्वात्, [S. 137b.] " उत्पन्नो " न तु पूर्व्वकमेव कठिनद्रवादिरूपं ताम्रादि व्यवस्थितात्मकं द्रवकठिनादिस्वभावेन परिणतमिति ।

अत्र पर आह – " केनोक्तं " यथा ' स्थितिधर्म्मणः सतो' विनाशहेतोरस्थितिस्वभावोत्पत्तिस्ततो विनाशः ' इति, येन 'यश्च परस्मादन्यथाभावः सोऽपरः स्वभावः' इत्याद्युच्यते । किन्तु स स्वयं स्थितिधर्म्मैव स्वहेतुभिर्जनितो नास्यास्थिरस्वभावता विनाशहेतोरुपजायते । कथं ज्ञायते यथा 'स्वहेतुभिः [T. 305b.] स्वभावेन स्थितिधर्म्मैव जनितः ' इति ? । विनाशहेतोरग्न्यादेरसम्भवे अवस्थानात् । यदि स्वभावेनास्थितिधर्म्मा स्वहेतोर्जातः स्यात् तदा तदसम्भवेऽपि नावतिष्ठेत । तस्य स्वभावेन स्थितिधर्म्मणः स्वहेतुभिरेवायमपरः स्वभावो नियमितो यदुत "परस्मात्" विरोधिनोऽग्न्यादे"र्व्विनाशः स्वयं भवतीति" । परस्मादिति कर्म्मणि ल्यप्लोपे पञ्चमी परमपेक्ष्य इत्यर्थः । स्वहेतुभिरेवायं नियमित-

१. °नां संग्रहः । ता° T. २. सतो विनाशहेतोरस्थिरस्वभावत्वात् विनाशहेतोरस्थिति° T. ।

स्वभावो जातो यथा त्वया विरोधिनमपेक्ष्य स्वयं निव्र्व(व)र्त्तितव्यमिति। तदुक्तम् –

" स्वभावोऽपि स तस्येत्थं येनापेक्ष्य निवर्त्तते।
विरोधिनं यथाऽन्येषां प्रवाहो मुद्गरादिकम्॥ " इति।

ननु यद्यस्य विनाशो विरोधिसन्निधाने स्वयमेव भवत्यहेतुकः प्राप्नोति, अहेतोश्च देशकालस्वभावनियमो न युक्त इत्यत आह – " न च " नैव विनाशो नाम विनष्टुरपरः स्वभावः, यतोऽयं दोषः स्यात्, किन्तु " भावच्युतिरेव विनाशः "। [S. 138a.] तस्याश्च निःस्वभावत्वाद्धेतुमत्ता नैव युज्यते। नहि सा तस्य भवति। केवलमसौ स्वयमेव न भवति। ततो भवितुरभावात् कस्य हेतुमत्तोपगम्यते?।

सिद्धान्तवाद्याह – " नेदमनन्तरोक्तं विकल्पद्वयमतिक्रामति "। कीदृशं विकल्पद्वयम्?। ' किं नित्यो भावः?' इत्यादि। [T. 306a] ननु च कालान्तरस्थितिधर्म्मतामुपगच्छतो नैव नित्यविकल्पस्यावकाशः। न। तदुपगमेऽपि नित्यतैवोपगता भवति। तथा हि – यद्ययं संवत्सरस्थितिधर्म्मा स्वहेतुभिर्जनितस्तदा संवत्सरपरिसमाप्तौ योऽस्यादावुदयकाले संवत्सरस्थितिधर्म्मा स्वभावो यतोऽयं संवत्सरं स्थितः स एव तदन्तेऽपि। ततोऽपरं संवत्सरमवतिष्ठेत। तदन्तेऽपि प्रथमोत्पन्नसंवत्सरस्थितिधर्म्मस्वभावापरित्यागादपरापरसंवत्सरस्थितिप्रसङ्गात् कालान्तरस्थितिधर्म्मतोपगमेऽपि नित्यतैवोपगता भवतीति नित्यविकल्पो दुर्न्निवारः। विनाशहेतुसन्निधौ स्वयं निवर्त्तेत इति चोपगमादनित्यविकल्पो नश्वरात्मताविकल्पः। तथा हि – विनाशहेत्वभिमतसन्निधौ स्वयं विनश्यतो योऽस्य स्वभावः स एव भावस्यैकरूपत्वादुत्पन्नमात्रस्येति तदैव विनाशप्रसङ्गात् कथमस्य कालान्तरस्थितिधर्म्मता सम्भवति?। एवं विकल्पे कृते पाश्चात्यविकल्पोपगमे कालान्तरस्थितिरेवास्य त्रुट्यतीति नित्यविकल्प एवानेनोपगन्तव्यः। तत्र [S. 138b.] विनाशहेतुसन्निधौ स्वयं नाशोपगमे प्राङ् नित्यो भूत्वा पश्चादनित्यो [T. 306b.] विनश्वरस्वभावो भवतीति ब्रूते। " एवं च ब्रुवाणो भावद्वयं चाह "। वक्ष्यमाणापेक्षश्चकारः।

कीदृशं भावद्वयम्?। नित्यानित्यौ स्वभावौ भेदौ यस्य तथा। योऽसौ नित्यः स्वभावः प्राक्तनः तस्य नित्याभिमतस्य स्वयं पश्चान्नाशं ब्रुवाणः सर्व्वदा प्रतिक्षणमेव नाशं प्राह। अन्यथा पूर्व्वोक्तेन न्यायेन पश्चादपि नाशासम्भवात्। अथ प्रतिक्षणमस्य नाशो न भवति तदा पश्चादपि तदयोगात् सर्व्वदैवानाशं प्राहेति कृत्वा पूर्व्वस्मिन्नित्याभिमते स्वभावे विनाशहेतुरसमर्थोऽकिञ्चित्कर एव।

ननु च विनाशहेतोर्नैव सामर्थ्यमुपगतं परेण विरोधिसन्निधिमपेक्ष्य स्वयं नाशोपगमात्। न। अत एव तन्निबन्धनत्वप्रसङ्गात् नाशस्य। अन्यथा ह्यकिञ्चित्करः किमित्यसावपेक्ष्यते?, हेतुभावस्यापेक्षालक्षणत्वात्। स्वहेतव एवात्रापराध्यन्ति यदकिञ्चित्करेऽपि तत्रापेक्षायां नियुञ्जत इति चेत्। कः पुनरयमस्थानाभिनिवेशः तेषां यत् तत्र तथा नियुञ्जते। [S. 139a.] तस्मादुपकार्यपेक्षायामेव[1] हेतवो नियुञ्जानाः शोभन्ते। अन्यथा तेऽपि [2]कार्यात्मानो नैव त[3]न्नियोगमाद्रियेरन्। कथं चाकिञ्चित्करो विरोधी नाम?। न ह्य[4]स्याविरोधित्वाभिमताद्विशेषः कश्चिदिति यत्किञ्चिदेतत्।

यदप्युक्तं ‘ यथाऽन्येषां क्षणिकवादिनामकिञ्चित्करमपि मुद्गरादिकमपेक्ष्य [S. 307a.] घटादिप्रवाहो निवर्त्तते तथाऽस्माकमपि कालान्तरस्थायी भावः ’ इति तदपि परसमयानभिज्ञतयोच्यते। यतो नास्माकं प्रवाहो नाम क्षणव्यतिरिक्तोऽस्ति योऽकिञ्चित्करमुद्गरादिसन्निधौ निवर्त्तेत। क्षणा एव हि केवलं सन्ति। ते च स्वनिवृत्तौ न मुद्गरादिकमपेक्षन्ते, स्वरसत एव निरोधात्। या तु तेषां कपालादिवृत्तिलक्षणा पर्युदासवृत्त्या निवृत्तिः यस्यां सत्यामेकत्वाभिनिवेशिनो लोकस्य सदृशापरभावरूपस्य विभ्रमनिमित्तस्यापगमात् ‘ निवृत्ता घटादयः ’ इति व्यवहारः, तत्राकिञ्चित्करत्वं मुद्गरादीनां नैवास्ति, तद्भाव एव तेषां भावात्। वेगवन्मुद्गरादिसहकारिणो घटक्षणात् परस्परोपसर्प्पणाद्याश्र-

१. मेव स्वहे° T.। २. कार्याणि। ३. हेतु°। ४. विरोधिनः।

यात् प्रत्ययविशेषात् [S. 139b.] सञ्जातातिशयात् कपालादेर्भवनधर्म्मत्वात् तस्य च तज्जननस्वभावत्वादिति ।

स्वभावद्वयोपगमप्रसङ्गादिति परिजिहीर्षया पर आह – " न प्राग् " इत्यादि । कुत एतत् ? । " एकस्वभावत्वात् " । सर्व्वदैकस्वभावस्य सर्व्वदा नित्यतैव न पश्चादनित्यस्वभावतासम्भव इति ।

सिद्धान्तवाद्याह – " स तर्हि भावः " [T. 307b.] सर्व्वदा नित्यस्वभावः स्वभावेन "नाशमनाविशन्" अप्रतिपद्यमानः कथं नैव नष्टो(कथं नष्टो) नाम ? । कुतः ? " तत्स्वभावविनाशयोः " नित्यस्वभावताया, विनाशस्य चानित्यरूपतायाश्च " अपरस्पररूपत्वात् " परस्परपरिहाररूपत्वात् । उपसंहरन्नाह – " यत एवं " स्थितिधर्म्मणां विनाशो नैव युज्यते तस्मात् सति अस्य विनाशे यद्यवश्यम्भावी कृतकरूपस्य सतो विनाश इष्यते परैस्तदा " विनाशस्वभावेन " – विनश्यति नावतिष्ठत इति विनाशः । कर्त्तरि बहुलवचनाद् घञ् । स स्वभावो यस्य तेन विनाशस्वभावेनास्थितिधर्म्मणा । " तेन " कृतकरूपेण सता वस्तुना स्वहेतुभ्यो " भवितव्यम् " अन्यथाऽवश्यम्भावितयोपगतस्य कृतकात्मनां सतां विनाशस्यैवायोगात् ।

भवत्वेवम् इति चेत् । आह – " तथापि " स्वयं विनाशस्वभावत्वेऽपि [S. 140a.] न केवलमविनश्वरस्वभावत्वे स्वभावान्यथात्वासम्भवाद् व्यर्थो विनाशहेतुरिति प्रथमविकल्पोपन्यास एवोक्तम् न पुनरुच्यते । यत एवं "तेन" इत्यादि सुगमम् ।

तदेवं विनाशं प्रत्यनपेक्षामसामर्थ्य-वैयर्थ्याभ्यां तद्धेत्वयोगेन कृतकलक्षणस्य सत्त्वस्य पूर्व्वाचार्यदर्शितां प्रतिपाद्य यथाऽसौ विपर्यये बाधकप्रमाणतामनुभवति तद् दर्शयन्नाह – " तस्माद् विनाश " इत्यादि । प्रयोगस्त्वेवम् – ये यद्भावं प्रत्यनपेक्षास्ते तद्भावनियताः । [T. 308a.] तद्यथा – अन्त्या कारणसामग्री स्वकार्योत्पादने । अनपेक्षश्च कृतकरूपः सन् भावो विनाशे-

१. कथं नष्टो नाम – Tb. ।

ऽवश्यम्भाविविनाशतयोपगतः परैरिति स्वभावहेतुप्रसङ्गप्रयोगो विपर्यये बाधकं प्रमाणं पूर्व्वाचार्यप्रदर्शितम्। "ततः" तद्भावनियतत्वे, नाशस्याकादाचित्कत्वादुदयानन्तरं नाश इति "यः सन्" कृतकलक्षणो भावः "स विनाशी" विनश्वरस्वभावो नश्वरतायाः साध्यधर्म्मस्य निवृत्तौ च कृतकलक्षणसत्त्वनिवृत्तिरिति कृत्वा कृतकलक्षणस्य सत्त्वस्य क्षणिकतायामन्वयव्यतिरेकसिद्धिः सम्पद्यते अनपेक्षयाऽनुक्रान्तसत्त्वक्षणिकत्वयोस्तादात्म्यसिद्धेः तन्निबन्धनयोरन्वयव्यतिरेकयोरपि निश्चयात्।

तदेवं पूर्व्वाचार्यान् प्रति अकृतकस्य सतोऽभावात् "सदकारणवन्नित्यम्" [वैशे० ४. १. १.] इति नित्यलक्षणविरहादेव न तन्नित्यत्वम्। यत्तु [S. 140b.] सद् उत्पत्तिमत् तद् उक्तेन न्यायेनावश्यंनाशितयोपगतं परैः कालान्तरस्थायि न भवतीति प्रतिपादितम्।

[§ ४४. सामान्येन सत्त्वक्षणिकत्वयोस्तादात्म्यव्याप्तिप्रदर्शनम्।]

यदा तु यत् सत् तत् क्षणिकमेवेति सामान्येनोच्यते कृतकाकृतकलक्षणं सतो भेदमनपेक्ष्य प्रौढवादितया कृतकस्यापि चावश्यम्भावी विनाश इति परोपगमो [T. 308b.] नापेक्ष्यते, तदा विनाशं प्रत्यनपेक्षत्वमेव सर्व्वस्य न सिध्यति। येषां हि विनाशो भवं(वन्) दृष्टो घटादीनां तेषामेव तद्धेत्वयोगात् तत्रानपेक्षा युज्यते। ये तु देशादिव्यवहिताः पर्व्वतादयो वा विनशामाविशन्तो न दृष्टाः तेषामवश्यं विनाशित्वोपगमनिबन्धनाभावादन्त्येऽप्ययं विनाशं प्रत्यनपेक्ष एव विनश्यन्नऽविशेषादादावपि तद्भावनियत इति वक्तुमशक्यत्वात् तत्स्वभावसापेक्षत्वात्। विनाशं प्रत्यनपेक्षत्वासिद्धेरकृतकानां चाकाशादीनां विनाशिस्वभावसापेक्षाणामित्यनपेक्षया सतो नश्वरस्वभावताऽसिद्धेः अन्वयव्यतिरेकयोस्तन्निबन्धनयोरयोगमुत्पश्यन्नर्थक्रियाविरोधलक्षणमेव तदा बाधकं प्रमाणं तादात्म्यप्रसाधकमभिधानीयमिति मन्यमानः पूर्व्वपक्षमुत्थापयन्नाह – "स्वभावतो" नश्वरत्वेऽप्युक्तेन

१. अनित्य°।

न्यायेन परिदृश्यमानविनाशानां घटादीनां "कश्चिद्" देशादिव्यवहितः[1] पर्व्वतादिर्व्वाऽनुपलब्धविनाशः कृतकोऽपि सद्रूप आकाशादिर्व्वाऽकृतकः [S. 141a.] सन्न"ऽतत्स्वभावोऽपि" अविनाशिस्वभावोऽपि स्यात् । अपिशब्दः सम्भावनायाम् । तस्य[2] विनाशिस्वभावसंसाधकप्रमाणाभावादाशङ्क्यत एतत् । ततश्च विनाशिस्वभावसापेक्षत्वात् तदनपेक्षत्वमसिद्धमिति तद्वशात्[3] साध्यस्य [T. 309a.] क्षणिकत्वस्य सत्त्वस्वभावत्वासिद्धेः तन्निबन्धना नान्वयव्यतिरेकसिद्धिरिति । किं पुनरत्राशङ्कानिमित्तं येन कश्चिद्-तत्स्वभावोऽप्याशङ्क्यत इत्याह – "न हि सर्व्वः सर्व्वस्य स्वभावः" इति । विचित्रस्वभावा हि भावा दृश्यन्ते – केचित्[4] सप्रतिघाः केचिद्[5]प्रतिघाः, तथा नीलानीलादिस्वभावाः, तथा केचिद्विनाशिनः अन्ये त्वविनाशिस्वभावाः शङ्क्यन्त इति पूर्व्वपक्षाशङ्का ।

न –'कश्चिदतत्स्वभावोऽपि स्यात्'–इति आशङ्कनीयम्, तथाभावे ह्यक्षणिकत्वं तस्य स्यात् । तस्मिंश्च सत्यवस्तुत्वप्रसङ्गात् कुतोऽतत्स्वभावताशङ्का ? । कथं पुनरक्षणिकत्वेऽवस्तुत्वप्रसङ्गः ? । यतः[6] सत्त्वस्य क्षणिकत्वस्वभावतयाऽन्वयव्यतिरेकसिद्धिरित्यत आह – "शक्तिर्हि" इत्यादि ।

[ § ४५. अर्थक्रियाकारित्वमेव सत्त्वं, तच्च क्षणिकानामेवेति । ]

एवं मन्यते – इह तावदिदमेव विचारणीयम् [S. 141b.] किंलक्षणमेतद् भावानां सत्त्वं युक्तमिति । तत्र न सत्तायोगलक्षणमव्याप्तेः, सामान्यादिष्वभावात् । वन्ध्यासुतादिष्वपि भावाद् अतिव्याप्तेर्वा । वन्ध्यासुतादीनामसत्त्वात् कथं सत्तायोगः ? इति चेत् । न । इतरेतराश्रयात् । यतस्तेषामसत्त्वं सत्तायोगविरहादेव [T. 309b.] तद्विरहश्चासत्त्वादिति । यदि च सतामेव सत्तायोगः एवं तर्ह्यन्यत् सत्त्वलक्षणमभिधानीयम् सत्तायोगस्य च वैयर्थ्यम्, तत एव वस्तुनः सत्त्वात् । सर्व्वार्थक्रियासामर्थ्यविरहात् सत्ता-

---

१. विप्रकृष्टः – T. । २. आकाशं । ३. अनपेक्षत्ववशात् । ४. घटपटादयः । ५. विनाशवन्तः । ६. अवस्तुत्वप्रसक्तत्वात् ।

ऽवश्यम्भाविविनाशतयोपगतः परैरिति स्वभावहेतुप्रसङ्गप्रयोगो विपर्यये बाधकं प्रमाणं पूर्व्वाचार्यप्रदर्शितम्। "ततः" तद्भावनियतत्वे, नाशस्याकादाचित्कत्वादुदयानन्तरं नाश इति "यः सन्" कृतकलक्षणो भावः "स विनाशी" विनश्वरस्वभावो नश्वरतायाः साध्यधर्म्मस्य निवृत्तौ च कृतकलक्षणसत्त्वनिवृत्तिरिति कृत्वा कृतकलक्षणस्य सत्त्वस्य क्षणिकतायामन्वयव्यतिरेकसिद्धिः सम्पद्यते अनपेक्षयाऽनुक्रान्तसत्त्वक्षणिकत्वयोस्तादात्म्यसिद्धेः तन्निबन्धनयोरन्वयव्यतिरेकयोरपि निश्चयात्।

तदेवं पूर्व्वाचार्यान् प्रति अकृतकस्य सतोऽभावात् "सदकारणवन्नित्यम्" [वैशे० ४· १· १·] इति नित्यलक्षणविरहादेव न तन्नित्यत्वम्। यत्तु [S. 140b.] सद् उत्पत्तिमत् तद् उक्तेन न्यायेनावश्यंनाशितयोपगतं परैः कालान्तरस्थायि न भवतीति प्रतिपादितम्।

[ § ४४. सामान्येन सत्त्वक्षणिकत्वयोस्तादात्म्यव्याप्तिप्रदर्शनम्। ]

यदा तु यत् सत् तत् क्षणिकमेवेति सामान्येनोच्यते कृताकृतकलक्षणं सतो भेदमनपेक्ष्य प्रौढवादितया कृतकस्यापि चावश्यम्भावी विनाश इति परोपगमो [T. 308b.] नापेक्ष्यते, तदा विनाशं प्रत्यनपेक्षत्वमेव सर्व्वस्य न सिध्यति। येषां हि विनाशो भवं(वन्) दृष्टो घटादीनां तेषामेव तद्धेत्वयोगात् तत्रानपेक्षा युज्यते। ये तु देशादिव्यवहिताः पर्व्वतादयो वा विनशामाविशन्तो न दृष्टाः तेषामवश्यं विनाशित्वोपगमनिबन्धनाभावादन्त्येऽप्ययं विनाशं प्रत्यनपेक्ष एव विनश्यन्नऽविशेषादादावपि तद्भावनियत इति वक्तुमशक्यत्वात् तत्स्वभावसापेक्षत्वात्। विनाशं प्रत्यनपेक्षत्वासिद्धेरकृतकानां चाकाशादीनां विनाशिस्वभावसापेक्षाणामित्यनपेक्षया सतो नश्वरस्वभावताऽसिद्धेः अन्वयव्यतिरेकयोस्तन्निबन्धनयोरयोगमुत्पश्यन्नर्थक्रियाविरोधलक्षणमेव तदा बाधकं प्रमाणं तादात्म्यप्रसाधकमभिधानीयमिति मन्यमानः पूर्व्वपक्षमुत्थापयन्नाह – "स्वभावतो" नश्वरत्वेऽप्युक्तेन

१. अनित्य°।

न्यायेन परिदृश्यमानविनाशानां घटादीनां "कश्चिद्" देशादि[1]व्यवहितः पर्व्वतादिर्व्वाऽनुपलब्धविनाशः कृतकोऽपि सद्रूप आकाशादिर्व्वाऽकृतकः [S. 141a.] सन्न"ऽतत्स्वभावोऽपि" अविनाशिस्वभावोऽपि स्यात्। अपिशब्दः सम्भावनायाम्। [2]तस्य विनाशिस्वभावसंसाधकप्रमाणाभावादाशङ्क्यत एतत्। ततश्च विनाशिस्वभावसापेक्षत्वात् तदनपेक्षत्वमसिद्धमिति तद्[3]वशात् साध्यस्य [T. 309a.] क्षणिकत्वस्य सत्त्वस्वभावत्वासिद्धेः तन्निबन्धना नान्वयव्यतिरेकसिद्धिरिति। किं पुनरत्राशङ्कानिमित्तं येन कश्चिदतत्स्वभावोऽप्याशङ्क्यत इत्याह – "न हि सर्व्वः सर्व्वस्य स्वभावः" इति। विचित्रस्वभावा हि भावा दृश्यन्ते – केचित्[4] सप्रतिघाः केचिद्[5]अप्रतिघाः, तथा नीलानीलादिस्वभावाः, तथा केचिद्विनाशिनः अन्ये त्वविनाशिस्वभावाः शङ्क्यन्त इति पूर्व्वपक्षाशङ्का।

न –'कश्चिदतत्स्वभावोऽपि स्यात्'–इति आशङ्कनीयम्, तथाभावे ह्यक्षणिकत्वं तस्य स्यात्। तस्मिंश्च सत्यवस्तुत्वप्रसङ्गात् कुतोऽतत्स्वभावताशङ्का?। कथं पुनरक्षणिकत्वेऽवस्तुत्वप्रसङ्गः?। [6]यतः सत्त्वस्य क्षणिकत्वस्वभावतयाऽन्वयव्यतिरेकसिद्धिरित्यत आह – "शक्तिर्हि" इत्यादि।

[§ ४५. अर्थक्रियाकारित्वमेव सत्त्वं, तच्च क्षणिकानामेवेति।]

एवं मन्यते – इह तावदिदमेव विचारणीयम् [S. 141b.] किंलक्षणमेतद् भावानां सत्त्वं युक्तमिति। तत्र न सत्तायोगलक्षणमव्याप्तेः, सामान्यादिष्वभावात्। वन्ध्यासुतादिष्वपि भावाद् अतिव्याप्तेर्वा। वन्ध्यासुतादीनामसत्त्वात् कथं सत्तायोगः? इति चेत्। न। इतरेतराश्रयात्। यतस्तेषामसत्त्वं सत्तायोगविरहादेव [T. 309b.] तद्विरहश्चासत्त्वादिति। यदि च सतामेव सत्तायोगः एवं तर्ह्यन्यत् सत्त्वलक्षणमभिधानीयम् सत्तायोगस्य च वैयर्थ्यम्, तत एव वस्तुनः सत्त्वात्। सर्व्वार्थक्रियासामर्थ्यविरहात् सत्ता-

१. विप्रकृष्टः – T.। २. आकाश°। ३. अनपेक्षत्ववशात्। ४. घटपटादयः। ५. विज्ञानादयः। ६. अवस्तुत्वप्रसङ्गत्वात्।

योगाभावस्तेषामिति चेत्। एवं सति यदेवार्थक्रियासामर्थ्ययुक्तं तस्यैव सत्तायोग इत्यर्थक्रियासामर्थ्यमेव भावलक्षणमायातमित्यपार्थकः सत्तायोगः। "इत्थं च"एवम्। अन्यथा सामान्यादीनां कथं स्वरूपं सत्त्वं स्यात्?। अर्थक्रियासामर्थ्यं तु सर्व्वेषामस्तीति तदेव भावलक्षणम्।

"उत्पादव्ययध्रौव्ययुक्तं सत्" [तत्त्वार्थ॰,५. २९.] इत्येतदप्ययुक्तम्, ध्रौव्येणोत्पादव्यययोर्व्विरोधात् एकस्मिं(स्मिन्) धर्म्मिण्ययोगात्। कथञ्चिदुत्पादव्ययौ कथञ्चित् ध्रौव्यमिति चेत्। यथोत्पादव्ययौ न तथा ध्रौव्यम्, यथा च ध्रौव्यं न तथोत्पादव्ययाविति नैकं वस्तु यथोक्तलक्षणं [S. 142a.] स्यात्। ततोऽन्यस्य भावलक्षणस्यायोगात् शक्तेश्चान्तशः स्वज्ञानजननेऽप्युपगमात् परैः, अन्यथा षट्पदार्थादिव्यवस्थानायोगात् सैव भावलक्षणम्, सर्व्वशक्तिविरहः पुनरभावलक्षणम्।

सर्व्वग्रहणं च सर्व्वस्य वस्तुनो वस्त्वन्तरशक्तिविरहरूपत्वादभावतानिरासार्थम्। यस्य तु न क्वचिच्छक्तिः स एवैकान्तेनाभाव उच्यते।

शक्तिलक्षणमेव सत्त्वमक्षणिके स्यात् ततः क्षणिकात्मता [T. 310a.] सत्त्वस्य न सिध्यतीति कुतोऽन्वयव्यतिरेकौ? इति चेत्, आह – "न चैवाक्षणिकस्य" क्वचित् कार्येऽन्तशो ज्ञानलक्षणेऽपि शक्तिरस्ति तत् कुतस्तस्य तल्लक्षणं सत्त्वमतीतादेरिव भविष्यति?, यतः सत्त्वस्य क्षणिकात्मता न सिध्येत्।

ननु च शक्तेरतीन्द्रियत्वात् कारणानां कार्यारम्भनियमाभावाच्च कथं तद्विरहोऽक्षणिकस्य भवेत् यतोऽस्य सर्व्वशक्तिविरहलक्षणेनासत्त्वेन विरोधिना निराक्रियमाणं सत्त्वं क्षणिकात्मतामेवानुभवेत् यतोऽन्वयव्यतिरेकौ स्यातामित्यत आह – "क्रमयौगपद्याभ्याम्" इत्यादि। नैव प्रत्यक्षतः [S. 142b.] कार्यविरहाद्वा सर्व्वशक्तिविरहोऽक्षणिकत्वे उच्यते, किन्तु तद्व्यापकविरहात्। तथा हि – क्रमयौगपद्याभ्यां कार्यक्रिया व्याप्ता प्रकारान्तराभावात्। ततः कार्यक्रियाशक्तिव्यापकयोस्तयोरक्षणिकत्वे

विरोधात् निवृत्तेस्तद्व्याप्तायाः कार्यक्रियाशक्तेरपि निवृत्तिरिति सर्व्वशक्तिविरहलक्षणमसत्त्वमक्षणिकत्वे व्यापकानुपलब्धिराकर्षति, विरुद्धयोरेकत्रायोगात्। ततो निवृत्तं सत्त्वं क्षणिकेष्वेवावतिष्ठमानं तदात्मतामनुभवतीति–'यत् सत् तत् क्षणिकमेव' इत्यन्वयव्यतिरेकरूपाया व्याप्तेः सिद्धिर्निश्चयो भवति।

ननु च प्रकारान्तराभावात् कार्यमङ्कुरादिकं बीजादिना क्रमयौगपद्याभ्यामेव क्रियत इत्युच्यते स एव तु प्रकारान्तरविरहः [T. 310b.] कार्यात्मनः कुतः सिद्धः?। प्रकारान्तरस्योपलब्धिलक्षणप्राप्तत्वे कथमत्यन्तासम्भवः?। केवलं देशादिनिषेधमात्रमेव स्यात्। अनुपलब्धिलक्षणप्राप्तत्वेनाऽसत्तानिश्चयो विप्रकर्षिणामिति कुतस्तदभावसिद्धिः?। ततः प्रकारान्तरेणार्थक्रियासम्भवात् क्रमयौगपद्यनिवृत्तावपि नार्थक्रियासामर्थ्यनिवृत्तिरिति कुतोऽक्षणिकत्वे सति सर्व्वसामर्थ्यविरहलक्षणमसत्त्वम्?, यतः सत्त्वस्य क्षणिकात्मतयाऽन्वयव्यतिरेकौ स्याताम्?। न। उभयथाऽप्यदोषात्। [S. 143a.] तथा हि – क्रमो नाम परिपाटिः कार्यान्तरासाहित्यं कैवल्यमङ्कुरादेः, यौगपद्यमपि तस्यापरैर्बीजादिकार्यैः साहित्यं। प्रकारान्तरं चाङ्कुरादेः तदुभयावस्थाविरहेऽप्यन्यथाभवनम्। तस्य चाङ्कुरादिस्वभावस्यान्यसहितस्य केवलस्य वाऽभावे प्रत्यक्षबोधगम्यमाने सत्युपलब्धिलक्षणप्राप्त एव स्वभावः क्रमयौगपद्यभावबहिर्भूतो नोपलभ्यते। वस्तुनः उपलभ्यस्यान्यसाहित्ये कैवल्ये चापनीते तद्विविक्तदेशादिप्रतिभासिनः प्रत्यक्षस्योदयात् स्वभावानुपलम्भत एवाभावनिश्चयादिलक्षणव्यवहारवृत्तेः। तस्य चाङ्कुरादिभावस्यावस्थाद्वयबहिर्भावनिषेधे कयोश्चिद्देशकालयोः देशान्तरादौ क्रमेणाङ्कुरादिभाववतीतरस्मिन् वा भावेऽपि न काचित् क्षतिः। ततः प्रत्यक्षत एव [T. 311a.] प्रकारान्तराभावसिद्धेः कथं क्रमयौगपद्याभ्यामर्थक्रियाशक्तिरव्याप्ता स्यात्?। शास्त्रकारस्तु यथा प्रत्यक्षत एव प्रकारान्तराभावसिद्धिः तथा स्वयम् "एतेन क्रमाक्रमादयोऽपी"ति अतिदिशन् वक्ष्यति।

१. °त्वेन सत्तानिश्चयो न, वि° T.। २. प्रकारान्तर°।

अनुपलब्धिलक्षणप्राप्तत्वेऽपि प्रकारान्तरस्य क्रमयौगपद्ययोरन्योऽन्यव्य[S. 143b.]वच्छेदरूपत्वादेवाश्रयसि(°देवाभावसि)द्धिः तथाहि – अन्योन्यव्यवच्छेदरूपाणामेकनिषेधेनापरविधानात् त[1]स्याऽप्रतिषेधे विधिप्रतिषेधयोर्विरोधादुभयप्रतिषेधात्मनः प्रकारान्तरस्य कुतः सम्भवः ?। अत्र प्रयोगः – यत्र यत्प्रकारव्यवच्छेदेन यदितरप्रकारव्यवस्थानं न तत्र प्रकारान्तरसम्भवः, तद्यथा-नीलप्रकारव्यवच्छेदेनानीलप्रकारान्तरव्यवस्थायां पीते। अस्ति च क्रमयौगपद्ययोरन्यतरप्रकारव्यवच्छेदेन तदितरप्रकारव्यवस्थानम् व्यवच्छिद्यमानप्रकाराविषयीकृते सर्व्वत्र कार्यकारण[2]रूपे वस्तुनीति विरुद्धोपलब्धिः व्यवच्छिद्यमानप्रकारेतरव्यवस्थानं च, प्र[3]कारान्तर[4]सम्भवश्च ततो बहिर्भावलक्षण इत्यनयोस्तत्त्वाऽन्यत्वरूपयोरन्योन्यपरिहारस्थितलक्षणत्वात्। न चात्रापि बाधकान्तराशङ्कयाऽनवस्थानमाशङ्कनीयम्, पूर्व्वप्रसिद्धस्य [T. 311b.] [S. 144 a.] विरोधस्य स्मरणमात्रत्वात्। विरुद्धोपलब्धिषु बहिर्द्धर्म्मिणि हेतोः सद्भावमुपदर्श्य विरोधसाधनमेव बाधकम्, तच्चेहास्ति। ततो विरुद्धयोरेकत्रासम्भवात् प्रतियोग्यभावनिश्चयः शीतोष्णस्पर्शयोरिव भावाभावयोरिव चेति कुतोऽनवस्था ?।

तत्र न क्रमेणाक्षणिकः कार्याणि करोत्यविशेषादकारकावस्थायामिव। सहकार्यपेक्षा च द्विविधस्यापि सहकारित्वस्यायोगादनुपन्यसनीया। सर्व्वेषां चैकक्रियाकाल एव क्रियाप्रसक्तेः, तत्कारकस्य स्वभावस्य तदैव भावात्। नापि युगपत्, प्रत्यक्षा[5]दिविरोधात्, पुनस्तत्क्रियाप्रसङ्गाच्च। कृतत्वान्नेति चेत्, न, सामर्थ्यानपायात्। अन्यथा प्रागप्यकारकरूपविशेषादक्रिया स्यात्। कृतस्य कर्त्तुमशक्यत्वादिति चेत्। शक्ताशक्ततया तर्ह्येकत्रैव कार्ये भेदप्रसङ्गः शालिकोद्रवबीजादेरिव। नित्यश्च यदा युगपत् करोति ततः प्रागपि भावात् तदैव तत्क्रियाप्रसङ्गः पुनस्ततोऽपि पूर्व्वतरम् इत्येवं [S. 144b.] न कदाचिद्युगपत् क्रिया स्यात्। पूर्व्वोत्तरकालयोश्चैकदा युगपत्कारिणोऽन्यदा सर्व्वार्थक्रियासाम-

१. विहितस्य। २. °णभूते ० T.। ३. व्यवच्छिद्यमानप्रकारेणेतरव्यवस्थानात्। ४. °रान्तरास° – T. ५. प्रत्यक्षवि° T.।

र्थ्यविरहलक्षणमसत्त्वं स्यादिति कथं न क्षणिकता ? । क्रियोपगमे वा क्रमपक्ष एव । तत्र चोक्तो दोषः । एवमक्षणिकत्वे [T. 312a.] सति चक्षुराद्यायतनानामसत्त्वप्रसङ्गात् क्षणिकतायामेव सत्त्वमिति यत् सत् तत् क्षणिकमेवेति सतो नश्वरात्मतासिद्धेः अन्वयव्यतिरेकरूपव्याप्तिसिद्धिरिति ॥[२]



१. °द्यायत्तानाम° – T. । २. T. adds here ब्राह्मणाचतविरचिते विवरणे स्वभावहेत्वधिकारः प्रथमः ।

# [ ३. कार्यहेतुनिरूपणम् । ]

## [ § १. कार्यकारणभावव्यवस्था । ]

तदेवं स्वभावहेतौ तादात्म्यसिद्धिनिबन्धनमन्वयव्यतिरेकनिश्चयं प्रतिपाद्य कार्यहेतौ कार्यकारणभावसिद्धिनिमित्तत्वात् तयोस्तस्याश्च प्रत्यक्षानुपलम्भनिबन्धनायाः प्रागेव दर्शितत्वात् तद्गतमपरमपि परेषां भ्रान्तिकारणमपनेतुं तद्विषयं दर्शयन्नाह – "अर्थान्तरे" हेतोर्व्यतिरिक्ते वस्तुनि गम्ये "कार्यं हेतुः"। अनर्थान्तरे तु स्वभावो हेतुरित्युक्तम्। कस्मात् [S. 145a.] पुनरर्थान्तरे कार्यमेव हेतुरित्याह – "अव्यभिचारात्" इति कार्यमेव ह्यर्थान्तरं न व्यभिचरति नान्यत् यथोक्तं प्राक् ततः कार्यमेवार्थान्तरे गम्ये हेतुरुच्यते संयोगवशाद्गमकत्वे।

"न च केनचित्[1]" इत्यादिना[2] यः सर्व्वथा गम्यगमकभावप्रसङ्ग आचार्येणोक्तः परस्य, तमिहापि कार्यहेतौ परः कदाचित् प्रसञ्जयेदित्याशङ्कमान आह – "कार्यकारण-" इत्यादि। [T. 312b.] यदि हि कार्यं हेतुरुच्यते तदा कार्यकारणभावेन कारणेनास्य गमकत्वम्। तथा च सति सर्व्वथा गम्यगमकभावः प्राप्नोति। अग्नेः सामान्यधर्म्मवद् विशेषधर्म्मा अपि तार्ण्णपार्ण्णादयो गम्याः स्युः। धूमस्यापि विशेषधर्म्मवद् द्रव्यत्वपार्थिवत्वादयोऽपि सामान्यधर्म्मा गमका भवेयुः। कुतः? "सर्व्वथा जन्यजनकभावात्"। जन्यजनकभावो हि कार्यकारणभाव उच्यते। स च नाग्निधूमयोरंशेन अपि तु सर्व्वेण प्रकारेण। तथाहि – यथा अग्निरग्नित्वद्रव्यत्वसत्वादिभिः सामान्यधर्म्मैर्जनकः तथा तार्ण्णपार्ण्णत्वादिभिर्व्विशेषधर्म्मैरपि, यथा च धूमो धूमत्वपाण्डुत्वादिभिः स्वनियतैर्व्विशेषधर्म्मैर्जन्यः तथा [S. 145b.] सामान्यधर्म्मैरपि सत्त्वद्रव्यत्वादिभिः। ततश्च यथा तयोः कार्यकारणभावः तथैव गम्यगमकभावः प्राप्नोति, तस्यैव तन्निबन्धनत्वादिति पूर्व्वपक्षाशङ्का। अत्राह – "न सर्व्वथा जन्यजनकभावः" ततश्च कुतस्तथा गम्यगमकभावः स्यात्?। कस्मात्? इति चेत्,

१. पृ. ५८. पं. २१। २. °ना प्राक् यः T.।

"तदभावे" तेषां ताण्र्णपाण्र्णत्वादीनां विशेषधर्म्माणामभावे "भवतो" धूममात्रस्य तेभ्य एव विशेषधर्म्मेभ्यो भवतीति एवमात्मनः "तदुत्पत्तिनियमस्याभावात्"। तथा "तदभावे" अग्न्यभावे भवतो द्रव्यत्वादेः [T. 313a.] सामान्यधर्म्मस्याग्नेरेवायं भवतीत्येवंरूपस्य तदुत्पत्तिनियमस्याभावात् कुतः सर्व्वथा जन्यजनकभावः ?, यतः सर्व्वथा गम्यगमकभावः स्यात्। न ह्यसति तदुत्पत्तिनियमे जन्यजनकभावो व्यवस्थापयितुं युक्तः। यत एवं "तस्मात् कार्यं" धूमादिकं "स्वभावैर्यावद्भि"र्धूमत्वादिभिः स्वगतैः। इत्थम्भूतलक्षणा च तृतीया। "अविनाभावि" विना न भवति। कैर्व्विना न भवति ?। 'कारणे यावद्भिः स्वभावैः' इत्यत्रापि सम्बध्यते। कारणाश्रितैर्यावद्भिः [S. 146a.] स्वभावैर्व्विना ते कार्यगताः स्वभावा न भवन्ति हेतुः तैस्तेषामिति गम्यते। क्व अविनाभावि ?। "कारणे" कारणविषये अपरोऽर्थः "कारणे" आधारसप्तमी। इदानीं कारणस्थैः स्वभावैर्यावद्भिरग्नित्वद्रव्यत्वादिभिरविनाभावि तेषां कारणगतानां सामान्यधर्म्माणां हेतुः कार्यं गमकम्। कस्मात् ? इत्याह – "तत्कार्यत्वनियमात्" तेषामेव कारणगतानां सामान्यधर्म्माणां तत् कार्यमित्येवंरूपस्य नियमस्य सद्भावात्। नहि तान् सामान्यधर्म्मान् कदाचिदपि कार्यं व्यभिचरति।

एवं कारणगतमंशं पाश्चात्येनार्थेन[२] निरूप्य प्राक्तनेनार्थेन कार्यगतमंशं निरूपयन्नाह – "तैरेव च" इत्यादि। कार्यमपि तैरेव धर्म्मैः [T. 313b.] स्वगतैः कारणगतानां धर्म्माणां गमकम् यथाऽन्तरा सम्भविनो धूमत्वपाण्डु[३]पाण्र्णत्वादयो विशेषरूपास्तैः कारणगतैः सामान्यधर्म्मैर्व्विना न भवन्ति। अत्रापि 'तत्कार्यत्वनियमात्' इत्यपेक्ष्यते। तेषामेव कार्यगतानां विशेषधर्म्माणां कारणगतसामान्यधर्म्मापेक्षया कार्यत्वनियमात्। न हि ते विशेषधर्म्माः कार्यगताः [S. 146b.] कारणस्थसामान्यधर्म्मैर्व्विना कदाचिदपि भवन्ति। ततस्तेषामेव कार्यत्वनियमः, नान्येषां द्र-

१. शक्यः T. २. °नार्थिना T.। ३. पाण्डुत्वपार्ण° T.

द्रव्यत्वादीनां कारणस्थसामान्यधर्म्मैर्विना भवताम्। तदेवं कारणस्य सामान्यधर्म्मा एव गम्या न विशेषधर्म्माः, कार्यस्यापि विशेषधर्म्मा एव गमका न सामान्यधर्म्माः, तत्कार्यत्वनियमात्। ये तु कारणस्य विशेषधर्म्मा यैस्तत्कार्यत्वनियमः कार्यमात्रस्य नास्तीति न ते गम्याः। ये च कार्यस्य सामान्यधर्म्मा द्रव्यत्वादयस्तेषामपि तत्कार्यत्वनियमाभावादेव गमकत्वं नास्तीति कार्यकारणभावेन गमकत्वे कुतः सर्व्वथा गम्यगमकभावः परेषामिव प्रसज्येत?।

[§ २. जन्यजनकभावस्य सर्वथा सत्त्वेऽपि गम्यगमकभावस्य न तथात्वम्।]

परस्यानिष्टापादनमाशङ्क्याह – "अंशेन" इत्यादि। यदि हि कारणस्य सामान्यधर्म्मा एवं गम्याः कार्यस्यापि विशेषधर्म्मा एव गमकाः तत्कार्यत्वनियमादिष्यन्ते, हन्त तर्ह्यंशेन जन्यजनकभावः प्राप्तः। कारणस्य सामान्यधर्म्मा एव जनका न विशेषधर्म्माः, कार्यस्यापि विशेषधर्म्मा एव जन्या न सामान्यधर्म्मा इति स्यात्। सर्व्वथा च जन्यजनकभावोऽभिमत [T. 314a.] इत्यभ्युपगमविरोधः। एतत् परिहरति – नांशेन जन्यजनकभावप्रसङ्गः, निरंशत्वेन वस्तुनः सर्व्वात्मना तदभ्युपगमात्, गम्यगमकभावस्यापि सर्व्वथाऽभिमतत्वात्। तदाह – "तज्जन्य" – इत्यादि। यदि हि कार्यस्य तैः कारणगतैर्व्विशेषधर्म्मैर्जन्यो यो विशेषः स ग्रहीतुं शक्यते, तदा तज्जन्यविशेषग्रहणेऽभिमतत्वात् [S. 147a.] कारणगतविशेषधर्म्माणां गम्यत्वस्य। तथा लिङ्गविशेषो धूमत्वादिः उपाधिर्व्विशेषणं येषां द्रव्यत्वादीनां सामान्यानां कार्यगतानां तेषां चाभिमतत्वाद्गमकत्वस्य। तथा हि – अगुरुधूमग्रहणे भवत्येव तदग्नेरनुमानं धूमत्वविशेषणेन च द्रव्यत्वादिनाऽग्नेरनुमानम्। न हि सर्व्वथा जन्यजनकभावोऽस्तीत्येव तथैव गम्यगमकभावो भवति, तस्य ज्ञानापेक्षत्वात्। तथा हि – न सत्तामात्रेण लिङ्गस्य गमकत्वम्, तस्य ज्ञापकत्वात्[1]। ज्ञापको हि स्वनिश्चयापेक्षो ज्ञाप्यमर्थं ज्ञापयति, नान्यथा। कथं

१. ज्ञापकापेक्षत्वात् – T.

तर्ह्युक्तं[1] " तदभावे भवतः तदुत्पत्तिनियम(मा)भावात् " इति ?। सर्व्वथा जन्यजनकभावाभ्युपगमे [T. 314b.] तदभावे भावस्यैवाभावादित्यत आह – " अविशिष्ट " – इत्यादि । यदि हि तज्जन्यविशेषग्रहणरहितमविशिष्टं कार्यमात्रमुपादीयते लिङ्गविशेषोपाधिरहितं वा द्रव्यादिकं तदा " अविशिष्टसामान्यविवक्षायां " कारणगतविशेषाभावेऽपि धूममात्रस्य भावात् तदविशिष्टस्य च द्रव्यत्वादेरग्न्यभावेऽपि भावाद् व्यभिचार इति सर्व्वथा [S. 147b.] जन्यजनकभावो नेष्यते, तदभावाद् गम्यगमकभावश्च । न तु विशेषविवक्षायाम्, तत्र व्यभिचाराभावात् । तथा हि – यदि नाम धूममात्रं तार्णपार्णादिविशेषाभावे भवति, न तु तज्जन्यो विशेषः, स यदि ग्रहीतुं शक्यते, तदा विशेषस्य गम्यत्वमस्त्येव, निश्चितस्यैव लिङ्गत्वात् । तथा यद्यपि द्रव्यत्वसत्त्वमात्रमग्न्यभावेऽपि भवति न तु धूमात्मकमिति तद्विशिष्टस्याव्यभिचाराद् गमकत्वमपि न वार्यत इति ।

[ § ३. कार्यकारणभावप्रतीतेरतिदुर्लभत्वाशङ्काया निरासः । ]

अत्र परस्य वचनावकाशमाशङ्क्याह – " कस्यचित् " धूमादेः " कदाचित् " कस्मिंश्चित् काले " कुतश्चित् " अग्न्यादेः " भावेऽपि " सति " सर्व्वो " धूमादिः "तादृशो" यादृश एकदाऽग्न्यादेर्भवन् दृष्टः तज्जातीयः, " तथाविधजन्मा " यथाविधात् स एको भवन् दृष्टः तादृशादेव जन्म यस्य स । " तथाविधजन्मेत्येतत् कुतः " प्रमाणादवसितम् ? येनोच्यते [T. 315a.] 'कार्यहेतौ कार्यकारणभावसिद्धिनिबन्धनावन्वयव्यतिरेकौ' इति । तथाहि – यदि नाम प्रत्यक्षानुपलम्भाभ्यां कस्यचिद्धूमस्याग्न्यादिसामग्रीकार्यत्वमवगतं किमेतावताऽन्यस्यापि [S. 148a.] तादृशस्य तादृशकार्यता सिध्यति, तत्र तन्निबन्धनयोः[2] प्रत्यक्षानुपलम्भयोरव्यापारात् । यत्रैव हि तयोर्व्यापारस्तस्यैव तत्कार्यता भवतु, तदन्यस्य तु किमायातम् ? येन तथाविधादस्य जन्म स्यात् । एवं हि कस्याश्चिद्धूमव्यक्तेरग्न्यादिजन्यता दृष्टेति किन्न घटादेरपि साऽभ्युपगम्यते ? अन्य-

१. पृ० १५१ पं० १. । २. कार्यकारणभावनिव° ।
२० हे.

त्वेन विशेषाभावात्। क एवं सति दोषः? इति चेत्; तथा च प्रमाणाभावेन तथाविधजन्मत्वानिश्चयादतादृशादपि जन्माशङ्कायां तादृशस्य धूमादेरग्न्यादिनाऽन्वयव्यतिरेकौ न निश्चिताविति कुतः कार्यहेतोर्गमकत्वम्?। न हि योऽसावेको देशकालावस्थानियतोऽग्निविशेषहेतुको धूमोऽधिगतः प्रत्यक्षानुपलम्भाभ्यां तस्यैवान्वयव्यतिरेकौ प्रतिपत्तव्यौ। तस्य देशान्तरादावसम्भवात्। किं तर्हि?। तादृशस्य सामान्यात्मन एव लिङ्गत्वात् तस्य चातथाविधादपि जन्माशङ्कायां कुतस्तथाविधेनान्वयो व्यतिरेको वा?। तदुक्तम् –

"अवस्थादेशकालानां भेदाद् भिन्नासु शक्तिषु।
[T. 315b.] भावानामनुमानेन प्रतीति[1]रतिदुर्लभा॥" [वाक्य १. ३२.] इति[2]।

सिद्धान्तवाद्याह – "न, अतद्भाविनः" इत्यादि। एवं मन्यते– इहैकदा धूमादेरग्न्यादिसामग्रीजन्यतया [S. 148b.] प्रत्यक्षानुपलम्भाभ्यां निश्चितरूपत्वेऽपि तादृशस्यातादृशादपि भावः समाशङ्क्यते यथापरिदृष्टादन्यत्वेन। तत्र योऽसावग्न्यादिसामग्रीजन्यो धूमविशेष एकदा निश्चितस्तदपेक्षया यथाऽन्यो धूमविशेषस्तादृशो योऽन्यादृशादपि–भावानां विचित्रशक्तितया–भवेदिति शङ्क्यते, तथा सोऽप्येकदाऽग्न्यादिसामग्रीजन्यतया निश्चितस्तदन्यापेक्षया तादृश एव। तत्र यदि तदन्यस्य तादृशस्यातादृशाज्जन्म स्यात् तदा[3] तादृशस्य स्वभावस्य नाग्न्यादिसामग्रीजन्यस्वभावतेति[4] परिदृष्टस्यापि धूमस्य नाऽग्न्यादिसामग्री कारणमित्यायातम्। तादृशस्य स्वभावस्याऽग्न्यादिसामग्रीविलक्षणकारणजन्यस्वभावत्वात्। ततश्चाग्न्यादिसामग्र्या अकारणत्वात् यो मयैकदा ततो भवन् दृष्टो धूमः सोऽपि न भवेत्। नहि यद् यस्य कारणं न भवति तत् ततः सकृदपि जायते, तस्याहेतुकत्वप्रसङ्गादिति। "अतद्भाविनः" इति तच्छब्देन विवक्षितमग्न्यादिकारणं परिगृह्यते, न तत् अतत्, तद्विलक्षणं अतादृशं शक्रमूर्द्धादिकम्, अ[5]तस्माद् भवितुं [T. 316a.] शीलं

१. प्रसिद्धि° – वाक्य°। २. इति चेत्। सिद्धा° T.। ३. तदाऽताद° T.। ४. °तेत्यप° T. ५. तस्मात् – T.।

यस्य तस्यातद्भाविनस्तादृशस्य तल्लक्षणस्य धूमवस्तुनः "सकृदपि" एकदाऽपि [S. 149a ] "ततः" अग्न्यादेः "अभावाद्" भावविरोधात् । भवति च तादृशोऽग्न्यादिसामग्रीतः ततस्तादृशस्य स्वभावस्य तादृशमेव कारणमित्यवगम्यते सकृत्प्रवृत्ताभ्यामेव प्रत्यक्षानुपलम्भाभ्यामिति कुतो व्यभिचाराशङ्का ?। तेन यादृशो धूमोऽग्न्यादिसामग्र्या भवन् दृष्टः सकृत् तादृशस्य तस्य तज्जन्यस्वभावतया तादृशादेव भावात् 'यत्र धूमस्तत्राग्न्यादिसामग्री' इत्यन्वयव्यतिरेकनिश्चयः ।

अथवाऽन्यथा व्याख्यायते – इह प्रत्यक्षानुपलम्भनिबन्धना कार्य्यकारणभावसिद्धिः प्रागुक्ता तन्निबन्धनावन्वयव्यतिरेकौ प्रतिपादयितुम्, तच्चायुक्तम् । तथा हि –"कस्यचित्" धूमस्याग्न्यादिसामग्र्यनन्तरभाविन आद्यस्य "कदाचित्" प्रथमोत्पादकाले "कुतश्चिद्" अग्न्यादिसामग्र्याः " भावेऽपि " उत्पादेऽपि "सर्व्वस्तादृशो"[2] यादृशः प्रथमक्षणभावी धूमो द्वितीयादिक्षणेष्वपि तादृशः प्रत्यक्षत एव तस्य पूर्व्वक्षणाविलक्षणतया प्रतीतेः । "तथाविधजन्मा" इति यथाविधादग्नीन्धनसामग्रीलक्षणात् कारणादाद्यो धूमक्षण उत्पन्नस्तथाविधाज्जन्म यस्य स "तथाविधजन्मेत्येतत् कुतः " नैव तस्य धूमादेरभावात् [T. 316b.] । एवं च यद्यतो दृष्टं तस्यान्यतोऽपि भावस्य दर्शनात् सर्व्वत्रानाश्वास [S. 149b.] इति मन्यमान आह – " तथा च " अनग्नितो धूमादपि धूमस्य भावे शक्रमूर्द्धादेरपि तस्य भावाविरोधादग्निना धूमस्य नान्वयव्यतिरेकाविति चेन्मन्यसे इति पूर्व्वपक्षाशङ्का ।

तदुक्तम् –

" क्षणिकत्वे कथं भावाः क्वचिदायत्तवृत्तयः ।
प्रसिद्धकारणाभावे येषां भावस्ततोऽन्यतः ॥
अतश्चानग्नितो मादू यथा धूमस्य सम्भवः ।
शक्रमूर्द्धस्तथा तस्य केन वार्येत संभवः ॥ " इति ।
(न)

सिद्धान्तवाद्याह – नाऽग्नीन्धनसामग्रीजन्यो यादृशो धूमस्तादृश एव धूमादपि भवति कारण[3]भेदेन[4] । कुतश्चित् साम्यात्

१. तुमिष्टौ त° – T. । २. °शो न यादृ° T. । ३. कारणशक्तिभे° T. । ४. T. adds स्वयं ।

सरूपतयाऽवसीयमानस्याप्यन्यादृशत्वात् । तादृशो ह्यग्नीन्धनसामग्रीक्षणान्तरजन्य आद्य एवापरः क्षणस्तथा तदन्य आद्य एवापराग्नीन्धनसामग्रीजन्य इति तादृशस्य धूमस्य धूमादसम्भवात् न क्वचिदनाश्वासः कार्यः । तथा यादृशो द्वितीयक्षणभावी प्रथमधूमक्षणजनितो धूमक्षणस्तादृशोऽपरप्रथमधूमक्षणजनित एव द्वितीयो धूमक्षणो न तृतीयादिः । एवं तृतीयक्षणादिष्वप्यङ्कुरादिषु च सर्व्वत्र वाच्यम् । कुतः पुनरयं विभागः ? इति चेत्, आह – "अतद्भाविनः" अतस्मात् – अनग्नीन्धनादिरूपाद् धूमाद् [T. 317a] भवनशीलस्य प्रथमक्षणाविलक्षणस्य धूमस्य "सकृदपि" [S. 150a.] एकदापि "ततः" अग्न्यादिसामग्र्याः "अभावाद" भावायोगाद् । यथा हि प्रथमक्षणापेक्षया द्वितीयस्तादृशस्तथा तदपेक्षया प्रथमोऽपीति तादृशत्वाविशेषात् तादृशस्यानग्नितो भावे तादृशो नाग्निजन्यस्वभावः इति सकृदपि ततो न भवेत् । भवन् वा तज्जन्यस्वभावतामात्मनस्तादृशः ख्यापयतीति कुतोऽन्यादृशाद् भवेत् ? तस्मादन्यादृशाद् भवन्नन्यादृश एव ततो न व्यभिचारः ।

[ § ४. भिन्नकारणजन्यानां धूमानां अतादृशत्वेऽपि सादृश्यात् तादृशत्वाभिमानः । ]

ननु सर्व्वेषां धूमक्षणानां[1] कण्ठक्षणनाक्षिस्रुतिकालीकरणादिकायामर्थक्रियायामुपयोगात् कथं तादृशस्वभावता न स्यात् ? । न, तस्या अप्यर्थक्रियायाः क्षणभेदोपधीयमानरूपायाः तादृशत्वाभावात् तत्रापि तुल्यदोषत्वात् । कथं तर्हि लोके सर्व्वत्र धूमव्यवहारः इति चेत्; सदृशापरभावनिबन्धनैकत्वाध्यवसायवशात् क्षणैर्व्यवहारायोगाच्च[2] । सादृश्ये सति कथं न तादृशता ? इति चेत् । तादृशादन्यत्वात् सदृशस्य । तथा हि – गोसदृशो भवति गवयः न तु तादृशः, गोरेवापरस्य तादृशत्वात् । परमार्थेनातादृशेऽपि तादृशाभिमानो [S. 150b.] मन्दमतीनां भवन् कथं निवार्येत ? । तथा हि – तत्त्वाध्यवसायोऽपि तावद् – अतस्मिन्नर्व्वाग्दृशां [T. 317b.] विनिवारयितुं न पार्यते, किमङ्ग पुनस्तादृशत्वाध्यवसायः ? यथोक्तम् –

---

१. °नां वर्णकालीकरणादि° – T. । २. °हारयो° T.

" समानवर्णसंस्थाने सन्तानेऽन्यत्र जायते ।
अतस्मिंस्तन्मतिः पुंसां किमुतैकत्र संततौ ? ॥ " इति ।

तत्त्वचिन्तकास्तु तादृशातादृशकारणभेदात् तादृशातादृशतां भावानां अनुमन्यन्ते न तादृशताम्। तद् यद्यतादृशादपि तादृशो भवेत् तदा तस्य तज्जन्यः स्वभाव इत्यतद्भाविनः सकृदपि ततो भावो न स्यात् । अमुमेवार्थं समर्थयमान आह – " परस्परापेक्षया " इत्यादि । कारणापेक्षया हि जन्यस्वभावं कार्यम्, कार्यापेक्षया च जनकस्वभावं कारणम् । यतो हि कारणाद् यद् भवद् दृष्टम् तस्य तज्जन्यस्वभावः, इतरस्य च तज्जनक इति प्रतीयते । अन्यथा तस्य ततो भावायोगात्, इतरस्य च तज्जननायोगात् । यदि नामैवं ततः प्रकृते किं सिद्धम्? इत्यत आह – " तत्र " एतस्मिन् न्याये सति " यदि धूमो " यादृश आद्योऽग्न्यादिसामग्रीजनितस्तादृशो द्वितीयादिक्षणभावी " अग्न्यादिसामग्र्या " [S. 151a.] अग्नीन्धनादिकारणकलापात् तज्जनकस्वभावतया निर्द्धारिता[1]-"दन्यतो"ऽग्नीन्धनादिसामग्रीजनितादाद्याद्धूमक्षणाद् भवेत् । तदा " तस्य " तादृशस्य धूमस्वभावस्य "तज्जन्यो"ऽग्न्यादिसामग्रीजन्यः " स्वभावो न भवति " किन्तु धूमजन्य एवेति कृत्वा सकृदपि "ततो"-ऽग्न्यादिसामग्रीतो " न भवेत " । तादृशस्य हि [T. 318a.] स्वभावस्यान्यतो भावे तज्जन्यस्वभावता, नाग्न्यादिजन्यस्वभावतेति कुतः सकृदपि ततो भावो[2] युज्येत । अत्र दृष्टान्तः " अर्थान्तरवद् " इति । यथा [3]ह्यर्थान्तरमतज्जन्याभिमतमन्यतो भवत् न तज्जन्यस्वभावं नाग्न्यादिसामग्रीजन्यस्वभावमिति सकृदपि ततो न भवति तद्वत् तादृशो धूमोऽपीति ततो भवन्नन्यादृश एवासाविति गम्यते ।

स्यान्मतम् – अग्न्यादिसामग्र्याऽसावतज्जन्यस्वभावोऽपि तादृशो बलाज्जन्यते कस्तस्य तपस्विनोऽपराधः? इत्यत आह – " नापि " न केवलं स्वयमतज्जन्यस्वभावतया ततो न भवेत्, किन्त्वग्न्यादिसामग्र्यपि तं तादृशं धूमं–यादृशो द्वितीयादिक्षण-

१. निवारिता° T. । २. भावो न यु° T. । ३. ह्यङ्कुराद्यर्था° – T. ।

भावी–न जनयेत्। कुतः ?। अतज्जननस्वभावत्वात्। तादृशस्य ह्यन्यतो भावे स एव तज्जननस्वभावो नाग्न्यादिसामग्रीति तज्जननस्वभावविकला कथं तं जनयेत् ?। अत्राप्युदाहरणम् – "सामग्र्यन्तरवदिति"। यथा सामग्र्यन्तरमतज्जननस्वभावाभिमतं [S. 151b.] न जनयति तद्वदग्न्यादिसामग्र्यपि। तथा हि – सा आत्मीयं स्वभावमनुसृत्यैव प्रवर्त्तते, ततः कुतोऽसौ सामग्रीबलाज्जायेत ?।

[ § ५. तादृशातादृशजन्यत्वे कार्यस्यापि तादृशातादृशत्वम्। ]

स्यान्मतम् – अग्न्यादिसामग्रीजन्यस्वभावोऽपि तादृशो धूमो[1] धूमजन्यस्वभावोऽपि यथा स एव धूम इन्धनजन्यस्वभावोऽग्निजन्यस्वभावश्चोभयतो [T. 318b.] भवति। तथा तादृशोऽपि धूम उभयसामग्रीजन्यस्वभावतयोभयतो भविष्यतीत्यत आह – "न च" नैव "धूमस्य" तादृशस्य "तदतज्जन्यः" अग्न्यादिसामग्रीजन्यो धूमजन्यश्च "स्वभावो युक्तः" युक्त्या सङ्गतः। कुतः ? "एकस्वभावत्वात्"। तादृशस्य धूमरूपस्य भेदाभावात्। नहि तस्य कालभेदेऽपि तादृग्रूपता भिद्यते। भेदे ह्यन्यादृशस्यान्यादृशाद्भावे विवादायोगात्। तस्य यदि तादृशातादृशकारणजन्यता स्यात् ततस्तादृशातादृशस्वभावतैव स्यात्। तदेव दर्शयन्नाह – "धूमाऽधूम" – इत्यादि। धूमशब्देन यादृशोऽग्न्यादिसामग्रीजन्यस्तादृशः स्वभावोऽभिप्रेतः, अधूमशब्देनान्यादृशकारणजन्यो धूमजनितोऽन्यादृशः। तयोश्च तादृशातादृशकारणजन्यतयैव तादृशातादृशस्वभावताऽवगन्तव्या वक्ष्यमाणनीत्या। तेनाग्निधूमलक्षणात् "धूमाधूमजननस्वभावात्" तादृशातादृशजननस्वभावात् [S. 152a.] तादृशातादृशतयाऽस्य भवतो धूमाधूम[स्वभाव]स्तादृशातादृशस्वभावः स्यात् कुतस्तादृश एव ?। कुत एतत् ? इत्याह – "कार्यस्वभावानाम्" इत्यादि। कार्याणां हि ये स्वभावाः परस्परासंभविनः ते परस्परविलक्षणकारणसामग्रीस्वभावकृता न स्वाभाविका अहेतुकत्वप्रसङ्गात्। [T. 319a.] ततस्तादृशातादृशाद् भवतो धूमस्य तादृशातादृशस्वभावतैव[3] स्यात्।

१. धूमोऽधूम – T.। २. °मांद्धूमज° T.। ३. °व न स्यात्° T.।

स्यान्मतम् – नैव तादृशातादृशस्वभावतायां तादृशातादृशकारणापेक्षा, कार्याणामुत्पत्तिमात्र एव कारणापेक्षणादित्यत आह – "अकारणापेक्षणे च" तादृशातादृशरूपतायां तादृशातादृशकारणानपेक्षणे च तादृशातादृशतायाः "अहेतुकत्वप्रसङ्गात्"। न हि तादृशातादृशस्वभावयोरभूत्वा भावव्यतिरेकेणान्या काचिदुत्पत्तिः यत्र[2] तादृशातादृशस्वभावकारणनिरपेक्षाणामपि तदपेक्षा स्यात्। तस्मादुत्पत्तिशब्देन तादृशातादृशस्वभावतैवोच्यत इति। [S. 152b.] तत्र कारणापेक्षोपगमे कथं तादृशातादृशतायां कारणापेक्षा न स्यात्। तस्मात् सामग्रीणां तादृशातादृशत्वादेव कार्याणां तादृशातादृशस्वभावविभाग इति कुतोऽन्यादृशात्तादृशसम्भवः? इति।

यत्तूक्तं 'यथैको धूमोऽग्नीन्धनाभ्यां विलक्षणाभ्यां जन्यते तथैकलक्षणमपि कार्यं विलक्षणादपि सामग्र्यन्तराद् भविष्यति' इति। तदयुक्तम्। यतो नास्माभिर्विलक्षणानां जनकत्वं वार्यते जनयन्त्येव परस्परविलक्षणा अपि स्वहेतुपरिणामोपनिधिधर्माणस्तदवस्थानियताः तदेकं कार्यं, तस्य तु तेषां च परस्परापेक्षया [T. 319b.] जन्यजनकस्वभावतानियमात् तादृशस्य तादृशादेव जन्मोच्यते नान्यादृशात्, तस्यातज्जननस्वभावत्वात्, तदभावेऽप्यन्यतो भवतस्तदुत्पत्तिनियमाभावात्। अनियमे च [S. 153a.] कार्यकारणभावायोगात्। यदि त्वग्निरिवेन्धनोपादानोपकृतस्तदुपादानोपकृतं चेन्धनमिव तदवस्थानियतमतादृशमपि धूमादिकं[3] तादृशं धूमं जनयेत् प्रत्यक्षानुपलम्भाभ्यां च तथाऽवगम्येत तदाऽग्न्यादिवत् सोऽपि तज्जननस्वभावतानियमात् तादृशजनकः केन नानुमन्येत। तदभावेऽपि[4] तु तादृशस्य भावे तयोर्जन्यजनकस्वभावतानियमाभावात् कुतः कार्यकारणतेत्यहेतुतैव तादृशस्यान्यादृशाद् भवतः स्यात्। यत एवं "तस्मात्" सोऽग्नीन्धनादिसामग्रीविशेषो मन्तव्यो "यः" आद्य"धूमजननो" नान्यः "स" धूम आद्यो यः "ग्न्यादिसामग्रीविशेषेण" जनितो नान्य अ

१. °पेक्षणमभिमतमित्यत – T.। २. उत्पत्तौ। ३. °कं अतादृ° T.। ४. धूमव्यतिरिक्तसामग्र्यभावे।

इति कृत्वा कार्यकारणयोरेवं यथोक्तेन न्यायेन जन्यजनकरूपस्य स्वभावस्य नियमाद्[1] यादृशं यस्य कारणमेकदा प्रत्यक्षानुपलम्भाभ्यामेवावधारितं "तद्विजातीयात्" ततोऽन्यादृशात् कारणात् "उत्पत्तिः" तादृशस्य [S. 153b.] कार्यस्य "न भवति" अन्यादृशस्य एव न वार्यत इति।

तदेवं तादृशातादृशकारणकृतकत्वं तादृशातादृशकार्यस्वभावस्य प्रतिपाद्योपसंहरन्नाह – "तत्" तस्मात् यादृशं [T. 320a.] कार्यं यादृशात् कारणात् दृष्टं प्रत्यक्षानुपलम्भाभ्यां निश्चितमेकदा तत् त"न्न व्यभिचरति" तादृशमन्यादृशान्न भवति। यनैवं "तेन" कारणेन "सिद्धे कार्यकारणभावे" तादृशस्य "कार्यस्य" तादृशमेव कारणमिति निश्चये सति यथोदितेन न्यायेन "कार्यस्य कारणेन व्याप्ति"रन्वयव्यतिरेकरूपा "सिद्धा" भवति।

"न विजातीयादुत्पत्तिरिति" दृष्टकारणविजातीयात् कारणादन्यादृशान्नोत्पत्तिरित्यमुमर्थमप्रतिपद्यमानः कार्यस्य विजातीयात् कारणान्नोत्पत्तिरित्ययमत्रार्थोऽभिमत इति मन्वानः परश्चोदयन्नाह – "ननु" स्वतो "विजातीयादपि" कारणात् "किञ्चित्" कार्यं "भवद् दृष्टं" तत् [S. 154a.] कथं न विजातीयादुत्पत्तिरित्यस्य न दृष्टविरोधः स्यात्। कथं यथा इत्याह – "तद् यथा गोमयादेः" आदिग्रहणात् शृङ्गचन्द्रकान्तादेः "शालूकादि" आदिग्रहणाच्छरोदकादि। तथा हि – गोमयाच्छालूकस्य भावः शृङ्गाच्छरस्य चन्द्रकान्तादपाम्। न च गोमयादिकं शालूकादेर्न्न विजातीयम् तत् किंमुच्यते न विजातीयादुत्पत्तिः इति। सिद्धान्तवादी परस्य भ्रांततां दर्शयन्नाह – "न विजातीयादुत्पत्तिः" इति। यतो हि कारणाद् यद् भवद् दृष्टं तत् ततोऽन्यादृशान्न भवति इत्ययमत्रार्थो विवक्षितः, न तु कार्यविजातीयादिति। न च तस्य[3] व्यभिचारः। तदाह – "तथाविधमेव हि" गोमयादिरूपं "तादृशां" शालका[4]दीनामा"दिनिमित्तं" शालूका[4]दिप्रबन्धस्य य आदिः प्रथम आरम्भक्षणः तस्य कारणमिति कृत्वा शालूका[4]दिप्रबन्धस्यादेर्न्न कार-

१. °नियमदर्शनात् यस्य T. । २. दृष्टान्तः T. । ३. तत्र T. । ४. उत्पला° T. ।

णभेदोऽन्यादृशादुत्पत्तिः। [T. 320b.] सर्व्वस्य तदाऽऽदेर्ग्गोमयादिनिमित्तत्वात्। यदा तु प्रबन्धेन पूर्व्वक्षणनिमित्तानामुत्तरोत्तरक्षणानां सन्ताननोत्पत्तिलक्षणा वृत्तिर्भवति शरस्य तदा शराद्भवः। तदेवं यस्य प्रबन्धादेः शृङ्गादिभ्यो भावो न तादृशस्य शरादेः यस्य च [S. 154b.] शरादेस्तदुत्तरोत्तरस्य भावो न तादृशस्य शृङ्गादेरिति न दृष्टकारणविजातीयात् कारणात् तादृशस्य सम्भव इति कार्यहेतोरन्वयव्यतिरेकनिश्चयः।

यदाऽपि शालूकादयः पूर्व्वपूर्व्वस्वजातिनिबन्धना अनादिसन्तानप्रवृत्ता इष्यन्ते तदाऽपि गोमयादिभ्यः केषाञ्चिद्भावेऽपि तादृशत्वाभावान्न व्यभिचार इति दर्शयन्नाह – "अस्ति च" इत्यादि। यस्य शालूकसन्तानस्य गोमयादि कारणं यस्य च सर्व्वदा स्वजातिनिमित्तत्वं तयोर्गोमयेतरजन्मनोः शालूकयोरस्त्येव स्वभावभेदः परस्परमन्यादृशत्वं "रूपस्याभेदेऽपि" सति। तुल्याकारत्वे सति कथमन्यादृशत्वम्? इति चेत्, आह – "नहि" इत्यादि। यस्मान्नाकारतुल्यतैव भावानां "तत्त्वे" तादृशत्वे निमित्तम् यतो गोमयेतरजन्मनोः शालूकयोराकारसाम्यात् तादृशत्वमेव स्यान्न जातिभेदः। कुत एतत्? इत्याह – "अभिन्नाकाराणामपि" इत्यादि। येषामपि हि समानाकारता [S. 155a.] केषाञ्चिद्भावानां तेषामपि यत आकारादन्यतो [T. 321a.] विशेषाज्जातिभेदो दृश्यते ततो नाकारसाम्यमेव जात्येकत्वे निबन्धनम्। तथा हि – आकारसाम्येऽपि क्वचित् पुष्पाद् भेदो दृश्यते नीलेतरकुसुमयोरिव सूर्ययोः, क्वचित्फलात् वन्ध्येतरयोरिव कर्क्कोटक्योः, क्वचिद् रसाद् वन्येतरयोरिव त्रपुषयोः, क्वचिद् गन्धाद् वृक्षेतरप्रभवयोरिव चम्पकयोः, क्वचित् प्रभावात् स्पर्शोपयोगसंसिन्योरिव हरितक्योरिति। तस्मादाकारसाम्यनिबन्धनं यद्यपि 'तदेवेदम्' इति प्रत्यभिज्ञानं सजातीयतां गोमयेतरजन्मनोः शालूकयोरुपकल्पयति तथापि विलक्षणसामग्रीजन्यतया तयोर्जातिभेद एवावगन्तव्यः, नैकजातिता। तत एव प्रत्यभिज्ञानस्य भ्रान्ततया तत्कल्पितस्य तादृशत्वस्यालीकत्वात्।

१. शरोद्भवः – T.। २. शृङ्गादेरन्यादृशस्य भाव इति T.। ३. स्वजात्यनुबन्धना– T.।

[ § ६. विलक्षणसामग्र्या अविलक्षणकार्यजनकत्वे दोषाः। ]

यदि पुनर्गोमयेतरादिजन्मनः शालूकादेरग्निधूमादिजन्मनो वा धूमादेः प्रत्यभिज्ञावशाद् विलक्षणसामग्रीनिबन्धनत्वेऽपि समानस्वभावतैव स्यात् को दोषः स्यात्? इत्यत आह – "अन्यथा हि" इत्यादि। यदि [S. 155b.] हि या स्वजाति[लक्षणप्रत्यया-न्तरसहिता सामग्री या च] स्वजातिनिरपेक्षा गोमयादिरूपा शालूकादेः, धूमस्य वा याऽग्नीन्धनादिलक्षणा [T. 321b.] या च शक्रमूर्द्धादिस्वभावा धूमाद्यात्मिका अवि(°का तस्याः वि)लक्षणाया अपि सामग्र्या अविलक्षणं तादृशमेव कार्यं धूमशालूकादिकमुत्पद्येत तदा न 'कारणस्य' सामग्रीरूपस्य "भेदाभेदाभ्यां" वैलक्षण्यावैलक्षण्याभ्यां कार्यस्य "भेदाभेदौ" वैलक्षण्यावैलक्षण्ये तज्जातीयविजातीयात्मके स्यातामिति कृत्वा "विश्वस्य" सकलस्य पदार्थराशेः "अहेतुकौ भेदाभेदौ" सजातीयविजातीयत्वे स्याताम्। तस्माद् यत्र विलक्षणा सामग्री तत्र कुतश्चित् साम्यात् सरूपत्वेऽपि विजातीयतैव कार्यस्येति।

ननु धूमेन्धनादिसामग्रीभेदेऽपि धूमस्य न जातिभेदमामनन्ति विद्वांसः, अतद्रूपपरावृत्तेरुभयत्र समानत्वात्, नैष दोषः, क्षणभेदाश्रयसूक्ष्मावान्तरजातिभेदेऽपि स्थूलसन्तानाश्रयविजातीयव्यावृत्तेः समानत्वात्। शावलेयाद्यवान्तरजातिभेदेप्यगोव्यावृत्तिनिबन्धनगोजातिवद् गवां [S. 156a] सर्व्वधूमानामेक[1]सन्तानव्यवस्था[2]व्यु(प्यु)पादानकारणक्षणभेदेऽप्येकाकारप्रत्ययनिबन्धनतया समानत्वात्। आद्यस्येन्धनप्रभवस्य कथम्? इति चेत्। न। ईन्धनजात्यनुविधानात् सर्व्वधूमानाम्। तथा हि – अगुरुकर्पूरचन्दनादिजातिभेदमनुकुर्व्वन्त्येव [T. 322a.] तद्धूमाः, कासश्वासादिहरद्रव्यनिर्म्मितवर्त्तिभेदं च तद्धूमाः, तद्रसवीर्य[3]विपाकानुविधानात्। न चा[4]कारान्यतया विजातीयत्वम्, यतो नाकाराऽभेदभेदनिबन्धने सजातीयविजातीयत्वे। नहि शा-

१. °मेकजातिव्य° T.। २. एकसन्तानरा(°नव्य)वस्थेति सम्बन्धः। ३. तद्रसकार्यवि° T.। ४. च कारणजन्यतया T.।

त्यङ्कुरादयः तद्बीजाद्याकारमनुकुर्वते। न च तज्जातीयताम-शाल्यादिव्यावृत्तिनिबन्धनां नानुभवन्ति। तस्माद् इन्धनमेव तस्योपादानकारणम् अग्न्यादिसहकारिप्रत्ययाहितविशेषं तथा-विधं धूमकार्यमङ्गारादि भिन्नाकृति जनयतीत्यलमतिप्रसङ्गेन।

ननु च यदि नाम सामग्रीभेदेऽपि कार्यस्य भेदो न जातः तदा कारणभेदे सत्यपि तस्याभावात् तस्याहेतुकताऽस्तु, अभे-दस्य तु किमायातम्? येनोभयोरहेतुकत्वमुच्यते इत्यत आह — "तथाहि" इत्यादि। यदा हि सामग्रीभेदे [S. 156b.] सत्यपि कार्यस्य भेदो न जात इति तस्याहेतुकत्वम् — न हि हेतौ स-त्यभवतः कथञ्चिदपि हेतुमत्तोपपद्यते — तदा योऽप्यसावभेदः[1] कार्यस्य सोऽपि सामग्र्योः[2] भिन्नत्वादसत्यभेदे[3] जात इति कुत-स्तस्यापि हेतुमत्ता?। यथा हि हेतौ सत्यभवतो न हेतुमत्ता तथा हेतावसत्यपि भवतो हेतुमत्ता कुतः स्यात्?। हेतुभेदस्यैवाऽभे-दनिबन्धनत्वात् न इति चेत्; न तर्ह्ययं भेदः क्वचित् पदमाब-ध्नीयात्, शालीकोद्रवादेरपि [T. 322b.] हेतुभेदस्याभेदहेतुत्वा-न्निमित्तमन्तरेण कल्पनायां विशेषाभावात्। प्रतिभासाभेदस्य च कुतश्चिद् भ्रान्तिनिमित्तात् परमार्थतो भेदेऽप्युपलक्षणात्। स्यादेतत् - यो ह्यतादृशादपि तादृशोद्भवमिच्छति तस्य भेदा-भेदयोरहेतुकत्वमिष्टमेव भावा एव केवलं हेतुमन्त इत्यत आह — "तद्व्यतिरिक्तश्च" इत्यादि। नहि भेदाभेदव्यतिरिक्तः कश्चिद् भावानां स्वभावोऽस्ति यस्तयोरहेतुकत्वेऽपि हेतुमान् स्यात्। तस्य ताभ्यामन्यत्वे 'अस्येमौ भेदाभेदौ' इति[4] [S. 157a.] स-म्बन्धाभावप्रसङ्गात्, तदन्यसम्बन्धकल्पनायामनवस्थादोषात्, अनन्यत्वेऽपि भेदाभेदयोर्भावस्वभावस्य च स्वात्मन्येवावस्था-नात्[5] अनुपकाराच्च कुतः सम्बन्धिता?। उपकारकल्पनायां च यदि भावस्वभावः स्वहेतुभ्य एव न कुतश्चिद् भिन्नोऽभिन्नो वा समुत्पन्न इतीष्यते, तदा तद्भावेऽपि[6] स्वभावान्यथात्वाभावात् कुतो भिन्नाभिन्नता भावस्वभावस्य स्यात्?। अथ व्यतिरिक्त-

---

१. °दः सर्वस्य – T.। २. °पि कारणस्य T.। ३. °दभेदे T.। ४. इत्याकारस° T.। ५. स्वात्मना एव T.। ६. भेदाभेद°।

भेदाभेदवशाद् भेदाभेदौ स्वभावः प्रतिपद्येत, तावपि यदि भिन्नौ तदा भावस्वभावस्तदवस्थ एवेति न तस्य कुतश्चित् स्वरूपतो भेदोऽभेदो वा स्यात्। पुनस्तद्वशाद् भेदाभेदकल्पनायां भावस्वभावस्य तदवस्थं तादवस्थ्यमनवस्था [T. 323a.] च भेदाभेदयोः। अथाभिन्नौ तदा भावस्वभाव एव भेदाभेदाभ्यां क्रियत इति स्यात्, तस्य रूपान्तरेण करणासम्भा(म्भ)वात्; तस्य च हेत्वन्तरात् पश्चाद् भवतस्ततोऽन्यत्वापत्तेः। न च भावस्वभावः क्रियते, तस्य स्वहेतोरेव निर्वृत्तेः। स्वहेतुभ्य एव भावस्वभावस्य कुतश्चिद् भिन्नाभिन्नात्मन उत्पत्तिकल्पनायां वा भेदाभेदयोर्व्यतिरेकवतोः वैयर्थ्यम्; [S. 157b.] भेदाभेदबुद्धेरपि तत एव सिद्धेः। तस्माद् वैशेषिकादिकल्पितयोर्भेदाभेदयोर्[1]विशेषसामान्यात्मनोरयोगात् भावस्वभाव एव भेदाभेदशब्दवाच्यः तयोरहेतुकत्वे भावस्वभावस्यैवाहेतुकत्वमापतितम्। ततो भावानामहेतुकत्वान्नित्यं सत्त्वमसत्त्वं वा स्यात्। अहेतुकत्वे हि भावानां यदि कदाचित् सत्त्वं सर्व्वदैव स्यात्। अथ कदाचिदसत्त्वं तदपि सर्व्वदा स्यात्। कादाचित्कत्वं तु सत्त्वस्यायुक्तम्। किं कारणम्?। अपेक्ष्यस्याहेतुकत्वे सति कस्यचि[3]दभावात्। यस्मा"दपेक्षया हि" तस्यापेक्षणीयस्य हेतोर्भावे भवन्तोऽभावे च न भवन्तः "कादाचित्काः" कदाचिद्भवा युज्यन्ते, नान्यथेति। तस्मान्न विलक्षणात् कारणात् अविलक्षणस्य कार्यस्योत्पत्तिरभ्युपगन्तव्या, यथोक्तेन न्यायेनाहेतुकत्वादिप्रसङ्गात्।

पुनरपि विलक्षणायाः सामग्र्याः [T. 323b.] अविलक्षणस्य कार्यस्योत्पत्तौ दोषान्तरमाह – "व्यवस्थावांश्च" प्रतिनियतः "साध्येषु" घटपटादिषु "साधनानां" मृत्तन्त्वादीनां लोके यो "नियोगो" घटार्थी मृत्पिण्डमेव तत्र नियुङ्क्ते न तन्तून्, पटार्थी च तन्तूनेव न मृत्पिण्डम् इत्यादिकः स न [S. 158a.] स्यात्। कस्मात्? इत्याह – "कारणानां" – सामग्रीणां याः "शक्तयः" – आत्मातिशयलक्षणास्तासां "प्रतिनियमे" काचिदेव सामग्री क-

१. भेदाभेद° । २. भेदाभेदयोः । ३. कदाचि° T. ।

चिदेव कार्ये उपयुज्यते नान्याऽन्यत्रेत्येवंरूपे "हि" यस्मात् "किञ्चिदेव" मृदादिकं "कस्यचिदेव" घटादेः साधनायोपादीयते "नापरं" तद्विलक्षणं तन्त्वादिकम् कस्मादेवम् ? इति चेत् ? "तस्यैव" मृदादेः "तत्र" घटादौ "शक्ते"र्योग्यत्वात् "अन्यस्य" तन्त्वादेस्तत्राशक्तेः । कस्मात्तस्यैव तत्र शक्तिर्नान्यस्य इत्यत आह "तयोः" मृदादेस्तन्त्वादेश्च "तज्जननस्वभावत्वेन" घटादिजननस्वभावत्वेन "इतरस्वभावत्वेन च" घटाद्यजननस्वभावेन च "भेदात्" अन्यत्वभावात् । नहि मृत्तन्त्वादिरूपतातोऽन्यदेव तज्जननेतरस्वभावत्वं नाम । यदा तु सामग्रीणां परस्परविलक्षणानामपि शक्तिप्रतिनियमो नेष्यते विलक्षणादपि अविलक्षणकार्योपगमात् [T. 324a.] तदा "तज्जननस्वभावविलक्षणादपि" धूमादिजननस्वभावं यत् कारणमग्नीन्धनादिसामग्रीलक्षणं तद्विलक्षणादपि शक्रमूर्द्धादेः क्षणाश्रयेण वा धूमादेस्तस्याग्नीन्धनादिसामग्रीजन्यस्य धूमस्य तत्क्षणस्य चोत्पत्ताविष्यमाणायां "न तज्जननशक्तेः प्रतिनियमो" विवक्षितधूमादिकार्यजननशक्तिप्रतिनियमः । "इति" तस्माद् "यत् किञ्चित्" कार्यं "यतः कुतश्चित्" कारणात् "स्यात्" उत्पद्येत, न[1] यथादृष्टमेव यथादृष्टात् । सर्व्वं [S. 158b.] सर्व्वतो जायेतेति यावत् । तस्माच्छक्तिप्रतिनियमः कारणानामभ्युपगन्तव्यः । ततो विलक्षणसामग्रीजन्मनः कार्यस्य कुतश्चित् साम्यात् सरूपस्योपलक्षणेऽप्यन्यादृशतैवेति सर्व्वस्तादृशस्तथाविधजन्मेति सिद्धम् ।

स्यान्मतम् – विलक्षणाया अपि सामग्र्यास्तल्लक्षणकार्यजननशक्तिः समानेति तल्लक्षणं कार्यं भविष्यति कस्याश्चिदेव च तथाभावान्न यथोदितदोषावसर इत्यत आह "तज्जननशक्तिसाम्ये तु" इत्यादि । उक्तमेव तावद् अत्र पूर्व्वपक्षे 'न च धूमस्य तदतज्जन्यस्वभावः' इत्यादिकं दूषणम् । अभ्युपगम्यापीदमाह – "यादृशी ह्यग्निसहकारिणः" तदाधीयमानविकारस्ये"न्धनस्य" स्वभेदेन[2] धूमभेदहेतोः [T. 324b.] "शक्तिः" आत्मातिशयस्तादृश्येव शक्रमूर्द्ध्नो[3]

१. यथादृष्टाद्यथादृष्टयोः T. । २. स्वभावभेदहे° T. । ३. शक्रमूर्द्धादेर्वा T. ।

धूमस्य वा यदि तत्सामग्रीजन्यधूमाविलक्षणकार्यजननशक्तिरात्मातिशयलक्षणा तदा तच्छक्तिसाम्ये तदेवाग्नीन्धनादिकमेवार्थान्नामान्तरेणोक्तं स्यात्, तद्विलक्षणस्य तदविलक्षणात्मातिशयासम्भवात्। स एव ह्यग्निर्य इन्धनविकारमादधानो धूमं जनयति, तच्चेन्धनं यदग्निनाऽऽधीयमानविकारं धूमं स्वजातिमनुकारयति। यदि [S. 159a.] च शक्रमूर्द्धादेरपि एवं भवताऽभ्युपगम्यते तदा केवलं नाम्नि विवादः स्यात्, अर्थाभेदमभ्युपगम्य तथाभिधानात्। यत एवम् "इति" तस्मात् "कार्यं" धूमादिकं "दृष्ट"मेकदा प्रत्यक्षानुपलम्भाभ्यां निश्चितमतद्रूपव्यावृत्तेनात्मना "कारण"मिन्धनादिकं सन्तानापेक्षया क्षणापेक्षया वा "न व्यभिचरति" तद्विलक्षणादन्यतो न भवतीति कार्यहेतावन्वयव्यतिरेकनिश्चयः सिध्यतीति।[1]

---

१. T. adds ब्राह्मणाचतेन विरचिते हेतुचिन्दुप्रकरणे कार्यहेत्वधिकारो द्वितीयः।

# [ ४. अनुपलब्धिहेतुनिरूपणम् । ]

[ § १. विप्रतिपत्तिप्रदर्शनपूर्वकमनुपलब्धेस्स्वरूपम् । ]

तदेवं कार्यहेतौ यतो यद्भवद्दृष्टं सकृत् प्रत्यक्षानुपलम्भाभ्यां तादृशस्य सर्व्वस्य तथाविधादेव जन्म न तद्विजातीयादित्येकस्या [T. 325a.] अपि कार्यव्यक्तेः कुतश्चिद् भावदर्शने व्याप्त्याऽन्वयव्यतिरेकासिद्धिरिति प्रतिपादितम् । अनुपलब्धौ तु यथोक्तायां निमित्तान्तराभावोपदर्शननिबन्धनयोर्न्नान्वयव्यतिरेकयोर्व्विप्रतिपत्तिः । स्वरूप एव तु परे विप्रतिपद्यन्ते । तथाहि— केचिदुपलब्ध्यभावमात्रमनुपलब्धिमभावस्य [S 159b.] प्रसज्यप्रतिषेधात्मनः प्रमाणान्तरत्वेन गमिकामिच्छन्ति ईश्वरसेनप्रभृतयः, अपरे तु प्रतिषेध्यविषयज्ञानरूपेणापरिणाममात्मनः तदन्यवस्तुविषयं विज्ञानमेव वाऽभावस्य गमकं प्रत्यक्षानुमानाभ्यां प्रमाणान्तरमाहुर्म्मीमांसकाः । न ह्यन्यवस्तुविषयं ज्ञानं प्रत्यक्षानुमानात्मकमभावं प्रतिपद्यते, तस्य भावांशविषयत्वात्, अभावांशस्य च ततोऽन्यत्वात् । अभावांशे तु नास्तीति ज्ञानं जनयत् तदभावप्रमाणाख्यां लभते, यथेन्द्रियं स्वविषयप्रतिपत्तिजनकत्वेन प्रत्यक्षाख्याम् । तथाऽन्ये अन्यभावलक्षणां तज्ज्ञानलक्षणां वाऽनुपलब्धिमभावस्यैव साधनमाहुर्नाभावव्यवहारस्य, अनुपलब्धेर्लिङ्गादभावसिद्धौ स्वयमेव तद्व्यवहारप्रवृत्तेः । नैयायिकास्तु नास्तीति ज्ञानमेव केवलप्रदेशादिग्राहिज्ञानानन्तरभाविप्रत्यक्षं न प्रमाणान्तरमभावस्य तुच्छरूपस्य परिच्छेदात्मकमाचक्षते तदेवास्य [T. 325b.] घटादेः प्रतिषेध्यस्यानुपलब्धिशब्देन यद्युच्यते न कश्चिद्विरोधः इति । तदेवमनुपलब्धौ भेदं गता बुद्धयः प्रतिवादिनामिति [S. 160a.] तन्निरासार्थमनुपलब्धिस्वरूपं तावदुपदर्शयन्नाह —"उपलब्धिलक्षणप्राप्तस्य" इत्यादि । 'उपलब्धिलक्षणप्राप्तिः'—'उपलम्भप्रत्ययान्तराणां[2] समनन्तराधिपतिप्रत्ययसंज्ञितानां साकल्यम्, आलम्बनप्रत्ययस्य स्वभावविशेषश्च । यः स्वभावः सत्स्वन्येषूपलम्भप्रत्ययेषु सन् प्रत्यक्ष एव भवती'त्येवंरूपा शास्त्रकृताऽन्यत्र

१. तदज्ञा° T. । २. आलोक-मनस्कार-चक्षुषाम् ।

व्याख्याता नैयायिकविप्रतिपत्तिनिरासार्थम्। ते ह्युपलब्धिलक्षणप्राप्तिशब्देन महत्त्वानेकद्रव्यवत्त्वरूपाणि द्रव्याणामाहुः।" महत्त्वादनेकद्रव्यवत्त्वाद् रूपाच्चोपलब्धिः" [वै शे० ४.१.६.] इति वचनात्। एवं चोपलब्धिलक्षणप्राप्तस्यानुपलब्धिः सत्यपि वस्तुनि सम्भवतीत्यसद्व्यवहारसिद्धावनैकान्तिकीत्याचक्षते। नहि चाक्षुषस्यापि रश्मेर्महत्त्वानेकद्रव्यवत्त्वरूपाण्युपलम्भकानि भवन्ति। न च तावताऽनुपलम्भऽप्यसद्व्यवहारस्तत्र शक्यते कर्तुम्। यदाह भाष्यकारः–' नानुमानत उपलभ्यमानस्य प्रत्यक्षतोऽनुपलब्धिरभावे हेतुः' इति। इन्द्रियत्वात् त्वगादिवत् किल प्राप्यकारि चक्षुरित्यनुमानतश्चाक्षुषो रश्मिरुपलभ्यते तस्य[S. 160b.]प्रत्यक्षतोऽनुपलब्धिः कथमभावव्यवहारं साधयेत्? इति। तदेवमुपलब्धिलक्षणप्राप्तस्यानुपलब्धिमसद्व्यवहारेऽनैकान्तिकामाहुर्नैयायिकाः [T. 326a.] तन्निरासमुपलब्धिलक्षणप्राप्तविपरीतरूपोपदर्शनेन शास्त्रकारोऽभ्यधात्। यदा ह्युपलम्भप्रत्ययान्तरसाकल्यं स्वभावविशेषश्च यथोक्त उपलब्धिलक्षणप्राप्तिरुच्यते न महत्त्वादिकं तदा कुतो व्यभिचारावकाशः?, सति वस्तुनि तस्या असम्भवात्। महत्त्वादिकं त्वसम्भवादेव नोपलब्धिलक्षणप्राप्तिशब्देन वाच्यम्। नहि रूपादिव्यतिरिक्तं द्रव्यं तत्प्रतिभासविवेकिनाऽऽकारान्तरेण स्वज्ञाने प्रतिभासते। न चाप्रतिभासमानमनात्मरूपविवेकिना रूपेण प्रत्यक्षतामनुभवत्यतिप्रसङ्गात्। तत् कुतोऽस्याऽसतो महत्त्वादिसम्भवः?। न च स्वरूपेणामहतः तत्सम्बन्धेऽप्यस्य महत्तासम्भवः। अपररूपेण वा ग्रहणे कथं तद्ग्राहिज्ञानमभ्रान्तम्?। ततो न महत्त्वं द्रव्यस्योपलम्भकं रूपं वा। तस्यापि स्वरूपेण ग्रहणे द्रव्यात्मनोऽत्यन्तपरोक्षत्वात्। द्रव्यरूपस्य च [S. 161a.] तद्विवेकेनानुपलक्षणान्न तथा ग्राहकत्वम्। न च महत्त्वं रूपं वा द्रव्योदयकालेऽभ्युपगम्यते, यतो द्रव्यं गुणस्य समवायिकारणमिष्यते। तच्च प्रतिलब्धात्मकमेव तथातामनुभवतीति प्रथमे क्षणे द्रव्यं निर्गुणमेव। न चास्य द्वितीये क्षणे प्राक्तनरूपत्यागोऽस्ति रूपान्तरं वाऽऽविर्भवति यतः प्रागप्रतिपन्ना-

१. न्यायसूत्रभाष्यकृद्वात्स्यायनः। २. अत्र न्यायसूत्रम्–" नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः" २. १. ३६ इत्येवरूपं भाष्यकारवचनत्वेनोद्धृतम्—सम्पादकः। लभ्यते ३. महत्त्वेन। ४. प्रचय°।

धारभावं महत्त्वादिगुणप्रतिबन्धादाधारतां यायात्। न चाजनक आधारः। जनकत्वे च [T. 326b.] क्षणिकता, अर्थक्रियाविरोधादक्षणिकस्य। ततः कुतः समवायिकारणस्य सम्भवः?, यतः स्वोत्कलितं कार्यं जनयत् तथा व्यपदिश्यते। न चैतत् क्षणिकत्वे सम्भवति अक्षणिकत्वे वा प्रागऽनाधारस्य पश्चादाधाराभावः। समवायिकारणासम्भवादेवानेकद्रव्यवत्त्वमप्यसम्भवि यस्मादनेकं द्रव्यमारम्भकं समवायिकारणात्मना यस्य विद्यते तदेवं व्यपदिश्यते। द्रव्याभावाच्च नानेकद्रव्यवत्त्वं। सत्त्वेऽपि महत्त्वादेर्नेयमुपलब्धिलक्षणप्राप्तिरस्माकमभिमता। या[1] त्वभिमा(म)ता न तयोपलब्धिलक्षणप्राप्तस्यानुपलब्धिरसद्व्यवहारसिद्धावनैकान्तिकीति शास्त्रकारो दर्शयाम्बभूव [S. 161b.] "उपलब्धिलक्षणप्राप्तस्य" या "अनुपलब्धिः" कारणस्य व्यापकस्य वा प्रतिषेध्यादन्यस्य सा "अभावहेतुः" कार्यस्य व्याप्यस्य च "अभावव्यवहारहेतुश्च"। या तु प्रतिषेध्यस्यैवोपलब्धिलक्षणप्राप्तस्यानुपलब्धिः साऽभावव्यवहारहेतुरेवेति वाशब्देन दर्शयति। या त्वनुपलब्धिलक्षणप्राप्तस्यानुपलब्धिः प्रत्यक्षानुमाननिवृत्तिलक्षणा सा संशयहेतुः प्रमाणनिवृत्तावप्यर्थाभावासिद्धेः, निमित्ताभावात्तु सद्व्यवहारप्रतिषेधहेतुरित्यवगन्तव्यम्।

[§ २. स्वेष्टामनुपलब्धिं स्पष्टयितुमीश्वरसेनकुमारिलादीनां निरासः।]

तत्र ये तावदुपलब्ध्यभावमात्रमनुपलब्धिमिच्छन्ति, "विज्ञानं वाऽन्यवस्तुनि" [श्लोक० अभाव० ११] इति वचनात् तदन्यवस्तुविज्ञानमेव वा, तन्निरासार्थं [T. 327a.] ज्ञातृ–ज्ञेयधर्मलक्षणामनुपलब्धिं दर्शयितुमुपलब्धिमेव तावद्द्विविधां दर्शयन्नाह – "अत्र" अनुपलब्धिवाक्ये योपलब्धिः श्रूयते क्रियारूपा सा यदा कर्तृस्थतयाऽपेक्ष्यते तदा तस्या "उपलभमानस्य" कर्तुः "धर्म्मत्वे" अपेक्ष्यमाणे "तज्ज्ञानम्" उपलभमानस्य यज्ज्ञानं तद् उपलब्धिरुच्यते। उपलभमानश्च बुद्धीन्द्रियदेहकलाप एव च पूर्व्वक्षणसङ्गृहीत उपलब्धिजनक उच्यते। तथाहि – उपलब्धेर्जनक आश्रयो वा कर्त्ता परैरुच्यते। न

१. °भिमता भवतामप्यभिमता न T.। २. पूर्व्वक्षणेनैक्येनाध्यवसीयमानः।

चेन्द्रियादेरन्यस्य जनकत्वं [S. 162a.] सम्भवति यतोऽन्वयव्यतिरेकनिबन्धनः कार्यकारणभावव्यवहारः, तौ चान्वयव्यतिरेकौ नेन्द्रियादेरन्यस्य सम्भवतः सत्स्विन्द्रियादिषु नियमेनोपलब्धेर्भावात्। यदि हीन्द्रियादिषु सत्स्वपि कदाचिदुपलब्धिर्नोपजायते तदा सत्स्वप्यन्येषु सकलेषु हेतुषु कार्यानुत्पत्तिः कारणान्तरवैकल्यं सूचयतीति तद्व्यतिरिक्तकारणान्तरं परिकल्प्येत। न चैतदस्ति, तत् कथमात्मनस्तदुत्पत्तौ निमित्तभावोऽभ्युपगम्येत? अतिप्रसङ्गात्। यदाह –

"[2]यस्मिन् सति भवत्येव यत् ततोऽन्यस्य कल्पने।
तद्धेतुत्वेन सर्व्वत्र हेतूनामनवस्थितिः॥" [प्रमाणवा० १.२६] इति।

आश्रयत्वमपि जनकस्यैवेति तदप्यात्मनो न सम्भवति। स्थापकत्वादाश्रय इति चेत्; न, क्षणिकत्वे स्थितेरभावादुपलब्धेरक्षणिकत्वेऽपि स्वयमेवाविनाशादवस्थानात्। तथाहि – उपलब्धेरविनाश एव स्थितिरुच्यते न पाताभावः [T. 327b.] तस्या गुरुत्वाभावात् "संयोगाभावेन गुरुत्वात् पतनम्" [वैशे० ५.१.७] इति च परेषां कृतान्तः। [3]समवायादाश्रय इति चेत्; ननु सोऽपि आधार्याधारभूतानामेवेष्यते। न चापतनधर्म्मिकाया उपलब्धेराधारेण किंचित्, [S. 162b.] समवायाच्चाश्रयत्वेऽन्यस्यापि तद्भावप्रसङ्गः, तस्य सर्व्वात्मसु समानत्वात्, एकत्वेनास्योपगमात्। क्रमयौगपद्याभ्यामर्थक्रियाविरोधाच्च नास्यात्मनः सत्त्वम्, ततोऽस्य कुतो जनकत्वम्? आश्रयत्वं वा? इत्यलं क्षुण्णक्षोदीकरणेनेति।

एवमुपलब्धिमादर्श्यानुपलब्धिमादर्शयन्नाह – "तस्मादुपलब्धिज्ञानादन्या" वस्त्वन्तरविषया "उपलब्धिः" ज्ञानात्मिका "अनुपलब्धिः"। कथं पुनरुपलब्धिरेवानुपलब्धिरुच्यते? इत्याह – "विवक्षिते"त्यादि। यथा भक्ष्याभक्ष्यप्रकरणे विवक्षिताद् भक्ष्यादन्यत्वाद् 'अभक्ष्यो ग्राम्यकुक्कुटः'–भक्ष्योऽपि सन् तदन्यस्य–उच्यते। यथा च स्पर्शनीयास्पर्शनीयाधिकारे विवक्षितात् स्पर्शनीयादन्यत्वाद् 'अस्पर्शनीयश्चाण्डालादिः'–तदन्यस्य स्पर्शनीयोऽपि सन्–उच्यते।

१. निमित्ताभावो T.। २. येषु सत्सु भवत्येव यत्तेभ्योऽन्य°–प्रमाणवा०। ३. संयोगादा° T.।

तद्वदुपलब्धिरेवानुपलब्धिर्मन्तव्या। नञः प्रतिषेधविषयत्वात् कथं भावविषयता? इति चेत्, आह – "पर्युदासवृत्त्येति"। पर्युदासेन प्रतिषेध्यस्यार्थस्य वर्जनेन या विशिष्टेऽर्थे वृत्तिस्तया, नञः अगृहीतप्रतिषेधस्य भावविषयता। यत्र विधिः [S. 163a.] प्राधान्यं प्रतिषेधोऽर्थगृहीतः विधिभाक्स्वपदेन नोच्यते एकवाक्यता च तत्र पर्युदासवृत्तिता। विधेश्च प्राधान्यं 'विवक्षितोपलब्धेरन्योपलब्धिर्भवति' इत्येवं वाक्येनान्योपलब्धेर्विधानात्[T. 328a.]अन्योपलब्धिसामर्थ्यादेव विवक्षितोपलब्धेः प्रतिषेधः प्रतीयते। विवक्षितोपलब्धेरनिवर्त्तने तदपेक्षयाऽन्यस्या विधानायोगात् स्वपदेन नञा विधिभाङ् नोच्यते। किं तर्हि?। अन्यशब्देन पर्युदासाश्रयेणाऽन्यशब्दस्यैव वाक्ये प्रयोगात् अन्या उपलब्धिरनुपलब्धिरिति। नञश्च सुबन्तेन सामर्थ्यं न तिङन्तेन इत्येकवाक्यत्वं 'न उपलब्धिरनुपलब्धिः' इति। प्रसज्यप्रतिषेधः पुनरेतद्विपरीतो मन्तव्यः। तत्र हि प्रतिषेधस्य प्राधान्यं विधिरर्थाद् गम्यते वाक्यभेदः स्वपदेन नञा प्रतिषेधभाक् सम्बध्यते।

तदेवं ज्ञातृधर्म्मलक्षणामनुपलब्धिं व्याख्याय ज्ञेयधर्म्मलक्षणां प्रतिपादयन्नाह – "उपलभ्यमानधर्म्मत्वे" इत्यादि। यदा कर्म्मस्थक्रियापेक्षयोपलभ्यमानस्य वस्तुनो धर्म्म उपलब्धिर्विवक्ष्यते तदा विषयस्वभाव उपलब्धिर्मन्तव्या। कीदृशो [S. 163b.] विषयस्वभावः? इत्याह – "स्वविषये"त्यादि। प्रतिषेध्यस्य घटादेर्यदात्मविषयं विज्ञानं तज्जनने या योग्यता तल्लक्षणो विषयस्वभाव उपलब्धिशब्देनोच्यते। यदि विषयस्वभाव उपलब्धिः, कथं योग्यतालक्षणः?। तथा हि योग्यता धर्म्मः, धर्म्मधर्म्मिणोश्च भेद एव इत्यत आह – "योग्यतायाः" इत्यादि। योग्यता हि परमार्थतो [T. 328b.] भावरूपैव न वस्तुस्वरूपाद् भिद्यते, अन्यथा भावो योग्य एव न स्यात्। योग्यताऽस्येति च सम्बन्धाभावतो न स्यात्। सम्बन्धकल्पनायामनवस्थेत्युक्तप्रायम्।

तदेवमुपलब्धेर्विषयधर्म्मतां प्रतिपाद्यानुपलब्धेरपि प्रतिपादयन्नाह – "तस्मादन्यः" इत्यादि। "तस्मात्" प्रतिषेध्याद् घटादेः

१. अगृहीत° T. 1.

स्वविषयज्ञानजननयोग्याद् योऽन्य उपलम्भजननयोग्य एव न तद्विपरीतः स्वभावो घटविविक्तप्रदेशरूपः स एव चात्रानुपलब्धिशब्देनोच्यते। प्राक्तनमेव न्यायमत्रातिदिशन्नाह – "पूर्व्ववदिति।" विवक्षितोपलब्धेरन्यत्वादभक्ष्यास्पर्शनीयवत् पर्युदासवृत्त्येति। कथं पुनरयं नञ् अन्यार्थवृत्तिः सामान्यशब्दः सन् घटविविक्तप्रदेशस्य [S. 164a.] तज्ज्ञानस्यैव वा[3] घटविविक्तस्यानुपलब्धित्वं पर्युदासवृत्त्या प्रकल्पयति, न पुनरविशेषेण सर्व्वेषामेवान्यशब्दवाच्यानाम्? इत्यत आह – "यत्र यस्मिन्" इत्यादि। "यत्र" देशे कालेऽवस्थायां वाऽव्यवधानादिलक्षणायाम्, "यस्मिन्" प्रदेशरूपादौ "उपलभ्यमाने नियमेन" अवश्यंतया "यस्यान्यस्य" पदार्थस्य घटरूपादेरुपलब्धिर्भवति "स" घटरूपादिः पदार्थः "तत्संसृष्टः" तेन प्रदेशरूपादिना संसृष्टः। कथमेकस्मिन्नुपलभ्यमाने परस्यापि नियमोपलब्धिः? इति चेत्, योग्यताया अविशेषात्। [T. 329a.] प्रदेशघटयोर्हि स्वविषयविज्ञानजनने योग्यता तुल्या। यदा हि प्रदेशरूपं व्यवधानविप्रकर्षादिरहितं विज्ञाने स्वाकारं समर्प्पयति तदा घटरूपमपि तत्र तथाविधं स्वाकारं समर्प्पयत्येव। यदि नाम योग्यता तस्य तेन तुल्या स्वस्वभावव्यवस्थितेस्तु कथं तत्संसृष्टता? इत्यत आह – "एकज्ञानसंसर्गादि"ति। एकत्र हि ज्ञाने द्वावपि तौ स्वाकारद्वारेण संसृष्टौ न साक्षात्, तद्विज्ञानं पदार्थद्वयाकारमाजायमानं तयोरात्मनि संसर्गं दर्शयति। किमिति पुनस्तत् ज्ञानं पदार्थद्वयाकारमवश्यं [S. 164b.] भवति यतस्तयोर्ज्ञानद्वारकः संसर्गः? इत्यत आह – "तयोः सतोः" इत्यादि। यावेतौ तुल्ययोग्यतारूपौ तौ यदि सन्तौ भवतस्तदा नैवैकाकारनियता प्रतिपत्तिर्भवति। कस्मात्? असम्भवात्। न ह्येष सम्भवोऽस्ति–यत्तुल्ययोग्यतारूपयोरेक एव प्रतिभासेत नापर इति। तथाहि – अविशिष्टत्वाद् योग्यतायाः कस्तत्र स्वाकारं न समर्प्पयेत्?। अनुभवसिद्धं च युगपदनेकप्रतिभासनम्। न चानुभवविरुद्धमाचक्षाणा विदुषामवधेयवचसो भवन्ति। लघुवृत्तित्वाद् यौगपद्याभिमान इति चेत्; न, बाधकप्रत्ययविर-

१. °विपयविज्ञान° – T.। २. °त्रातिदिश° – T.। ३. वा प्रदेशस्य घट° T.। ४. ज्ञाने।

हेण भ्रान्तिकल्पनानुपपत्तेः, [T. 329b.] सर्व्वत्र तथाभावप्रसङ्गात्। करणधर्म्म एवायं यदेकस्मिन्नेव कर्मणि क्रियां निष्पादयति नानेकत्र, करणं चेन्द्रियं ततो नानेकप्रतिपत्तिहेतुरिति चेत्, कथं प्रदीपादिरनेकत्र बहूनां प्रतिपत्तिजनकः ?। कर्तृभेदाददोष इति चेत्; कर्त्रेकत्वात् तर्हि क्रियैकत्र कर्म्मणीति कथं 'करणधर्म्मः' इत्यादि वचो न प्लवते ?। न च प्रतिक्षणविशरारुषु भावेषु परमार्थतः कर्तृकरणादिभावो [S. 165a.] युक्तः क्रिया वा काचित्। न च सर्व्वकारकान्वयव्यतिरेकानुविधायिनि कार्ये कस्यचिदतिशयोऽस्ति येनायं कर्त्ता का(क)रणं चेदमित्यादि परिकल्प्येत। तस्मादविशिष्टयोग्यतयोः कुत एकरूपनियतायाः प्रतिपत्तेः सम्भवः? इति सिद्ध एकज्ञानसंसर्गः। तुल्ययोग्यतारूपत्वस्य चैतदेव[1] लिङ्गम्। न ह्यसति तुल्ययोग्यतारूपत्वे युगपदेकेन्द्रियजनितज्ञानप्रतिभासिता रूपरसवत् सम्भवतीति।

तत्र येषां सौगतानामिदं दर्शनं 'एकायतनसङ्गृहीतेऽनेकत्राप्येकमेवेन्द्रियज्ञानमाजायते' इति तेषां मुख्य एवैकज्ञानसंसर्गः। ये तु 'तत्रापि प्रत्यर्थं भिन्नान्येवैकेन्द्रियनिमित्तान्येककालानि तद्विषयाणां युगपत्सन्निहितानां स्वज्ञानेषु सामर्थ्याविशेषात्, अत एवैकतया लोकेऽध्यवसीयमानानि ज्ञानान्युपजायन्ते' इति वर्णयन्ति [T. 330a.] तेषामेकेन्द्रियजत्वेनैकायतनविषयत्वेन चैककालेष्वेकत्वव्यपदेशो[2] लोके तथाध्यवसायादौपचारिकः।

यदि नामैकज्ञानसंसर्गात् तत्संसृष्टस्तथापि[S. 165b.] सामान्येन सर्व्वमन्यमयं नञ् किन्न प्रतिपादयति ? इति, अत आह — "तस्मात्" इत्यादि। यस्माद्विशिष्टत्वाद्योग्यताया यथोक्तेन प्रकारेणैकत्र ज्ञाने द्वयोरपि संसर्गः तस्मादविशिष्टं योग्यतारूपं ययोः तत एवैकज्ञानसंसर्गिणौ तौ तस्मात् तयोरेवंरूपयोः "परस्परापेक्षमेव" न सर्व्वान्यपदार्थापेक्षम् "अन्यत्वमिह" अनुपलब्ध्यधिकारे "अभिप्रेतम्"। लोके तु यद्यप्यशेषपदार्थान्तरापेक्षमन्यत्वं नञा क्वचिदुच्यते व्यासिन्यायसमाश्रयात्, तथापि तदिह न गृह्यते,

१. एकज्ञानसंसर्गित्वम्। २. एककालत्वादेव। ३. व्यवहारः लोके T.

"प्रत्यासत्तेराश्रयणात्," एकज्ञानसंसर्गलक्षणा प्रत्यासत्तिराश्रीयते नाऽन्या, प्रमाणचिन्ताधिकारात् अन्यथाऽनुपलब्धिरनैकान्तिक्येव स्यात्। तस्मात् तत्त्वचिन्तकैस्तथाविधमन्यत्वमाश्रयणीयम् यदनुपलब्धेरव्यभिचारनिबन्धनम्। तच्च यथोक्तमेवेत्यभिप्रायः।

तदेवमेकज्ञानसंसर्गापेक्षयाऽन्यत्वं प्रतिपाद्यानुपलब्धिं दर्शयन्नाह – "स केवलः" इत्यादि। स एव यदा केवलः प्रदेशो यथोक्तघटापेक्षया तस्मादन्य उच्यते [S. 166a.] तदा घटविविक्तप्रदेशज्ञानं [T. 330b.] वाऽनुपलब्धिः, न तु यथेश्वरसेनो मन्यते उपलब्ध्यभावमात्रमनुपलब्धिरिति; वक्ष्यमाणदोषात्; घटविविक्तप्रदेशस्वभावो वा, न तु तद्विविक्तज्ञानमेव यथाह कुमारिलः "विज्ञानं वान्यवस्तुनि" [श्लोक० अभाव० ११] इति। यथा ह्यन्यवस्तुविषयं ज्ञानमनुभूयमानं प्रतियोगिस्मरणापेक्षं तदभावव्यवहारनिबन्धनं तथा तद्विविक्तः प्रदेशोऽपि। तथाहि – कस्यचित् प्रतिपत्तुः 'यतः केवलप्रदेशाकारमेव ज्ञानं मया संवेद्यते न तु घटाकारमपि तस्मादत्र घटो नास्ति' इति एवं नास्तिताज्ञानमुत्पद्यते; कस्यचित् तु 'यतः केवलः प्रदेशोऽयं दृश्यते न तु घटसहितः तस्मान्नास्त्यत्र घटः' इत्येवम्। तस्मादुभयोर्नास्तिताज्ञानजन्मनि तुल्यं सामर्थ्यमिति द्वयोरपि अनुपलब्धिव्यवस्था युक्तेति। तत्र यदा तज्ज्ञानं तदा ज्ञातृधर्म्मलक्षणाऽनुपलब्धिः कर्तृस्थक्रियाऽपेक्षया, यदा तत्स्वभावस्तदा ज्ञेयधर्म्मलक्षणा कर्म्मस्थक्रियापेक्षयेति।

एवमनुपलब्धिं [S. 166b.] पर्युदासवृत्त्या व्यवस्थाप्य साध्यमस्या दर्शयन्नाह – "सा अभावम्" इत्यादि। सर्व्वान्योपलब्धिलक्षणप्राप्तविविक्तेऽपि [T. 331a.] प्रदेशादौ दृश्यमाने यत्र घटादौ प्रतियोगिन्यर्थित्वादिभिः स्मृतिरस्य भवति तस्याभावं साधयति, अभावव्यवहारं वा। कारणव्यापकानुपलब्धी अभावमभावव्यवहारं च साधयतः। स्वभावानुपलब्धिस्तु अभावव्यवहारमेव। अभावव्यवहारश्च ज्ञानाभिधानप्रवृत्तिलक्षणः। तत्र 'नास्त्यत्र घटः' इत्येवमाकारं ज्ञानम्, एवंविधवस्त्वभिधायकं चाभिधानं, निःशङ्कस्य च तत्र प्रदेशे गमनागमनलक्षणा प्रवृत्तिरिति।

अत्रेश्वरसेन-कुमारिलयोर्व्वचनावकाशमाशङ्क्य सिद्धान्तव्यवस्थामेव कुर्व्वता तन्मते निरस्तेऽप्याहत्य तन्मतनिरासार्थमाह – "कथमन्यभाव" इत्यादि। ईश्वरसेनो हि मन्यते – कार्य-स्वभावहेतुभ्यां भावरूपाभ्यां अनुपलब्धेः पृथक्करणादवश्यमभावरूपत्वमस्याः, अन्यथा पृथक्करणमनर्थकमेव स्यात्। त्वया [S. 167a.] चान्यस्य प्रतिषेध्यविविक्तस्य प्रदेशादेस्तज्ज्ञानस्य वा भावरूपानुपलब्धिराख्यायते तन्नूनमन्यभावस्तदभावो येनैवमभिधीयते। न चैतद् युज्यते, भावाभावयोर्व्विरोधादेकात्मतानुपपत्तेरिति।

कुमारिलोऽप्येवं मन्यते – येयं ज्ञातृ-ज्ञेयधर्म्मलक्षणा द्विधाऽनुपलब्धिरभावरूपा त्वयोच्यते तस्या भवतु नास्तिताज्ञानं प्रति साधनभावः। किन्तु स एवान्यस्य प्रतिषेध्यविविक्तस्य वस्तुनः [T. 331b.] प्रतिषेध्यज्ञानादन्यस्य वा तज्ज्ञानस्य यो भावो भावांशः स कथमभावः? प्रतिषेध्यस्य तज्ज्ञानस्य वा कथमभावांशः?। नैव युज्यते, धर्म्मरूपतया भावाभावांशयोर्भेदात्। सत्यपि धर्म्मिरूपेणाभेदे तयोश्चोद्भवाभिभवाभ्यां ग्रहणाग्रहणव्यवस्थेति। यदाह –

"धर्म्मयोर्भेद इष्टो हि धर्म्म्यभेदेऽपि नः स्थिते।
उद्भवाभिभवात्मत्वाद् ग्रहणं चावतिष्ठते॥" [श्लोक० अभाव० २०] इति।

उक्तोत्तरतामस्य दर्शयन्नाह – "उक्तमुत्तरमत्र" चोद्ये यथा "पर्युदासवृत्त्या अपेक्षातः"। 'प्रतिषेध्यं तज्ज्ञानं वा अपेक्ष्य तद्विविक्तोऽर्थस्तज्ज्ञानं [S. 167b.] वाऽभावोऽनुपलब्धिश्चोच्यते' इति ईश्वरसेनस्य प्रतिवचनम्। न हि प्रसज्यप्रतिषेध एवैको नञर्थः किन्तु पर्युदासोऽपि। ततोऽन्यभावस्याभावरूपता न विरुध्यते, प्रसज्यप्रतिषेधरूपताऽप्यन्यभावस्य यथा तथोत्तरत्र वक्ष्यते। स्वभावहेतोस्त्वनुलब्धेः पृथक्करणं प्रतिपत्रभिप्रायवशात्। प्रतिपत्ता हि स्वभावहेतौ वस्तुप्रतिपत्त्यध्यवसायी। अनुपलब्धौ त्वभावप्रतिपत्त्यध्यवसायी। परमार्थतस्तु प्रतिषेध्याभावव्यवहारयोग्यता

१. चकारादग्रहणं च।

वस्तुभूतैव प्रदेशस्य साध्यत इति न स्वभावहेतोः स्वभावानुपलब्धिर्भिद्यत[1] इति।

यत्तु 'अनपेक्षितार्थान्तरसंसर्गं प्रतिषेधमात्रमनुपलब्धिः' इतीश्वरसेनो मन्यते तन्निराकुर्वन्नाह – "न प्रतिषेधमात्रम्" इत्यादि। कस्मात्? इत्याह – "तस्य साधनासिद्धेः" इत्यादि। [T. 332a.] नह्यभावस्य सर्व्वसामर्थ्यविरहलक्षणस्य साधनत्वं सिद्धिहेतुत्वं सिध्यति, सर्व्वसामर्थ्यविरहरूपस्य तदयोगात्[2]। हेतुत्वे वा कथं न सामर्थ्ययोगिता? भावरूपता वा?, सामर्थ्यलक्षणत्वाद् वस्तुनः। अभावस्य [S. 168a.] चानपेक्षितसहकारिणो अनाधेयातिशयतया नास्तीति ज्ञानजनने नित्यं तज्जननप्रसङ्गः। ततश्च साधकत्वायोगादभावव्यवहार एव न सिध्येत्। अथवा तस्य प्रसज्यप्रतिषेधात्मन उपलब्ध्यभावस्य साधनमेव किञ्चिन्न सिध्यतीति। स ह्यभावत्वादपरेणोपलब्ध्यभावेन साध्यः स्यात्, सोऽप्यपरेणेत्यनवस्थानम्। न चेन्द्रियवदज्ञातस्य प्रतिषेधज्ञानहेतुता, सदा सन्निहितत्वेनानपेक्षितसहकारिणो नित्यं तदुदयप्रसङ्गात्। इदं चार्थद्वयं 'कथमभावः कस्यचित् प्रतिपत्तिः, प्रतिपत्तिहेतुर्वा?। तस्यापि कथं प्रतिपत्तिः' इत्यत्रान्तरे[3] स्वयमेव विपश्चयिष्यति।

कुमारिलस्याप्युत्तरमाह – "तस्य" अन्यस्य प्रतियोगिना वस्त्वन्तरेणासंसृष्टरूपस्य। न ह्यसौ वस्त्वन्तरैः संसृष्टस्वभाव एकरूपः। तथात्वे ह्यभावांशोऽपि न क्वचित् सिध्येत्। तस्यैवंविधस्य "भावसिद्धिरेव" भावांशसिद्धिरेव "अपरस्य" प्रतियोगिनो वस्त्वन्तरस्याभावसिद्धिरभावांशस्य त्वदभिमतस्य सिद्धिरस्तु भावांशस्यैवाभावांशरूपतोपपत्तेरिति मन्यते। तथा हि – अभावांशोऽपि पररूपासंसृष्टतयैवाभाव इति व्यपदिश्यते, अन्यथा [S. 168b.] तदयोगात्। सा च भावांशस्यापि समानेति स एवाभावोऽस्तु तन्निमित्तस्य समानत्वात् किमन्येनाभावांशोपगतेन?। अत [T. 332b.] एवासंसृष्टरूपस्येति विशेषणम्। यत

---

१. °ब्धिर्वेद्यते T.। २. हेतुत्वा°। ३. °त्रान्तरे ग्रन्थे स्वयमेवाचार्यो विप° T.।

एवम् "इति" तस्माद् "अन्यभावोऽपि" अन्यस्य वस्तुनो भावोऽपि त्वदभिमतो भावांशोऽपि न केवलमभावांशस्त्वन्मत्याऽभाव इति व्यपदिश्यतेऽस्माभिः। ततो भावांशस्याभावरूपता सङ्गतैवेति न किञ्चिद् विरुध्यत इति।

यदुक्तं 'ज्ञातृ-ज्ञेयधर्म्मलक्षणया स्वभावानुपलब्ध्या अभावव्यवहार एव साध्यते नाभावः' इति तत् परो विघटयितुं, यच्चोक्तं 'न प्रतिषेधमात्रमनुपलब्धिः, तस्य साधनासिद्धेः' इति द्वितीये व्याख्याने[3] प्रतिषेधमात्रस्यानुपलब्धि[रि]त्येतस्य[4] साधनं दर्शयितुमाह – " अन्यभावलक्षण " इत्यादि। एवं मन्यते – लोको हि केवलप्रदेशदर्शनात् घटाभावमेव प्रथमं प्रतिपद्यते केवलप्रदेशज्ञानसंवेदनद्वारेण घटज्ञानाभावप्रतिपत्त्या वा ततो घटाभावस्य व्यवहारम्। तेन लोकप्रतीत्यनुसारेण प्रतिषेध्यादन्यस्य प्रदेशस्य प्रतिषेध्यज्ञानाद्वा तज्ज्ञानस्य यो भावस्तल्लक्षणोऽभावः स्वयं प्रमाणेनेन्द्रियप्रत्यक्षेण स्वसंवेदनप्रत्यक्षेण च सिद्धोऽलं [S. 169a.] घटाभावं साक्षात् पारम्पर्येण च यथाक्रमं साधयितुम्, स च घटाभावव्यवहारमित्येवं व्यवस्थापयितुं युक्तम्। न चैवमपि व्यवस्थापने [अस्म]त्पक्षस्य काचित् क्षतिः। तथाहि – पारम्पर्येणापि यदनुपलब्धेः त्वदभ्युपगतायाः सिद्धं तत् तत एव सिद्धं भवतीति [T. 333a.] प्रतिषेधमात्रस्यानुपलब्धित्वे तत्साधनप्रतिपादनेऽपि। अयमभिप्रायः–यथा भवतो ज्ञातृ-ज्ञेयधर्म्मलक्षणा भावरूपा द्विविधाऽनुपलब्धिस्तथा ममापि ज्ञातृ-ज्ञेयधर्म्मलक्षणोपलब्ध्यभावोऽप्यनुपलब्धिसंज्ञितो द्विविधो भविष्यति। तत्र ज्ञेयधर्म्मलक्षणेनान्यभावेन प्रत्यक्षसिद्धेन प्रतिषेध्यभावो ज्ञेयधर्म्मलक्षणोपलब्ध्यभावरूपोऽनुपलब्धिसंज्ञितः सेत्स्यति। ज्ञातृधर्म्मलक्षणेन चान्यभावेन केवलप्रदेशज्ञानात्मना स्वसंवेदनसिद्धेन ज्ञातृधर्म्मः प्रतिषेध्यज्ञानाभावरूपोऽनुपलब्धिसमाख्यातः सेत्स्यति। ततश्च कुतोऽनवस्था येन साधनासिद्धिः स्यादिति। तत्र[5] "अन्यभावलक्षण" इति प्रतिषेध्यात् तज्ज्ञानाच्च योऽन्यो भावः प्रतिषेध्यविविक्तः प्रदेशः तज्ज्ञानं च तदात्मकोऽभावः विवक्षिताद् भावात् प्रतिषेध्याद् भावात् तज्ज्ञानाच्चान्यत्वादनु-

१. पृ. १७४ पं. २७. २. पृ. १७६ पं. ४. ३. पृ. १७६ पं. ११. ४. °स्यास° T.। ५. अतो ग्रन्थव्याख्या।

पलब्धित्वेन भवतोऽभिमतः स्वयं स्वरूपेण प्रमाणेनेन्द्रियप्रत्यक्षेण स्वसंवेदनप्रत्यक्षेण च सिद्धः संस्तस्य [S. 169b.] प्रतिषेध्यस्याभावव्यवहारं ज्ञानाभिधानप्रवृत्तिलक्षणं साधयेत् "तत्सिद्धिसिद्धो" वा तस्यान्यभावलक्षणस्याभावस्य यथोक्तस्य सिद्ध्या सिद्धो वा तदभावस्तस्य प्रतिषेध्यस्य तज्ज्ञानस्य वाऽभाव इति एवमपीष्यमाणे "न कश्चिद् विशेषः" त्वदभिमतानुपलब्धितोऽस्मदभिमतानुपलब्धेः [T. 333b.] ततोऽस्मद्दर्शनं किमिति प्रतिक्षिप्यते?। नन्वस्त्येवैवमिष्यमाणे विशेषोऽन्यभावलक्षणानुपलब्धिरितरया[1] व्यवहिता तदभावव्यवहारं साधयेदितरा तु साक्षादित्याह – स विशेषो नास्ति येन विशेषेणानुपलब्ध्याऽभावरूपया वस्तुसंस्पर्शरहितयाऽस्मदभिमतयाऽभावव्यवहारसिद्धेः[2] विरोधः स्यात्। अन्यस्य तु विशेषस्य सतोऽप्यबाधकत्वादसत्समत्वमेव। यदप्युक्तं–'तस्य साधनाभावादभावव्यवहारासिद्धिप्रसङ्गः[3]' इति, तदप्यसत्, यतः स एव त्वदभिमतोऽन्यभावः प्रतिषेध्यविविक्तभूतलात्मकस्तद्विषया चोपलब्धिरनुपलब्धित्वेनेष्टा भवतस्तदभावस्यानुपलब्धित्वेनास्मन्मतस्य प्रतिषेध्याभावस्य तदुपलब्ध्यभावस्य च "किं" कस्मात् "न साधनं" लिङ्गम् "इष्यते?"। तथा हि सति लोकप्रतीतिरनुसृता भवति। "किं पुनः" कस्मात् पुनः "अभावस्य" द्विविधस्य "सिद्धिरेव तदभावसिद्धिः" न तत्साध्या काचिदन्या [S. 170a.] विद्यत इत्यस्मन्मतनिषेधार्थं लोकातिक्रान्तमिष्यत इति पूर्वपक्षः।

अत्राह – "अपृथक्सिद्धेरन्यभावात्" तदभावस्य पृथक्सिद्धेरभावात् कुतो लिङ्गलिङ्गिता। तथा "सम्बन्धाभावाच्च" अन्यभावतदभावयोर्न लिङ्गलिङ्गितेति। प्रथमं तावत् कारणं [T. 334a.] विवृण्वन्नाह – "अन्यभावस्तद्विविक्तप्रदेशात्मकस्तावन्न साधनं" लिङ्गं प्रतिषेध्याभावस्य, 'तदुपलब्धिरपि तदभावस्य न साधनम्' इति पश्चाद् वक्ष्यते। तदर्थमेव तावच्छब्दः। कस्मादन्यभावो न साधनम्? इत्याह – "यत्सिद्धौ" यस्य वस्तुनः सिद्धौ प्रतीतौ "यस्य" अपरस्य

१. प्रत्यभिज्ञानस्य T.। २. घटाभावरूपया घटाज्ञानभावाख्यया वा (प्रथमं टिप्पनं) उपलब्ध्यऽभावरूपया (द्वि. टि.)। ३. पृ. १७६ पं. ११,

वस्तुनो "न सिद्धि"र्न प्रतीतिः तद्वस्तु तस्य वस्तुनो लिङ्गं भवतीत्ययं लिङ्गलिङ्गिनोर्न्यायः । तत्रोदाहरणम् –" धूमाग्निवदिति " । यथा – यदा धूमप्रतीतौ नाग्निः प्रतीयते तदा तयोर्लिङ्गलिङ्गिभावो भवति, न तु धूमप्रतीतिकाल एव प्रतीयमानेऽग्नौ । यदि नामैवं ततः किम् ? इत्यत आह – " अन्यस्य वस्तुनो यो भावः " स्वभावः "तत्सिद्ध्यैव" तत्प्रतीत्यैव "तदभावः"तस्य [S. 170b.] प्रतिषेध्यस्याभावः " प्रसिध्यति " प्रतीयतेअन्यभावस्यैव तदभावात्मकत्वात् तत्सिद्धेरेव तत्सिद्धिलक्षणत्वात् ।

नैयायिकास्तु मन्यन्ते—प्रतिषेध्याभावो हि प्रसज्यप्रतिषेधात्मकस्तुच्छरूपस्तस्य कथं तदन्यभावरूपता ?, भावाभावयोर्विरोधात् । ततः कथं तदन्यभावसिद्ध्यैव तदभावसिद्धिः स्यात् ? इत्यत आह – " तस्य " तदन्यभावस्य प्रदेशलक्षणस्य तस्मादन्येन प्रतिषेध्येन घटादिना " असंसृष्टरूपस्य " रहितात्मनः केवलस्य प्रतिषेध्येन शून्यात्मनः। अनेन केवलप्रदेशस्यापि प्रसज्यप्रतिषेधात्मकतामाह। कथं भावस्य तुच्छरूपता स्वभावः, विरोधात् ?, इति चेत्; न, पररूपेण तस्यापि तुच्छरूपत्वात् । [T. 334b.] यथा ह्यनपेक्षितभावान्तरसंसर्गः प्रसज्यप्रतिषेधः शून्यविकल्पप्रतिभासी प्रतिषेध्येन तुच्छरूपः तद्रूपविरहात्, तथा तदन्यभावोऽपि प्रतिषेध्यासंसृष्टरूपः। ततः कथमस्य प्रतिषेध्येन तुच्छरूपता [S. 171a.] विरुध्येत ?। स्वरूपेण ह्ययमतुच्छरूपः स्यान्न पररूपेण, अन्यथा कथमस्यान्यभावत्वं परस्य वा तत्राभावः स्यात् ?। यो हि यद्भावरूपो न भवति स एवासौ भवति, तत्स्वरूपवत् । ततः सर्व्वस्य जगतः परस्परात्मताप्रसङ्गः। तस्मात् सर्व्वभावाः पररूपेण निःस्वभावाः स्वरूपेण रूपवत्त्वेऽपीत्यनवद्यम् ।

कस्तर्हि प्रसज्यप्रतिषेधात्पर्युदासस्य भेदः ?। न कश्चित्, केवलमनपेक्षितरूपान्तरमभावमात्रं प्रसज्यप्रतिषेध इति लोके कथ्यते। रूपान्तरं तु पररूपशून्यं पर्युदास इति। न तु रूपान्तरं पररूपतुच्छात्मकं न भवति। अनुभूयत एव च रूपान्तरं तद्रूप-

१. हि यस्तुच्छ – T.।

शून्यतया, कथं तस्य प्रसज्यप्रतिषेधात्मता न स्यात् पररूपेण ?। सामर्थ्यात् ततः[1] तत्प्रतीतिः[2] इति चेत्; न, अकारणप्रतीतौ[3] सामर्थ्यासम्भवात्[4]। तादात्म्याभावे हि प्रसज्यप्रतिषेधस्य पर्युदस्तात् [S. 171b.] प्रतीतौ तत्कारणत्वे सति स्यात् प्रतिपत्तिः नान्यथा। तस्य तदन्यासंसृष्टरूपस्य यत् तत्त्वं तस्य प्रतिषेध्यतुच्छरूपताया व्यवस्थापकं प्रमाणं प्रत्यक्षरूपम् तत एव—न तदुत्तरकालभाविनो [T. 335a.] 'नास्तीह घटः' इति विकल्पात्, तस्य गृहीतग्राहितया स्मृतित्वेनाप्रमाणत्वात्-अन्यस्य घटादेस्तत्रासतो व्यवच्छेदस्याभावस्य सिद्धेस्तदभावात्मकस्यैव प्रदेशस्य तेन ग्रहणात्। द्विविधो ह्ययं प्रदेशो घटासंसृष्टरूपस्तद्व्यावृत्तरूपतया ततोऽन्यो घटवानपि, केवलश्च घटं प्रति अप्रतिपन्नाधारभावः[5]। तस्य तद्विवेकेन[6] प्रत्यक्षेण ग्रहणे घटादन्यत्वं घटविरहश्च गृहीत एव भवतीति न वस्त्वसंकरसिद्ध्यर्थम्, 'इहेदं नास्ति' इत्येवमर्थं च प्रमाणान्तरमन्वेषणीयम्। विस्तरतश्चैतदुत्तरत्र वक्ष्यत इति आस्तां तावत्। यतश्चान्यभावसिद्ध्यैव तदभाव उक्तेन न्यायेन सिद्ध्यति ततो नान्यभावः प्रतिषेध्याभावस्य लिङ्गम्।

द्वितीयं कारणं व्याचक्षाण आह – "सम्बन्धाभावाच्च" इति। अन्यभावतदभावयोर्न [S. 172a.] कश्चित् सम्बन्धोऽस्ति, ततः कुतो लिङ्गलिङ्गिभावः ? इति। एतच्च कदोच्यते ?। यदा तदभावरूपताऽन्यभावस्य परानभ्युपगताऽपेक्ष्यते[7]। तदन्यभावात्[8] पृथगेव तदभावस्तुच्छरूप इष्यते परैः। अन्यथोक्तेन न्यायेनान्यभावस्यैव तदभावरूपत्वे तादात्म्यात् कथं सम्बन्धाभावः ?। प्रत्यक्षसिद्धता च तद्[9]एवं[10], न पक्षान्तरेण[11] अभिहिता। "तच्च तस्य" इत्याद्यस्यैव विवरणं व्यतिरेकमुखेन[12] "एकार्थसमवायै[13]" इति [T. 335b,] परदर्शनेनोक्तं। परेषां हि नैयायिकादीनां व्यतिरिक्तावेव कृतकानित्यत्वाख्यौ धर्म्मावेकस्मिन्नेव धर्म्मिणि समवेताविति कृतकस्यानित्यत्वेनैकस्मिन्नर्थे धर्म्मिणि समवायः सम्बन्धः धमस्य वेति

१. अन्यभावात्। २. प्रसज्यप्रतीतिः। ३. प्रसज्यप्रतीतौ। ४. अन्यभावस्य। ५. प्रति प्रतिप° – T.। ६. तस्य द्विविधेन – T.। ७. °स्य रूपानभ्यु° T.। ८. तदान्य° T.। ९. तादात्म्यपक्षे। १०. तदेव – T.। ११. तादात्म्याभावेन। १२. °मुखेन संबन्धः एका° T.। १३. °वायसंबन्ध इति T.।

सम्बन्ध एवोदाहरणान्तरम् । अत्रैकार्थसमवाय इति संयोगः स एव समवायशब्देनोक्तः । संयोगसमवाययोः कल्पितत्वाद् भेदेन व्यपदेशोऽनादरात् । परेषां त्वग्निधूमौ स्वावयवेष्वेव समवेताविति न तयोरेकार्थसमवाय आधाराधेयभावो वेति धूमस्याग्नेरुपरि दर्शनाल्लौकिकः सम्बन्ध उक्तः । "जन्यजनकभावो वा" इति पारमार्थिकः सम्बन्धोऽभिहितः, परमार्थतोऽग्नेर्जनकत्वात् इतरस्य च जन्यत्वादिति ।

ननु चेश्वरसेनेन सह विचारः प्रक्रान्तः तत् किमिति नैयायिकाभिमतस्यापि सम्बन्धस्यान्यभावतदभावयोरभाव उच्यते । सत्यम्, [S. 172b.] प्रसङ्गेन तु तन्मतस्यापि निषेधार्थमुक्तम् । पूर्वं ह्यन्यभावग्राहिप्रत्यक्षसिद्धत्वात् प्रतिषेध्याभावस्य न तदर्थं प्रत्यक्षान्तरं ' नास्तीह घटः ' इत्येवमाकारं कल्पनीयमिति प्रसङ्गतः कथितम् । अधुना तु प्रसङ्गादिदमुच्यते—यदान्यभावग्राहिप्रत्यक्षसिद्धोऽयं तदभावो न भवति तदा प्रत्यक्षान्तरं ' नास्ति इह घटः ' इत्येवमाकारं विशेषणविशेष्यभावलक्षणात् सन्निकर्षादिष्टं भवता । न चासति सम्बन्धेऽन्यभावतदभावयोर्विशेषणविशेष्यभावो युक्तः, अतिप्रसङ्गात् । ततः [T. 336a.] कुतस्तल्लक्षणात् सन्निकर्षात् तदभावे प्रत्यक्षं भवेदिति ।

एवं सम्बन्धस्वरूपमाख्याय तस्येहासम्भवमाह — " नैवम् ", यथा कृतकत्वानित्यत्वयोरग्निधूमयोर्वैकार्थसमवायादिलक्षणः सम्बन्धो नैवं कश्चिद् भावाभावयोः सम्बन्धो येन "अस्य" तदभावस्यान्यभावः साधनं स्यात् । यावेकत्रार्थे धर्म्मिरूपे प्रवर्त्तेते तयोरेकार्थसमवायो भवति । अन्यभावश्च प्रदेशाख्यः स्वावयवेषु येषु वर्त्तते न तत्र घटाभावः । एवं हि प्रदेशावयवेषु घटो नास्तीति स्यात् न प्रदेशे । न चास्य प्रदेशावयवैरारम्भः । ते हि द्रव्यात्मानो द्रव्यान्तरमेवारभन्ते । न च घटाभावो द्रव्यम् । नवैव हि द्रव्याणीष्यन्ते । न च क्रियावदादिकं द्रव्यलक्षणं [S. 173a.] तत्रास्ति । न च गुणरूपतया तत्र वर्त्तते । चतुर्विंशतिरेव हि

१. सन्निकर्षादीष्टं भवति T. । २. विशेषणविशेष्याभावे ।

गुणा इष्यन्ते । न चायं तेषामन्यतमः । नापि कर्म्मरूपतयपञ्चसु कर्म्मस्वनन्तर्भावात्[1] तल्लक्षणविरहाच्च । "एकद्रव्यम्" [वैशे० १. १. १५] इत्यादिकं हि तल्लक्षणम् । न चैतदभावे सम्भवतीति । नापि सामान्यादिरूपतया, तद्रूपविरहादेव । नाप्यन्यभावतदभावयोः संयोगोऽग्निधूमयोरिव, द्रव्ययोरेव तदभ्युपगमात् । न च तदभावो द्रव्यमित्युक्तम् । नाप्याधार(रा)धेयभावो, यतः सोऽपि संयोगनिमित्त उच्यते 'इह कुण्डे बदराणि' इति । समवायनिमित्तो वा, 'इह तन्तुषु [T. 336b.] पटः' इति । न चाभावस्याद्रव्यात्मनः संयोगः सं[2]मस्ति । नापि समवायः, पञ्चानामेव हि द्रव्यादीनां पदार्थानां समवायित्वमिष्यते ; न चाभावः पञ्चस्वन्तर्भवतीति । न च तदात्मानुपकारे सत्याधारव्यपदेशः सम्भवति । उपकारे वा जन्यजनकभावः । न च तदभावो जन्यः, कार्यताप्रसङ्गात् । कार्यता चा[3]स्यासम्भविनी, [S. 173b.] यतः स्वकारणसमवायः, सत्तासमवायो वा कार्यतोच्यते भवद्भिः । अन्यभावस्तु प्रदेशाख्योऽस्य न कारणम्, त्रयाणामेव हि द्रव्यगुणकर्म्मणां द्रव्यं कारणमिष्टम् । न चाभावो द्रव्यादिलक्षणः इति । सत्तासमवायेऽपि सत्प्रत्ययविषयता तदभावस्य स्यात्, नाभावप्रत्ययविषयता । प्रदेशाभावेऽपि च घटाभावसम्भवात् कुतस्तत्कार्यता । न चास्य प्रतिविषयं भेदः, एकाकारज्ञानविषयत्वात् । सम्बन्धिभेदाद् भेदे वा सामान्यादिष्वपि तत्प्रसङ्गः । समवायोप्यस्यानन्तरमेव निरस्त इति कुतः स्वकारणसत्तासमवायरूपा कार्यता तदभावस्य स्यात् ? । एतेन जन्यजनकभावः प्रत्युक्तः । ततः सर्व्वथा सम्बन्धाभावान्नान्यभावः तदभावस्य साधनमिति ।

परः सम्बन्धान्तरं दर्शयन्नाह - "अस्ति विषये"त्यादि । यथा हि अर्थो विषयः शब्दो विषयीति तयोर्व्विषयविषयिभावः सम्बन्धः, [S. 174a.] एवमन्यभावतदभावयोर्विषयविषयिभावः सम्बन्धो भविष्यति [T. 337a.] प्रदेशाख्येनान्यभावेन घटाभावस्य प्रत्यायनादिति पूर्व्वपक्षाशङ्का । शब्दार्थयोः सम्बन्धः स्या-

१. स्वकर्म्मस्वानन्तर्भावात् T. । २. समस्त T. । ३. चात्रास° T. ।

दित्यभिसम्बन्धः । किं रूपः ? । " कार्यकारणलक्षणः " । कथं पुनरर्थकार्यता शब्दस्य ? । तत्प्रतिपादनाभिप्राये सति अर्थप्रतिपादनविवक्षायां सत्यां तत्प्रयोगाच्छब्दोच्चारणात् । तेनार्थेन विवक्षाविपरिवर्त्तिना शब्दस्य कार्यकारणलक्षणः सम्बन्धः स्यात् । यद्यपि च शब्दार्थयोः बुद्धिपरिकल्पितसामान्यरूपता तथाप्यर्थप्रतिभासिन्या विवक्षया शब्दसामान्योत्प्रेक्षानिबन्धनस्य शब्दस्वलक्षणस्योत्थापनात् तन्मुखेन कार्यकारणभाव उच्यते । " अविनाभावलक्षणो वा " इति परप्रसिद्ध्योच्यते । परो ह्यविनाभावलक्षणः शब्दार्थयोः सम्बन्ध इति व्यवहरति । ततः सम्बन्धनिबन्धनः प्रतिपाद्यप्रतिपादकरूपो[1] विषयविषयिभावो युक्तः । तदभावान्यभावयोरप्येवं भविष्यतीति चेत्, आह – "अयं च" अनन्तरोक्तप्रकारः "अत्र" तदभावान्यभावयोः "न सम्भवति" । नहि घटाभावप्रतिपादनाभिप्राये [S 174b] सति अन्यभावस्य प्रदेशलक्षणस्य प्रयोगो[2] निष्पत्तिर्भवति, घटाभावप्रतिपादनाभिप्रायात् प्रागपि प्रदेशस्य स्वहेतुभ्य एव निष्पत्तेः । सत्यपि तदभिप्रायेऽन्यभावस्याभावाच्च । ततश्च कथं तयोः कार्यकारणभावः ?, तद्द्वारकोऽविनाभावो वा स्यात् ? यतो [T. 337b.] विषयविषयिभावः कल्प्येत ।

स्यान्मतम् – यथा शब्दार्थयोः साध्यसाधनभावनिमित्तो विषयविषयिभावः तथा अन्यभावतदभावयोरपि इत्येतावन्मात्रेण शब्दार्थयोर्दृष्टान्ततेत्यत आह – " सिद्धे हि " इत्यादि । शब्दार्थयोर्हि कार्यकारणभावनिबन्धनः साध्यसाधनभावः अन्यथाऽर्थान्तरत्वे तदयोगात् तथेहापि यदि तदभावान्यभावयोः साध्यसाधनभावः सिध्येत् तदा तन्मुखेन साध्यसाधनभावद्वारेण विषयविषयिभावः स्यात् । यावता स एव साध्यसाधनभावोऽसति सम्बन्धे कार्यकारणभावादिके[3] न सिध्यति, सर्व्वस्य साध्यसाधनताप्रसक्तेः ।

कथमिन्द्रियं स्वविषयसिद्धिनिबन्धनमिति चेत्; परस्परोपसर्प्पणाद्याश्रयात् प्रत्ययविशेषादिन्द्रियविषययोरेकविज्ञानोत्पा-

१. °दकभावरूपो T. । २. प्रयोगात् – T. । ३. °दिके कुतः सि° T. ।

दनयोरुदयात् तथा व्यपदेशः, नैवमिह, अन्यभावतदभावयोस्तदयोगात्। लिङ्गलिङ्गिभावलक्षणस्य [S. 175a.] च साध्यसाधनभावस्य प्रकृतत्वात्, तस्य च सम्बन्धमन्तरेणायोगात्।

नैव सम्बन्धान्तरनिबन्धनोऽन्यभावतदभावयोः साध्यसाधनभावोऽपि तु विषयविषयिभावनिमित्त एवेति चेत्; आह – "अन्यथा" यदि [T. 338a] सम्बन्धान्तरं नेष्यते किन्तु विषयविषयिभावात् साध्यसाधनभावः तस्माच्च विषयविषयिभावः, तत इतरेतराश्रयमिदं स्यात्। तथा चैकासिद्धौ द्वयोरप्यसिद्धिर्भवेदिति। किञ्चान्यभावाच्च लिङ्गभूतादभावस्य लिङ्गिनः सिद्धावनुमिताविष्यमाणायां अ[1]समुदायश्च साध्यः स्यात्, अन्यभावेन तदभावस्य केवलस्यैव साधनात् न केवलसम्बन्धाभावात् साध्यसाधनभावायोगः। समुदायश्च विशेषणविशेष्यभावापन्नो धर्म्मधर्म्मिलक्षणः साध्यो य इष्टस्तदभावदोषश्चेति 'च' शब्दः।

सर्व्वत्र समुदायस्य साध्यता नैवेष्टेति चेत्, आह – "तथा च" धर्म्ममात्रस्यापि स्वतन्त्रस्य साध्यतोपगमे 'घटाभावस्तदन्यभावात्' इत्येवंरूपे प्रयोगे घटस्य सर्व्वत्र देशे सर्व्वदा चाभावः प्रसज्येत। धर्म्मिणि हि कचिद्धर्म्मस्य गुणभूतस्य साधने तत्रैव तत्काल एव च भावो युक्तो नान्यदेति सर्व्वत्र समुदाय एव साध्योऽभ्युपगन्तव्यः न केवलो धर्म्म इति।

अत्राह परः – नासमुदायस्य [S. 175b.] साध्यता अन्यभावतदभावयोर्[2]सम्बन्धो वा। कुतः?। "प्रदेशादि" इत्यादि। 'इह प्रदेशे घटो नास्ति' इत्येवं घटाभावेन प्रदेशादिधर्म्मी विशेष्यते सघटात् [T. 338b.] प्रदेशादेर्भेदेनावस्थाप्यत इति तद्विशेषणत्वं प्राप्तः साध्यते न तु घटो नास्तीत्येवं "केवलो" धर्म्मिणः कस्यचिद्गुणभावमनापन्नः। ततो नासमुदायस्य साध्यतेति कुतस्तद्भावी दोषः?। "न च" नैवास्मिन्पक्षे "लिङ्गस्या"न्यभावात्मनो "लिङ्गिनश्च" प्रदेशादिधर्म्मिलक्षणस्य "असम्बन्धदोषः प्रसज्यते"। कुत?। "अन्यभावस्य" घटविविक्तप्रदेशादिलक्षणस्य "प्रदेशादिना" ध-

१. °र्या अयं (or स) समुदायः – T.। २. °योस्सं° T.।

र्म्मिणा "सम्बन्धात्" तादात्म्यसद्भावादिति । तथा हि – शब्दादिधर्म्मिणा कृतकत्वादेस्तादात्म्यलक्षण एव सम्बन्ध इष्यते भवता । स इहास्तीत्यभिप्रायः । ततश्च 'सम्बन्धाभावाच्च' इत्ययुक्तमिति मन्यते ।

सिद्धान्तवादी तु साध्यधर्म्मलक्षणस्य लिङ्गिनो घटाभावाख्यस्यान्यभावेन लिङ्गेन सम्बन्धाभावः प्रागुक्तो न धर्म्मिणा ततः [वं]·दमुत्तरं संबध्यत इति मन्यमानो धर्म्मिणाऽप्यन्यभावाख्यस्य लिङ्गस्य सम्बन्धाभावं दर्शयन्नाह – "न" लिङ्गलिङ्गिनोरसम्बन्धो न चेति सम्बध्यते । तथा नासमुदायसाधनमिति । किन्तु लिङ्गलिङ्गिनोरसम्बन्ध एवासमुदायसाधनमेव च एवमपि ब्रुवतः । कुतः ? । प्रदेशादेरेव धर्म्मितयाऽवस्थाप्यमानस्यान्यभावत्वादन्यभावलक्षणलिङ्गत्वात् । एतदेव [S. 176b.] दर्शयति – यत्रैव हि प्रदेशादौ धर्म्मितया त्वया कल्प्यमाने यद् [T. 339a.] घटादिकं नास्तीत्युच्यते लोकेन स एव प्रदेशादिस्तेन घटादिनाऽसंसृष्टस्संसर्गरहितः "अन्यभावो" लिङ्गतयेष्टो नापरः कश्चित् यतः "तद्दर्शनादेव" घटासंसृष्टप्रदेशादिदर्शनादेवास्य प्रतिपत्तुः 'घटो नास्ति' इति विकल्पो लिङ्गिज्ञानतयोपगतो भवति । ततः स एवान्यभावः । यदेव हि दृश्यमानं लिङ्गिज्ञानं जनयति तदेव लिङ्गमुच्यते । घटासंसृष्टश्च प्रदेशादिरेवम् । तस्मात् तदेवान्यभावलक्षणं लिङ्गमुपेयम् । ततः कथं तस्यैवान्यभावस्य व्यावृत्तितोऽपि भेदमननुभवतो लिङ्गलिङ्गिभावो लिङ्गत्वं लिङ्गित्वं वा ? । नहि लिङ्गमेव धर्म्मी भवितुमर्हति, धर्म्मिप्रतिपत्तावेव साध्यप्रतिपत्तेरन्वयाद्यनुसरणायोगात् । ततश्चान्यस्य धर्म्मिणोऽभावात् कथमन्यभावात्मनो लिङ्गस्य तत्सम्बन्धः, समुदायसाध्यता वा ? । शब्दकृतकत्वयोस्तु परमार्थतस्तादात्म्येऽपि व्यावृत्तिभेदनिबन्धनोऽस्त्येव भेदः । ततः शब्दादिधर्म्मिप्रतिपत्तावप्यनित्यत्वाद्यप्रतीतौ कृतकत्वादिना तत् साध्यत इति युक्तम् ।

स्यान्मतम् – सामान्यविशेषकल्पनया [S. 176b.] लिङ्गलिङ्गितैकस्यापि भविष्यतीत्यत आह – "न चात्र" प्रकृतेऽन्यभावे "सामान्यविशेषभावकल्पना सम्भवति", येन [S. 339b.] सामान्यविशेषविकल्पेन सामान्यं हेतुर्भवेद् विशेषो धर्म्मी, यतः समुदाय-

साध्यता लिङ्गलिङ्गिनोः सम्बन्धो वा स्यात्। कुतो न सम्भवतीत्याह – तद्विशेषप्रतिपत्तेरेव" घटविविक्तप्रदेशविशेषप्रतिपत्तेरेव "तदभावस्य" घटाभावस्य प्रतीतेः। यतश्च विशेष एव घटाभावप्रतीतिनिबन्धनं ततः किं तत्र सामान्यकल्पनया क्रियत इति। स एव विशेषोऽन्यत्र वर्त्तमानः सामान्यरूपतां प्रतिपत्स्यत इति चेत्, आह – "तस्य" घटविविक्तप्रदेशविशेषस्य "अन्यत्र" सजातीये "अन्वयस्य" अनुवृत्तेरभावात् कुतः सामान्यात्मता ?। न ह्यसौ देशकालावस्थानियतो विशेषोऽन्यमन्वेतीति। अत्रैवोपचयहेतुमाह – "प्रतिज्ञार्थे"त्यादि। यदि हि घटविविक्त एव प्रदेशविशेषो धर्म्मी, तस्यैव च हेतुत्वेष्यते, तदा प्रतिज्ञाया योऽर्थो धर्म्मधर्म्मिसमुदायस्तदेकदेश एव धर्म्मिलक्षणो हेतुः स्यात्, प्रतिज्ञार्थैकदेशस्य च व्यावृत्तितोऽपि भेदमनु(न)नुभवतो हेतुत्वमसिद्धमिति। अथ मा भूत् [S. 177a.] एष दोष इति न घटविविक्त एव प्रदेशविशेषो हेतुरिष्यते, किन्तु प्रदेशमात्रं घटविविक्तताविशेषरहितमित्यत आह – "न च यत्र प्रदेशमात्रं तत्र घटाभावः"। सघटेऽपि प्रदेशे प्रदेशमात्रस्य भावादनैकान्तिको हेतुः स्यात्।

परोऽन्यथा सामान्यविशेषभावं [T. 340a] दर्शयन्नाह – तादृशौ(शे) यादृशो घटविविक्तः केवलः प्रदेशोऽग्रतः स्थितस्तादृशे सर्व्वत्र प्रदेशे घटस्याभाव इति कुतोऽनेकान्तः ?। तथाविधप्रदेशविशेषप्रतीतिरेव घटाभावप्रतीतिस्ततोऽन्यभावतदभावयोः लिङ्गलिङ्गिताऽनुपपन्नेत्युपदर्शयन्नाह – "ननु तस्यैव" इत्यादि। योऽसौ केवलः प्रदेशविशेषो धर्म्मितयाऽवस्थापितस्तस्यैव यत् कैवल्यं केवल इत्यनेन विशेषणेनोच्यते भवता, तदेव घटविरहो घटाभाव इति कथ्यते। स च घटविरहो लिङ्गभूतस्य केवलस्य प्रदेशस्य प्रतिपत्तावेव[1] सिद्धो न तूत्तरकालं ततोऽन्य एव आकारान्तरेण धूमादिवाग्निः[2] सिध्यति। ततः कस्येदानीं "तत्प्रतिपत्तावेव" साध्यप्रतीतौ सत्यां तल्लिङ्गम्[3]?। न क-

१. प्रतिपत्तिकाल एव T.। २. धूमादेरग्निः – T.। ३. लिङ्गलिङ्गिनौ T.

स्यचित् । जिज्ञासितस्य घटाभावस्य सिद्धेरन्यस्य कस्यचिदजिज्ञासितत्वात् । केवलप्रदेशप्रतिपत्तावेव घटविरहप्रतीतौ च यदेतदुत्तरकालं 'यत्र यत्र केवलः प्रदेशस्तत्र तत्र घटविरहः' इति [S. 177b.] " अन्वयस्यानुगमामनु(गमनम् " अनु)सरणम्, तच्च निरर्थकम् आदावेव साध्यप्रतीतेः । यत एवं तस्मादन्यभावः केवलप्रदेशलक्षणः साध्यसाधनयोर्भेदाभावान्न साधनमभावस्येति स्थितम् । तदेवं [T. 340b.] समुदायसाध्यतां लिङ्गस्य च धर्मिणा सम्बन्धं प्रतिपादयितुं यदुक्तं परेण – 'प्रदेशादिधर्म्मिविशेषणस्याभावस्य साधनात्[2]' इति तदपृथक्सिद्धिदूषणेनैव निराकृतम् ।

विषयाविषयिभावेन तु सम्बन्धप्रतिपादने निरस्ते परोऽन्यथा सम्बन्धं साध्यसाधनयोर्दर्शयन्नाह – "अस्त्य"न्यभावतदभावयोः सम्बन्धो विरोधाख्यः । ततः सम्बन्धसद्भावादन्यभावादभावस्य सिद्धिर्भविष्यतीति । सिद्धान्तवादी तु साध्यसाधनयोर्विरोधमेवासम्भावयन् पृच्छति – " केन कस्य विरोधः " इति । न ह्यत्र साध्यसाधनयोर्विरोधः संभवतीत्यभिप्रायः । परो विरोधमभिप्रायानभिज्ञतया दर्शयति – " अन्यभावेन " केवलप्रदेशात्मना " प्रतियोगिनो " यस्याभावः प्रमातुमिष्टो घटादेस्तस्येति ।

परस्यैवंवादिनो असम्बन्धाभिधायितामादर्शयन्नाह – " किं नु वै प्रतियोगी " घटादिः प्रमातुमिष्टो येन प्रतियोगिनः प्रमेयत्वेन लिङ्गलिङ्गिनोर्विरोधः[1] सम्बन्धोऽभिधीयते ? । नैव प्रतियोगी प्रमातुमिष्टः किन्तु तदभाव इति चेत्, आह – "अभावस्तु" प्रतियोगिनो यः साध्यः [S. 178a.] ..............................

..............................................................

[S. 178b.] ......................................................

..............................................................

[ कुमारिलस्तु मन्यते भावांशाद्भिन्नोऽ ] [ S. 179a. ] यमभावांशस्ततो नान्यभाव एव तदभाव इति कथं तत्प्रतिपत्तिरेव तदभावप्रतिपत्तिरिति । तथा ह्ययमभावः प्रागभावादि-

१. लिङ्गलिङ्गिनोश्च लिङ्गिना स° T. । २. पृ. १८४. पं. २१.

भेदभिन्नः, न चावस्तुनो भेदः सम्भवति अतोऽयं वस्तुरूप एव। यदाह –

"न चावस्तुन एते स्युर्भेदास्तेनास्य वस्तुता॥" [श्लोक० अभाव० ८] इति।

न च भावांश एवाभावांशो युक्तः, तस्येन्द्रियसंयोगबलेन प्रतीतेः, इतरप्रतीतेश्च तदसंयोगहेतुकत्वात्। यदाह –

"तत्संयोगे सदित्येवं सद्रूपत्वं प्रतीयते।
नास्त्यत्रेदमितीत्थं तु तदसंयोगहेतुकम्॥" [श्लोक० अभाव० २६] इति।

तत्कथं तत्प्रतिपत्तिरेवापरस्य व्यवच्छेदनमिति तन्निरासार्थमाह। "तस्या"न्यस्य प्रदेशस्य [T. 342a.] केवलस्य यत् तत् "कैवल्य"मेकाकित्वमसहायता तदेव "अपरस्य" प्रतियोगिनो घटादेः "वैकल्यम्" अभाव "इति" तस्मात् "तदन्यभाव एव" भावांश एव त्वदभिमतः "तदभावः" प्रतियोग्यभावांशो न ततः पृथग्भूतं धर्म्मान्तरमित्युच्यते सुगतसुतैः। ततश्च "तत्प्रतिपत्तिरेव च" तस्यान्यभावस्य प्रतिपत्तिरेव च[1] "तदप्रतिपत्तिः" तस्य प्रतियोगिनोऽप्रतिपत्तिरभावप्रतिपत्तिरिति यावत्। एवं मन्यते – योऽयमभावांशो भावांशात् पृथग्भूतो वस्तुनो धर्म्मः परिकल्प्यते स घटाद्यभावात्मकतां [S. 179b.] तद्रूपवैकल्यादेवानुभवति नान्यथा। तच्च तद्रूपवैकल्यमन्यवस्तुनो भावांशस्यापि विद्यत एव। तदभावे हि तस्यान्यवस्तुतैव हीयेत। नहि यद् यद्रूपविकलं न भवति तत् ततोऽन्यत्वमनुभवति, यथा तस्यैव स्वरूपम्, तथा चाभावांशोऽपि तस्य न सिध्येत्, सर्व्वं च विश्वमेकं द्रव्यं प्रसज्येत, ततश्च सहोत्पत्त्यादिप्रसङ्गः, सर्व्वस्य च सर्व्वत्रोपयोगः स्यादित्यवश्यमन्यवस्तुनो भावरूपता तदन्याभावात्मिकैव। तथा च तत्प्रतिपत्तिरेव तदन्याभावप्रतिपत्तिः[2]। तत्संयोग एव चेन्द्रियस्य तदन्याभावसंयोग [T. 342b.] इति किमुच्यते–

"नास्त्यत्रेदमितीत्थं तु तदसंयोगहेतुकम्।" [श्लोक० अभाव० २६] इति?।

विकल्पापेक्षयोक्तमिति चेत्, तदेतदबाधकमेव। प्रत्यक्षेण तदाकारोत्पत्त्या तदन्याभावात्मके[3] एव वस्तुरूपे प्रतिपन्ने पाश्चात्यस्य

१. च तदभावप्रतिपत्तिः तदप्र° – T. २. तदन्यभा° T.। ३. °न्याभावः तदात्मके – T.।

यथागृहीताभिलापिनो विकल्पस्योपगमात् । विस्तरतश्चायमभावविचारः प्रमाणद्वित्वसिद्धावभावं प्रमेयं प्रमाणं च विचारयता विहित इति तत एवावधार्य इति ।

अवश्यं च तदन्यभावप्रतिपत्तिरेव तदभावप्रतिपत्तिः । ततो न वस्त्वसङ्करसिध्यर्थं, 'नास्त्यत्रेदम्' इत्यभावव्यवहारार्थं [S. 180a.] चाभावप्रमाणपरिकल्पना युक्तेति[1] दर्शयन्नाह – "अन्यथा" यदि तत्प्रतिपत्तिरेव तदभावप्रतिपत्तिरिति नेष्यते तदा "तस्य" अन्यवस्तुनः स्वरूपपरिच्छेदेन ततोऽन्यस्यातद्रूपस्य "अन्यवच्छेदे" अनिराकरणे तदभावाप्रतिपत्तौ "तत्परिच्छेद एव न स्यात्"–तस्य तदन्यवस्तुनः स्वरूपप्रतिपत्तिरेव न स्यात् । किं कारणम् ? "तदतद्रूपयोः" तस्य तदन्यवस्तुनो यद्रूपं प्रतिनियतं सकलत्रैलोक्यविलक्षणं यच्चातद्रूपं तद्रूपं न भवति पररूपं तयोः "अविवेकाद्" अविवेचनाद् विवेकेनाव्यवस्थापनादसाङ्कर्येणाप्रसाधनात् । सकलपररूपासङ्कीर्ण्णं हि तद्रूपम् तच्चेत् [T. 343a] तत्सामर्थ्यभाविना प्रत्यक्षेण तथा नानुकृतं केवलं सम्मुग्धाकारमेव[2] तदुत्पन्नं तदा कथन्तेन तत्परिच्छेदः स्यात् ? । न हि यद्रूपं यद्वस्तु तद्रूपाननुकारिणा ज्ञानेन तत्परिच्छेदो युक्तो यथा – शुक्लशङ्खरूपाननुकारिणा कामलिनः पीतशङ्खावभासिना ज्ञानेनेति । प्रतिनियतरूपानुकारे वा तत्परिच्छेदस्य कथमन्याऽव्यवच्छेदो नाम ? । ततः प्रतिनियतरूपानुकारादेव तदन्याव्यवच्छेदः । तथा च तत्परिच्छेदाभाव इति ।

भवत्वेवं ततः को दोषः ? इत्यत आह – "य एष व्यवहारः" सर्व्वजनप्रतीतः "कस्यचिद्" अग्न्यादेर्व्वस्तुनो दर्शनात् "क्वचिद्देशे" तत्सम्बन्धिनि [S. 180b.] "प्राप्त्यर्थो" दृष्टस्यादृष्टस्य च "परिहारार्थः" प्रवृत्तिनिवृत्तिलक्षणः "स न स्यात्" । किं कारणम् ? । "न हि" यस्माद् "अयं" प्रतिपत्ता "अनलं पश्यन्नपि" सङ्कीर्ण्णतदतद्रूपप्रतिभासिना प्रत्यक्षेण, अन्यथाऽस्य दर्शनरूपताहानेः, तथा हि – असङ्कीर्ण्णस्यादर्शने सङ्कीर्ण्णमपि यदि न पश्येत् तदा लोष्टादिप्रख्यं कथं कस्यचिदेतद्दर्शनं स्यात् ? । स एवंभूतः सङ्कीर्ण्णदर्शनवान् प्रति-

१. न युज्यते T. । २. संयुक्त° T. ।

पत्ता कथम् "अनलमेव पश्यति" न सलिलादिकम् ?। "किन्तु' सङ्कीर्णरूपवस्तुप्रतिभासिज्ञानतया "सलिलादिकमपि" पश्यति। ततः कथं "सलिलार्थी तत्र" अग्निमति प्रदेशे "न प्रवर्तेत" ?।

परस्य वचनावकाशमाशङ्क्याह – [T. 343b.] "अनुपलम्भेन" इत्यादि। अनलप्रतिभासिना हि ज्ञानेनानलस्वरूपमेव प्रतीयते। यस्तु सलिलाभावः स तत्र सलिलस्यानुपलम्भेन। ततो ज्ञानद्वयेन तदतद्रूपयोर्विवेकाल्लोके प्रवृत्तिनिवृत्तिलक्षणः प्रतिनियतो व्यवहारः सिध्यतीति। सिद्धान्तवाद्याह – "कोऽयमनुपलम्भो नाम" इति। कदाचित् परो ब्रूयात् सलिलोपलम्भविरहमात्रमित्यत आह – "यदि सलिल" इत्यादि। कुमारिलस्य तु सलिलोपलम्भनिवृत्तिमात्रं तुच्छरूपमभावप्रमाणतया नाभिमतमेव।

"प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव उच्यते। [S. 181a.]
सात्मनोऽपरिणामो वा विज्ञानं वाऽन्यवस्तुनि॥ [श्लोक० अभा० ११]"

इति वचनात्। किन्तु योऽसावात्मनः प्रतिषेध्यवस्तुप्रतिभासिज्ञानात्मनाऽपरिणामः स तदन्यवस्तुप्रतिभासिज्ञानसहचरितोऽभ्युपगन्तव्यो न केवल इति परमभ्युपगमयितुमस्योपन्यासः। तथा चान्यवस्तुविज्ञानमेवाभावप्रमाणमस्तु, किमप्रमाणकस्यात्मनोऽपरिणामाख्येन धर्म्मेण परिकल्पितेन ?। न च तदन्यवस्तुविज्ञानपरिणामादन्य एव तस्यापरिणामो नाम भवतोऽभिमतो भावान्तरस्यैवाभावत्वेनोपगतत्वात्। तुल्ययोग्यतारूपस्यैकज्ञानसंसर्गिण एव चान्यवस्तुनो विज्ञानं तथोपेयं नान्यस्य, तज्ज्ञानात् प्रतियोग्यभावसिद्धेः। न हि रूपज्ञानाद्रसाद्यभावप्रतीतिर्युक्तिमती [T. 344a.] देशादिविप्रकर्षवतो वा। अन्यवस्तुविज्ञानं च प्रतिनियतरूपप्रतिभास्येव। रूपान्तरावभासित्वे हि तस्य सलिलोपलम्भाभाव एव न सिध्येत्। एवं च प्रतियोग्यभावः प्रत्यक्षावभासित[1] एव। तदभावव्यवहारे त्वस्मदभिमतैवानुपलब्धिरायातेति प्रतिपादयितुमस्योपन्यासः। तत्र यदि सलिलोपलम्भाभावः [S. 181b.] तुच्छरूपोऽनुपलम्भस्तदा कथम-

१. क्षावसितः T.।

भावः कस्यचित् प्रतिपत्तिः परिच्छेद इति यावत्, परिच्छेदस्य ज्ञानधर्म्मत्वात् । अथ न तस्य प्रतिपत्तिरूपतेष्यते किन्तु तद्धेतुभाव इत्यत आह – " प्रतिपत्तिहेतुर्वा " इति । नहि सर्व्वसामर्थ्यविरहलक्षणस्याभावस्य प्रतिपत्तिं प्रति हेतुभावो युक्तः । हेतुभावे वा तस्यानपेक्षितसहकारिणो नित्यं तज्ज्ञानजननादभावज्ञानमेवैकं प्रतिपत्तुः स्यात्, ज्ञानान्तरस्यावकाश एव न भवेत् ।

न चाज्ञातस्यास्य नास्तिताज्ञानजननं युक्तमित्याह – " तस्यापि " सलिलोपलम्भाभावस्य कथं प्रतिपत्तिः ? । अथायं सलिलोपलम्भाभावः स्वयमप्रतीत एव सलिलाभावप्रतीतिं जनयति तदा कस्यचिदपि । तदेवाह – "तस्य" सलिलोपलम्भाभावस्य ततो वा सलिलादन्यस्यानलादेः 'विज्ञानं वाऽन्यवस्तुनि' इत्यत आत्मनोऽपरिणामस्य पृथगवस्थापनात्, तत्रापि तदङ्गीकरणे चात्मनोऽपरिणामस्य [T. 344b.] तदात्मकत्वान्न ततो भेदेन व्यवस्थाप्येत । ततश्च कस्यचिदपि [S 182a.] तस्य तदन्यस्य वाऽप्रतिपत्तावपि यद्यभावः सलिलादेः प्रतीयते तदा स्वापाद्यवस्थास्वपि सलिलाद्यभावः किं न प्रतीयते ? । तदापि तदभावः प्रतीयेतेत्येतद्विचारितम् प्रमाणविनिश्चये, तत एवावधारणीयम् । व्यवधानादिग्रहणेन चैतद्दर्शयत्यन्यवस्तुनोऽप्यन्यत्वं तत्तुल्ययोग्यतारूपापेक्षमेव, न तदनपेक्षमुपेयम् । तथा चास्मदुपवर्णितानुपलब्धिसिद्धिरिति । यदा चैवमुक्तेन प्रकारेणानुपलम्भेन सलिलाभावप्रतीतिर्न युज्यतेऽनलप्रतिभासिनश्च ज्ञानस्य प्रतिनियताकारता नाभ्युपगम्यते "तस्मादयम्" अनलदर्शी प्रतिपत्ताऽनलं "पश्यन्नपि" सङ्कीर्ण्णरूपप्रतिभासिना ज्ञानेन 'अनलोऽयं न सलिलम्' इति नाध्यवस्यति अनध्यवस्यंश्च सलिलरूपस्यापि प्रतिभासनात् तदर्थी " न तिष्ठेत् " प्रवर्तेत " नापि प्रतिष्ठेत " सलिलार्थी न प्रवर्तेत । तथाहि – सलिलं नाम तदुच्यते यत् सर्व्वोदन्यासन्तापाद्यपनयनक्षमं सकलतदन्यरूपासंकीर्ण्णप्रतिनियताकारज्ञानावभासि । इदं त्वन्यदेव शबलरूपं किमप्यवभासत इति ।

१. तृषा° ।

"ततश्च" प्रवृत्तिनिवृत्त्योर्विरुद्धयोर्युगपदनुष्ठातुमशक्यत्वात् "दुस्तरं व्यसनं प्रतिपत्तुः स्यात्।"

अत्र परस्य [S. 182b.] वचनावकाशमाशङ्क्याह – "तत एव" इत्यादि। न मया [T. 345a.] सलिलोपलम्भनिवृत्तिमात्रात् तुच्छरूपात् तदभावगतिरुच्यते, यथोक्तदोषप्रसङ्गात्। किन्तु यदेतदेकस्य केवलस्यानलस्य दर्शनं तत एवान्यस्य तत्राप्रतिभासमानस्य सलिलस्याभावगतिर्भवति 'विज्ञानं वाऽन्यवस्तुनि' इति वचनात्।

सिद्धान्तवाद्याह – "कथमेकम्" इत्यादि। केन पुनः सामर्थ्येन तदेकदर्शनम् "अन्याभावं प्रत्याययति ?"। तथाहि – तस्मिन् दृश्यमाने तदेवास्तीत्यवगच्छतु, तदन्यत्तु नास्तीति किमिति प्रत्येतीति। "तस्यैव" परिदृश्यमानस्यानलादेः "केवलस्य" सलिलासंसृष्टरूपस्य "दर्शनाद्" अनलज्ञाने प्रतिभासनात् 'सलिलं नास्ति' इति निश्चयः सञ्जायते। तथाहि – अनल इव सलिलमपि यदि तत्राभविष्यत् तदप्यनलवद् दर्शने प्रत्यभासिष्यत तयोः स्वज्ञानं प्रत्यविशिष्टत्वाद् योग्यताया नैकस्य प्रतिभासो युक्तः। तस्मादेकप्रतिभासनमन्याभावनान्तरीयकं इत्यन्याभावे ततो ज्ञानमुत्पद्यते अन्यवस्तुनि च विज्ञानं नास्तीति ज्ञानं जनयति। तथाऽन्यद् वस्तु पररूपासंकीर्णस्वभावतयैव तथोच्यते। तद्रूपतयैव[1] च तज्ज्ञानमन्यत्[2] प्रतियदेवं व्यपदिश्यतेऽन्यथा[3] तदयोगा[4]दित्यन्यप्रतिपत्तिरेव तदभावविकल्पहेतुरिति सिद्धान्तवाद्याह – "इदमेव" इत्यादि। नन्वस्माभिरिदमेव प्रागभिहितं "[5]तयोः सतोः नैकरूपनियता प्रतिपत्तिः असम्भवात्" इत्यादिभिर्वचनैः। ततो यदेवान्यासंसर्गिणः केवलस्य [T. 345b.] प्रतिभासनं तदेव तदन्याभावस्यापि, तस्यैव केवलस्य तदन्याभावात्मकत्वादन्यस्य चाभावांशस्य निरस्तत्वात्। ततः प्रत्यक्षावभासितत्वात् तदभावस्य तद्बलात् पाश्चात्यं व्यवहारप्रवर्तनरूपं नास्तिताज्ञानं विक-

१. असंकीर्ज्ञ (र्ण्ण)वस्तुप्रतिभासितया। २. अन्यज्ञानम्। ३. असंकीर्ण्णत्वाभावे। ४. अन्यत्वायोगात्। ५. पृ० १७२. पं० २२।

ल्पकमाजायते। न तु तेनाप्रतिपन्नं किञ्चिदवगम्यते, यतस्तदन्यवस्तुनि विज्ञानं प्रत्यक्षात्मकमप्यनवगते तदन्याभावे ज्ञानं जनयत् पृथगभावप्रमाणतया व्यवस्थाप्येत। तथा हि – तदन्याकारशून्य एव तदेकज्ञानाकारः संवेद्यते। ततस्तत्संवेदनमेव तदभावसंवेदनम्। नहि विकल्पज्ञानस्यापि तदाकारशून्यरूपसंवेदनादन्यत्तदभावसंवेदनं नाम। केवलमस्य विकल्परूपतैवातिरिच्यते। ततो यथा निर्विकल्पज्ञानावसिते क्वचिदनले 'अनलोऽत्रास्ति' इति पाश्चात्यो विकल्पो व्यवहारप्रवर्तनमात्रं न ततः पृथक् प्रमाणं यथोक्तं प्राक्, तथा नास्तिताज्ञानमपि विकल्पकं तत्फलद्वारेण वाऽन्यवस्तुविज्ञानं न प्रत्यक्षात् पृथगभावाख्यं [S. 183b.] प्रमाणमिति। तस्माद् यदेवास्माभिरभिहितं तदन्याभावप्रतीतिं प्रति, तदेव त्वयाऽप्यभिधीयत इति कस्मात् परुषमिवाभाति यतस्तदनभ्युपगमेन पृथगभावाख्यं प्रमाणमभ्युपगतमित्युपहसति। तथा ह्यगत्येदानीं त्वयोच्यते न मध्यस्थतया अन्यथेदमेव किं न पूर्वमेवाभिहितम्?, यत आलजालाभिधानेनाऽऽत्मा परिक्लेशित [T. 346a.] इत्युपसंहरन्नाह – " तस्मात् तीरादर्शिनेव " इत्यादि। यथा किल वहनारूढैर्वणिग्भिः शकुनिर्मुच्यते अपि नाम तीरं द्रक्ष्यतीति। स यदा सर्वतः पर्यटंस्तीरं नासादयति तदा वहनमेवागच्छति तद्वदेतदपि द्रष्टव्यम्। यतश्चावश्याभ्युपगमनीयोऽयं पक्षस्तस्मान्न किञ्चिदनयाऽविद्यमानप्रतिष्ठानया दिशः प्रतिपत्त्या प्रयोजनम्।

तदेवं परस्यान्यभावतदभावयोर्लिङ्गलिङ्गिभावमिच्छतः सम्बन्धाभावादसावयुक्तः इति प्रतिपादिते परेण 'असति सम्बन्धेऽन्यभावगत्याऽपि तदभावगतिर्न स्यात्' इति चोदिते 'न वै कुतश्चित् सम्बन्धाद्' इत्याद्यभिहितम्। ततः 'अन्यभाव एव तदभावोऽन्यभावगतिरेव च तदभावगतिः' इति प्रसाधयता कुमारिलपरिकल्पितः कस्यचिदभावनिश्चयार्थमभावप्रमाणवादः प्रसङ्गतो निरस्तः सम्प्रति तु –

१. नास्तिताज्ञान°। २ पृ. १७८. पं. २३। पृ. १८०. पं. १७।

"वस्त्वसङ्करसिद्धिश्च तत्प्रामाण्यसमाश्रिता [श्लोक० अभाव० २]"

इत्येतदाहत्य निराकर्तुं [S. 184a.] पूर्व्वपक्षमुत्थापयन्नाह — "यद्येकपरिच्छेदादेव" इत्यादि। यदि हि "एकस्य" केवलस्य परिच्छेदादन्यस्य "व्यवच्छेदः" प्रतिषेधः सिध्यति तदा सर्व्वस्या अ(°स्या)न्यस्याऽविशेषेणैव "तत्र" देशे यत्रासावेकः परिदृश्यते तत्राभावसिद्धिर्भवेत्, न तु विशेषपरिग्रहेण [T. 346b.] तुल्या स्वज्ञानजननं प्रति योग्यावस्था यस्य तस्यैवेति। तथा हि — असौ यथा तुल्ययोग्यतारूपपदार्थविविक्तरूप उपलभ्यते, तदेकाकारप्रतिनियमात् तज्ज्ञानस्य, तथा तदतुल्ययोग्यतारूपपदार्थविविक्तात्मकोऽपि। ततश्च तद्विविक्ताकारतया तदन्याभावसाधने विशेषाभावात् प्रदेशरूपज्ञानं घटाभावमिव रसाद्यभावमपि साधयेत्, न वा घटाभावमपीति।

किञ्च, यदेतद् 'उपलब्धिलक्षणप्राप्तस्यानुपलब्धिरभावसाधनी' इति विशेषणमुक्तं तच्च न वक्तव्यम्। किं कारणम्? यतो येऽप्यनुपलब्धिलक्षणप्राप्तास्तेषामपि तत्र देशे तदेकाकारतया ज्ञानस्य व्यवच्छेदो भवत्येव। तथा हि — यथोपलब्धिलक्षणप्राप्तास्तदेकाकारवति ज्ञाने न प्रतिभासन्ते ततश्च व्यवच्छिद्यन्ते [S. 184b.] तथाऽनुपलब्धिलक्षणप्राप्ता अपीति किम् 'उपलब्धिलक्षणप्राप्तस्य" इत्यनेन विशेषणेनेति। एवं पूर्व्वपक्षे व्यवस्थिते यदि तदन्यव्यवच्छेदः — ततः पृथक्करणमन्यत्वेन व्यवस्थापनमभिमतं तदभ्युपगम्यत एव। अथ तद्देशकालयोरभावः, तदयुक्तम्, येन हि सामर्थ्येन तुल्ययोग्यतारूपस्योपलब्धिलक्षणप्राप्तस्य चाभावं साधयति न तत्सामर्थ्यमतुल्ययोग्यतारूपेऽनुपलब्धिलक्षणप्राप्ते वा सम्भवति। 'तयोः सतोर्न्नैकरूपनियता प्रतिपत्तिः असम्भवात्' इत्येवं हि तदभावसाधनम्। न [T. 347a.] चैतदन्यत्र सम्भवतीति प्रतिपादयितुम् "एकात्मपरिच्छेदात्" इत्यादिनोपक्रमते। यत् पुरोऽवस्थितं प्रत्यक्षेऽवभासते तस्यैकस्यात्मनः प्रतिनियतस्य रूपस्य परिच्छेदात् तदाकारोत्पत्त्या विधिविकल्पोत्पादनेन च यः "तदन्यः" ततोऽन्यस्तद्व्यतिरिक्तस्तस्य सर्व्वस्य य "आत्मा" स्वभा-

१. पृ. १७२. पं. २२।

वस्ततो "व्यवच्छेदो" भेदनं पृथक्करणमन्यत्वसाधनमसङ्कीर्णरूपताप्रत्यायनं भवति । कथं पुनरेकात्मपरिच्छेदादेव तस्य[1] तदन्यात्मनो व्यवच्छेदः प्रत्यक्षेण क्रियते ?, यावता प्रत्यक्षं पुरोऽवस्थितपदार्थसामर्थ्यभावि [S. 185a.] तद्रूपमेव प्रतिपद्यताम् । यत्तु तद्व्यतिरिक्तमशेषपदार्थजातं तदात्मनस्तस्य पुरोऽवस्थितस्य कथं तद्व्यवच्छेदकम् ? अतः तद्व्यवच्छेदार्थमभावप्रमाणमभ्युपेयम्, यतो –

"वस्त्वसंकरसिद्धिश्च तत्प्रामाण्यसमाश्रिता" [श्लोक० अभाव० २] इति ।

अत आह – "तदात्मनियतप्रतिभासज्ञानाद्" इति । यतः पुरोऽवस्थितस्यैकस्य वस्तुनः पररूपासंकीर्ण्ण आत्मा, सर्व्वभावानां स्वभावत एव स्वस्वभावव्यवस्थितेः पररूपेणासंकीर्ण्णस्वभावत्वात् । अन्यथा कथमभावप्रमाणतोऽप्यसांकर्यमेषां सिध्येत् ? । संकीर्ण्णरूपाणामसाङ्कर्यसाधने तस्य [T. 347b] भ्रान्तताप्रसङ्गात् । तस्मिन् पररूपासंकीर्ण्णे स्वभावत एव तदात्मनियतो यः प्रतिभासः पररूपप्रतिभासासंकीर्ण्णः तदेकपदार्थसामर्थ्यभाविनि प्रत्यक्षे पररूपप्रतिभासायोगात् तस्य भ्रान्ततापत्त्या प्रत्यक्षताहानेः । तदुक्तम् – "तद्व्यर्थसामर्थ्येनोत्पद्यमानं तद्रूपमेवानुकुर्यात्" इति । तस्य तदात्मनियतप्रतिभासस्य ज्ञानात् प्रत्यक्षेण स्वसंवित्त्या संवेदनात् । तत्संवेदनमेव [S. 185b.] हि प्रत्यक्षस्यातद्रूपाद् "व्यवच्छेदनं" पृथक्करणं तद्बलेनैव च पाश्चात्यः 'अन्यात्मकमेतन्न भवति' इत्यसांकर्यव्यवस्थाप्रत्ययो विकल्पकः संजायते गृहीतग्राही । न तेनापूर्व्वं किञ्चित् प्रतीयते, पररूपासंकीर्ण्णस्यात्मनः प्रत्यक्षेणैव तदाकारानुकारिणा परिच्छेदादिति ।

यदि नाम तदात्मनियतप्रतिभासज्ञानं तथापि कथमन्यात्मनः तस्य पृथक्करणम् ? इत्यत आह – "न हि तदात्म" इत्यादि । यस्मात्तस्य वस्तुनो य आत्मा पररूपासंकीर्ण्णः स तदन्यस्य शेषस्य वस्तुन आत्मा न भवति, सर्व्वस्य ततोऽन्यस्वभावत्वात्, अन्यथा तदन्यत्वहानेरिति । तस्मात्तदात्मनियतप्र-

१. प्रमातुः ।

तिभासज्ञानमेव तदन्येभ्यो निवर्त्तनम्। नहि ज्ञानेनार्थो हस्ते गृहीत्वाऽन्यतो निवर्त्तनीयः। केवलमन्यरूपासंकीर्णस्यैकस्यात्मनोऽनुकरणमेवास्यान्यतो [T. 248a.] निवर्त्तनमुच्यत इति। अथान्यात्मनः स्वविषयं न निवर्त्तयेत्, तदाऽस्य विपयस्यान्यात्मनः सकाशादव्यवच्छेदे पृथगव्यवस्थापने परात्मनोऽपि तत्र परिच्छेदः स्यात्, अन्यथा तद[1]परिच्छेदस्यैवै[2]कात्मपरिच्छेदात्मनस्तं[3]न्निवर्त्तनरूपता [S. 186a.] स्यात्। ततश्चाव्यवच्छेदेऽन्यात्मनस्तत्परिच्छेदप्रसङ्गात् प्रवृत्तिनिवृत्त्योरभाव इति पूर्व्वः प्रसङ्गो 'न[4] ह्ययमनलं पश्यन्नपि' इत्यादिकः।

न केवलमन्यात्मनस्तन्निवर्त्तयति तदात्मनोऽप्यशेषमन्यादिति दर्शयन्नाह – "तं च" अग्रतः स्थितं देशकालस्वभावावस्थानियतं तदन्यदेशादिभ्यो व्यावृत्तात्मनः स्वहेतुभ्यः एवास्य भावात्, "तदात्मना" देशादिनियतेनात्मना तथाविधस्वभावस्यैवानुकारादुपलभमाना बुद्धिः "तथात्वं[5]प्रच्युतिम्" अन्यदेशकालस्वभावावस्थताम् "अस्य" स्वविषयस्य "व्यवच्छिनत्ति" ततः पृथक्करोति। कस्मात्पुनरन्यदेशादितां ततः पृथगवस्थापयति इत्यत आह – "एवं हि" यस्मादन्यदेशतादेस्ततः पृथक्करणे सति तद्देशादिनियतः पदार्थः [T. 348b.] परिच्छिन्नो भवति, तद्रूपस्यैवानुकाराद्। यद्यन्यथाभावोऽन्यदेशादिता तद्रूपाननुकाराद्व्यवच्छिन्नः—भवति तथात्वं च तद्देशादिनियतत्वं च, तदा तस्यैव दृश्यमानस्य भवति नान्यस्यान्यदेशादिमतः। यत एवम् "इति" तस्मादन्यथाभूतादन्यदेशादिमतस्तथाभूतं तद्देशादिमंतं "व्यवच्छिन्दत्येव" [S. 186b.] निवर्त्तयन्त्येव तत् परिच्छिनत्तीति पूर्व्वकस्योपसंहारः। तथा "तथाभूतादन्यथाभूतं व्यवच्छिन्दत्येव" इति द्वितीयस्योपसंहारः कार्य इति। "एवम्" उक्तेन न्यायेन "एकस्य" प्रमाणस्य प्रत्यक्षस्यानुमानस्य वा तस्याप्येवमेव स्वविषयपरिच्छेदाद् "वृत्तिः" प्रवृत्तिः सर्व्वभावान् "द्वैराश्ये" तत्त्वेऽन्यत्वे च "व्यवस्थापयति"। ततस्तत्परिच्छेदकप्रमाणबलेनैवासाङ्कर्यसिद्धिः। किं तदर्थिकयाऽप्यभावकल्पनयेति ?।

---

१. घट°। २. भूतल°। ३. घट°। ४. पृ. १८९ पं. २४। ५. तथात्वाप्र° T.

ननु च विकल्पव्यापार एष 'इदमन्यात्मकं न भवति अन्यथैतदात्मकम्' इति। प्रत्यक्षं च निर्व्विकल्पकमिष्यते तत् कथमसांकर्य्यसिद्धिस्ततः? इत्यत आह – "तस्यान्वये"त्यादि। तद्धि प्रत्यक्षं विधिप्रतिषेधविकल्पौ यदा स्वविषये जनयति तदैवास्य साफल्यम्, तदैव च प्रमाणमिष्यते [T. 349a.] नान्यदा। अत एवैकस्यार्थस्व[1]भावस्याप्रतिपन्नांशाभावात् सर्व्वात्मना परिच्छेदेऽपि भ्रान्तिकारणसद्भावात् क्षणिकतादावन्वयव्यतिरेकबुद्धी जनयितुमसामर्थ्यात् तत्रास्य प्रामाण्यं नेष्यत इति।

स्यान्मतम् – द्वैराश्यसाधनेऽप्यसांकर्यसिद्ध्यर्थो मा भूदभावप्रमाणकल्पना किन्तु प्रकारान्तराभावसिद्ध्यर्था भविष्यति। न हि तदभावसिद्धौ प्रत्यक्षस्य कश्चिद् व्यापारः [S. 187a.] प्रतिपादित इति अत आह "तद्व्यतिरिक्ते"त्यादि। तस्मात् परिदृश्यमानाद् व्यतिरिक्तस्याशेषस्य वस्तुनो व्यवच्छेदेन ततः पृथक्करणेनान्यत्वेन या व्याप्तिस्तत्साधनादेव प्रकारान्तरस्य तत्त्वान्यत्वबहिर्भूतस्याभावः सिध्यति। ततस्तदर्थमपि नाभावप्रमाणकल्पना युक्तेति।

अथ मतम् – सर्व्वस्यापरिदृष्टस्य दृश्यमानादन्यतया व्याप्तिं नैव प्रत्यक्षं साधयति तत् कुतस्तृतीयराश्यभावः प्रत्यक्षत एव स्यात्, यतोऽभावप्रामाण्यकल्पना व्यर्था भवेदित्यत आह – "तस्य" तृतीयराशितया कल्प्यमानस्य ततो दृष्टादन्यतया व्याप्त्यभावे "तेन" प्रत्यक्षेण "[2]ततो"ऽर्थात् स्वविषयस्य "अव्यवच्छेदा"-दपृथक्करणात्, तदर्थस्य च राश्यन्तरत्वेन कल्प्यमानस्य स्वविषयादव्यवच्छेदात् अपृथक्करणात् पुनरपि भावस्य स्वविषयस्यापरिच्छेदप्रसङ्गात्। [T. 349b.] स हि तद्विषयः सकलपररूपासंकीर्णात्मा यदि तेनात्मना न परिच्छिन्नः कथं तेन तस्य परिच्छेदः?। तेनात्मना परिच्छेदे वा कथं सर्व्वस्य तदन्यतया व्याप्त्यसाधनम्? अन्यथैकस्यापि तदन्यत्वं न स्यात्, निमित्तस्य समानत्वादिति। यत एवं "तस्मात्" क्वचिद्वस्तुनि प्रमाणं प्रत्य-

१. °स्वभावस्य प्रत्यक्षांशां – T.। २. तदर्थान्यवच्छेदादिति समासद्वयेन चा(व्या)चष्टे।

क्षादिकं [S. 187b.] प्रवृत्तं तद्वस्तु प्रतिनियतेनात्मना परिच्छिनत्ति, ततोऽन्यत्तद्रूपविकलं व्यवच्छिनत्ति, तदन्यत्वेन व्यवस्थापनात्। तृतीयस्य च तत्त्वान्यत्वबहिर्भूतस्य प्रकारस्याभावं सूचयति, सर्व्वस्यान्यतया व्याप्तिसाधनात्, [1]तद्विरुद्धस्य वा सर्व्ववस्तुनो द्वैविध्यस्य साधनादिति।

एवमेकस्य प्रमाणस्य व्यापार एषोऽनन्तरोक्त इति तमेवोपसंहृत्य सुखप्रतिपत्तये दर्शयन्नाह – "तथाहि" क्वचिद्वस्तुनि "प्रमाणं" प्रत्यक्षादि प्रवृत्तं "तदेव" वस्तु तदन्यस्मात् "पररूपाद् व्यवच्छिनत्ति" ततः पृथक्करोति तदसंकीर्णरूपतया प्रतिपद्यते, परमार्थतस्तस्य तद्रूपत्वात् यथावस्तु च प्रत्यक्षेण रूपानुकारात्। किमिति पररूपाद्व्यवच्छिनत्ति?। तस्यैव पररूपविकलस्यैकरूपस्य परिच्छेदात्। तथा "तदन्यदेव च" तस्माद् दृश्यमानादन्यदेव च व्यवच्छिनत्ति। कुतः?। "तस्मात्" [T. 350a.] स्वविषयात्। न केवलं स्वविषयं परतो व्यवच्छिनत्ति, परमपि स्वविषयाद् इति। कुत एतद्?। अन्यस्य पररूपस्य तत्र स्वालम्बनेऽपरिच्छेदादवश्यमेवापरिच्छिन्नस्य [S. 188a.] परिच्छिन्नादन्यत्वं भवति। यत एवमतः "तद्" एव प्रमाणमेकवस्तुपरिच्छेदकं प्रकारान्तराभावं साधयति, नाभावाख्यम्। कुत एतत्?। तस्मिं दृश्यमाने वस्तुनि दृष्टतदन्यत्वेन तस्यान्यस्य तत्रापरिच्छिद्यमानस्यान्यत्वं तदन्यत्वं दृष्टात् तदन्यत्वं "दृष्टतदन्यत्वं" तेन सर्व्वस्य तद्व्यतिरिक्तस्य व्यवस्थापनान्न अ(°पनेन अ)तदन्यस्यैव च यदन्यन्न भवति पुरोऽवस्थितं सकलपरभावव्यावृत्तं तस्यैव तत्त्वेन दृश्यमानप्रकारतया व्यवस्थापनादिति।

अमुमेव न्यायमन्यत्राप्यतिदिशन्नाह – "एतेन क्रमाक्रमादयः" इत्यादि। एतेन अनन्तरोक्तेन न्यायेन प्रतिनियतैकपदार्थरूपानुकारिणी बुद्धिरुपजायमाना तद्विपरीतरूपं सर्व्वं स्वविषयाद् व्यवच्छिन्दती द्वैराश्यं तृतीयप्रकाराभावं च साधयतीति[2] ये केचिदन्योन्यव्यवच्छेदरूपाः क्रमाक्रमनित्यानित्यादयः ते व्याख्याताः।

१. प्रकारा(र)°। २. अनेनेति शेषः।

तथा हि – कार्यस्य क्रममनन्यसहायतां प्रतियत्येव बुद्धिस्तस्याक्रमं कार्यान्तरसाहित्यं [T. 350b.] ततः पृथक्करोति। ततः क्रमाक्रमतया द्वैतसिद्धेः तृतीयस्य प्रकारस्य सम्भवो निरस्तो भवति। क्रमभावव्यतिरेकिणः सर्व्वस्य कार्यजन्मनः तदन्यतया द्वितीयप्रकारतयाऽवस्थानात्। एवमुदयानन्तरध्वंसिता [S. 188b.] क्षणिकतोच्यते इति प्रतीयती व्यवस्थापनाकाल एव बुद्धिस्तद्विपरीतरूपतायाः स्वविषयादपाकरणात् ततोऽन्यत्वेन प्रकारान्तरेऽवस्थापनाद् राश्यन्तराभाव इति।

तदेवमेकप्रमाणनिबन्धनामसाङ्कर्यसिद्धिं प्रतिपाद्योपसंहरन्नाह – "तदेवम्" उक्तेन न्यायेन "एकस्य" प्रतिनियतात्मन उपलम्भात् तस्योपलभ्यमानस्य यस्ततोऽन्यस्तत्तुल्ययोग्यतारूपस्तद्विपरीतो वा तद्रूपविकलस्तदात्मनो "व्यवच्छेदः" पृथक्करणं तस्योपलभ्यमानस्यानुपलभ्यमानस्वभावाद् रूपान्तरेण प्रतिभासनात्। तथा तस्य स्वविषयस्य तदन्यात्मतायाः भावप्रधानत्वान्निर्देशस्य "व्यवच्छेदो भवति" असाङ्कर्यं सिध्यति।

तद् यद्येतदविशेषेणान्यस्य सर्व्वस्य तत्राभावसिद्धिः स्यादित्यत्राभिमतं तदा सिद्धसाधनम्, यतः सर्व्वमविशेषेणैव तदेकाकारया बुध्या तद्रूपाविकलं स्वविषयादवच्छिद्यते, सर्व्वस्यान्यरूपस्य तत्राप्रतिभासनात्। अथ तद्देशकालयोरभावः सर्व्वस्य [T. 351a.] [S. 189a.] तद्विपरीतरूपस्य व्यवच्छेदोऽभिमतः स न युक्त इति दर्शयति – "न तद्देशकालयोः" यत्रासौ प्रतिनियतात्मा सकलत्रैलोक्यविलक्षणः पदार्थ उपलभ्यते तत्र सर्व्वस्यान्यस्य भावस्य तत्तुल्ययोग्यतारूपस्येतरस्य वा व्यवच्छेदः प्रतिषेधः। येन हि कारणेन तत्तुल्ययोग्यतारूपस्य तत्राप्रतिभासमानस्य प्रतिषेधस्तस्मिन् सति तदेकरूपनियतायाः प्रतिपत्तेरसंभवात् त[3]दभावनान्तरीयिका सा[4] भवन्ती तत्प्रतिषेधं गमयतीति तत्कारणमनुपलब्धिलक्षणप्राप्ते तदतुल्ययोग्यतारूपे च न सम्भवतीति कथं तदभावः सिध्येत्।

१. द्रव्यान्त° – T.। २. इति सूचयति। ३. ध०। ४. सा तन्निबन्धनात्प्रति° T.।

एतदेवोपसंहरन्नाह – “तस्मादतदात्मा” च सर्व्वस्तद्विपरीतरूपस्तदेकाकारया बुद्ध्या प्रसाधितः स्यात् “तद्देशकालश्च” तस्य प्रतिभासमानस्य यौ देशकालौ तौ यस्य, स च स्यात्। किंवत्?। रसरूपादिवदिति। नहि रूपप्रतिभासिना ज्ञानेन तद्रूपविकलस्य रसस्य स्वविषयात् पृथक्करणेऽपि तदसांकर्यसाधनेऽपि तद्देशकालयोरभावः [S. 189b.] सिध्यति। ततश्च कथं सर्व्वस्यातुल्ययोग्यावस्थस्यापि तत्राभावः स्यात्?, उपलब्धिलक्षणप्राप्तस्येति विशेषणं वा नोच्येत। यत एवं “तस्मात्” क्वचित् कदाचित् कस्यचिदभावसिद्धिर्यथोक्तादेवानुपलम्भाद् उपलब्धिलक्षणप्राप्तस्य [T. 351b.] तत्तुल्ययोग्यतारूपोपलम्भात्मनश्चेत्येवंरूपात्, न तु सामान्येन यथाऽऽहुः परे –

“प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता॥” [श्लोक० अभा० १] इति।

न ह्यनुपलब्धिलक्षणप्राप्ते प्रमाणपञ्चकाप्रवृत्तावपि तदभावः सिध्यति, सत्यपि तस्मिन् स्वभावादिविप्रकर्षेण प्रमाणपञ्चकाप्रवृत्तिसम्भवादिति।

तदेवं प्रासङ्गिकं परिसमापय्य यदुक्तं परेण ‘स[1] एवान्यभावस्तद्विषया चोपलब्धिः तदभावस्य किं न साधनम्’ इति तत्रान्यभावस्य तदभावं प्रति लिङ्गत्वे निरस्ते तद्विषयाया उपलब्धेर्निराकुर्व्वन्नाह – “अन्यभावविषये”त्यादि। यत्पुनरुक्तम् – ‘अ[2]न्यभावविषयोपलब्धिस्तदभावस्य किन्न साधनम्’ इति सा तदभावस्य साधिकेष्टैवास्माकम्, [S. 190a.] न तु लिङ्गत्वेन यथोक्तवानसि। किं कारणम्?। यतः तत्राप्यन्यभावविषयायामुपलब्धावऽभावस्य पृथगन्यभावात् साध्यत्वे कल्प्यमाने सम्बन्धाभावस्य तदभावेन तुल्यत्वात्। न हि तस्या अपि अन्यभावरूपायाः तदभावेन कश्चिदेकार्थसमवायादिरूपः सम्बन्धोऽस्तीति।

अपृथक्सिद्धेरित्यस्यापि तुल्यतां दर्शयन्नाह – “लिङ्गाविर्भावे”त्यादि। येयमन्यभावविषया उपलब्धिर्लिङ्गतयोच्यते तस्यास्त-

१. पृ० १७८. पं० १४. २. पृ० १७८. पं० १५. ३. °भावविषयायाः T.

द्विविक्तप्रदेशाकाराया [T. 352a.] " आविर्भावकाल एव " जन्मकाले[1] प्रतीतिकाल एव वा तदभावसिद्धेश्च । तथा हि – तत्प्रतिभासविविक्तान्यभावप्रतिभासबुद्धिसंवेदनमेव तदभावसंवेदनमिति । तदेव साधयति – न ह्यन्यस्य तद्विविक्तस्य भावं प्रतिपद्य प्रतिपत्ता पुनरुत्तरकालं तत्प्रतिपत्तेरन्यभावप्रतिपत्तेस्तदभावेनान्वयव्यतिरेकौ प्रसाध्य प्रतिबन्धसाधकेन प्रमाणेन तदभावं प्रतिपद्यते । किं तर्हि ? । तदन्यं तद्विविक्तरूपं प्रतिपद्यमान एव तस्य[2] प्रतियोगिनोऽभावं प्रतिपद्यते, तस्यैव तदभावात्मकत्वात् । तथा हि – सघटप्रदेशासंकीर्णरूपस्य [S. 190b.] केवलप्रदेशस्य दर्शनमेव घटाभावदर्शनम् । नहि 'घटोऽत्र नास्ति' 'घटवानयं न भवति' 'सघटादन्यः' इत्यर्थभेदः कश्चित् । ततः सघटादन्यतया केवलप्रदेशस्य दर्शनमेव घटाभावदर्शनमिति । 'घटोऽत्र नास्ती'ति ज्ञानं गृहीतग्राहितया स्मृतिरेवेति । कथं ज्ञायत इति चेत् । दर्शनानन्तरमन्वयव्यतिरेकसाधनलक्षणेन व्यवधानेन विना 'इदं घटविविक्तं प्रदेशवस्त्वस्ति' 'इदं तु घटवस्तु नास्ति' इति पाश्चात्येन विकल्पद्वयेन व्यवस्थापनात्[3] । ततो नान्वयव्यतिरेकानुसरणमत्रास्तीति [T. 352b.] ।

किञ्च – दृष्टान्तासिद्धे स्वात्मन्यभावविषयोपलब्धिस्तदभावस्य[4] साधनं । तदेव व्यतिरेकमुखेन दर्शयति – " तच्च तस्य " इत्यादि । इहाप्यस्त्येवान्वय इति चेत्, आह – " न ह्येवं शक्यम्" इत्यादि । कस्मान्न शक्यं दर्शयितुम् ? । तदेकोपलब्धेः तस्यैकस्यानन्यसंसर्गिणो योपलब्धिर्विशेषरूपा तस्याः क्वचिदप्यन्यत्राभावात् । अथ तद्विविक्तोपलब्धिसामान्यं हेतुरुच्यते – यत्र यत्र घटविविक्तभूतलोपलब्धिस्तत्र [S. 191a.] तत्र घटाभावो यथा पूर्व्वानुभूते घटविविक्ते प्रदेश इत्याह – "सामान्येन प्रदर्शने क्रियमाणे" दृष्टान्तेऽपि पूर्व्वानुभूतघटविविक्ते प्रदेशे घटाभावस्य प्रसाधकं प्रत्यक्षादिकं प्रमाणान्तरमन्यभावविषयोपलब्धेर्नास्ति, किं तु सैव तदन्यभावोपलब्धिः साध्यधर्म्मस्य तदभावलक्षणस्य सा-

१. प्रतीतिजन्मकाल एव T. । २. तस्य रूपस्याऽभावं – T. । ३. ज्ञापनात् – T. । ४. °स्य न साधनम् – T. ।

धिका। सा च यथा साध्यधर्म्मिणि तद्भावसिद्धये दृष्टान्तमपेक्षते तथा दृष्टान्तेऽपि। तथा, तत्रापि तदन्यत्रापीत्यनवस्था दृष्टान्तानाम् इति। अनवस्थायां चाप्रतिपत्तिः सर्व्वत्र तद्भावस्य। यत एवं "तस्मान्न" कुतश्चिल्लिङ्गात्तदन्यभावात्तदुपलब्धेर्व्वा तद्भावसिद्धिरिति। यदि तदन्यभावस्तदभावं न साधयति, किं पुनर्लिङ्गतया[1] [T. 353a] साधयति?, इत्यत आह – "सोऽन्यभावः" प्रत्यक्षलक्षणेन–प्रत्यक्षस्यैव विवक्षितोपलम्भादन्यत्वेनानुपलम्भत्वात्। तल्लक्षणेनानुपलम्भेन सिद्धः सन्नभावव्यवहारं साधयेत्, क[2]र्म्मे[3]स्थक्रियापेक्षायां तदन्यभावस्यानुपलब्धिरूपत्वात्। क्व पुनरसावभावव्यवहारं साधयेत्?। मूढप्रतिपत्तौ साध्यायां। यस्त्वमूढो [S. 191b.] विषयप्रतिपत्तौ विषयिणं स्मरत्येव तस्याभावव्यवहारः प्रत्यक्षनिबन्धन एवेति न तत्रानुपलब्धेर्लिङ्गतेति सुचर्चितमेवान्यत्रेतीहालं प्रसङ्गेनेति।

[ § ३. अनुपलब्धिं त्रिधा विभज्य तद्विवेचनम्। ]

तदेवमनुपलब्धेरशेषविप्रतिपत्तिनिराकरणेन स्वरूपमवस्थाप्य प्रभेदनिर्द्देशार्थमाह – "सेयं यथोक्ता त्रिधाऽनुपलब्धिः"। कथम्?। सिद्धे तत्प्रसाधकेन प्रमाणेन कार्यकारणभावे सति कारणस्यानुपलब्धिः। कीदृशस्य?। सिद्धाभावस्य। तथा, व्याप्यव्यापकभावसिद्धौ सत्यां तत्प्रसाधनप्रमाणबलेनैव सिद्धाभावस्यैव व्यापकस्य नान्यस्य व्यापकानुपलब्धेरेवासिद्धताप्रसङ्गाद्। यथोक्ता स्वभावानुपलब्धिश्चेति। एवं त्रिविधाऽनुपलब्धिः। कथं पुनः कारणव्यापकयोरभावव्यवहारः सिध्यति यतस्तयोः सिद्धाभावतोच्यत [T. 353b.] इत्याह – "तत्र कारणव्यापकयोरपि" न केवलं यस्य साक्षादभावव्यवहारः साध्यते। स्वभावानुपलब्धौ "स्वभावस्यासव्यवहारस्य सिद्धिरन्यस्य" तद्विविक्तस्य भावसिद्धिर्या सैवासद्व्यवहारसिद्धिहेतुत्वादेवमुच्यते। [S. 192a.] "स" कारणव्यापकाभावः "तथासिद्धो"ऽन्यभावसिद्ध्या प्रत्यक्षरूपया सिद्धोऽभावव्यवहारः कार्यव्याप्ययोः प्रतिषेध्ययोः। यदाऽनयोर्व्विरूपविषयतया सवि-

१. °तया न सा° T.। २. अन्यभावोऽनुपलम्भेन सिद्धो यः स कथमनुपलब्धिः? इत्याह। ३. भूतल°।

शेषाणामुपलब्धिर्न सिध्यति "तदाऽभावमभावव्यवहारं वा साधयति"। समुच्चयार्थो वाशब्दः। अथ किं स्वभावानुपलब्धावप्यभावो लिङ्गतया साध्यत इत्याह – "स्वभावानुपलब्धौ तु" इत्यादि। "अभावव्यवहार एव", नाभावोऽपि तस्य प्रत्यक्षसिद्धत्वात्।

अत्र परस्य वचनावकाशमाशङ्क्याह – "यदि" तर्हि "कारणव्यापकौ" सिद्धोऽसद्व्यवहारो ययोः तौ सन्तौ। केन?। "तदन्यस्य" कारणव्यापकविविक्तस्य भावस्य सिद्धिर्या प्रत्यक्षात्मिका तद्रूपयाऽनुपलब्ध्या, अन्यस्य कार्यस्य व्याप्यस्य वाऽभावमभावव्यवहारं च साधयतः। सा चान्यभावोपलब्धिस्तयोः कारणव्यापकयोरुपलब्धिलक्षणप्राप्तावेव सत्यामसद्व्यवहारस्य साधिका नान्यथा इत्येवमिष्यमाणे [T. 354a.] [S. 192b.] सति कथं तयोः कारणव्यापकानुपलब्ध्योः परोक्षेऽर्थे विषये प्रयोगः। यदा कार्यस्वभावहेत्वोर्व्यतिरेकप्रयोगः क्रियते–यत्र यत्राग्निर्नास्ति तत्र तत्र धूमोऽपि नास्ति, तथा यत्र यत्र वृक्षो नास्ति क्षणिकता वा तत्र तत्र शिंशपा नास्ति सत्त्वं वा इत्यशेषपदार्थपरिग्रहेण व्यतिरेकप्रयोगे सति। नहि तदाग्निवृक्षव्यतिरिक्ताः सर्वेऽर्थाः प्रत्यक्षता(क्षा) अक्षणिकता वा। ततश्च कथं तद्विविक्तोपलब्धिलक्षणानुपलब्धिः प्रतियोगिनो वोपलब्धिलक्षणप्राप्तता सिद्धा?। तथा च कथमशेषोपसंहारेण व्याप्त्या कार्यस्वभावहेत्वोर्व्यतिरेकः सिध्येत्?। तदसिद्धौ वा कथमनयोर्गमकत्वम्?। तस्मात् क्वचिददर्शनमात्रादेव व्यतिरेक एष्टव्यः, क्वचिच्च दर्शनमात्रादन्वयः। तथा च प्रतिबन्धघोषणाऽनर्थिकेति मन्यते परः।

सिद्धान्तवाद्याह – "नैव" परोक्षेऽर्थे कारणव्यापकानुपलब्ध्योः "प्रयोगो" [S. 193a.] व्यतिरेकोपदर्शनकाले "प्रमाणतया" कारणस्य व्यापकस्य वाऽनुपलब्धिः प्रमाणभूता नैव प्रयुज्यते। कस्मात्?। "लिङ्गस्य" कारणव्यापकानुपलब्धिलक्षणस्य तदभावलक्षणस्य वा "अनिश्चयात्" तदनुपलब्ध्योः सन्देहरूपत्वात् तदभावस्य च [T. 354b.] सन्दिग्धत्वात्। कथं तर्हि तदाऽनयोः प्रयोग इष्यते? इत्याह – "केवलम्" इत्यादि। कारणव्यापकयोर्हि

१. अग्निवृक्ष°।

कार्यकारणभावप्रसाधकेन पूर्व्वोक्तेन प्रमाणेन व्याप्यव्यापकभावसाधकेन च तदुत्पत्तिलक्षणे तादात्म्यलक्षणे च सम्बन्धे साधिते सिद्धसम्बन्धयोर्यद्यभावो यत्र यत्राभावः स्यात् परस्यापि कार्यस्य व्याप्यस्य वाऽवश्यं नियमेनाभावोऽन्यथाऽहेतुकत्वप्रसङ्गात्, निःस्वभावताप्रसङ्गाच्च । तद्द्वारेण प्रतिबन्धप्रसाधके प्रमाणे स्मृतिः कथं नाम स्यादित्येतस्यार्थस्य दर्शनार्थमेते कारणव्यापकानुपलब्धी प्रयुज्येते इति । दर्शनादर्शनबलेन तु साधने यत्रैवैकदर्शने परो दृष्टोऽदर्शने वा न दृष्टः तत्रैव तस्य भावोऽभावो वा भवतु सर्व्वत्र तु कस्माद् भवति ? । न ह्यप्रतिबद्धात्मनां गवाश्वादीनां क्वचित् तथाभावदर्शनेऽपि सर्व्वत्र तथाभावो भवति, पुरुषस्य तु सर्व्वदा क्वचिदेकभावाभावयोरपरस्य [S. 193b.] भावाभावदर्शनं यदृच्छासंवादः सम्भाव्येत असति प्रतिबन्धे । तथा चाह –

" देशादिभेदाद्दृश्यन्ते भिन्ना द्रव्येषु शक्तयः ।
तत्रैकदृष्ट्या नान्यत्र युक्तस्तद्भावनिश्चयः ॥ " [प्रमाणवा० ३. २०] इति ।

तस्मादवश्यं प्रतिबन्धः साध्यसाधनयोरभ्युपगन्तव्यः । स [T.2 355a.] एवान्वयव्यतिरेकप्रयोगाभ्यां सूचनीयः । न चासौ व्याप्त्याऽन्वयव्यतिरेकोपदर्शनमन्तरेण ख्यापयितुं शक्यत इति 'यत्र यत्र' इति सकलपदार्थपरिग्रहेण ख्याप्यते । प्रतिबन्धे हि प्रमाणसिद्धे सत्यवश्यमेव यत्र यत्र कार्यं तत्र तत्र कारणम्, यत्र यत्र तदभावः तत्र तत्र च कार्यस्याप्यभावोऽन्यथा कारणमन्तरेण कार्यस्य भावे तस्याहेतुतैव स्यात् । ततश्च नित्यं सत्त्वादिप्रसङ्गः । तथा यत्र यत्र यत्स्वभावस्तत्र तत्र तद्भावः[1] अन्यथा तस्य नैरात्म्यमेव स्यादिति व्याप्त्यैवान्वयव्यतिरेकोपदर्शने प्रतिबन्धः ख्यापयितुं शक्यते नान्यथेति प्रागेव विस्तरतो विपञ्चितम् ।

[ § ४. हेतोस्त्रैरूप्यत्रैविध्ययोर्हेत्वाभासत्वस्य चोपसंहारः । ]

एवं कार्यस्वभावानुपलब्धिलक्षणे एव पक्षधर्म्मे तत्साधकप्रमाणसद्भावादन्वयव्यतिरेकसद्भावो नान्यत्रेति प्रतिपाद्योपसं-

१. तत्स्वभाव- T. ।

हरन्नाह – "इति" एष एव [S. 194a.] स्वभावकार्यानुपलब्धिलक्षणः पक्षधर्म्मोऽन्वयव्यतिरेकवान् प्रतिबन्धसद्भावात्[1]। यतश्चान्वयव्यतिरेकवान् प्रतिबन्धप्रसाधकप्रमाणसद्भावादुक्तेन न्यायेन "इति" तस्मात् "तदंशेन व्याप्तौ"ऽन्वयव्यतिरेकनिश्चयेनैव तदंशव्याप्तेर्निश्चयाद् यथोक्तं प्राक्, [T. 355b.] ततश्च तदंशव्याप्तिवचनात् त्रिलक्षण एव "त्रिरूप एव" त्रिविध एव हेतुर्ग्गमको नान्यलक्षणोऽन्यो वा यथोक्तत्रैरूप्यसद्भावे रूपान्तरस्य वैयर्थ्यात् यथोक्तत्रैरूप्याभावे च रूपान्तरकल्पनायामप्यव्यभिचाराभावेनागमकत्वात्। कस्मात् त्रिलक्षण एव त्रिविध एव हेतुर्ग्गमको नान्यलक्षणोऽन्यो वेति दर्शयति "स्वसाध्यधर्म्माव्यभिचाराद्" इति त्रिलक्षणस्यैव स्वसाध्यधर्म्माव्यभिचारात्। स्वसाध्यधर्म्माव्यभिचार एव च गमकत्वमिति रूपान्तरकल्पना व्यर्था। प्रतिबन्धनिबन्धनान्वयव्यतिरेकापगमे च रूपान्तरकल्पनायामपि स्वसाध्यधर्म्माव्यभिचाराभावात्। तदनेन 'त्रिधैव स' इत्यस्य त्रिलक्षण एव "स हेतुरःविनाभावस्य" स्वसाध्यधर्म्माव्यभिचारस्य "नियमाद्" अवश्यन्तया सद्भावात् [S. 194b.] प्रतिबन्धनिमित्ततदंशव्याप्त्यनभ्युपगे(गमे) च रूपान्तरकल्पनायामपि "हेत्वाभासास्ततोऽपरे" यथोक्तत्रिलक्षणादपरे रूपान्तरयोगितया विकल्प्यमाना हेत्वाभासा [T. 356a.] अविनाभावस्य स्वसाध्यधर्म्माव्यभिचारस्य तेष्वभावादित्यपरोऽर्थो दर्शित इति।

[ § ५. हेतुलक्षणेऽधिकरूपवादिनां निरासः। ]

यदुक्तं 'त्रिलक्षण एव हेतुर्नान्यलक्षणः' इति तत्र परेषां विप्रतिपत्तिं दर्शयन्नाह – "षड्लक्षणो हेतुरित्यपरे" नैयायिक-मीमांसकादयो मन्यन्ते। कानि पुनः षड्रूपाणि हेतोस्तैरिष्यंते ? इत्याह – "त्रीणि चैतानि" पक्षधर्म्मान्वयव्यतिरेकाख्यानि। तथाऽबाधितविषयत्वं चतुर्थं रूपम्। अबाधितः प्रमाणेनानिराकृतो विषयः साध्यधर्म्मलक्षणो यस्य स तथोक्तः तस्य भावः तत्त्वमपरं रूपम्। तथा विवक्षितैकसंख्यत्वं रूपान्तरं, एका संख्या यस्य हे-

१. °सद्भावात् अस्यैव स्वभावकार्यानुपलब्धिलक्षणाश्रय(णास्पद)त्वात् T.।

तुद्रव्यस्य तदेकसंख्यं विवक्षितमेकसंख्यं हेतुद्रव्यमाश्रयत्वेन यस्य हेतुसामान्यस्य तद्विवक्षितैकसंख्यं तद्भावोऽपरं रूपम् । यद्येकसंख्यावच्छिन्नायां प्रतिहेतुरहितायां हेतुव्यक्तौ हेतुत्वं भवति तदा गमकत्वं न तु प्रतिहेतुसहितायामपि द्विसंख्यायुक्तायामिति । [S. 195a.] यदि विरुद्धाव्यभिचार्यपरं हेत्वन्तरं नोपदर्श्येत इति यावत् । तथा ज्ञातत्वं च ज्ञानविषयत्वं च । नह्यज्ञातो हेतुः स्वसत्तामात्रेण गमको युक्तः [T. 356b.] इति । तत्रैतेषु रूपान्तरेषु यदेतदबाधितविषयत्वं नाम तत् तावत् प्रतिबन्धनिबन्धनान्वयव्यतिरेकात्मकाऽविनाभावसम्भवे सति ततः पृथगन्यल्लक्षणं न भवति । तदात्मकं तु तद्वचनेनैवोक्तमिति न वक्तव्यमिति । कस्मात् पृथग् लक्षणं न भवति ? बाधाया अविनाभावस्य च विरोधादिति । तथा हि – सत्यप्यविनाभावे यथोक्ते बाधासम्भवं मन्यमानैरबाधितविषयत्वं रूपान्तरमुच्यते । सा चेयं तत्सम्भावना न सम्भवति, बाधाया अविनाभावेन "विरोधात्" सहानवस्थानलक्षणात् । तमेव विरोधं साधयन्नाह – "अविनाभावो हि" इत्यादि । सत्येव हि साध्यधर्म्मे भावो हेतोरविनाभाव उच्यते । प्रमाणबाधा तु तस्मिन्नसति । यदि हि सत्येव तस्मिंस्तदभावविषयं प्रमाणं प्रवर्त्तेत तदाऽस्य भ्रान्तत्वादप्रमाणतैव स्यात् इति कुतो बाधा ? । ततः "स" हेतुः "तल्लक्षणः" साध्याविनाभावी "धर्म्मिणि स्यात् । अत्र च साध्यधर्म्मः कथं न भवेत्" ? यतो [S. 195b.] बाधावकाशः स्यात् । तस्मादविनाभावस्य प्रमाणबाधायाश्च सहानवस्थानमविनाभावेनोपस्थापितस्य धर्म्मिणि साध्यधर्म्मभावस्य प्रमाणबाधोपस्थापितस्य च तदभावस्य परस्परपरिहारस्थितिलक्षणतया विरोधेनैकत्र धर्म्मिण्यसम्भवादिति ।

तमेव विरोधं स्पष्टीकर्तुं परोपहासव्याजेनाह – "प्रत्यक्षानुमाने हि" इत्यादि । साध्यधर्म्मं हि बाधमाने प्रत्यक्षानुमाने, "तं ग्रीवायां गृहीत्वा" [T. 357a.] धर्म्मिणः स्वाश्रयात् "निष्कासयतः"[2] । तस्मिंश्च साध्यधर्म्मे सत्येव तदविनाभावित्वाद्धेतुर्भवं "स्तं" सा-

१. °यामपि अनुपलम्भात् – T. । २. निष्कास्य यतः T. ।

ध्यधर्म्मं निष्कास्यमानं गले गृहीत्वा हठात् "तत्रैव" धर्म्मिण्यवस्थापयतीति "परं" प्रकृष्टं बत "भावानां" साध्यधर्म्मलक्षणानामस्वास्थ्यं वर्त्तते। तथा हि – यन्त्रद्वयनियन्त्रितानां निरुच्छ्वासितया मरणमेव प्राप्तमिति।

परो बाधाऽविनाभावयोर्व्विषयभेदादविरोधं दर्शयन्नाह – "अन्यत्र" साध्यधर्म्मिणं परिहृत्य दृष्टान्तधर्म्मिणि साध्यधर्म्मेणाविनाभावी हेतुर्न पुनः साध्यधर्म्मिण्येव। ततः [S. 196-7a.] कुतो बाधाऽविनाभावयोर्व्विरोधोऽन्यत्र बाधया साध्यधर्म्माभावसाधनादन्यत्र च हेतुना तद्भावसाधनात्। तथा चैवंविधे सत्यपि अविनाभावे बाधासम्भवाद् अबाधितविषयत्वस्य रूपान्तरस्य सम्भव इति।

एवंविधाविनाभावोपगमे सत्यप्यबाधितविषयत्वादिके रूपान्तरे "हेत्वाभासास्ततोऽपरे" रूपान्तरसम्भविन इत्यापादितां हेत्वाभासतां विवरीतुं परोपहासपूर्व्वकमाह – तत् किम् "अयं" साध्यधर्म्मी "तपस्वी" वराकः "शङ्ढ(ण्ढ)मुद्वाह्य तस्मिन्" साध्यधर्म्मसाधनशक्तिविकलं [T. 357b.] हेतुं परिणाय्य साध्यधर्म्मलक्षणं "पुत्रं मृगयते?"। एतदेव व्यनक्ति – "यस्य" हेतोर्द्धर्म्मिण्यसत्यपि "साध्यधर्म्मे भाव" इष्यते, साध्यधर्म्मिणोऽन्यत्राविनाभावोपगमात्। "तं" तथाविधं साध्यधर्म्मिण्युपदर्श्य कथं धर्म्मी साध्यधर्म्मवानित्युच्यते?। न ह्यम्भसस्त्वस्य समुद्रे लवणत्वेनाविनाभावेऽपि तद्व्यतिरिक्तेऽम्भसि लवणतया साध्यत्वेनेष्टेऽम्भसस्त्वभावेऽपि लवणत्वसिद्धिरिति।

परस्य वचनावकाशमाशङ्क्याह – "अत एव" इत्यादि। एतदेव विवृणोति – "स्यादेतद्" भवतो मतम्। यत एव हेतुरन्यथाऽपि साध्यधर्म्ममन्तरेणापि धर्म्मिणि भवेदम्भस्त्वादिषु तथादर्शनात्, साध्यधर्म्मिपरिहारेण चाविनाभावोपगमात् अत एव कारणात् प्रमाणाभ्यामबाधितधर्म्मा धर्म्मीत्युच्यते। यदि प्रत्यक्षा-

१. हेतोः। २. साध्य°।

नुमानाभ्यां साध्यधर्म्मिणि [S. 196-7b.] हेतोर्व्विषय: साध्यधर्म्मो न बाध्यते यथाऽम्भसस्त्वस्य लवणत्वम्, तदा तस्य गमकत्वम्, नान्यथेति। ततोऽन्यत्राविनाभावमात्रेण साध्यसिद्धेरनभ्युपगमात् न यथोक्तो दोष इति।

सिद्धान्तवाद्याह – "तत् किम्" इदानीं [T. 358a.] यदा हेतोर्धर्म्मिण्यविनाभावितानभ्युपगमात् साध्यसिद्धेरभावात् तत्सिद्धये रूपान्तरमबाधितविषयत्वमुच्यते तदा हेतोर्न किञ्चित् सामर्थ्यम्। कस्माद्? "अबाधयैव" हेतुमन्तरेणापि "साध्यसिद्धेः" अकिञ्चित्कर एव हेतुः। तथा ह्यत्र कल्पनाद्वयम् – बाधकप्रमाणवृत्तौ साध्याभावो नियतो वा स्याद्? अनियतो वा?। तत्र यदि पूर्व्वो विकल्पस्तदा साध्याभावो हि बाधकप्रमाणस्य वृत्तौ नियतः, तदैव भावात् तदभावे चाभावादिति। तस्माद् "अबाधायां" बाधकप्रमाणवृत्त्यभावे तन्नियतस्य साध्याभावस्याप्यभावात् "साध्यसिद्धिः" भवत्येवेति व्यर्थ एव हेतुरिति नोपन्यसनीय एव। ततः कस्याबाधितविषयत्वं रूपान्तरं भवेत्?। स्यान्मतम् – मा भूद् बाधकप्रमाणवृत्त्यभावे हेतोः सामर्थ्यम्, यदा तु साध्यस्य बाधकं प्रमाणं धर्म्मिणि वर्त्तते तदा हेतोः साध्यसाधने सामर्थ्यं भविष्यतीत्यत [S. 198a.] आह – "बाधायामपि" इति। यदि बाधकं प्रमाणं वर्त्तते तदा तेन साध्याभावस्य धर्म्मिणि साधनात् पुनर्ब्रह्मणापि तद्भावस्य कर्त्तुमशक्यत्वात् किमङ्ग पुनः शठेन हेतुनेति कुतः साधनस्य हेतोः सामर्थ्यम्?। अत [T. 358b.] एव हि भवद्भिरबाधितविषयत्वं रूपान्तरमुच्यत इति।

अथ बाधकप्रमाणवृत्तौ साध्याभावो न नियतः तदभावेऽपि भावादिति द्वितीयः पक्ष इष्यते तदाप्यबाधायाः सामर्थ्यविरह इति दर्शयन्नाह–"अनियमे" बाधकप्रमाणवृत्तौ साध्याभावस्येष्यमाणे सतीदमापतितम्। न च–बाधकं प्रमाणं स्यात् "साध्याभावस्य च सम्भवः" – इति "न" साध्यसाधने "सामर्थ्यम् अबाधायाः" सत्यामपि तस्यां साध्याभावस्य सम्भवादिति तद्योगिनोऽपि हेत्वाभासतैवेति।

१. पुनः तादृशेन हे° T.।

यदुक्तम् "अबाधयैव साध्यसिद्धेर्व्यर्थो हेतुः" इति तत्रान्यथाऽर्थमबाधाया दर्शयन् हेतुसामर्थ्यं प्रतिपादयन्नाह परः – न बाधाया अभावो ममाबाधाऽभिमता। किं तर्हि ?। बाधाया अनुपलब्धिः। सा च तदनुपलब्धिः पुरुषस्य शक्तिवैकल्यात् क्वचिद् देशादौ बाधायाः सम्भवेऽपि स्यात्। ततो बाधाऽनुपलब्धिमात्रेण साध्यसिद्धेरभावात् तत्सिद्धयेऽवश्यं [S. 198b.] हेतुरभिधानीय इति स हेतुप्रयोगस्य विषयस्तदा हि हेतुः स्वसाध्यं साधयन् कथमसमर्थः स्यात्? इति।

सिद्धान्तवाद्याह – किं नु वै हेतुर्बाधाया या उपलब्धिस्तस्याः बिभेति न पुनर्बाधाया येन बाधां सम्भवन्तीमप्यनादृत्य तदनुपलब्धौ सत्यां प्रयोक्तव्य इष्टो भवतः।

कदाचित् परो ब्रूयात् – किं करिष्यति विद्यमानाऽपि बाधा तपस्विनी, [T. 359a.] तदुपलब्धिरेव राक्षसी। तस्मात् तत एव हेतोर्भयं तदभावे हेतुः प्रयोक्तव्य एवेत्यत आह – "स तर्हि" इत्यादि। एवं तर्हि परमार्थेन बाधा किमस्ति नास्तीत्येतदनपेक्ष्य बाधाया अनुपलब्धौ सत्यां प्रयोक्तव्य इति काका पृच्छति। कदाचित् परो ब्रूयात् – उक्तमेवैतत् किमर्थं पृच्छ्यते? इत्याह – "किमर्थं प्रयुज्यत" इति। बाधाऽनुपलम्भेऽपि तत्सम्भवे साध्यसाधनायोगादित्यभिप्रायः। परोऽनवगताभिप्राय आह – "साध्यसिद्ध्यर्थम्" इति बाधकप्रत्ययाभावे प्रामाण्यस्येष्टत्वात् ततः साध्यसिद्धिरविरुद्धैवेति मन्यते। सिद्धान्तवादी सत्यां बाधायां तदनुपलम्भेऽपि साध्यसिद्धिमसम्भावयन् पृच्छति "स किं क्वचिद्" इत्यादि। किं [S. 199a.] पुनरसौ हेतुः सत्यामपि बाधायां साध्यं साधयेदिति सम्भाव्यते भवता येनास्या बाधाया अभावनिश्चयं प्रति यत्नो न क्रियते हेतुश्च प्रयुज्यत इति। एवमेतत् इति चेत्; तथा सत्यामपि बाधायां साध्यसाधनसामर्थ्योपगमे सत्यबाधितविषयत्वं हेतुलक्षणं न भवति। किं कारणम्?। बाधायामपि सत्यामस्य हेतोः "सामर्थ्यात्" सामर्थ्योपगमात्। तद्धि हेतोर्लक्षणमुच्यते येन विना साध्यं न साधयेदिति।

स्यान्मतम् – अनुपलभ्यमानबाधत्वं हेतुलक्षणं [T. 359b.] परमार्थेन, नाबाधितविषयत्वमित्यत आह – "तथा च" इत्यादि। एवं हि सति बाधायाः सद्भावसम्भवेऽपि तामभ्युपगम्य तदनुपलम्भमात्रेण हेतोः प्रयोगः प्राप्तः। यदि हि बाधामभ्युपगम्य हेतुप्रयोगो नाभिमतः स्यात् तदाऽनुपलम्भमात्रेण बाधायां संशयात् – सतामपि केषाञ्चित् कथञ्चिदनुपलम्भसम्भवात् – संशयितस्य हेतुप्रयोगे प्रवृत्तिरेव न युज्येत। तस्माद् यो यत्संशयेऽपि प्रवर्तते स तस्य भावपक्षमभ्युपेत्यैव प्रवर्त्तते। तथा च यथा बाधानुपलब्धौ तामभ्युपगम्य हेतुः प्रयुज्यते तथा तदुपलब्धावपि प्रयुज्यताम्, बाधायाः सद्भावाभ्युपगमे सति तदुपलम्भानुपलम्भयोर्विशेषाभावादिति नानुपलभ्यमानबाधत्वमपि [S. 199b.] हेतुलक्षणं युज्यत इति कुतो बाधकप्रत्ययविरहेऽप्यसति प्रतिबन्धे प्रामाण्यस्य सम्भव इति।

परस्य वचनावकाशमाशङ्क्याह – "न बाधायाम्" इत्यादि। नैव हि बाधायां सत्यां हेतोः सामर्थ्यमिष्यते तत् कथं तदुपलम्भेऽपि प्रयोगः स्यात्?। सिद्धान्तवाद्याह – "यद्येवं" बाधायां सत्यां हेतुरसमर्थो यदीष्यते तदाऽनिर्णीतो बाधाया असंभवो यस्य हेतोः स तथाविधः प्रयोगं बाधाऽनुपलम्भमात्रेण नार्हति। किं कारणम्?। मा भूद् बाधायाः सम्भवपक्षे "प्रयुक्तस्यापि" हेतोः साध्यसिद्धौ "असामर्थ्यमिति"[1]। [T. 360a.] पूर्वपक्षवाद्याह– बाधानुपलम्भे[2] सति बाधाया अभावात् सदुपलम्भकप्रत्ययाभावे[3] सत्यवश्यमर्थानामसत्त्वाद्धेतोः सामर्थ्यम् इति चेन्मन्यसे सिद्धान्तवाद्याह – "किमुपलम्भो बाधाम्" इत्यादि। उपलम्भो ह्यर्थानां कार्यम्, न च कार्यं कारणं व्याप्नोति। न ह्यवश्यं कारणानि कार्यवन्ति भवन्ति, प्रतिबन्ध[4]वैकल्यसम्भवात्। तत् कथमव्यापकस्योपलम्भस्य निवृत्तौ बाधाया निवृत्तिः?, यतो हेतोर्बाधायाः सम्भवकृतमसामर्थ्यं न सम्भवेदिति। एतच्च परैरपीष्यत एव; [S. 200a.] प्रमाणतयोपगतस्याप्युदयकालेऽनुपलब्धबाधस्य काला-

१. असामर्थ्यप्राप्तिरिति T.। २. अनुपलम्भात् – T.। ३. °प्रत्ययसद्भावे – T.। ४. प्रतिबन्धात् – T.।

न्तरेण बाधकप्रत्ययोत्पादे सत्यप्रामाण्योपगमात्। अथाऽव्यापकस्याप्युपलम्भस्य निवृत्तौ बाधा निवर्त्तते –

"निवर्त्तते हि मिथ्यात्वं दोषाज्ञानादयत्नतः॥" [श्लोक० सू० २. ५२]

इति अनेनैव न्यायेन ज्ञाननिवृत्त्या बाधानिवृत्तेरित्याह – तथापि व्यर्थो हेतुः। कुतः ?। "बाधानुपलम्भादेव" हेतुप्रयोगरहितात् साध्यसिद्धेः। किं कारणम् ?। अनुपलम्भे बाधाया असम्भवात्। तथा हि – यत्र बाधाया अनुपलम्भस्तत्र परमार्थत एव सा न विद्यत इति मन्यसे। यत्र चासौ परमार्थतो नास्ति तत्र साध्यधर्म्मस्याभावोऽपि परमार्थेनैव [T. 360b.] नास्त्यन्यथा परमार्थेन बाधाया अभावायोगात्। ततश्च साध्यधर्म्मस्याभावाभावे सति भाव इति भवन्मत्या साध्यप्रतीतेर्व्यर्थता हेतोरिति।

अथ मा भूद् युक्तिविरोध इति नोपलम्भनिवृत्तौ बाधानिवृत्तिरिष्यते, तत्राह – उपलम्भस्य निवृत्तावपि सत्यां बाधाया अनिवृत्ताविष्यमाणायां तदवस्थं हेतोरसामर्थ्यम् यदवस्थं बाधोपलम्भ इति हेतोरप्रयोग इति कस्याबाधितविषयत्वं [S. 200b.] रूपान्तरं स्यात् ?।

एतदेवोपसंहरन्नाह–"तस्मात् स्वसाध्य" इत्यादि। यत एवं व्याप्त्या हेतोः सर्व्वत्र साध्येनाविनाभावाभ्युपगमे बहिर्व्याप्ताविष्यमाणायां वैयर्थ्यं हेतुप्रयोगस्यापद्यते तस्मात् "स्वसाध्यभावाभावाभ्यां अन्यथाऽपि" स्वसाध्यभावेऽप्यभवन्नऽभावेऽपि च भवन् हेतुर्धर्म्मिणि किञ्चित् साध्यं "न भावयति" न साधयति "न विभावयति" तद्विपरीतं न निषेधयति "इति" तस्य विधिप्रतिषेधावकुर्व्वत "उपक्षेपः" प्रयोगो "न समर्थः" इत्यवश्यं हेतुप्रयोगमिच्छता स्वसाध्याविनाभावः सर्व्वत्र हेतोरभ्युपगन्तव्यः। स च प्रतिबन्धनिबन्धनः। एष च दर्शनादर्शनमात्रायत्तो यथोक्तं प्राक्। तस्मिंश्चाभ्युपगते बाधाविनाभावयोर्विरोधः [T. 361a.] सिद्ध इत्युपसंहरन्नाह – "तत्र" इत्यादि। यत एवं तेन कारणेनाबाधा रूपान्तरं न भवति।

यदि नाम बाधाविनाभावयोः सहावस्थानाभावादविनाभावे

सत्यबाधा गम्यते रूपान्तरं तु किमिति न भवति? इति, अत आह – "तन्नाम" इत्यादि। तद्धि तस्माद् विशेषणान्तरं भवेद् वस्तुस्थित्या। [S. 201a.] लक्षणकारैश्च रूपान्तरत्वेनोपादानमर्हति :यस्य विशेषणस्य भावेऽपि यस्यापरस्याभावः स्यात्। यतः सम्भवे व्यभिचारे च विशेषणविशेष्यभावो न सम्भव एव केवले। उदाहरणमाह – "तद् यथा" इत्यादि। सत्यपि हि धर्म्मिसम्बन्धे श्रावणत्वादेः सपक्षे भावो नास्ति। सत्यपि च चाक्षुषत्वादेः सपक्षे भावे साध्यधर्म्मिणि शब्दे सम्बन्धो नास्ति। ततोऽनयोः सम्भवव्यभिचारयोर्भावाद् विशेषणविशेष्यभावो लक्षणान्तरत्वेन[1] चोपादानम्। इहाऽप्येवं भविष्यतीति चेद् आह – "न चैतद्" अनन्तरोदितमबाधाया अविनाभावे सति सम्भवति। सत्यविनाभावे नियमेनाबाधायाः सम्भवाद्व्यभिचाराभावात् कुतो विशेषणविशेष्यभावो क्षणान्तरत्वेन[2] चोपादानमर्हति? इति न हेतोः साध्याविनाभाविनो विरुद्धस्य च साध्यविपर्ययाविनाभाविनो विषये बाधा सम्भवति। उक्तेन प्रकारेण विपर्यये सम्यग्घेतुरेवाविषये तु प्रयोगाद्धेत्वाभास उच्यते। यत एवम् "इति" तस्मान्न तद्भावो बाधाविरहः [T. 361b.] पृथगविनाभावादन्वयव्यतिरेकात्मनोऽनयोर्हेतुविरुद्धयोर्लक्षणान्तरत्वेन वाच्यः, [S. 201b.] व्यभिचाराभावेन रूपान्तरत्वायोगात्। यतश्चाविनाभावे सति बाधा न सम्भवति विरोधात्, तस्माद्धेतोर्यथोक्तलक्षणस्य प्रयोगे सति गम्यार्थाया अपि प्रतिज्ञाया दोषाणां प्रत्यक्षविरुद्धादीनां सम्भवो नास्ति, हेतुलक्षणेनैव तेषां निरस्तत्वात्। तत् कथं बाधाविरहो हेतो रूपान्तरमुच्यते?। असम्भविनां च तेषां उपवर्ण्णनं निष्फलमित्याकूतम्[3]।

केवलायाः प्रयोगेऽस्ति सम्भव इति चेत्, आह – "नापि" इत्यादि। हेतुप्रयोगे ह्यसति केवला प्रतिज्ञैव न प्रयुज्यते, हेतुविषयत्वेन तदभ्युपगमात्। ततश्च शास्त्रकारैर्न प्रतिज्ञादोषाः प्रत्यक्षविरुद्धादयो वाच्या इति। दिङ्नागपादैस्तु साध्यासाध्यवि-

१. °त्वेन नोपादनम् – T. २. °त्वेन नोपा° – T. ३. °मिति. कुतः – T.

पर्ययेण[1] विप्रतिपत्तिदर्शनादप्रयोगार्हस्यापि पक्षस्य लक्षणविधाने न्यायप्राप्तमेवापक्षत्व न नि(°त्वं नि)राकृतपदेन प्रमाणविरुद्धस्याख्यानम्, न त्वतिप्रसक्तं पक्षलक्षणम् व्यवच्छिन्नम्, सन्दिग्धस्यैव साध्यत्वात् ; प्रमाणबाधिते साधकप्रमाणावृत्तेरिति ।

तदेवमबाधितविषयत्वं निराकृत्य रूपान्तरं निराकुर्व्वन्नाह – "एतेन" अविनाभावे सति बाधाया [T. 362a.] असम्भवदर्शनेन "एकसंख्याविवक्षाऽपि" विरुद्धाव्यभिचारिदोषविपक्षेणोच्यमाना "प्रत्युक्ता" प्रत्याख्याता ।

परः पृच्छति – "कथम्" इति केन प्रकारेण–यथा बाधाविनाभावयोः सहानवस्थानं तथा प्रतिहेत्वविनाभावयोरपि ?, येनैकसंख्याविवक्षा तद्वदेव प्रत्याख्यायेत इति ।

सिद्धान्तवादी साम्यं[2] दर्शयन्नाह – "एक" इत्यादि । एको हि हेतुर्लक्षणयुक्तः । स्वसाध्याव्यभिचारी कथं भवति ? । यदि स्वसाध्यभाव एव भवेत्, अन्यथा तल्लक्षणमविनाभावो नाम हीयेत । यत्रैव धर्म्मिणि स तल्लक्षण एको भवति तत्रैव धर्म्मिणि तस्मादन्योऽपि प्रतिहेतुर्विरुद्धस्तेन हेतुलक्षणयुक्तः कथं भवति ? । एकस्य हेतोर्यत्[3] साध्यं तद्बाधकस्य तद्विरुद्धस्यापरस्य धर्म्मस्य भाव एव नाभावे भावादविनाभावादिति बाधया समानं बाधासम्भवेन समानः प्रतिहेतुरिति तन्निरासेनैव [S. 202b.] निरस्त इति ।

अत्रैव दूषणान्तरमभिधातुं विकल्पयन्नाह – "अपि च" इत्यादि । "वस्तुतः" परमार्थतो यस्य प्रतिहेतुर्न सम्भवति · किमसौ सम्यग्ज्ञानस्य विपर्ययस्य वोपन्यस्तसाध्यविपरीतज्ञानस्य वा हेतुरिष्टो [T. 362b.] यतो विवक्षितैकसंख्यत्वं तल्लक्षणमुच्यते, आहोस्विद् यस्य प्रतिहेतुस्तत्साध्यविपरीतसाधको न प्रदर्शितः परमार्थतः सन्नपीति । परो दोषमपश्यन्नाह – "किञ्चातः" इत्यादि । यदि नाम पूर्व्वो विकल्प उत्तरो वा ततः को दोषः ? इति[4] ।

१. साध्यमप्यसाध्यं असाध्यमपि साध्यं परे प्राहु : । २. °दी सन्दर्श° – T. ३. हेतोरन्यतो सा° – T. ४. इति मन्यते – T.

सिद्धान्तवाद्याह – यद्यसम्भवन् प्रतिहेतुर्यस्य स सम्यग्ज्ञानादिहेतुरिष्यते, तदाऽलक्षणमेतद् विवक्षितैकसंख्यत्वम्। कस्मात्?। अशक्यो निश्चयो यस्य वस्तुतोऽसम्भवत्प्रतिहेतुत्वस्य स तथोक्तः। परमतापेक्षया चैतदुच्यते। परो हि दर्शनादर्शनाभ्यामसत्यपि प्रतिबन्धेऽविनाभावमिच्छति। ततस्तस्य प्रतिहेतोरेवंविधस्य सम्भवोऽस्ति। स चानुपलभ्यमानोऽपि कदाचित् स्यादिति वस्तुतस्तदभावो निश्चीयते। प्रतिबन्धनिबन्धनाविनाभाववादिनां त्वस्माकं [S. 203a.] प्रतिहेत्वसम्भवः सुनिश्चित एव। नहि तादात्म्यतदुत्पत्तिलक्षणे प्रतिबन्धे प्रमाणतः सिद्धे तन्निमित्ताविनाभावितया एकेन हेतुना स्वसाध्ये साधिते पुनरत्रैव धर्म्मिणि तल्लक्षणस्य [T. 363a.] तद्विरुद्धार्थसाधकस्य प्रतिहेतोः सम्भवः शङ्क्यते, भावानां विरुद्धस्वभावद्वयायोगाद्, विरुद्धधर्म्माध्यासस्य भेदलक्षणत्वात्। विरुद्धधर्म्मसाधकसम्भवे च तस्यैव स्वसाध्याविनाभाविनः प्रथमस्य तत्र प्रमाणतो भावसिद्ध्ययोगादिति।

स्यान्मतम् – यदि नाम प्रस्तुतः प्रतिहेत्वसम्भवोऽस्माभिर्निश्चेतुमशक्यस्तथाप्यसम्भवत्प्रतिहेतुत्वं विवक्षितैकसंख्यत्वप्रतिपादितं हेतुलक्षणं कस्मान्न भवति? इत्याह – "न ह्यनिश्चितात्मनः" इत्यादि। प्रतिपादको यो धर्म्मो हेतोस्तस्यानिश्चितस्वभावस्य यस्मात् तल्लक्षणत्वं प्रतिपादकधर्म्मता न भवति। यथा संदिग्धस्य पक्षधर्म्मत्वस्येति पूर्व्वकस्य साधनम्। नापि सन्दिग्धं लक्षणं यस्य स हेतुर्भवतीति न कश्चिद्धेतुर्भवेदिति हेत्वभावो [S. 203b.] वा इत्यस्य समर्थनम्। ततश्च "हेत्वाभासास्ततोऽपरे" इत्यत्रापि योजितमिति।

स्यान्मतम् – यस्य प्रतियोगी दृश्यते तस्यैव प्रतिहेतुभावात् अहेतुत्वं भवतु, यस्य तु प्रतियोगी हेतुर्न दृश्यते स वस्तुत एवासम्भवत्प्रतिहेतुः। न हि तत्र वस्तुतः प्रतिहेतुसम्भवः शङ्क्यते, बाधकप्रत्ययमन्तरेण बाधाशङ्काया अयोगात्। तदुक्तम् –

"बाधाज्ञाने त्वनुत्पन्ने नाशङ्क्या निष्प्रमाणिका" इति।

अत आह – "तुल्ये लक्षणे हि" इत्यादि। शङ्क्यमानप्रतिहेतुना तुल्यं लक्षणं दर्शनादर्शनमात्रनिमित्ताविनाभावरूपं यस्य तस्मिन् दृष्टः प्रतियोगिनः [T. 363b] प्रतिहेतोर्बाधकस्य सम्भवः स येषामपि तत्तुल्यलक्षणानां प्रतियोगी न दृश्यते तेष्वपि शङ्कां प्रतिहेतुसम्भवविषयामुत्पादयति। किं कारणम्?। अदृष्टप्रतियोगिनो दृष्टप्रतियोगिनो विशेषाभावात्। नहि तस्येतरेण कश्चिद्विशेषोऽस्ति, यतस्तत्सम्भवो न शङ्क्येत। पुरुषशक्तिवैकल्यादिना तु तदर्दशनं[1] सम्भाव्येतेति किमुच्यते 'नाशङ्का निःप्र(ष्प्र)माणिका' इति। अथ विशेषः प्रतिबन्धलक्षणोऽविनाभावनिश्चायको दृष्टप्रतिहेतोरदृष्टप्रतियोगिन इष्यते यतः प्रतियोगिसम्भवाशङ्काऽस्तमुपैति। [S. 204a.] तदा सति वा विशेषे स विशेषो हेतोर्लक्षणम्। किं कारणम्?। यतस्ततो विशेषाद्धेतुरेकान्तेन निश्चयेन निरस्तप्रतिपक्षस्तथाविधे धर्म्मिणि प्रतिहेत्वसम्भवात् स्वसाध्यं निश्चाययतीति। यस्तथाविधो न भवति तद्विशेषविरहात् दृष्टप्रतिहेतुः सोऽतल्लक्षणो न हेतुः स्यात्। तथा च यदि नामाऽहेतौ प्रतिहेतुर्दृष्टो, हेतोः किमायातम्, येन तन्निवृत्तये तत्रैकसंख्याविवक्षा क्रियते, यथोक्ताविनाभाववचनेनैव तन्निवृत्तेरित्याह – "तथा च हेतौ" तद्विशेषयोगिनि "प्रतिहेत्वसम्भवे" सति "व्यर्था" निष्प्रयोजना "एकसंख्याविवक्षेति"। [T. 364a.] यथोक्तविशेषाङ्गीकरणे तल्लक्षणस्य प्रतिहेतोरसम्भवात् कस्यैकसंख्याविवक्षया व्यवच्छेदः क्रियते? यतोऽस्य सार्थकत्वं स्यादिति।

विरुद्धाव्यभिचारिणश्च हेत्वाभासस्य व्यवच्छेदार्थमेकसंख्याविवक्षा हेतुलक्षणे क्रियते। वस्तुतोऽसम्भवत्प्रतिहेतुत्वसिद्ध्ये च प्रतिबन्धलक्षणे विशेषे हेताविष्यमाणे विरुद्धाव्यभिचार्यपि हेत्वाभासो न [S. 204b.] भवति। ततो व्यवच्छेद्याभावात् किमेकसंख्याविवक्षया? इति दर्शयन्नाह – "अतः" प्रतिबन्धलक्षणविशेषोपगमात् "विरुद्धाव्यभिचारिणो हेत्वाभासस्य यल्लक्षणं तद्धीयेत" न सम्भवेत्। किं पुनस्तद्विरुद्धाव्यभिचारिणो लक्षणम्? इत्याह – "स्वलक्षण" इत्यादि। हेतोर्यदात्मीयं लक्षणं तद्युक्तयोर्हेत्वोरे-

[1] तद्दर्शनम् – T.

कत्र धर्म्मिणि विरोधेन परस्परविरुद्धसाध्यसाधकत्वेनोपनिपाते सति विरुद्धाव्यभिचारीति विरुद्धाव्यभिचारिणो लक्षणम्। न च तत् प्रतिबन्धाङ्गीकरणे सति सम्भवति। नहि तादात्म्यतदुत्पत्तिभ्यां स्वसाध्यप्रतिबन्धवत्येकत्र हेतौ क्वचिद्धर्म्मिणि संभवति द्वितीयस्तल्लक्षणस्तत्रैव हेतुः सम्भवेत्, [T. 364b.] भावानां विरुद्धस्वभावद्वयासम्भवात्, विरुद्धधर्म्माध्यासस्य भेदलक्षणत्वात्। तदव्यभिचारिणो हेतोर्द्वितीयस्य तत्र कुतः सम्भवावकाश इति।

ननु यदि तथाविधविशेषसम्भवे [S. 205a.] सति विरुद्धाव्यभिचारिलक्षणं हीयते, एकसंख्याविवक्षा वा व्यर्था, तथापि नैव हेत्वभावप्रसङ्गः, तत् किमुक्तं हेत्वभावो वेत्यत आह – "न च" नैव "तस्य" विशेषस्य प्रतिबन्धलक्षणस्य, यतो वस्तुतोऽसम्भवत्प्रतिहेतुत्वं निश्चीयते। "स्वरूपं" तादात्म्यतदुत्पत्तिलक्षणं निर्दिश्यते भवद्भिः यथाऽस्माभिर्निर्दिष्टं यद्रूपं "प्रतीत्य" प्रतिपद्य प्रतियोगिनः सम्भवासम्भवावुत्पश्यामः। यत्र स विशेषो नास्ति तत्र प्रतियोगिनः सम्भवः कल्पित आगमाश्रयेऽनुमाने। यत्र त्वस्ति स विशेषो वस्तुबलप्रवृत्तेऽनुमाने तत्र प्रतियोगिनोऽसम्भव इति। यत एवं तस्मान्नास्त्येव भवतां स विशेषः—भवद्भिर्न ज्ञायत एव स विशेष इति। तस्मात् सर्व्वत्र यत्रापि प्रतियोगी न दृश्यते तत्रापि शङ्कया प्रतियोगिविषयया भवितव्यम्। तामेव शङ्कां द्रढयन्नाह – "दृष्टप्रतिहेतोरपि" इत्यादि। यस्यापि [S. 205b.] हि प्रतिहेतुर्दृष्टस्तस्यापि प्राक् प्रतियोगिदर्शनादितरेण सर्व्वकालमदृष्टप्रतियोगिना न कश्चिद् विशेषो लक्ष्यते [T. 365a.] यद्दर्शनाज्ज्ञायेत 'अत्र प्रतियोगी सम्भवति न्यान्यत्र' इति दर्शनादर्शनमात्रनिबन्धनयोरन्वयव्यतिरेकयोः सर्व्वत्र समानत्वात्। तथापि पश्चात्तत्र प्रतियोगी दृष्ट इति सर्व्वत्र तत्तुल्यलक्षणे प्रतियोगिसद्भावशङ्का न निवर्त्तत इति।

स्यान्मतम् – येषु प्रतियोगी सम्भवति तेष्वश्यमेव कदाचिदसावुपलभ्यते। येषु तु पुरुषायुषेणापि नोपलभ्यते तेष्वसौ ना-

स्त्येव। ततः स तथाविधो हेतुर्भविष्यति, तत् कथं हेत्वभावोऽस्माकम्? इत्यत आह – "न च" इत्यादि। येषामपि हि प्रतिहेतुः सम्भवति तेषामपि नैव सर्व्वदा तस्य प्रतिहेतोरुपलब्धिः प्रतिपत्तृणाम्[२]। न ह्यसर्व्वदर्शिनामुपलब्धिः सर्व्वभावसत्तां व्याप्नोति, प्रतिबन्धवैकल्यसद्भावात्। ननु च यत्र सर्व्वदैव प्रतिपत्त्रा(त्तरा) प्रतियोगी न दृश्यते तत्र तदाशङ्का [S. 206a.] कथं क्रियते?। तथा चाह –

"बाध(धा)ज्ञाने त्वनुत्पन्ने नाशङ्का[१] निष्प्रमाणिका" इति।

तथाऽपरम् –

"उत्प्रेक्षेत हि यो मोहादजातमपि बाधकम्।
स सर्व्वव्यवहारेषु संशयात्मा क्षयं व्रजेत्॥" इति।

अत आह – "अतिशयवती तु" इत्यादि। तथा हि कस्यचिदेव प्रमातुः कुशाग्रीयमतेरतिशयवती प्रज्ञा प्रतिहेतूत्प्रेक्षिणी दृष्टाऽस्माभिः यथा वेदप्रामाण्यनिराकर्तृषु [हेतुषु] सौगतैः शिष्यपरम्परया कुमारिलोत्पादात्प्रागदृष्टप्रतियोगिषूपन्यस्तेषु, तेनैव प्रज्ञातिशयशालिना प्रतिहेतव उत्प्रेक्षिताः ततस्तद्दर्शनात् यावज्जीवं अदृष्टप्रतिहेतुष्वपि तदाशङ्का न निवर्त्तते। ततः कथमाशङ्का निष्प्रमाणिकोच्यते?। "तुल्यलक्षणे हि" इत्यादिकमपि प्रतियोगिसम्भवाशङ्काकारणमुक्तमेव। न च प्रतियोगिसम्भवमाशङ्कमानस्तन्निमित्तसंभवात् 'उत्प्रेक्षेत हि' इत्याद्याक्रोशमात्रेण निवर्त्तयितुं शक्यते। तेनास्य प्रतियोग्याशङ्कापनोदक्षमं किञ्चित् कारणमभिधानीयम् यथाऽस्माभिरभिहितं 'स्वभावहेतोर्विपर्यये बाधकप्रमाणवशात्तादात्म्यनिश्चये सत्यन्वयव्यतिरेकयोस्तत्र निर्णयः; [S. 206b.] कार्यहेतौ च यथोक्तप्रत्यक्षानुपलम्भतः कार्यकारणसिद्धेस्तन्निश्चय' इति। यत एवं सर्व्वत्र प्रतियोग्याशङ्का न निवर्त्तते भवद्दर्शने तेन कारणेनानिश्चयः प्रतियोगिनः सम्भवासम्भवयोः 'इह प्रतियोगी सम्भवति इह तु न सम्भवति' इत्येवंरूप इति। तस्माद्वस्तुतोऽसम्भवत्प्रतिहेतुत्वं

१. This verse is omitted in the T.। २. प्रतिपत्तुः।

यल्लक्षणं हेतोः [T. 366a.] तस्यानिश्चितत्वादेकसंख्याविवक्षावादिनां न कश्चिद्धेतुः स्यात्। न ह्यनिश्चितलक्षणो हेतुर्भवतीत्युपसंहार इति।

तदेवं 'किं यो वस्तुतोऽसम्भवत्प्रतिहेतुः स सम्यग्ज्ञानविपर्ययहेतुरिष्टः' इति अमुं विकल्पं निराकृत्य द्वितीयं विकल्पं निराचिकीर्षुराह – "अथाप्रदर्शितप्रतिहेतुः" सम्यग्ज्ञानविपर्ययहेतुरिष्ट इति सम्बन्धः। अयं च पक्षः किल दिङ्नागाचार्यस्याप्यभिमत इति पर उपदर्शयन्नाह – "यथाह दिङ्नागाचार्यः"। किमाह? "यदा तर्हि" इत्यादि। "श्रावणत्वस्य हि न कथञ्चिद्व्यवच्छेदहेतुत्वम्" इति दिङ्नागाचार्येणोक्ते परेणाभिहितम्– "यदा तर्हि वैयाकरणः शब्दत्वं सामान्यविशेषं नित्यमभ्युपगच्छति तदाऽयं श्रावणत्वलक्षणः पक्षधर्म्मः हेतुरेव स्यात्। नित्यः शब्दः श्रावणत्वात् शब्दत्ववत्" इत्येवं परेणोक्ते सत्याचार्येणोक्तम्– "यद्यत्र शब्दाख्ये धर्म्मिण्यनित्यत्वहेतुं कृतकत्वप्रयत्नानन्तरीयकत्वादिलक्षणं कश्चिद् वैशेषिकादिर्न[1] दर्शयेत् तदाऽयमप्रदर्शितप्रतिहेतुर्हेतुरेव भवेत्" इति।

तदेवमाचार्यपादैः[2] साक्षित्वे दत्ते भुजमुत्क्षिप्य शास्त्रकारः पूत्कुर्व्वन्नाह[3] – "इदमिदानीम्[4]" इत्यादि। यदा[5] ह्याचार्यस्याप्येतदभिमतमिति [T. 366b.] कैश्चिद्व्याख्यायते तदिदं[6] सुमहद्व्यसनमायातम् – गुरुभिरभिहितत्वादप्रकाश्यम्, नहि गुरूणां दोषः प्रकाशयितुं युक्तः, "न्यायमनुपालयद्भिः असंवरणीयम्" अप्रच्छादनीयम्। तत् किं गुरून्[7] दूषयाम उत न्यायमप्युपेक्षामहे[8] इत्युभयमप्य[9]शक्यमिति "कष्टतरं व्यसनं कथं निर्व्वोढुं शक्येत?"। न कथंचिदिति। कः पुनरत्र दोषो येनेदं कष्टतरमित्याह – "स तावदयं" श्रावणत्वलक्षणो "हेतुर्व्वस्तूनि" शब्दादीनि स्वसाध्यं[10] तत्त्वं नित्यत्वं "तत्प्रकृतीनि" तदात्मकानि "कृत्वा" [S. 207b.] तच्छ्रावणत्वं प्रमाणं येषां पुरुषाणां मीमांसकवैयाकरणादीनां तान् "अभ्यु-

१. °र्न निद° – न० T.। २. °चार्य पूज्यपादैः – पु०। ३. पृथक्कुर्वन् – न०। ४. इदमित्यादि° – पु०। ५. यदाचार्य° – पु०। ६. तदैवं सु० – पु०। ७. गुरुं – पु०। ८. यमुपे० – पु०। ९. °मश० – पु०। १०. °ध्यत° – न० T.।

दयेन" स्वर्ग्गेण "निःश्रेयसेन" चापवर्ग्गेण "योजयित्वा"। तथा हि – वस्तुतत्त्वं भावयन् यावत् क्लेशान्न प्रजहाति तावत् स्वर्गमासादयति, क्लेशांस्तु प्रजहन्निर्व्वाणपरायणो भवति। अथवा शब्दनित्यत्वप्रतीतौ वेदप्रामाण्यात् तद्विहिताग्निहोत्रानुष्ठानात् स्वर्ग्गो वेदान्तनिषेवणादपवर्ग्गः। पुनरुत्तरकालं "प्रतिभावता"[2] प्रज्ञाजातीयेन वैशेषिकादिना पुरुषेण[3] "हेत्वन्तरस्य" [T. 367a.] प्रतिहेतोः "निदर्शनेन" यदस्य "नित्यत्वसाधनसामर्थ्यं" प्रतिहेत्वनुपदर्शने सत्यासीत् तत्तदुपदर्शनेन "उत्कीलितम्" अपनीतमिति। तानि वस्तूनि नित्यत्वसम्पदः प्रच्याव्य, तांश्च तत्प्रमाणकान्[6] पुरुषान् स्वर्ग्गापवर्ग्गसम्पदः प्रच्याव्य श्रावणत्वलक्षणो हेतुः शक्तिवैकल्यात् परित्रातुमशक्तो भ्रष्टराज्य इव राजा तपोवनं गच्छति स्वैरेव दुश्चरितैरिति किमत्र वयं ब्रूमः?।

तदेवमुपहस्यैतस्मिन् पक्षे [S. 208a.] दोषमुपदर्शयन्नाह— "पुरुषप्रतिभा" इत्यादि। यदा ह्यप्रदर्शितप्रतिहेतुर्हेतुरिष्यते तदा पुरुषप्रतिभाकृतं साधनत्वमभ्युपगतं भवति। ततश्च वस्तुतो न किञ्चित् साधनमसाधनं वा प्राप्तम्। तथा हि – यदा प्रतिहेतुर्नोपदर्श्यते तदा साधनम्, यदा तूपदर्श्यते तदा न साधनमिति पुरुषप्रतिभाकृतं साधनत्वमायातमिति।

अपि च – अप्रदर्शितप्रतिहेतोर्हेतोर्हेतुत्वेऽङ्गीक्रियमाणे विकल्पद्वयम् – किं परमार्थतो हेतुस्तद्धर्म्मभावी, उताऽतद्धर्म्मभावीति?। तत्राद्यं विकल्पमधिकृत्याह – "स च" हेतुर्योऽसौ प्रथमं उपादीयते। स "यदि स्वभावत" एव "तस्मिन्" साध्यधर्म्मे "सत्येव भवति" इत्येवंशीलोऽस्मदुपवर्णितप्रतिबन्धोपगमात् [T. 367b.] यदीष्यते "तदा कथमन्यथा क्रियेत" हेत्वन्तरेणातद्धर्म्मभावी कथं क्रियेत?। न कथञ्चित्। किं कारणम्?। वस्तूनां [S. 208b.] हेतुलक्षणानां यः स्वभावः—'सत्येव साध्यधर्म्मे भवनात्मकः'-"तदन्यथाभावस्य" तद्विपर्ययस्य "अभावाद्" उभयोश्च स्वसाध्यधर्माविनाभावित्वे

१. °त्रावनु° न० T.। २. प्रति-भवता T.। ३. °देन अकृतकत्वाद् हे° – T.। ४. कृतकत्वादि°। ५. तदु° पु० T.। ६. कात् पु०। ७. दुश्चेष्टितैः न०।

स्वभावत एव धर्म्मिण्येकत्र तयोर्भावे विरुद्धावुभौ स्वभावावेकस्य स्याताम्। न चैकस्य विरुद्धौ स्वभावौ सम्भवतः, विरुद्धधर्म्माध्यासेन तस्यैकत्वहानिप्रसङ्गात्। अथ द्वितीयो विकल्पस्तदा "अतद्धर्म्मभावी च" असत्यपि साध्यधर्म्मे भवनशीलः प्रतिबन्धानभ्युपगमात् "कथमन्यदाऽपि" अप्रदर्शितप्रतिहेत्ववस्थायामपि "साधनं" कस्यचित्?। नैव तदापि साधनम्, न केवलं प्रदर्शितप्रतिहेत्ववस्थायामिति।

उपसंहरन्नाह – "तस्मात् स्वभावतः" इत्यादि। यत एवं भावानां स्वभावोऽन्यथा कर्तुं न शक्यते, विरुद्धोभयस्वभावश्चैको न सम्भवति तस्मात् परमार्थतः स्वेन स्वेन [S. 209.1a.] साध्येनाविनाभाविनोर्यथोक्तलक्षणयोः [T. 368a.] कार्यस्वभावहेत्वोः तल्लक्षणस्य कार्यस्वभावलक्षणस्य प्रतिहेतोरसम्भवाद् "अलक्षणमेकसंख्याविवक्षा" विवक्षितैकसंख्यत्वं लक्षणं न भवति। किं कारणम्? इत्याह – "व्यवच्छेद्याभावादिति"। प्रतिहेतुर्हि विवक्षितैकसंख्यत्वस्य व्यवच्छेद्यो वर्ण्यते। स च प्रतिहेतुः स्वलक्षणयुक्तयोः कार्य-स्वभावयोर्न्न भवत्येवेति कथं तद्धेतुलक्षणं स्यादिति। तदेवमनयोर्द्वयो रूपयोर्यः सम्भवो यथोक्ताविनाभावाऽसम्भवे सतीति रूपान्तरोपगमेऽपि हेत्वाभासतैवेति "हेत्वाभासास्ततोऽपरे इति" इत्यस्यार्थो विवृत इति।

ज्ञातत्वनिराकरणायाह – "ज्ञानं पुनः" इत्यादि। अबाधितविषयत्वं विवक्षितैकसंख्यत्वं च कार्य-स्वभावहेत्वोरेवाविनाभावे सति बाधाप्रतिहेत्वोरसम्भवात् व्यवच्छेद्याभावत्वेन सत्यपि लिङ्गधर्म्मत्वे तल्लक्षणं न भवतीत्युक्तम्। ज्ञानं तु ज्ञातत्वम्, तस्यैव [S. 209.1b.] भावप्रत्ययेनाभिधानात्। तथा हि – ज्ञानशब्दप्रवृत्तिनिमित्तं ज्ञातत्वमुच्यते, तच्च ज्ञानमेव, तदुत्पादे सति ज्ञात इति व्यवहारात्। न च तत् लिङ्गस्यात्मरूपमिति [T. 368b.] कथं लिङ्गलक्षणं भविष्यति?। यद्यपि विकल्पप्रतिभासी सामान्याकारो लिङ्गतयाऽवस्थाप्यते तथापि न ज्ञानस्य लिङ्गधर्म्मता। न ह्यसौ स्वतन्त्र एव लिङ्गम्। यदाह – "विकल्पभेदान

स्वतन्त्राणामन्वर्थाश्रयणात् त[1]त्कल्पितविषयादर्थ[2]प्रतिपत्तावनर्थप्रतिलम्भ एव स्यात्" इति । तस्माद् बाह्यवस्तूपादानस्यैवास्य लिङ्गताऽवस्थाप्यते । साध्यसाधनसंकल्पे वस्तुदर्शनहा[3]नेः स्वलक्षणस्य क्वचिदनन्वयाच्च तद्धर्म्मतामेव त्वनुस्मरन्तो विकल्पा नानैक[4]व्यतिरेकान् संदर्शयन्तो वस्तुनि परम्परया प्रतिबन्धादविसंवादकाः कार्यादिलिङ्गव्यपदेशनिबन्धनं चेत्युक्तप्रायम् ।

न च तस्य कार्यादेरात्मरूपं [S. 209.2a.] ज्ञानम् । विकल्पावभासी च सामान्याकारो नैव विकल्पस्यात्मभूतः, तस्य नीरूपस्य वस्तुरूपविरोधात् । तद्रूपस्य च विकल्पप्रतिबिम्बचक्रस्य सामान्यात्मताविरहात् । यस्मादबाह्यस्यापि बाह्यतया व्यवसितस्याननुयायिनोऽप्यनुयायितया सामान्यात्मकत्वं तथात्वे चास्य विकल्परूपता कुतः ? यदाऽऽह –

" ज्ञानादव्यतिरिक्तं च कथमर्थान्तरं व्रजेत् ? ॥
तस्मान्मिथ्यावभासोऽयमर्थेष्वेकात्मताग्रहः । " [ प्रमाणवा० ३.७०,७१] इति ।

न ज्ञानस्य लिङ्गधर्म्मता । एतदेव साधयन्नाह – " किंरूपाद् " इत्यादि । किमात्मकात् " हेतोरनुमेयोऽर्थो ज्ञातव्यः इति चिन्तायां " प्रकृतायां "प्रतिपत्तुः" पुंसो यदविसंवादकं लिङ्गं तस्य स्वरूपमभिधीयते शास्त्रकारैः [T. 369a.] यस्य रूपस्य दर्शनादयं प्रतिपत्ता 'यत्र तद्रूपसम्भवः तत् साधनम् तद्रूपविकलमसाधनम्' इति प्रविभागेन व्यवस्थाप्य यत्तत्र साधनत्वेन व्यवस्थापितं तस्येष्टार्थसन्निधानसम्प्रत्ययात् प्रवृत्तिमवलम्बते । तथा, एतस्मिंश्च न्याये [S. 209. 2b.] व्यवस्थिते यदस्य लिङ्गस्यात्मरूपं तल्लक्षणं भवितुमर्हति पक्षधर्म्मादिवत् न तु यत् पररूपम् ।

स्यादेतत् – ज्ञातस्य लिङ्गस्य साधकत्वाद् युक्तैव साध्यसिद्ध्युपयोगिनो ज्ञानस्य लिङ्गलक्षणतेत्यत आह – " प्रतिपत्तिजन्मनि " इत्यादि । यद्यनुमेयप्रतीतिजन्मन्युपयुज्यते ज्ञानमिति तन्मात्रेण लिङ्गस्य लक्षणमिष्यते तदाऽतिप्रसङ्गः प्राप्नोति । तमेवाह – " एवं प्रतिपत्तिजन्मन्युपयोगमात्राल्लिङ्गलक्षणत्वे प्रमेयस्य" अर्थस्य " पुरुषस्य " प्र-

१. तैर्विकल्पैः कल्पितो योऽसौ विषयोऽवस्तु (?)रूपो न धूमत्वादिः । २. वह्नित्वादि । ३. वस्तुदर्शनाप्रवृत्ता (?) ॥ ४. नानाभूतानां यो वास्तवव्यतिरेक एकस्य च व्यावृत्तिरविकल्पितस्तं दर्शयन्तः ।

मातुः "आदि"शब्दात् संयोगसमवायादीनामालोकमनस्कारादीनां लिङ्गलक्षणत्वं भवेत्। अत्र कारणमाह – "नहि तेष्वपि" प्रमेयादिषु असत्सु लिङ्गिनि ज्ञानं भवतीति कृत्वा। अत्र परोऽनिष्टमापादयन्नाह – "निश्चितग्रहणं तर्हि" इत्यादि। यदि पररूपत्वाज्ज्ञानं लिङ्गलक्षणं न भवति तदा च यदेतदाचार्येण –

"अनुमेयेऽथ तत्तुल्ये सद्भावो नास्तिताऽसति।
निश्चिते"ति–

निश्चितग्रहणं कृतं भवतश्चाभिमतं [T. 369b.] तन्न कर्त्तव्यम्। तथा हि – निश्चयो हि लिङ्गस्य पररूपमेव। स चेत् तल्लक्षणम्, ज्ञानं किमिति नेष्यते यतो निश्चयो विज्ञानमेव तद्विशेषत्वादस्येति।

सिद्धान्तवाद्याह – "न न कर्तव्यं" किन्तु कर्तव्यमेव तस्य [S. 210a.] निश्चितग्रहणस्य लिङ्गरूपप्रतिपादनादन्यार्थत्वात्। तामेवान्यार्थतां दर्शयन्नाह – "सपक्षविपक्षयोः" इत्यादि। परे हि सपक्षे दर्शनमात्रेणासपक्षे चादर्शनमात्रतो गमकं हेतुमिच्छन्ति। तेषां नैव दर्शनमात्रेण साध्यसिद्धौ समर्थो हेतुर्भवतीति ज्ञापनार्थं निश्चितग्रहणं कृतम्। यतः सतोर्विद्यमानयोरपि दर्शनादर्शनयोरगमकत्वं हेतोर्दृश्यते 'स श्यामः, तत्पुत्रत्वात्' इत्यादौ। यत एवं तेन कारणेन सपक्षे भावेन विपक्षे सर्व्वत्राभावविशिष्टेनाऽसपक्षे च सर्व्वत्राभावेन सपक्षे तादात्म्यतदुत्पत्तिलक्षणभावविशिष्टेन गमको हेतुरित्यस्यार्थस्य ज्ञापनार्थं लक्षणवाक्ये निश्चितग्रहणं कृतं बोद्धव्यम्। एतदुक्तं भवति – यावेव सपक्षविपक्षयोः भावाभावौ प्रतिबन्धसाधकप्रमाणवृत्त्या निश्चितौ ताभ्यामेव हेतुर्गमको भवति, न तु यथाकथञ्चिद्दर्शनमात्रेणेत्यस्यार्थस्य [S. 210b.] ज्ञापनाय निश्चितग्रहणं कृतमिति।

प्रकृतमुपसंहरन्नाह – "तेन" इत्यादि। येन विशिष्टयोर्भावाभावयोरेव ख्यापनाय निश्चितग्रहणं कृतम्, न रूपान्तराभिधानाय, अनात्मरूपस्य [T. 370a.] च लक्षणता न युज्यते, तेन पररूपं लिङ्गस्य लक्षणं न भवति। यतः तेन ज्ञानादिना पररूपेण लिङ्गस्य न कश्चिद् रूपविशेषोऽभिधीयत इति।

ननु च परेऽपि सपक्षविपक्षयोर्भावाभावाभ्यां गमकं हेतुमिच्छन्ति, दर्शनादर्शने तु तयोरेव साधके, तत् किमर्थं निश्चितग्रहणम्? इति, अत आह – "तौ हि" इत्यादि। यद्यपि परे भावाभावाभ्यामेव गमकं हेतुमिच्छन्ति तथापि सपक्ष एव भावोऽसपक्षे चाभाव एवेति भावाभावौ दर्शनादर्शनमात्रतो व्यवस्थापयन्ति। न च ततस्तौ तथाविधौ सिध्यतः, प्रतिबन्धविकलानामप्यर्थानां क्वचिद् भावाभावयोः कथञ्चिद्दर्शनादर्शनसम्भवात्। तस्माद् [S. 211a.] यौ 'हेतोः सपक्षे एव भावोऽसपक्षे चाभाव एव' इत्येवमात्मकौ भावाभावौ तौ तद्भावस्य साधकं यत् प्रमाणं तादात्म्यतदुत्पत्तिसाधनविषयं तद्वृत्त्या बोद्धव्यौ। कुतः? उपायान्तरस्याभावात्। तदनभ्युपगमे हि हेतोः सपक्ष एव भावः सर्व्वेषां हेतुमतां भावानां साध्येनानुगमदर्शने सति विपक्षे चाभाव एव साध्यविकलानां सर्व्वार्थानां हेतुविविक्तानां उपलम्भे सति स्यात्। न चैतदसर्व्वदर्शिनः सम्भवतीति। यत उपायान्तरं नास्ति तेन कारणेन तयोर्व्विशिष्टयोर्भावाभावयोः प्रतिपादनाय निश्चितशब्दः प्रयुक्तो लक्षणे लक्षणकारेणेति।

ननु च भावाभाववचनमात्रादेव प्रमाणतो निश्चयो लभ्यते अन्यथा तयोरेव सत्ता न प्रसिध्येदिति, अत आह – "यद्यपि" इत्यादि।

"अनुमेयेऽथ तत्तुल्य सद्भावो नास्तिताऽसति।"

इत्यनेनैव सपक्षासपक्षयोः [T. 380b.] भावाभाववचनमात्रेण निश्चितग्रहणनिरपेक्षेण तयोर्भावाभावयोर्यत् साधनं प्रमाणं तस्य वृत्तिर्यद्यप्याक्षिप्यते। कथं पुनर्निश्चितग्रहणमन्तरेण भावाभाववचनमात्रतस्तद्वृत्तेः आक्षेपः? इत्याह – "अन्यथा" यदि तत्साधनप्रमाणवृत्तिर्नाक्षिप्येत, [S. 211b.] तदा "तयोरेव" सपक्षविपक्षयोरेव भावाभावयोर्या सत्ता स्वरूपव्यवस्था तस्या "अप्रसिद्धेः"। कस्मादप्रसिद्धिः? इत्याह – "ज्ञानस्य" उपलब्धेर्या सत्ता उत्पत्तिः तन्निबन्धनत्वाज्ज्ञेयस्य भावाभावलक्षणस्य सत्ताव्यवस्थायाः स्वरूपव्यवस्थितेः। न ह्युपलम्भमन्तरेण स्वत एवार्थाः

सिध्यन्ति, सर्व्वस्य सर्व्वसिद्धिप्रसङ्गात्। तस्मादिदमेवंरूपं नैवंरूपमिति तदाकारज्ञानोदयादेव व्यवस्थाप्यते। यत एवं तस्मात् सर्व्वत्र शास्त्रे लोके वा ज्ञेयसत्ताव्यवस्थैव निश्चितग्रहणं विनाऽपि "तत्साधनं" तत्सत्तासाधनं प्रमाणम् "आकर्षति" आक्षिपतीति। किञ्च, परार्थत्वाच्च शास्त्रप्रणयनस्य तत्साधनप्रमाणवृत्तिराक्षिप्यते इति सम्बन्धः। कीदृशं पुनस्तच्छास्त्रप्रणयनं यत् परार्थरूपतया स्वव्यवस्थापितज्ञेयसत्तासाधनं प्रमाणमाक्षिपति? इत्याह – "त्रिरूपं लिङ्गं वः संवादकं प्रापकं" [T. 371a.] वाञ्छितस्यार्थस्येति। यदि नामैवंरूपं परार्थं शास्त्रप्रणयनं तथापि कथं तत् साधनप्रमाणवृत्तिमाक्षिपतीत्याह – "तद्रूपं" तस्य लिङ्गस्य त्रिरूपस्य रूपं स्वभावं शास्त्रोक्तं ये प्रतिपत्तारो न विदन्ति, न तेषां ततस्त्रिरूपाल्लिङ्गाच्छास्त्रोक्ताद् वाञ्छितेऽर्थे प्रवृत्तिर्भवति, अज्ञातस्यार्थस्य [S. 212a.] ज्ञापकस्य स्वसत्तामात्रेण प्रवर्तकत्वाभावात्। यत एवम् "इति" तस्मात् परोपलक्षणत्वादेव परेषां ज्ञापकत्वादेव प्रवर्त्तके त्रिरूपलिङ्गे ज्ञानं सिद्धमिति यद्यपि निश्चितग्रहणमतिरिच्यते तथापि तावेव लिङ्गस्य सपक्षासपक्षयोर्भावाभावौ विशिष्टौ शास्त्रोक्तौ 'सपक्ष एव भावोऽसपक्षे चाभाव एव' इत्येवंरूपौ केचिन्नैयायिकप्रभृतयः, परे दर्शनादर्शनमात्रेण – ये दर्शनादर्शने प्रतिबन्धसाधके न भवतः – तन्मात्रेण व्यवस्थापयन्ति "यत एव[1] इति" तस्मात्तेषां वादिनां निषेधार्थोऽयं लक्षणे निश्चितशब्दः प्रयुक्त आचार्येणास्माभिश्चाभ्युपगत इति। यदि तु परविप्रतिपत्तिः न स्यात् तदा नैवासौ प्रयुज्येतेति।

किमिति पुनर्दर्शनादर्शनाभ्यां भावाभावविषयाभ्यां सपक्षा[स]पक्षयोः विशिष्टौ भावाभावावन्वयव्यतिरेकात्मकौ [T. 371b.] नेष्येते इत्याह – "सतोरपि" इत्यादि। सत्यपि क्वचित् सपक्षे भावदर्शने हेतोः क्वचिच्चासपक्षेऽभावदर्शने 'स श्यामः, तत्पुत्रत्वात्' इत्यादावन्वयव्यतिरेकयोः संशयात्। तथा हि – अन्वयो नाम सर्व्वत्र सत्येव साध्ये हेतो-

१. एवं T.।

भावो व्याप्त्या चासति साध्ये हेतोरभावो व्यतिरेकः । न च क्वचित् सति साध्ये [S. 212b.] हेतोर्भावदर्शनेऽपि तन्मात्रेण तथाभावः सर्व्वत्र भवति, अप्रतिबद्धस्वभावानां सहभावनियमाऽभावात् । तथा क्वचित् साध्याभिमतस्याभावे सत्यभावदर्शनेऽपि हेतोः सर्व्वत्र तदभावेऽवश्यमभावः, तदनायत्तस्य तन्निवृत्तौ नियमेन निवृत्त्यभावात् । तस्मात् प्रतिबन्धप्रसाधकप्रमाणवृत्त्यैव यथोक्तौ सपक्षासपक्षयोः भावाभावौ सिध्यतः नान्यथेति विप्रतिपत्तिनिरासार्थमेव निश्चितग्रहणं कृतमित्युपदर्शयन्नाह – "तस्मात्" इत्यादि । "अस्माभिः" इत्याचार्यकृते निश्चितग्रहणेऽन्यत्रास्माकमभिमतत्वात् "अस्माभिः" इत्याह ।

तदेवं विप्रतिपत्तिनिरासार्थं निश्चितग्रहणम्, असत्यां तु विप्रतिपत्तौ तन्न कर्तव्यमेवेति प्रतिपाद्य अत एव न्यायात् ज्ञातत्वं रूपान्तरं न भवतीति [T. 372a.] दर्शयन्नाह – "यतोऽपि" इत्यादि । "पृथगतः" इति पक्षधर्म्मत्वादेस्त्रैरूप्यात् । कुतः ? । "तेनैव" त्रैरूप्यवचनेनैव तत्साधनप्रमाणाक्षेपतः "अवगतत्वात्" प्रतिपन्नत्वादिति । किंवत् ? "उपनयार्थवत् पक्षधर्म्मत्वात्" इति । यथा पक्षधर्म्मत्ववचनेनैव हेतोरुपनयस्यार्थोऽवगतस्तस्य धर्म्मिणि हेतोः सद्भावप्रदर्शनात्मकत्वात्, पक्षधर्म्मवचनस्य च तद्रूपत्वात् ततः पृथगुपनयो [S. 213a.] रूपान्तरं न भवति; तथा त्रैरूप्यात् ज्ञानं, तद्वचनेनैवावगतत्वादिति ।

अत्र परोऽनिष्टमापादयन्नाह – "अन्वयव्यतिरेकयोरपि" इत्यादि । यदि त्रैरूप्यवचनेनैव सामर्थ्याज्ज्ञानं लभ्यत इति तत् ततः पृथग् न वक्तव्यम् "हन्त" तर्हि अन्वयात् पृथग् व्यतिरेको न वक्तव्यः व्यतिरेकाच्च पृथगन्वयः । किं कारणम् ? । एकस्यान्वयस्य व्यतिरेकस्य वा प्रयोगादुभयस्य गतेः । कृतं च तयोः पृथग्वचनं, तथा ज्ञातत्वस्यापि त्रैरूप्याद् गम्यमानस्यापि पृथग्वचनं कर्त्तव्यमिति ।

सिद्धान्तवाद्याह – "न, हेतोः" इत्यादि । नान्वयव्यतिरेकयोर्न पृथक्त्वं किन्तु भिन्नरूपतैव । तथा हि – अन्वयो हेतोः

सपक्षे भाव उच्यते, व्यतिरेकः पुनरभावोऽसपक्षे। न च तौ परस्परमाक्षिपतः [T. 372b.] परस्परमन्तर्भवतो विधिप्रतिषेधरूपयोर्भिन्नस्वभावत्वात्। न च यो यतो भिन्नस्वभावः स तत्रान्तर्भूतो युक्तो। ननु च यद्यन्वयव्यतिरेकयोर्भिन्नरूपता कथं तर्हि त्रिरूपं लिङ्गमुच्यते ?। नहि परस्परभिन्नावात्मानावेवास्य युज्येते, स्वभावभेदलक्षणत्वाद् वस्तुभेदस्य। नैष दोषः, यतो यथाऽन्वयव्यतिरेकौ [S. 213b.] व्यवस्थाप्येते न वा नयो(०प्येते तथा तयो)रनन्तर्भाव उच्यते नान्यथा। कथं चैतौ व्यवस्थाप्येते ?। व्यावृत्तिकृतं भेदमुपादाय। तथा चानयोर्भिन्नरूपतैव। व्यावृत्तिभेदेऽपि च परमार्थतो भेदो नास्तीत्येकं लिङ्गं त्रिरूपमित्युच्यते इति।

कथं तर्हि प्रागुक्तम्[1] 'नानयोरर्थतः कश्चिद् भेदः, अन्यत्र प्रयोगभेदाद्' इति ? अत आह – " एकं वाक्यम् " इत्यादि। अन्वयमुखेन व्यतिरेकमुखेण वा प्रयुक्तमेकं वाक्यमुभयमन्वयं व्यतिरेकं च भिन्नलक्षणमेव गमयतीत्युच्यतेऽस्माभिर्नैकोऽर्थः स्वभावो द्वितीयस्योच्यते, परस्परभिन्नयोरेवैकवाक्यार्थरूपत्वात्।

अत्र पर आह – " न तु तत्रैव " इत्यादि। अयमभिप्रायः – लक्षणवाक्यप्रतिपादितावन्वयव्यतिरेकावाश्रित्य परस्परान्तर्भावश्चोद्यते। स च वि[2]द्यत एव। तथा हि – ' तत्रैव भावः ' इत्यत्र लक्षणवाक्ये त[3]दर्थतया तदभावेऽभावो गम्यते; ' अतद्भावेऽवश्यमभावः' इति [T. 373a.] चात्र 'तद्भावे भावः'। न ह्यसति प्रतिबन्ध एकाभावेऽपरस्याभावः। प्रतिबन्धश्च तादात्म्यतदुत्पत्तिभ्यां तद्भावे भावरूप एव। ततश्चैकेनैव सपक्षासपक्षयोर्भावाभावप्रतिपादकेन [S. 214a.] प्रतिविशिष्टेन लक्षणवाक्येनोभयगतेर्द्वितीयवचनं न कर्त्तव्यमिति। तथा चैकवाक्यार्थान्तर्भावाद् भिन्नस्वभावताऽप्यनयोर्दुर्लभा। ततश्च यदुक्तम् ' अन्वयव्यतिरेकयोरपि तर्हि न पृथक्त्वमिति ' तत् तदवस्थमेवेति।

१. पृ० ७४, पं० १८–२१। २. वेद्यते T.। ३. तत्रैवेत्यवधारणस्य तदर्थितया।

सिद्धान्तवाद्याह – "वचनमेतत्" 'तत्रैव भावः' इत्यादिरूपम् "उभयमाक्षिपति" प्रतिपादयति । कुतः ? । सामर्थ्यादुभयप्रतिपादनशक्तत्वात् । कथम् ? इति चेत्, आह – "एकस्यापि वाक्यस्य" कीदृशस्य ? । "नियमख्यापकस्य" 'सपक्ष एव भावोऽसपक्षे चाभाव एव' इति सावधारणस्य "द्वितीयाक्षेपनान्तरीयकत्वात्" द्वितीयप्रतिपादननान्तरीयकत्वात् । "न च तावतैकवाक्यप्रतिपादनमात्रेणोभयोरेकस्वभावता" भिन्नस्वभावानामप्यर्थानामेकवाक्येन प्रतिपादनात् । एकेनैव च लक्षणवाक्येनोभयगतावपि यत् "पृथगभिधानं" तत् "प्रयोगनियमार्थम्" । साधर्म्यप्रयोगे [T. 373b.] वैधर्म्म(र्म्य)वचनं न कर्त्तव्यम्, वैधर्म्यप्रयोगे च साधर्म्यवचनमिति न पुनरेकाभिधानेनानवगतस्य रूपान्तरस्य प्रतिपादनार्थम् । न च तथा त्रैरूप्यवचनेन ज्ञाननिबन्धनेन ज्ञेयसत्ताव्यवस्थायाः परोपलक्षणार्थेन च शास्त्रप्रणयनेनाश्रितज्ञानस्यैव त्रैरूप्यस्य [S. 214b.] प्रतिपादनाल्लब्धस्य ज्ञानस्य पुनर्व्वचने न किञ्चित् प्रयोजनमस्तीति नास्य पृथग्वचनं युक्तमिति ।

स्यान्मतम् – केवलावपि तर्ह्येकवाक्यार्थानन्तर्भूतौ परस्परमऽभिन्नस्वभावौ भविष्यतः तत एवैकवाक्यार्थान्तर्भावादित्यत आह – "न पुनः केवलौ" एकवाक्यार्थानपेक्षौ तदन्तर्भावमात्रेण सपक्षासपक्षयोः भावाभावौ परस्परमाक्षिपतोऽन्तर्भवतः भिन्नरूपाणामप्यर्थानामेकवाक्यान्तर्भावदर्शनात् । ननु च नियमवन्तावपि भावाभावौ केवलावेव, तयोः परस्पराक्षेपे केवलयोरपि तत्प्रसङ्ग इत्यत आह – "नियमवन्तौ च" सावधारणवाक्यप्रतिपादितौ "न केवलौ" किन्तु सहितावेव । कुतः ? । "नियमस्य" सावधारणस्य वाक्यस्य "उभयरूपत्वात्" भावाभावप्रतिपादनात्मकत्वात् ।

तदेवं सावधारणेन [T. 374a.] वाक्येन नैव केवलोऽन्वयो व्यतिरेको वाऽभिधीयते । तदन्तर्भावात्तु द्वितीयगतिः किन्तु परस्परानन्तर्भूतावेव सहितावेकेन वाक्येनाभिधीयेते इति प्रतिपाद्योपसंहरन्नाह – "तस्मात्" तत्रैव [S. 215a.] सपक्ष एव भाव

इत्यनेन वाक्येन न सपक्षे भाव एवोच्यते। किं तर्हि?। असपक्षेऽभावोऽपि, तथा चेतरेणाप्यसपक्षेऽभाव एवेति वचनेन नाभाव एव केवल उच्यते किन्तु सपक्षे भावोऽपि, येन केवलवचनेन भावोऽभावो वा तदात्मकतया द्वितीयमाक्षिपेद् यतोऽनयोः पृथग्वचनं न स्यात्। तस्माद् यदाऽन्वयव्यतिरेकौ भावाभावावभिप्रेतौ तदा तौ भिन्नरूपावेवेति कथं तयोः न पृथक्त्वम्?। अथ नियमवता वाक्येनाभिहितौ तदैकवाक्यादेवोभयगतेः पृथग्वचनं न कर्त्तव्यमेव। तच्च कृतं नाप्रतिपन्नप्रतिपत्तये किन्तु प्रयोगनियमार्थमित्युक्तमेतदिति।

स्यान्मतम् – यथाऽन्वयव्यतिरेकौ भावाभावलक्षणौ न परस्परात्मकौ ततश्च तयोः परस्परतो रूपान्तरत्वम्, एवं परोपलक्षणशास्त्रप्रतिपादितात् त्रैलक्षण्याद् भिद्यत एव ज्ञानम्, न तत्रान्तर्भूतम्, ततो रूपान्तरं भविष्यतीत्यत [T. 374b.] आह – "नैवम्", यथाऽन्वयव्यतिरेकौ भावाभावलक्षणौ परस्परमनन्तर्भूतौ, न तथा ज्ञानं परोपलक्षणशास्त्रप्रतिपादिते त्रैलक्षण्येऽनन्तर्भूतम्। कुतः?। "परोपलक्षणात्"–परे उपलक्ष्यन्ते [S. 215b.] उपलक्षण(णं) त्रैरूप्यविषयां प्रतीतिं कार्यन्ते येन शास्त्रेण ततो यत् त्रैलक्षण्यं प्रतीयते आगृहीतज्ञानं तस्मादव्यतिरेकादागृहीतज्ञाने त्रैलक्षण्येऽन्तर्भावादिति यावत्, "इति" तस्मान्न लक्षणान्तरं त्रैरूप्यादिति। तदयमत्र समुदायार्थः – यदि ज्ञातत्वं ज्ञानशब्दप्रवृत्तिनिमित्तं उक्तेन प्रकारेण ज्ञानमेवोच्यते तदा तल्लिंगस्यानात्मभूतमिति न तल्लक्षणम्। अथावि(पि) ज्ञानापेक्षः कर्म्मभावो ज्ञातत्वमुच्यते तदाऽपि ज्ञेयसत्ताव्यवस्थाया ज्ञानसत्तानिबन्धनत्वात् त्रैरूप्यव्यवस्थैव तत्सत्ताव्यवस्थापकं ज्ञानमाक्षिपति। ततस्तदपेक्षोऽपि कर्म्मभावोऽनुक्तसिद्ध इति न तद्वचनं पृथक्कर्त्तव्यम्। तथा परोपलक्षणार्थशास्त्रप्रतिपादितागृहीतज्ञानात् त्रैलक्षण्यादव्यतिरेकादिति।

तदेवमबाधितविषयत्वादिकं रूपत्रयं निराकृत्य निगमयन्नाह – "तस्मान्न हेतुः षड्लक्षणः।" [T. 375a.] किं तर्हि?। त्रैलक्षण्य एवेति।

इमं क्षताशेषकुतर्कमार्गं,
मुनीशराद्धान्तनयप्रदीपम् ।
वितत्य पुण्यं यदुपार्जितं तत्,
परां विशुद्धिं जगतो विधेयात् ॥

[S. 216a.] हेतुबिन्दुटीका समाप्ता ।

..................................................................................

..................................................................................

मा यतत इमा या तद्रूपा वल (?) त्रिभुवनस्य हिताय शश्वत् ।
नरस्य सेतोः दो... ..तथागतमतस्य निबोधयित्री ॥ २ ॥
.......७५ मार्ग्र(र्ग)सिर वदि ७ रवौ । मंगलं महाश्रीः ॥

न गुरोरुपदेशमग्रहीत् बुबुधे वस्तु ततो ......धीः ।
यतते स्म न तस्य वृद्धये न परिस्पन्दितुमप्यपारयत् ॥ [ १ ॥ ]
जीवात्मकं चान्द्रमसं च तेजः कृतास्पदं तस्य न¹ ...त् ।
तदेव शक्ता...था परत्र चित्रा हि विश्वप्रकृति...नाः ॥२॥
हे ! रोहिणीरमण ! सर्वकलानिकेत !
तारापते ! रजनिनाथ ! सुधानिधान ! ।
कादम्बरीरसगुणेषु नि ......व-
मात्मानमर्पितशरीरमनुस्मरेन्दोः ॥ ३ ॥

श्रीब्रह्माणगच्छे पं० अभयकुमारस्य
हेतुबिन्दुतर्कः ॥

---

१. °टीका ब्राह्मणच्छेन लिखिता समा° T.

पण्डितदुर्वेकमिश्रकृतो

# हेतुबिन्दुटीकालोकः ।

[ 1b ] । [1]**नमो बुद्धाय ।**

प्रहीणावृतिसंघातं प्रणिपत्य तथागतम् ।
विवृणोमि यथाशक्ति भट्टार्चटगुरोर्गिरः ॥
अभिमानधना ये च ये च बुद्धिधना जनाः ।
न तदर्थमयं यत्नस्तस्मान्नैव निरर्थकः ॥

स्वेष्टदेवतानमस्क्रिया हि पुण्यप्रसवभूमिरितश्चान्तरायरहिता ईप्सितपरिसमाप्तिर्भवतीत्यागमाद्वेदिता शिष्टाचारानुरक्षणधर्मो [2]चायं धर्माकरदत्तो हेतुबिन्दुटीकां चिकीर्षुरादित एव स्वाधिदैवतं स्तुतिपुरःसरं नमस्यति । नमस्कारश्लोककरणे चाक्षेपपरिहारौ धर्मोत्तरप्रदीपादितनीतिदिशा अनुगन्तव्यौ ।

आशयप्रयोगभेदेन हेत्ववस्थामुभयीं स्वार्थपरार्थप्रकर्षभेदेन फलावस्थां द्वयीं दर्शयिष्यते । अस्य हेतुफलावस्थोपदर्शनं[3] मुनीन्द्रस्य नमस्याभिमता । बोधिसत्त्वावस्थायां हि भगवान् अनेकजन्माभ्यासयोगात् कल्याणमित्रसंपर्काच्च प्रथममाशयविशेषसम्पदमुदपीपदत् । यामिह प्रणिधिबोधिचित्तमातिष्ठन्ते तत्त्वविदः । तस्य परस्तादाशंसितार्थसंपादनाय प्रयोगविशेषमशेषमकार्षीत् । यं प्रस्थानबोधिचि[4]त्तमाचक्षते । तस्योपरिष्टात् प्रयोगविशेषप्रकर्षप्राप्तेः परमपुरुषार्थफलं सकलमलब्ध । अथातः सत्त्वोपकारं विविधमबाधितं व्यधित ।

अत एवायं **यः संजाते**[ पृ. १. पं. ५. ]त्यादिनादौ कण्ठोक्तामकृत आशयावस्थाम् । तदनु **पुण्यज्ञाने**[ पृ. १. पं. ६. ]त्यादिना प्रयोगावस्थाम् । तस्य पश्चात् **कृत्स्ने**[ १. ७. ]त्यादिना फलावस्थाम । तदनन्तरं[5] **लोक** [ १. ८. ] इत्यादिना च सत्त्वोपकारावस्थामिति ।

यत्र च एवंविधो **जिनरविः** [ १. ८.] **तं नमस्यामि** [१. ८.] नमस्करोमीति सम्बन्धः ।

उपकार्योपकारिणोः समं प्रवर्तमाना निरन्तरमुदीयमाना च महत्त्वयुक्ता महती च या दुःखात् दुःखहेतोर्वा समुद्धरणकामता नाम या करुणा तदात्मिका कृपा चेति तथा । **संजाता** [6]**महाकृपा** यस्य स तथोक्तः ।

किं कर्तुं स तथाविध इत्याकांक्षायामाह–**त्रातुम्** [ १. ५. ] इति ।

किं त्रातुमित्यपेक्षायां त्राणक्रियाकर्म **जनम्** [ १. ५. ] आह।

तं विशेषयन्नाह—**समग्रम्** [ १. ५. ] परिपूर्णं सकलमिति यावत्।

पुनरपि विशिनष्टि **व्यसनिनम्** [ १. ५. ] इति। व्यसनं दुःखम्, तद्वन्तम्। नित्ययोगे चायमिनिर्द्रष्टव्यः। कृपाशब्दप्रत्यासत्तेः [7]सामर्थ्यात् दुःखात् दुःखहेतोर्वा त्रातुमित्यर्थोऽवतिष्ठते। अविवक्षितापादनाद्वा अनपादानत्वम्।

दुःखाद् दुःखहेतोश्च सर्वसत्त्वा मया मोचयितव्या इत्याशयसंपद्योगिन्यवस्था आशयावस्थेत्युच्यते।

**हेतुः** [ १. ६. ] निमित्तम्, सार्वज्ञपदस्येति वक्ष्यमाणस्वार्थप्रकर्षप्राप्तिसामर्थ्यादवसेयम्। चितिक्रियाभिसम्बन्धाद् द्वितीया।

कीदृशमि[8]त्याशङ्कायां तद्विशेषणमुक्तं **पुण्ये**त्यादि पश्चाद्योज्यम्। **पुण्यज्ञानमयं** [ १. ६. ] पुण्यज्ञानस्वभावम्।

अन्यथा विशिनष्टि **विपुलं** [ १. ६. ] विस्तीर्णं महान्तं यावत्। पुण्यज्ञानसंभारावेव हि सार्वज्ञं पदमावहतः।

पुण्यज्ञानसंभारोपार्जनमेव सत्त्वोद्धरणाय प्रयोगः। तेन तत्पदप्राप्त्यैव सत्त्वोद्धरणसंभवात्। अन्यथा तत्पदाभावात्। [ 2a ] [1]एवंविधप्रयोगसम्पद्योगिन्येवावस्था प्रयोगावस्थेत्युच्यते।

अयं प्रयोगः प्राचीनश्चाशयो द्वावेतौ पारंपर्येण परमपदप्राप्तेः कारणमिति तत्पदप्राप्तिहेतुत्वमात्रविवक्षया, अवस्थामात्रविवक्षया च हेत्ववस्था भगवतो व्यपदिश्यते। भेदविवक्षया पुनराशयप्रयोगावस्थेति।

**प्रचित्य** [ १. ६. ] उपचित्य राशीकृत्येति यावत्। तथा[2]भूताद्रिसमाश्रितौ समाश्रयणापेक्षायां पौर्वकालिकः प्रत्ययः।

किमेवंकारं चकारेत्याह – **कृत्स्ने**[ १. ७. ]त्यादि। यच्छब्दोऽत्रापि सम्बध्यते। उत्तरत्रापि अभिसम्भन्त्स्यते। किंभूतः सन् यस्तमाश्रित इत्याह – **विधूते**[१. ६.]ति। सर्वथा निरस्तः सादरनिरन्तरचिरकालाभ्यासाऽऽयासो येन स तथा। मतद्वयाश्रयणेन[3] सदाव्यापनेन इच्छाधीनत्वात् योग्यतया वा व्यापनेन उपयुक्तकार्त्स्न्ये कृत्स्नशब्दप्रयोगात् सोपायहेयोपादेयात्मक**कृत्स्नज्ञेयविसर्पिणी** चासावावरणादिलक्षणस्य मलस्यातिशयेन प्रहाणा**न्निर्मलप्रज्ञा** चेति तथा। सैव परार्थोदयस्थानत्वा**दुदया**द्रिरिव तथा। तं **श्रितः** [ १. ७. ] प्राप्तः तद्योगी [4]जात इति यावत्। इदमेव च सर्वज्ञस्य पदं परमपुरुषार्थफलम्। एवंलक्षणफलसंपद्योगिन्यवस्था फलावस्थेत्युच्यते।

हृदि भवं **हार्दम्** [१. ८.] सदसत्पथविवेकविबन्धकत्वात् तम इव **तमः** [१. ८.] अज्ञानम् कयाचिद्व्यपेक्षया तु हृदो मनसो भेदविवक्षायां तदुभयत्वमुक्तम्। लोकोक्त्यपे[5]क्षया वा। **तदपहन्ति** विध्वंसयति धर्मदेशनाद्वारेण अन्यथा चेति तथा।

**जिनो** मारजयनाद् बुद्धो भगवान्। क्व हार्दतमोपह इति अपेक्षायामाह – **लोके** [१. ८.] इति। लोकविषयं यच्चैतत्सं तमस्तस्य हन्ता। लोकस्यैव तथाभूततमसोऽपहन्तेति यावत् लुप्य(क्य)त इति लोकः। हार्दतमः[6]शब्दप्रत्यासत्तेः प्राणी ज्ञातव्यः। एवंकारिण्येवावस्था सत्त्वोपकारावस्थेत्युच्यते।

स एव व्यसनिजनत्राणनिमित्तकृपाधारणसाधर्म्यात्। रवेरपि तदागमे तथार्थोपवर्णनात्। तदा तु व्यसनं रोगो ज्ञातव्यम्। उदयाद्रिसमाश्रयणसाम्याल्लोके तमोपहत्वसाधर्म्याच्च। तदा [7]तत्तमोऽन्धकारं द्रष्टव्यम्। रविरिव **रविः**। रूपकालङ्कारश्चात्र काव्यगुणो दर्शितः।

**मूर्ध्ना नमस्यामि** [१. ८.] इति शिरः प्रणमयत एवंविधं वचनमवसेयम्। तेन कायिको नमस्कारो दर्शितः स्यान्नान्यथा। शब्दानुपूर्वीविशेषोच्चारणेन तु वाचिको दर्शितः। कायव्यापारव्याहारयोश्च तदुत्थापकमनःपूर्वकत्वात् [8]मानसिकोऽपि इति सर्वमवदातम्।

सोपायस्वार्थसम्पदाख्यानद्वारेणेयं नमस्क्रिया इति तत्त्वाव्याख्यानमुद्घृष्टं नातिश्लिष्टश्चेति नोद्घाटितम्।

अथवा अन्यथा व्याख्यायते। परार्थः खल्वयं टीकालक्षणो ग्रन्थोऽभिप्रेतः। परश्च विषयदोषाशङ्कायां श्रवणाय नावधत्ते। ततश्चानवधानं विषयदोषाशङ्क[2 b.][1]या व्याप्तं तद्विरुद्धोपदर्शनेन अनवधाननिषेधार्थं व्यापकविरुद्धविषयविशुद्धिमुपदिदर्शयिषुराह – **य** [१. ५.] इत्यादि।

टीकाविषयोश्चा(°षयश्चा)चार्यधर्मकीर्तिग्रन्थः। तद्विशुद्धिश्च प्रवचनविशुद्ध्या, प्रवचनार्थसमर्थनपरतया आचार्यशास्त्रस्य तदेकविषयत्वात्। ततश्चाचार्यशास्त्रविशुद्धिनिबन्धनप्रवचनविशुद्धिं बोधयितुं भगवतो गुणोदि[2]तत्त्वनिर्दोषते नमस्कारापदेशेन दर्शयति। उपायोपदर्शनपूर्वकतथाभूतप्रज्ञोदयाद्रिसमाश्रयणाभिधानेन भगवतः सर्वाज्ञानविगमो दर्शितः।

सर्वाज्ञानवैधुर्याद् अस्तु निर्दोषः, स तु स्वार्थप्रकर्षप्राप्तः कस्मात् परस्मै सोपायहेयोपादेयतत्त्वमुपदिशति येन तस्य तथाभूतं प्रवचनं सम्भवेदित्यपेक्षायां – **यः संजाते**[१. ५.]त्यादिना महाकरुणया योगमुपदर्शयति। ततो महाकल्या[3]णात् समीचीनमुपदिशति प्रज्ञाप्रकर्षयोगाच्च भूतं समाधा(संसाध)नमिति प्रकाशिनम्। तेनानुपदेशोऽन्यथोपदेशश्च व्युदस्तः। यदाह—

"दयया श्रेय आचष्टे ज्ञानाद् भूतं ससाधनम्" [प्रमाणवा० १.२८४] इति।

तथा—

"वैफल्याद्वक्ति [4]नानृतम्"

इति । अत एवाविपरीतज्ञेयाद्युपदेशद्वारेण **हार्दतमोपहः** [ १. ८. ] संवृत्तः इत्यर्थादेव वचनं विशुद्धं दर्शितम् । तद्विषयतया चाचार्यग्रन्थविशुद्धिः । तद्विषयतया च टीकाविशुद्धिश्च सामर्थ्यादाख्याता भवति । शेषं समानं पूर्वेणेति ।

भवतु भगवतो निर्दोषतया प्रवचनविशुद्धिः । तथाप्याचार्यस्य[5] वाङ्मनसो(सयो)र्वैगुण्यसम्भवेन तच्छास्त्रं न विशोत्स्यति इत्याशङ्कयाचार्यस्यापि जगदतिशायिप्रज्ञायोगप्रदर्शनेन वाङ्मनसो(सयो)र्वैगुण्याभावो **न्यायमार्गे**[ १.१३. ]त्यादिना दर्शयिष्यते । वाङ्मनसो(सयो)र्वैगुण्यं हि जाड्ये सति भवत्तेन व्याप्तम् । तद्विरुद्धं चात्यन्तप्रकृष्टबुद्धित्वं । तस्मिन् सति कथं भवेदित्यभिप्रायात् ।

[6]आचार्यग्रन्थविशुद्धावपि तवैव वाङ्मनसयोर्वैगुण्यात् टीका अवदाता न भविष्यति इति चाशङ्क्य औद्धत्यपरिहारापदेशेन आचार्यवचनापेक्षया आत्मनो जडत्वमभ्युपेत्य वैदग्ध्यपरया वचनभङ्गया **तथापि** [ १.१५. ] इत्यादिना स्ववाङ्मनसो(सयो)र्वैगुण्यवैकल्यमपि प्रकाशयिष्यते

आदौ कस्य[7]चित्पार्श्वस्थस्य अश्रुतैतत्पूर्वपक्षवादिवचनस्य तत्रानादृतस्य वा व्याख्यातग्रन्थव्याख्यानेन चर्वितचर्वणमनुतिष्ठता त्वया [कथं] तत्त्वातिशयप्रकाशनलक्षणं माधुर्यमनन्तस्तृप्तिकरमासादयितव्यः( व्यम् ) तत्किमेवमाचरितमिति त्वरयाऽभिप्रायं स्वयमुद्घाटितं विघटयितुमाह — **वरं हि** [ १.१०. ] इत्यादि ।—

त्वरायोगिनोऽस्य पूर्वपक्षं क्षे[8]पयित्वा तु ते एवाशङ्के निराकुर्वन्नाह — **न्यायमार्गे**[ १.१३. ]त्यादि ।

पूर्वव्याख्याने तु वरम् अव्याख्यातेऽन्यत्र क्लेशः क्रियतां यत्र रसविशेषास्वादः सम्भवी, न पुनरत्र तदसम्भवादिति आशङ्कायामिदं योज्यम् । उत्तराभ्यां तु श्लोकाभ्यां स्वकीयौद्धत्यपरिहारः केवलः कृत इति ।

धर्मकीर्तेरिमानि वचनानि तेषु । आकृष्टरसं हि र[ 3a ][1]सनीयं **चर्वित**मुच्यते । अमीषामपि बहुभिर्व्याख्यातत्वेन आकृष्टरसत्वात् चर्वितमिव **चर्वितेषु चर्वणं** [ १.१०.] रसास्वादार्थो व्यापारविशेषः । अचर्वितचर्वणरूपादव्याख्यातान्यग्रन्थव्याख्यानादिति प्रकरणलभ्यमवधिमभिसम्बन्धाय( सन्धाय ) किञ्चिदिष्टौ — **वरम्** [ १.१०. ] इत्यव्ययमाह ।

"वरमद्य कपोतः श्वो मयूरात्", "मृताद्वरं दुर्बलते"त्यादि यावत्। न पुनरच[2]र्वितान्यग्रन्थचर्वणमिति बुद्धिस्थीकृतवर्जनीयाङ्गम् एव चैवमाह। सामर्थ्यगम्यत्वाच्च वर्जनीयत्वेनाभिमतं नावादीत्। '**अपि**'न्यायतः सम्भावनामाह।

अन्ये पुनरनिपातमेव श्रेष्ठवचनं चर्वणसमानाधिकरणं **वर**शब्दं वर्णयन्ति। न केवलमचर्वितेष्विति **चापि**शब्दं व्याचक्षते। महतोऽपि महीयांसमाचार्यम्। विदुषश्चा[3]स्य सर्वथैवाभिधानं द्रष्टव्यम्।

ननु च व्याख्यातत्वादान्तरतया निष्पीडितस्य मनागपि माधुर्याभावादेव तदप्राप्तौ कथं **वरम्** इत्यभिधीयत इति आशङ्क्य प्रतिवस्तूपमालङ्कारेण प्रतिवचनमाह **निष्पीडितापि** [१.११.] इति। **मृद्वीका** द्राक्षाफलम्। **किम:** क्षेपे प्रयोगात् नैव **जहाती**त्यर्थः। अनया वचनव्यक्त्या [4]असूयामपि। गम्भीराणामाचार्यगिरां नूनं न सर्वमर्थजातं यथावत् पूर्वे व्याचख्युरतस्तथाविधरसास्वादस्तेन भविष्यतीति नितरां वाच्यमिति सूचयति। पूर्वपक्षनिषेधाभिप्राये **हि:**[१.१०]यस्मादर्थे, व्यक्तमित्यस्मिन्नर्थे वा।

**न्यायमार्गः** [१.१३.] युक्तिमार्गः एव **तुले**त्यन्तर्नीतनियमः समासः। **एकत्र** [१.१३.] इत्ययं शब्दः का[5]काक्षिवदुभयोरपि पार्श्वयोर्व्याप्रियते। तेनायमर्थः **जगत्** कर्मभूतम् **एकत्र** एकस्मिंस्तुलान्तर्वर्तमानम् **एकत्रावस्थिता यस्य मतिर्जयेद्** अधरीकुर्यात्। **जयेद्** इति सम्भावनापदमेतत्। यन्मतेर्जगदभिभवनं सम्भाव्यते इत्यर्थः। शक्यार्थे वा। जगज्जेतुं शक्तेति यावत्।

**तस्य** [१.१४.] एवंमतेः **गिर:** [१.१४.] वाच[6]। **परोक्षार्थे**त्याद्यात्मिकाः। **कृ**ति वदन्स्वव्याख्येयतया तान् संभावयति। दुरवगाहतया **गम्भीरा:** [१.१४.]। अत एव **कृ**त्याह।

**अहं जडधी: क्व चे**त्यनेन तदव्याख्यातृत्वेनात्मानमसंभावयन्दूरीकरोति।

**तथापि** [१.१५.] इत्यनेन निपातसमुदायेन प्रकृतं प्रतिसमाधत्ते। '**यानुद्दिश्य** [१.१६.]यानधिकृत्य [7]यदर्थमिति यावत्। **मयापि**[१.१६.]एवंविधेनापि मया। वक्रोक्तिपक्षे त्वाचार्यं प्रति जडधीरिति ब्रुवता लोकं प्रति विपर्ययोऽन्तर्निहितः।

**मन्दमतयः सन्ति मत्तोपि केचन** [१.१५.]इति विदर्भवचनेन दुर्जनमनन्योपकरेण—यदि दुर्जनो मयि नाहत्य यदा चरति तदा बहुभिरेवाचार्याभिप्रायो न सम्यग्ज्ञायीति बहुजनोद्देशेनैव [8]मयैतद्विभज्यते। अन्यथा तु सोपि जनः पर्यादपव्याख्यानप्रन्यादा

१. टिवेटनभाषान्तरमाश्रित्य 'तेषां कृते' इत्येवंरूपः पाठोऽस्माभिः कल्पितः मुद्रितश्च। किन्तु इमां टीकामाश्रित्य तत्रत्यमूलपाठः 'यानुद्दिश्य' इत्येवं द्रष्टव्यः।

चार्यग्रन्थार्थं ज्ञास्यति। न ह्यज्ञो ज्ञकृतादेव किञ्चिदवगच्छति, नान्यत इति नियमः। ततः कथमहमस्मिन्निष्फले महीयसि प्रयासे प्रवर्तेयेति दर्शयति। पूर्वव्याख्याने पुनरौद्धत्यपरिहारमात्रपरं विवक्षितमेतन्नैतत्पर्यवसानव्यापारमिति [3b][1]सर्वमनवद्यम्।

अवच्छेद्यावच्छेदकभावेनावस्थितौ विशिष्टौ वाच्यवाचकराशी **प्रकरणम्** [ १.१८.] तस्यारम्भ [ १.१८.] आरभ्यत इति कृत्वा। सामर्थ्यात्तदादिस्तत्र **प्रयोजनं** [ १.१८. ] फलं प्रकरणस्येत्यर्थात्। इदं च शाब्दीज्ञतिमाश्रित्योक्तं द्रष्टव्यम्। आर्थेन तु न्यायेन प्रकरणाभिधेयस्यानुमानस्य प्रयोजनं परोक्षार्थप्रतिपत्तिरूपं व्याख्यार्थतया ज्ञातव्यम्। [2]तथा ह्यनुमानव्युत्पादनमेवानेन कस्मात्क्रियते ? यस्मात् परोक्षार्थप्रतीतिस्तदाश्रया। अतस्तत्परं वदन्वाक्यमिति सैव वाक्यार्थः। एतच्च “ **परोक्षार्थप्रतिपत्तेरनुमानाश्रयत्वात्** ” **इत्यनेन तु** [ २.२३. ]इत्यादिना परस्ताल्लेशतो निर्ने(र्णे)ष्यत इति।

**तत्** [ १.१६. ] प्रयोजनाभिधानम्। **चो** [ १.१६. ] अवधारणे **प्रवृ[त्त्य]र्थ**मित्यस्मात्परो द्रष्टव्यः। **इतिः** [ १.१९.] [3]एवमर्थे। **केचिद्व्याख्यातारो** मन्यन्त इति विशेषः [इति शेषः]त एव तदनुसाहायकमन्यं साक्षिणमुपक्षिपन्त आचक्षते **तदुक्तम्** [ १.२०. ]इत्यादि। **कस्यचिद्** [ १.२१. ]इत्यनेन सर्वं संगृह्णाति अल्पस्येतरस्यापि वेत्यर्थः। अत एव पूर्वस्मादविशेषप्रदर्शनार्थो **वा**[ १.२१. ]शब्दः। **यावत्**[ १.२२.] इत्यव्ययमवधौ। **नोक्तम्** [ १.२२. ] इत्यस्मात्परोऽस्तिर्भवन्तीपरः [4]सामान्यप्राय[:] सिद्धो द्रष्टव्यः। **तावदिति** [P]वेवदवधौ। **तच्छास्त्रं तच्च** कर्म **केन गृह्यताम्** [ १.२२. ] प्रवृत्तिविषयी क्रियताम्।

**किमः** क्षेपे प्रयोगात् न केनचिदित्यर्थः।

**तत्** [ १.२४. ] श्रोतृप्रवृत्त्यर्थं प्रकरणादौ प्रयोजनाभिधानम् **अयुक्तम्** [ १.२४. ]।

ननु येनाभिप्रायेण तैस्तत्प्रवृत्त्यर्थमुपवर्ण्यते स एवाभिप्रायो भवता ना[5]बोधि तत् कथमेतत् प्रतिषिध्यत इत्याशङ्क्य **यत** [ १.२४. ] इत्यादिना तदभिप्रायमुद्भिनत्ति। **इतिना** [ १.२४. ] वचनस्याकारमाह। तं **प्रति प्रकरणस्योपायतां निश्चित्य प्रवृत्तिः स्याद्यथा** स्यादिति प्रकरणात्।

किमुपायनिश्चयेन तेषामित्याह—**अनुपाय** [ १.२५. ] इति।

**प्रेक्षावताम्**[ २.१. ]इति काकाक्षिन्यायेन द्वयोरपि पार्श्वयो[6]रभिसम्बध्यते।

उपायनिश्चयेपि कस्मात् प्रवृत्तिरित्याह—**तदर्थितया** [ २.१. ] तस्य फलस्याभिलाषेण। क्व प्रवृत्तिरित्याह—**प्रकरणस्य श्रवणं** [ २.१. ] **आदि**ग्रहणात् चिन्तादेः

संग्रहस्तत्र। **इति** [ २.२ ] हेतौ। **तदभिधानस्य** [ २.२ ] तस्य प्रयोजनस्योक्तेः। **अर्थवत्ता** [ २.२ ] सफलत्वम् **वर्ण्यते** [ २.२ ] तैरिति प्रकरणात्।

यदि सोपपत्ति[7]कमेतत्तैस्तथोपवर्णितं तर्हि सुन्दरमेवेत्याह– **न चैतदिति** [ २.२ ]। **च**ोऽवधारणे। **एतद्** अनन्तरोपनीतोपपत्तिगर्भितं तदभिधानं **न** युक्त्या सङ्गतम्।

**तदुपाये** [ २.३ ] तस्य प्रयोजनस्योपाये। **तद्भावः** [२.३] तदुपायत्वम्। तस्य **निश्चयात्** [ २.३ ]। **सस्याद्युपाये बीजादौ** [२.४] प्रवृत्तिः।

**अवधृते**[ १.४ ]त्यत्रान्तर्भूतो णिजर्थो द्रष्टव्यः। तेन **अवधृतः** अवधारितो **बी[8]जादिभावो** यैस्तेषाम्। कर्षका अपि बीजादिविषये बुद्धिपूर्वकारिण इति प्रेक्षावत्त्वपुरस्कारेणोदाहरणम्।

ननु यथेपेयार्थिनामुपायानिश्चयेन प्रवृत्तौ प्रेक्षावत्त्वे क्षतिस्तथोपेयानिश्चयेपि प्रवृत्तौ किं न तत्क्षतिरित्याह **उपेये तु** [ २.६ ] इति। **तुः** पूर्वस्मादस्य भेदं दर्शयति। [9]**भाविनि** [ १.६ ] इति हेतुभावेन विशेषणम्। **अनिश्चयेपि** [ २.७ ] इत्युपे[4a][1]यस्येति प्रकरणात्।

**इतिः** [ २.८ ] सम्भावनाया आकारं दर्शयति। एतदुक्तं भवति–शक्यनिश्चयमनिश्चित्य प्रवर्तमानाः स्वकर्तव्याकरणादुपालभ्याः, न त्वशक्या( क्य )निश्चयमिति।

यद्येवं प्रकरणस्यापि प्रयोजनविशेषं प्रत्युपायभावं निश्चित्य तदार्थितया प्रवर्तिष्यन्त इति आह–**निश्चयश्च** [ २.१० ] इति। **च**ोऽवधारणे।

कस्मान्नास्ति इत्याह–**शब्दानाम्** [ २.११ ] इति।

न[2]नु च वाच्यवाचकभावलक्षणप्रतिबन्धसद्भावात् प्रतिबन्धाभावोऽसिद्धः। तथाहि–यदि शब्दस्य वाचकशक्तिरर्थस्य च वाच्यशक्तिर्वस्तुसती न स्यात् तदा पौरुषेयी स्यात्। पुरुषाधीनत्वे च शक्तेः–योऽयं 'शब्द एव वाचकोऽर्थस्य, अर्थ एव वाच्यः, न त्वर्थः शब्दस्य वाचकः' इति दृष्टो नियमः, स न स्यात्। पुरुषेच्छाया अव्याह[3]तप्रसरत्वात्। न च नियमविलोपोऽस्ति। न हीच्छन्नपि समयकारः पुरुषोऽर्थे वाचकशक्तिम्, शब्दे च वाच्यशक्तिमर्पयितुं पारयति। तस्माद्यथा घट-प्रदीपयोः प्रकाश्यप्रकाशकशक्तिर्वैपरीत्यमननुभवन्ती नियमवती वास्तवी तथा शब्दार्थयोरपि वाच्यवाचकशक्तिर्नियमवती वास्तव्येवेति।

---

१. हेतुबिन्दुटीकायाः प्रतेरत्र त्रुटितत्वात् 'भाविनि' इति पदं पूरयित्वा न मुद्रितं निर्दिष्टपृष्ठे, तथापि ' उपेये तु ' इत्यनन्तरं तत्पदं तत्र स्थाप्यमेव आलोकानुरोधेन।

अत्रोच्य[4]ते । यद्यर्थशब्दमात्रापेक्षया नियमः प्रतिपाद्यते तदाऽसावसिद्धः । तथाहि– सङ्केतवशात् तृणजूटादिरर्थो यथाऽर्थान्तरस्य ममत्वक्रियाविशेषविघातादिलक्षणस्य प्रकाशको वाचकस्तथा समयसामर्थ्यादेवार्थः शब्दस्यापि वाचको भवत्येव । तद्यथा भूतहस्तलक्षणायां कलायां [5]कनिष्ठाद्या अङ्गुल्यः ककारादीनां तत्पर्वरेखाश्चाकारादीनाम् । न च शब्दस्यापि अर्थप्रकाशनाद् अर्थप्रतीतिजननादन्यद्वाचकत्वं नाम ।

अथ घटार्थो घटशब्दस्य वाचको न भवतीत्युच्यते । हन्त ! तस्यापि सङ्केतवशात्तथाभावः केन निवार्यते ? । 'यदाऽहं युष्मभ्यं घटम[6]र्थं दर्शयामि तदा घटश दमुच्चारयितव्यम्, अन्यथा वा ज्ञास्यथेति'–तदा किं तस्य तथात्वं न भवति ? । यदि सत्यवादी भवान् नैवं वक्तुमर्हतीति यत्किञ्चिदेतत् । तस्मात् सिद्धः प्रतिबन्धाभावः ।

ननु शब्दस्य तावद्वक्तुकामतायां अस्ति प्रतिबन्धः । सा च यथावस्त्वेव वर्तत इति प्रणालिकया बाह्ये प्रति[7]बन्धात् शब्दस्य प्रामाण्यं कोऽपहस्तयेदित्याशङ्क्याह–**विवक्षायाम्** [ २.११ ] इति ।

**अपिः** [ २.१२ ] विशेषविवक्षाया अभ्युपगमे । वस्त्वनतिक्रमेणापि क्वचिद्भवतीति **नियम**ग्रहणम् । **ततः** [ २.१२ ] इति विवक्षायां प्रमाणात् शब्दात् ।

स्यादेतत्–ये यमर्थं यथा विवक्षया विषयीकुर्वन्ति वक्तारस्ते तथैव तमर्थमनुतिष्ठन्ति इत्यत्राप्येवं विवक्षितुरेवमेवानुष्ठानं[8] भविष्यतीति निश्चये कुतो निश्चयाभावः इत्याशङ्क्याह–**न हि** [ २.१३ ] इति । **हिः** यस्मात् ।

कथं तथानुष्ठाननियमाभाव इत्याह–**विसंवादे**[२.१४]ति ।

' सरितस्तीरे शर्कराशकटं पर्यस्तमास्ते । तदाऽऽगच्छत भो गच्छामः ' इत्यभिधायाप्यन्यथा प्रवृत्तिदर्शनात् **लोके** [ २.१५ ] व्यवहर्तरि जने । सर्वग्रन्थकारवचनेऽपि **अनाश्वासात्** [ २.१६ ] आस्थाया अभावात् ।

प्रयोजना[4b][1]भिधानात् प्रकरणस्य तदुपायभावविषयोऽर्थसन्देहः प्रवृत्त्यङ्गमुपजायते । ततश्च प्रकरणे प्रवृत्तिरर्थिनामिति प्रकरणस्य प्रयोजनविशेषं प्रत्युपायत्वसंशयं प्रवृत्त्यङ्गं कर्तुम् आदिवाक्यमुक्तमिति मतं पश्चात् धर्मोत्तरादिनाप्यर्थात् दर्शितं येषाम्, तान् कटाक्षयन्नाह–**प्रयोजने**[ २.१७ ]त्यादि ।

**प्रकरणस्य** [ २.१७ ] इति प्रथमतो योज्य[2]म् । **तस्य तस्मिन्** वा **उपाय**स्तद्भावस्तत्ता सैव [1]**विषयो** यस्य स तथा ।

---

१. अस्माभिः 'तदुपायताविषये' इति पाठः कल्पयित्वा मुद्रितः किन्तु आलोकमाश्रित्य 'त दुपायताविषयः' इति पाठः कल्पनीयः ।

कस्य तदुपायतेत्येकदेशाकाङ्क्षायां तु **प्रकरणस्य** [ २.१७ ] इति श्रुतत्वाद् द्रष्टव्यम् ।

**जन्यते** [२.१८] जायते । अत एव "जनिः कर्तुः प्रकृतिः" [पा. १.३.२६ ] इत्यनेन लब्धापादानसंज्ञकात् पूर्वं पञ्चमी ।

**ततः** [ २.१८ ] सन्देहोदयात् । **तद्भावनिर्धारणाय** [ २.१८ ] तदुपायनिश्चयार्थम् । **कृषीवलो** [ २.१८ ] हालिकः । **आदि**[ २.१८ ]शब्दात् [3]तदितरः। अङ्कुरादिजननयोग्यं **बीजं,** तद्विपरीतम**बीजम्**[1] । **तदवधृतये** [ २.१८ ] तन्नियमार्थम् ।

**चेत्** [ २.१९ ] इति पराभ्युपगमे सर्वत्र । **न** [२.१९] इति युक्तत्वेनाभिमतां प्रवृत्तिं प्रतिषेधयति । हेतुमाह–**प्रयोजने**[२.१९]ति ।

असति वचने कथं सम्भव इत्याह–**तत्साधके**[१.२०]ति । **तस्य** [२.२१] संशयस्य ।

' अनुमानव्युत्पत्तिः प्रयोजनमस्य ' इत्य[4]नभिधाने विशिष्टं प्रयोजनं प्रति प्रकरणस्योपायत्वं कथमिह सन्दिग्धे विदग्ध इत्याशङ्क्याह–**अनुमाने**[२.२१]ति ।

**दर्शनात्** [२.२२] इत्युपलम्भात् । सामर्थ्यात् तेषां श्रवणादित्यर्थोऽवसातव्यः । अयमत्र भट्टार्चटस्याभिप्रायः—यद्व्युत्पत्त्या योऽर्थी श्रुततदुपायग्रन्थसम्भवश्च स कस्यचिद्ग्रन्थस्य दर्शनात् तस्य चार्थित्व[5]विषयोपायभावं प्रति साधकबाधकप्रमाणाप्रतिसंवेदी तथाविधवचनमन्तरेणापि अर्थित्वमात्रचोदितोऽर्थित्वविषयोपायभावं संशयानो जिज्ञासादित एवान्यत्र आदिवाक्यवियुक्त इव ग्रन्थे प्रवर्तिष्यति(ते)–तत्पाठश्रवणादिलक्षणां प्रवृत्तिमाचरिष्यति । अन्यथा आदिवाक्यविकले भूयसि शास्त्रे प्रवृ[6]त्तिर्न स्यात् । तत्र च यदेव प्रवृत्तिनिबन्धनं तदत्रापि भविष्यति ।

नापि आदिवाक्ये सत्यप्याश्वासो युज्यते, अन्यत्प्रतिज्ञातवतामपि अन्यव्युत्पादनदर्शनात् । यथातः (यथा–" अथातः ) धर्मं व्याख्यास्यामः " [ वैशे० १.१.१ ] इति प्रतिज्ञाय षट्पदार्थीप्रतिपादनं कणादस्य ।

ततो निष्फलैवादिवाक्यक्रिया स्याद् यदि तद्विषय[7]संशयोत्पादनेन प्रवृत्त्यर्थं तदुपवर्ण्यते । अन्यथा त्वादिवाक्येऽपि कथमिव प्रवर्तेत श्रोतेति ? ।

---

१ अत्रालोकसम्मतः टीकापाठः ' बीजाबीजावधृतये ' न तु यथा मुद्रिते लभ्यते ' बीजाद्यवधृतये ' इति ।

अनयैव चर्चद्वारा धर्मोत्तरादिमतेपि प्रत्यवस्थेयम् । तथाहि—'यद्यर्थसंशयं प्रकरणे प्रवृत्त्यङ्गं कर्तुमभिधेयादीनि अभिधीयन्त आदिवाक्येन, तत्करणादेव च तत्फलमुपवर्ण्यते, तर्हि तत्रैवादिवाक्ये कथं प्रवृत्तिः[8] श्रोतृणामसति तस्यादिवाक्यस्याभिधेयाद्यभिधायके वाक्यान्तरे' इति पृष्टो धर्मोत्तरादिराचष्टां तावत् ।

का प्रवृत्तिरादिवाक्य इति चेत्; तस्य पठनं श्रवणमर्थावगाहनम् । अन्यथा प्रकरणेपि का प्रवृत्तिरिति तुल्यचोद्यम् । व्याख्यातृवचनात्तत्र प्रवृत्तौ प्रकरणेऽपि का क्षतिः ? । तद्वचनं क्रीडाद्यर्थमन्यथाऽपि [5a][1]संभाव्यत इति चेत्; समानमिदमन्यत्रापि । जिज्ञासया प्रवृत्तौ चादिवाक्यं वैयर्थ्यमश्नुवीत । आदिवाक्यविकलशास्त्रप्रवृत्त्यैव च प्रयासाल्पीयस्त्वात् । तत्र तदन्तरेणापि प्रवृत्तिर्नान्यत्रेति प्रतिवचनं प्रतिक्षिप्तम् । तस्माद्दूरमपि गत्वा तेनेदमभिधानीयं यदेवास्मदभिमतमिति किमतिनिर्बन्धेन [कृ]तं बहुतिथेन दोषेण ।

संशयस्य [2]स्वरूपमुपदर्शयन्नाह—**किमस्य** [२.२२] इति । **न वा किञ्चिदि-**[२.२२]त्यनेन निश्चयेनान्यानुसरणबीजं दर्शितम् ।

संप्रति प्रयोजनविशेषं प्रति प्रकरणस्योपायभावसंशयं तदभिधानात् प्राङ् न्यायप्राप्तं प्रदर्श्य प्रयोजनमात्रापेक्षयापि तस्योपायत्वसन्देहस्तदभिधानस्य पुरस्तात् सम्भवी ततोऽपि प्रकरणे प्रवृत्तिरव्याहतेति दर्शयन् [3]तत्रैवाभ्युच्चये हेतुमाह—**अपि च** [२.२३] इति ।

एवं **जिज्ञासोः** [२.२५] इत्येतज्जिज्ञासात इत्यर्थात् ।

प्रवृत्त्युपयोगिप्रयोजनशून्यं **निष्प्रयोजनम्** [२.२४] तद्विपरीतं **प्रयोजनवत्** [२.२४]। **उत** [२.२४] इति पक्षान्तरावद्योतने। अनेन प्रेक्षापूर्वकारि[त्व]प्रयुक्तत्वजि-(प्रयुक्तजि)ज्ञासा दर्शिता । सप्रयोजनत्वानुसरणे कदाचिदस्मदभिमतमपि प्रयोज[4]नं सम्भाव्यत इति भावः । अत एव व्यनक्ति—**अस्मदभिमतेन वा** [२.२४] इति । **इतिना** [२.२५] जिज्ञासायाः स्वरूपं दर्शितम् ।

**व्यर्थः** [२.२५] निष्फलः **प्रयोजन**प्रतिपादको **वाक्यस्य** प्रस्तावादादिवाक्यस्यो**पन्यासः** [२.२६] प्रदर्शनम् ।

यद्येवमर्थो वाक्योपन्यासो व्यर्थस्तर्हि किमर्थं वार्तिककारेणाकारीत्याशङ्क्य **तस्माद्** [२.२७] इत्या[5]दिनोपसंहारव्याजेन फलमस्य दर्शयति । यस्मादेवमर्थः सम्बद्धः तस्माद्धेतोः ।

**कर्तुं प्रतिपादयितुं वा नारभ्यते** [२.२८] नानुष्ठीयत इति यथासंख्यं सम्बन्धः । तयोः साध्ययोः यथासंख्यमेवोदाहरणे प्राह ।

**इति:** [३.२] प्रतिषेध्यस्य तत्करणप्रतिपादनानुष्ठानलक्षणस्य व्यापकस्यानुप[6]लब्धे-राकारं कथयति। तया **प्रत्यवतिष्ठमानस्य** [३.२] प्रत्यवस्थानं कुर्वतः। तस्या **असिद्धता,** तस्या **उद्भावनं** प्रदर्शनं तदे**वार्थ:** प्रयोजनम्, तद्यथा भवतीत्युपन्यसन-क्रियाया विशेषणमेतत्।

आदीयते अस्मादिति **आदि:** [३.३] तत्र। अस्मात् खलु अर्था आदाय आदाय व्याख्यायन्त इति।

स्यादेतत्—वचन[7]स्यास्य बहिरर्थे प्रामाण्याभावात् कथमसौ तद्वचनात् तदसिद्धतां बुध्यते ?। यदि परस्मादस्य तद्विषयोऽर्थसंशयः प्रवृत्त्यङ्गं जायत इति तदेव मतमायात-मिति किमनेन मर्सीम्रक्षितकुक्कटन्यायेनाचरितेनेति।

अत्राचष्टे—केवलं यः प्रतिपत्ता सति प्रयोजनादौ प्रेक्षापूर्वकारिणं कर्तारं [8]नियमेन आदौ तद्वादिनं मन्वानः तदर्थं वचनमस्याप्यपश्यन्नप्रेक्षावत्प्रयुक्तत्वगर्भप्रयोजना-दिकमत्रापि जानीते, तं प्रतिपत्तृविशेषं प्रतीदमकृतादिवाक्यं वार्तिककृदिति। अन्यथा कथमसौ निष्प्रयोजनं चेदि(दमि)त्यादि निःसन्दिग्धमभिदध्यात्।

आद्यस्य तूक्तया नीत्या प्रवृत्तिरव्याहतेति सर्वमवदातम्।

अत्र[1] [5 b.] भट्टार्चटमते सर्वैरेव धर्मोत्तरादिमतानुसारिभिः पराक्रम्यते। इत्थमस्मा-भिरिदं गमितम्। एतच्च साध्वसाधु वा मध्यस्थया धिया सद्भिरेव विज्ञास्यत इति।

पूर्वं सामान्येन प्रयोजनाभिधानमाख्यातमिदानीं विशेषेणावच्छिन्दन्नाह **तत्रेति** [ ३.५ ] वाक्योपन्यासे। एतद् अर्थात्मनोपि संभवात् प्रकरणात्मन इत्याह। तदुक्तं काव्याल[2]ङ्कारे "शब्दार्थौ सहितौ काव्यम्"[काव्या. १.१६] इति।

कथं पुनर्व्युत्पादनं "**परोक्षार्थे**"त्यादिशब्दरूपस्य प्रकरणस्य प्रयोजनमित्याशंक्य सर्वशब्दसाधारणप्रयोजनोपन्यासपूर्वकमस्य तद्योगं दर्शयितुं **यथास्वम्** [ ३.६ ] इत्यादिनोपक्रमते। यस्य यदात्मीयमित्यस्यार्थः। **वाक्यस्य** [ ३.६ ] एकस्मिन्नर्थे प्राधान्येन प्रतिपाद्येऽर्थद्वारेणान्योन्या[3]पेक्षिण उपकार्योपकारकभावेनावस्थितस्य पदसमूहस्य। **हि:** [ ३.६ ] यस्मादर्थे।

तदेवात्र नास्तीत्याह **तच्चे**[ ३.७ ]ति। **चो** यस्मादर्थे। **पदानां** [ ३.७ ] सुप्तिङ-न्तानां शब्दानामवान्तरवाक्यान्तर्गतानाम्। **अवान्तरवाक्यानामि**[ ३.७ ]ति हेतुबिन्दुसंज्ञकमहावाक्यापेक्षया तदन्तर्भूतानां वाक्यानाम्। आकांक्षापूरण[1]योग्यं(ग्य)-तत्तदर्थद्वारेण **परस्परं[1] सम्बन्धो**[ ३.७ ]व्यपेक्षा तेन।

१. 'परस्परसंसर्गात्' S [अतः परं सर्वत्र मुद्रितहेतुबिन्दुटीकायाः 'S' इति संज्ञा बोध्या।]

नन्वेतावतापि न ज्ञायते कोत्र समुदायार्थो यस्मिन्प्रतिपाद्ये अमीषां परस्परसम्बन्धेन व्यापार इत्याह **तथाहि** [ ३.८ ] इति । निपातसमुदायश्चायं यस्मादित्यस्मिन्नर्थे सर्वत्र ।

**व्युत्पाद्यते** [ ३.८ ] विप्रतिपत्तिनिराकरणेन प्रतिपाद्यते । [5]**इति:** [ ३.८ ] हेतौ ।

यदि तच्छब्देन तत् परामृष्येत तदा तदभिधेयं व्युत्पाद्यतयोक्तं भवेद् यावता तच्छब्देन तन्न परामृष्टमिति आह–**तस्यैव** [३.९] इति। [1]**च:** यस्मादर्थे। वाक्यभेदश्च द्रष्टव्यः। ततोऽयमर्थः -यस्मात् तच्छब्देन तस्य **सम्बन्धः** स्वीकारः तस्मात् **सम्बन्धात्** [३.९] इति ।

स्यादेतत्–अयं खलु तच्छब्दो अनन्तरप्र[6]कान्तं प्रधानं परामृशन् दृष्टः, अनुमानञ्च सामान्ये(समासार्थे) गुणीभूतम् । तत् कथं तस्य तेन परामर्शः ? इत्याशंक्याह–**यद्यपि** [ ३.९ ] इति । निपातसमुदायश्चायं विशेषार्थाभिधानाभ्युपगमे सर्वत्र। **गुणीभूतम्**[2] [ ३.१० ] उपसर्जनीभूतमप्रधानीभूतमिति यावत् । बहुव्रीहावन्यस्यैव पदार्थस्य प्राधान्यात् ।

**त[7]थापि** [ ३.१० ] इत्यभ्युपगमपूर्वं विशेषोक्तौ । **शब्दस्य वृत्तिः** प्रवृत्तिः–अर्थाभिधानम्, तस्याः ।

**प्रधानस्य संस्पर्शः** स्वीकारः सम्बन्धः इति यावत् । तेन समं तस्य वास्तवसम्बन्धात् तत्परामर्शः स्यादित्याह—**शब्दानाम्** [३.१२] इति । **स्वभावतः** [३.१२] स्वरूपेण सङ्केताव्यवधानेनेत्यर्थः ।

अथवा मस(श)कसंकाशे किं महास्त्राकर्षणप्राये[8]णेति मन्यमानस्तदभिमतं प्राधान्यमेव दर्शयन्नाह–**पक्षे**[३.१३]त्यादि ।

अयमस्याशयः–यद्यपि समासार्थोपसर्जनं प्रत्यवमष्टुमशक्यं तथापि व्युत्पाद्यतया शास्त्रे प्रकृतत्वात् बुद्ध्यन्तरेण गृहीतं स्वतन्त्रं सत्प्रत्यवमृष्यते । यथा 'यद(गृ)हमेतत् तमानय' इति ।

**अविपरीतस्वरूपप्रतिपत्तिः** [३.१४] शिष्यसन्तानवर्त्तिनीति द्रष्टव्यम् । [6a][1]**साध्यत्वाद्**[३.१५] एवेत्यवधारणीयम् ।

---

१. आलोकानुरोधेन ' तस्यैव च तच्छब्देन ' इतिटीकापाठः स्यात् । मुद्रिते तु 'च'वर्जितः पाठोऽस्ति ।

२. टीकायां प्रतेरत्र त्रुटितत्वात् ' गुणभूतम् ' इति कल्पयित्वा स्थापितः पाठः, किन्तु आलोकसम्मतः ' गुणीभूतम् ' इति पाठः ।

यद्येवं तद्व्युत्पत्त्यर्थमिति वक्तव्ये णिचा निर्देशेन किं प्रयोजनमित्याह—**अत एव** [३.१५] इति । यतोऽनुमानव्युत्पत्तिः प्रकरणस्य साध्यत्वादेव प्रयोजनं नान्यथा **अतः** अस्मात् कारणात् प्रकरणस्य व्यापारस्तथार्थाभिधानं **तद्दर्शयितुं**[1] [३.१६] । किंरूपं तद्दर्शयितुमित्याह—**अनुमाने**[३.१५]ति । **अनुमानव्युत्पत्तिः विषयः** साध्यत्वाद्य[2]स्य स तथोक्तस्तं **दर्शयितुं** व्युत्पत्तिविषयं प्रयोजकव्यापारं दर्शयितुमिति यावत् । **निर्दिशति** [३.१६] आचार्य इत्यर्थात् । णिच्निर्देशस्यैवाकारं **इतिः** दर्शयति ।

एवं च व्याचक्षाणः शिष्यस्यानुमानव्युत्पत्तौ प्रकरणस्य हेतुकर्तृतां दर्शयति । शब्दोऽर्थं प्रतिपादयति इति लोकस्य व्यवहारदर्शनात् । सामर्थ्याच्चाचार्यस्यापि तथाभाव-[3]मभिप्रैति । सति चैवं कर्तुः श्रोतुश्च करण-श्रवणप्रयोजनमपि सूचितं भवति ।

अथासति साध्यसाधनसम्बन्धाभिधाने कथं तत्प्रतीतिर्येन तस्य तत्प्रयोजनं सिद्धिमध्यासीतेत्याह—**ततश्च** [३.१७] इति । यतः प्रकरणव्यापारोऽनुमानव्युत्पत्तिविषय उक्तः ततः कारणात् । **चः** [३.१७] अवधारणे **उक्तः** [३.१७] प्रकाशितः[4] । अन्यथा प्रकरणव्यापारस्य तद्विषयत्वायोगादिति भावः ।

ननु च प्रणेतुर्ज्ञानस्थमर्थं प्रतिपादयितुमुच्यते न (मुंच्चरितेन) शब्दात्मना प्रकरणेन तदभिधानं कर्तव्यम् । न हि अन्यथा तमर्थं प्रतिपाद्या(द्याः आ)कृत्या दर्शयितुं शक्यन्ते । तथा चार्थाभिधानमेवात्र प्रयोजकस्य प्रकरणस्य व्यापारः । स च ण्यन्ताभिधेयः[5] । तस्मात् व्युत्पादनं प्रकरणस्याभिधानमेव । ततश्चास्यैवाभिधानार्थमिदमारभ्यत इति प्रसक्तम् । न चैतद्युक्तम् । अनुमानव्युत्पत्त्यर्थं हीदमारभ्यते । न त्वस्यैवाभिधानार्थमिति चोद्यं प्रतिविधातुमभ्युपगच्छन्नाह—**यद्यपि** [३.१८] इति । **शब्दस्य वृत्तम्** वर्तनम् प्रवृत्तिः व्यापार इति यावत् । तेन शाब्देन न्या[6]येन **प्रकरणव्यापारस्य प्राधान्य-मित्यर्थः** ।

एतदुक्तं भवति—शब्दस्य हि व्युत्पत्तिविषयः प्रयोजकव्यापारोऽभिधेयः प्रधानं तेन तादर्थ्यं गम्येतेति ।

यदीदमनुमतमेव तर्हि किमर्थमेवमभिहितमित्याशङ्क्य प्रतिसमाधानमाह—**तथापि** [३.१९] इति । **वस्तुवृत्तेन** [३.१९] वस्तुवृत्त्यपेक्षया आर्थेन न्यायेनेति[7] यावत् ।

---

१. 'प्रतिपादयितुम्' इति कल्पयित्वा पूरितो टीकापाठः । तथापि आलोकानुरोधेन 'दर्शयितुम्' इत्येव सम्यक् ।

वस्तुवृत्त्याऽपि कथं व्युत्पत्तेः प्राधान्यमित्याह **तस्या** [३.१८] इति । अयमाशयः– सर्वो हि प्रयोजकव्यापारः प्रयोज्यक्रियार्थः । उक्तं हि "विक्लेदनोपसर्जना विक्लित्तिः पचेः प्रधानार्थः" इति । तस्माद् व्युत्पादनार्थमिति प्रयोजकव्यापारवद् व्युत्पत्त्यर्थमित्युक्तं भवति । तद्व्युत्पत्त्यर्थमिति तूच्यमाने अन्यैस्तदर्थैर्भोजना[8]दिव(जनाव)स्थानादिभिः प्रयोजकस्तदर्थमात्रव्यापारतया समान उक्तः स्यात् । अस्ति चास्यासाधारणो व्यापारः । स कथं नाम गम्येत इति न्याय्यो णिङ्निर्देशः इति ।

शाब्दीं गतिमाश्रित्य वाक्यस्य प्रकरणप्रयोजनाभिधानप्रवृत्तत्वमभिसन्धाय परोक्षार्थेत्यादेरेकदेशस्य शाब्दयैव गत्या गुणभूतार्थवाचकत्वं द[6b][1]र्शयन्नाह—**परोक्षार्थे**· [३.२३]ति ।

शब्दात्मनश्चेत् प्रकरणस्य प्रयोजनमुक्तम्, कृतमर्थात्मनस्तेनाभिहितेन इत्याशङ्क्याह —**न हि** [३.२४] इति ।

तात्पर्यार्थप्रदर्शनेनैवं व्याचक्षाणश्चार्थेन न्यायेन अभिधेयप्रयोजनमेव वक्तुं प्रवृत्तमिदं वाक्यमिति दर्शयति । **यथा** [४.५] इति सामान्योक्तस्यास्य विषयोपदर्शने । **भूतं** [४.५] सत्यं । किं तदि[2]त्यपेक्षायां **ब्राह्मणीत्यु**क्तौ स्त्रीत्वावगतावपि यथा न तत्र स्त्रीप्रत्ययस्तद्वत्सर्वत्र द्रष्टव्यमित्यर्थः ।

आ समन्तादुप्यतेऽनेन इति **आवपनम्** [४.५] किमित्यपेक्षायां **इयम्** [४.५] इति । **उष्ट्रिका** पिटकिका ।

ननु परोक्षार्थप्रतिपत्तेरनुमानाश्रयत्वात् यदि तद् व्युत्पाद्यते तर्हि शब्दादेरपि तन्निमित्तत्वात् तदपि किं न व्युत्पाद्यते इत्याशङ्क्याह—**अनेन** [४.७] इति । **अनेन** [3]तत्प्रतिपत्तेः त्रिरूपलिङ्गाश्रयत्वकथनेन । **चो** यस्मादर्थे । **प्रमाणभूता** [४.८] प्रमाणरूपा अव्यभिचारिणीति यावत् ।

कस्मादेवमुक्तं भवतीत्याह—**अन्यस्मात्** [४.८] इति उक्तत्रिरूपलिङ्गादन्यस्मात् **तत्प्रतिपत्ते**रव्यभिचारिण्याः परोक्षार्थप्रतिपत्तेर**योगाद**प्रयुज्यमानत्वात् ।

असत्यवधारणे अयम[4]र्थः कुतस्त्य इत्याह—**अवधारणात्** [४.१०] नियमादिति । **इतिः** [४.१०] अवधारणस्य आकारं दर्शयति ।

**ततः** [४.१०] परोक्षार्थप्रतिपत्तेरनुमानाश्रयत्वादेव । **आदि**[४.१०]शब्दादर्थापत्त्यादिपरिग्रहः । उक्तादन्येन प्रकारेणानुमानत्वे प्रामाण्ये सति इति यावत् । **तेषां** [४.११] शब्दादीनाम् ।

स्यादेतत्—अलिङ्गजापि परोक्षार्थप्रतिपत्तिर[5]व्यभिचारिणी भविष्यति तत्कथं शब्दादीनां सत्यपि प्रामाण्ये तथात्वमित्याशङ्क्याह—**तथाहि** [४.१३] इति ।

सर्वशब्देनाशेषपरिग्रहं दर्शयति । **स्वतन्त्रा** [४.१३] स्ववशा लिङ्गानपेक्षेति यावत् ।

हेतुमाह—**तस्याः** [४.१४] इति । यस्तया व्यवसीयते स तस्याः **स्वार्थः**।

मा भूत्संवादिका, प्रमाणं तु कस्मान्न भवति ? । आह—**अवि[6]संवादनम्[1]** अविसंवादकत्वं, तदेव **लक्षणं** स्वभावो यस्य तद्भावस्तत्त्वं तस्मात् [४.१५] ।

स्वतन्त्राया अयोगात्, अन्यत एव सा भविष्यति किमेतावताऽनुमानत्वम् ? । न हि पक्षधर्मतैव लिङ्गस्य रूपं येन तज्जायाः तथात्वं स्यादित्याह—**अन्यत्रापि(तोपि)** [४.१५] इति । [2]**असम्बद्धात्** [४.१६] सिषाधयिषिताप्रतिबद्धात् ।

अस्तु तर्हि प्रतिबन्धो न तु [7]पक्षधर्मता । ततश्चान्वयव्यतिरेकवतोऽपि शब्दादेरपक्षधर्मात् परोक्षार्थप्रतिपत्तिरव्यभिचारिणी नानुमानमित्याशङ्क्याह—**धर्म्यसम्बन्धेपि** [४.१६] इति ।

यद्येवमस्तु तत्प्रतिपत्तिहेतोः पक्षधर्मत्वमपि । किमतः इत्याह—**एवम्** [४.१८] इति । **एवं[3]रूपं** [४.१८] साध्यसम्बद्धं विशिष्टधर्मिसम्बद्धञ्च । **इतिः** हेतौ । **सर्वा** [४.१८] कृत्स्नैव । **न भिद्यते** [४.१९] न पृथक् प्रमाणम्[8] ।

सर्वत्रायम् **इतिः** [ ४.१९] वाक्यार्थपरिसमाप्तौ । यत्र तु अर्थविशेषे वर्तते स प्रायेण कथ्यते ।

स्यादेतत्–उत्सूत्रोऽयमर्थस्त्वया व्याख्यायते न त्वयमत्राचार्यस्य विवक्षित इत्याह–**एष च** [४.१९] इति । **चः** [४.२०] यस्मादर्थे ।

ननु प्रकृतसम्बन्धादर्थितमयमर्थोऽत्यन्त ([9]दर्शनेऽयमर्थोऽसङ्गत) इत्याह—**पक्ष** [४.२० ] इति । **व्याप्त एव च** [४.२२] इति समुच्चीयमानावधारणमिदम् ।

" नरञ्च नारायण[ 7a ][1]मेव चादौ स्वतः सुतौ द्वौ जनयां बभूव "

इति यथा ।

---

१. आलोकसम्मतः मूलपाठः 'अविसंवादनलक्षणत्वात्' न तु यथा मुद्रितः–'अविसंवादलक्षणत्वात्' इति ।

२. 'S' प्रतेरत्र त्रुटितत्वात् 'यदि स्या' इति पूरितमस्माभिः । आलोकमनुसृत्य 'असम्बद्धात् यदि स्या' इति–पाठः पूरणीयः ।

३. अयमालोकसम्मतः पाठः । S 'एवम्भूतः' ।

" विवक्षातोऽप्रयोगेऽपि तस्यार्थोऽयं प्रतीयते "

इति च भावः **अवधारणात्** [४.२२] इति ध्रु(ब्रु)वतः।

तद्व्युत्पादनार्थमित्यत्रापि अर्थग्रहणसम्भवाद् [1]**अत्रे**[४.२४]त्याह।

**इतिः** [४.२४] पदस्याकारं दर्शयति। **स्वलक्षणविषयं** [४.२४] वस्तुविषयम्, न सामान्यविषयमित्यर्थात्।

कथमर्थविषयत्वाभिधानेऽनुमानप्रामाण्यस्य स्वलक्षण[2]विषयत्वमुक्तं भवतीत्याह—**अर्थे**[४.२५]ति।

एवमेवाचार्यस्य तथाभिधानं सङ्गच्छते नान्यथेति दर्शयितुमाह—**अत एव** [४.२६] इति। अनुमानप्रामाण्यस्य स्वलक्षणविषयत्वादेव। अन्यथा ' प्रत्यक्षव्यवस्थायाः ' इति विशेषो(ष्यो)क्तं स्यात् न सामान्येनेत्याशयः। अत्र प्रामाण्यस्य वस्तुविषयत्वादन्येन सामान्यविषयत्वप्रकारेण **तत्र** [४.२७] स्वलक्षणे, नान्यविषया[3]ज्ज्ञानादन्यत्र प्रवृत्तिर्युक्ता, अतिप्रसङ्गादिति भावः।

ननु सामान्यमपि वस्तु, तेन तदर्थक्रियार्थितयैव प्रवृत्तिरुपपत्स्यत इत्याह—**सामान्यस्येति** [५.१]। **अपिना** [५.१] वस्तुत्वेऽभ्युपगमं दर्शयति।

तस्यामेवार्थक्रियायां प्रवृत्तिर्भविष्यतीत्याह—**तस्याश्च** [५.२] इति। [2]**तदुत्पत्तावेव** [५.२] सामान्यालम्बनज्ञानोत्पत्तावेव।

तर्हि वाहदोहार्थक्रि[4]यार्थितयैव प्रतीते गोत्वे सामान्ये प्रवर्त्स्यतीति अत आह—**न हि** [५.२] इति। **हिः** अवधारणे।

हेतुमाह—**तस्य**[3] [?] इति। अन्वयव्यतिरेकाभ्यां तत्रैव तद्व्यापारावधारणादिति भावः।

भिन्नस्य सतः कार्यकारणभावादन्यस्य सम्बन्धस्याभावाद् [4]**अनुपकार्यतये**[५.४]त्याह।

अभ्युपेत्यापि सम्बन्धमिदानीमाह—**सत्यपि** [ ५.५ ] इति। **चः** [ ५.५ ] वक्तव्या[5]न्तरसमुच्चये।

धूमार्थिनोपि धूमप्रतिपत्तौ धूमध्वजे प्रतिपत्तिः प्राप्नोतिः इति इष्टं धर्ममतिक्रान्तः प्रसङ्गः **अतिप्रसङ्ग**[५.६]स्तस्माद्धेतोः।

---

१. आलोकसम्मतः ' अत्रार्थग्रहणं ' इति पाठः। S ' अर्थग्रहणं '।

२. ' तदु[त्पाद्य]त्वेन ' S।

३. स्वलक्षणस्यैव S।

४. ' अनुपकार[कत्वेन] ' S।

**अनवसितः**–अनवधारितः, **विवेकः**–अन्यत्वं येन स तथा तस्य [५.६]। तदनवसाय एव कुत इत्याह—**समवायस्य** [५.६] इति। समवायेन हि सम्बद्धं सामान्यमिति–नैयायिकादीनां मतम्। **तस्य**[1] सामान्यस्या**ध्यवसायात्** [५.७]समारोपात्। **तत्र** [५.७] स्वलक्षणे।

ननु किमिदं समवायस्य सूक्ष्मत्वं विवक्षितम्?। यदि परिमाणविशेषयोगित्वम्, तदस्य न सम्भवति। अथाप्युपलब्धिजननयोग्यरूपरहितत्वं तदपि तदभावात्तदेव नोपलभ्यताम्, न तु तस्य ताद्रूप्येण सामान्यतद्वतोर्भेदानुपलक्षणमुपपद्यते। न च समवायो नोपलभ्यते नैयायिकमते समवेतविशेषणभावेन तस्योपलब्धेरिष्टत्वात्। तन्मतस्य चाशंक्यमानत्वादिति।

न, अभिप्रायापरिज्ञानात्। इह हि सूक्ष्मत्वं समवायस्य समवायिनोर्भेदेनानुपलम्भकत्वं विवक्षितम्। एष हि समवायस्य महिमा येन समवायिनौ निर्लुठितगर्भवद्भेदेन नोपलम्भयति पटतन्त्वादिवदिति। अन्यथा व्याख्यानं तु साहसमेव।

अत्र **एवं तर्हि** [५.७] इति प्रतिविधानम्। इह भ्रान्तेस्त्वयाऽप्यवश्याभ्युपगन्तव्यत्वाद् **भ्रान्तिमात्रमेवास्तु** [५.८] इत्याह।

वासनाद्वयनिबद्धो हि विकल्पः स्वाभासमेवागोव्यावृत्तं प्रतियन् बाह्यस्याप्यगोव्यावृत्ततया भेदमवगाहितुमनीशानो बाह्य एव गौर्मया प्रतीत इत्यभिमन्यमा[7b][1]नः प्रकृत्यैव भ्रान्तिरूपो जायते।

भ्रान्तिरेव **भ्रान्तिमात्रम्** [५.८] वस्तुभूतसामान्यशून्यं स्वलक्षणाश्रयतया अनुमानज्ञानाश्रयतयोपगतत्वेन च तयोरन्तर्वर्तित्वादनुपयोगितया च घाटामस्तकान्तरालवर्तिमांसपिण्डरूपगड्डुस्थानीयत्वात् **गड्डुरूपं** [५.८] तेन तद्विषयतयोपगतेनेति प्रकरणात् **किं** [५.८] न किञ्चिदित्यर्थः।

अयमस्याशयः—[2]यदि विकल्पो दृश्यविकल्प्यावर्थावेकीकृत्य लोकं प्रवर्तयितुं न शक्नुयात् यदि च तदुपगमेऽपि भ्रान्तिः प्रवृत्तिनिमित्तं नोपगम्येत, तदा तथा प्रवृत्तौ सामान्यमुपयुज्येतापि। यदि च तत् प्रमाणप्रसिद्धं भवेत् गड्डुवदेवानुपयुक्तमपि उपगम्येत, उपगम्य च तथा प्रवृत्तिरिष्येत, यावता सर्वमेवेदमसम्भवीति।

ननु निर्निबन्धनोऽन्यत्रा[3]न्यस्य समारोपो नोपपद्यते। न च व्यक्तिषु सर्वतो व्यावृत्तासु अनुगताकारस्य बुद्धिप्रतिभासस्यारोपे किञ्चिन्निमित्तमस्ति। तत् कथं भ्रान्त्या प्रवृत्तिकल्पना ज्यायसीत्यभिप्रायवानाह—**निर्बीजे**[५.८]ति।

---

१. आलोकसंमतः 'तदध्यवसायात्' इति पाठः। 'अवसायात्' S।

**ता एव** [५.९] इत्युत्तरम्। याः स्वहेतुभ्यस्तथोत्पन्नास्ता व्यक्तयः स्वहेतुसामर्थ्यात् **तदेक**प्रत्ययमर्पार्थज्ञानाद्येकं **कार्यं** [4]यासां तास्तथा ।

एतदुक्तं भवति—अतत्कार्यव्यावृत्त्या तदेककार्यत्वं सर्वसजातीयानुगतं तासु विद्यमानमनुगताकारस्य बुद्धिप्रतिभासस्यारोपवीजं किन्न भवतीति ? ।

स्यादेतत्—तदेककार्यतया तथाभूता अपि व्यक्तयः तथाभूताया भ्रान्तेर्वीजमुपपद्यन्ते। सामान्यमित्यस्मत्पक्षस्यापि न किञ्चित्प्रमाणमित्यभि[5]सम्बन्धमाकलय्य परस्परसामान्याभिधानमुन्मूलयितुमाह—**वर्णे**[५.१०]ति । **वर्णः** शुक्लादिः, **आकृतिः** संस्थानं संयोगविशेषः, ताभ्यां **समानोऽ**विशिष्टः **आकार** आभासो यस्य यत्र वा तत् तथोक्तम् । वर्णसमानाभासम् आकृतिसमानाभासं वर्णाभासम् आकृत्याभासमिति यावत्।

वर्णाकृतिप्रयुक्त[6]त्वात् सामान्यस्य, तज्ज्ञानस्यापि तथात्वं नायुक्तमित्याह—**न च** [५.११] इति । **तद्रूपं** [५.११] वर्णाकृतियुक्तरूपम् । तदुक्तम्—

" वर्णाकृत्यक्षराकारशून्यं गोत्वं हि वर्ण्यते " [ प्रमाणवा० २.१४७] इति।

**तत्** [ ५.११] तस्मात् ।

वर्णाकृतिप्रयुक्तं हि प्रतिभासमानं हि **तद्व**र्णाकृतियोगिन्यपरत्र **भ्रान्तेर्बीजं** [५.११] निवन्धनं भवेत्, नान्यदितिभावः ।

यदि नाम सामान्य[7]तद्वतोर्वर्णादियोगाभ्यां वैसदृश्यं तथापि सामान्यं तत्र भ्रमनिवन्धनं किं न भवति इत्याह—**सादृश्ये**[५.११]ति। अस्ति हि काचिद्भ्रान्तिर्या अन्तरुपप्लवसम्भवे इत्यभिप्रेत्य **परैः** [५.१२] इत्याह ।

यद्येवं बाह्यस्य बुद्धिप्रतिभासेन सामान्येन किं सादृश्यं येन भ्रान्तिरुत्पद्यत इति आह—**व्यक्तय** [५.१२] इति ।

[1]**सामान्यालम्बनं** यज् **ज्ञानं** तस्य य **आकारो**[8] विजातीयव्यावृत्तरूपं तस्य **सरूपाः** [५.१३] [2]**विजातीयव्यावृत्ता** [५.१२] इति हेतुभावेन विशेषणम्। तेन विजातीयव्यावृत्तत्वादित्यर्थः । बुद्धिप्रतिभासस्य वा अतद्रूपपरावृत्ततयैवावभासनादिति च भावः ।

यैर्वैशेषिकादिभिर्व्यक्तेर्भिन्नं सामान्यमिष्टं तैरप्यवश्यमुक्तया नीत्या स्वलक्षणविषयमनुमानस्य प्रामाण्यमेष्टव्यमिति प्र[8a][1]तिपाद्य संप्रति मीमांसकादीन् प्रतिपादयितुं **यैः** [५.१६] इत्यादिनोपक्रमते ।

---

१. आलोकसम्मतः ' सामान्यालम्बनज्ञानाकारसरूपाः ' इति पाठः । ' सामान्याकारज्ञानस्वरूपाः ' S ।

२. आलोकसम्मतः 'विजातीयव्यावृत्ताः' इति पाठः । 'अ[समानजा]तीयव्यावृत्ताः' S ।

**तुः** [५.१६] विशेषार्थः ।

सामान्यमनुमाने प्रतिभासमानं प्रवृत्तिविषयः, तच्च व्यक्तिस्वरूपमिति स्वलक्षणविषयमेव प्रामाण्यं तस्यापतितमित्याशयः ।

यद्येवं भवन्मतवत् तदपि मतमतिशोभनमित्याशङ्क्य आह—**स्वलक्षणे**[५.१७]ति ।

तद्देशोपसर्पणजन्मनीन्द्रियज्ञान इव [2]प्रतिभासनप्रसङ्गेन शब्दादपि तं(तत्)प्रतीतौ चक्षुरिन्द्रियादिवैयर्थ्यप्रसङ्गेन व्यक्तेरप्रतिभासने तदात्मकं सामान्यं कथमिव प्रतिभायादिति भावः ।

ननु यद्यनुमानस्यापि प्रामाण्यं स्वलक्षणविषयं तर्हि प्रत्यक्षादस्य भेदः कथमित्याशङ्क्याह—[1]**परोक्ष** इति । **तुः** प्रत्यक्षादनुमानं भेदवद्दर्शयति ।

यस्मादर्था[त्]साक्षादनुदय[3]मानमुत्पत्तुं लिङ्गमपेक्षते, अर्थश्च न साक्षात् करोति **तस्मादि**त्यर्थः । **सति भाव** आश्रयार्थः ।

स्यान्मतम्—यद्यस्यापि स्वलक्षणं विषयः, तर्हि " अन्यत् सामान्यलक्षणं, सोऽनुमानस्य विषयः " [ न्यायबि० परि० १ ] इति न्यायबिन्दुर्विरुध्येतेत्याह—**तदेवे**ति । **चो** यस्मादर्थे ।

कथं तथा वक्तुं शक्यत इत्याह—**लक्ष्यत** इति ।

सा[4]मान्यम् अतद्रूपपरावृत्तिर्लक्षणं लक्षकं यस्यातद्रूपपरावृत्तस्य वस्तुनः ।

त एव भेदाश्च अविवेचितभेदाः सामान्यमित्यर्थः । **पुनरुक्ताशङ्काम्** इत्यर्थपुनरुक्ताशङ्का इत्यवसेयम् । शब्दपुनरुक्तस्याननुभवादेव तदाशङ्काया अभावात् ।

द्विविधं हि पुनरुक्तम् । अर्थपुनरुक्तम्—यदा विशेषविधित्सा[5]द्यभावे स एवार्थः शब्दान्तरेणाभिधीयते । शब्दपुनरुक्तं तु विधित्साद्यभाव एव यदा स एव शब्दः पुनरुच्चार्यते । विशेषविधित्सादिभावे तदेव द्वैधमर्थानुवादशब्दानुवादात्मना द्वैधं भवतीति ।

वार्तिकादौ तर्ह्यनैपुण्यमाचार्यस्येति चेत् । न, मन्दबुद्धीनधिकृत्य तत्प्रवृत्तेः ।

**प्रमाणेने**ति तृतीयान्तात् तसिर्द्रष्टव्यः ।

**तन्निश्चयतः** प्रभेदनिश्चयतः पुरुषव्युत्पादनमिति विग्रहः । प्रभेदस्य व्युत्पादनमिति सम्बध्यते । प्रभेदोऽपि द्विधा द्रष्टव्यः—अनुपलब्ध्यादिभेदेन पक्षधर्मत्वाद्यात्मना च । यदि कार्यादिभेदनिश्चायकं प्रमाणमत्रोक्तम्, तर्हि अन्वयादिप्र(स्व)रूपप्रभेदनिश्चायकं प्रमाणं नोक्त[7]मेवत्याशंक्याह **त्रिविधेति** । त्रिभिरन्वयव्यतिरेकपक्षधर्मतात्मकैः प्रकारैः ।

१. S संज्ञकहेतुबिन्दुटीकायाः प्रतेरत्र त्रुटितत्वात् मूलपाठाभावः बोध्यः ।

**प्रकर्षेण भिन्नस्य** भेदमुपगतस्य। एवमभिधानादेव चास्य प्रभेदस्येत्यत्रास्माभिस्तथा व्याख्यातमन्यथा एतन्न संगच्छेत।

स्यादेतत्—लिङ्गलक्षणानुमानस्वरूपस्य व्युत्पादनं स्याद्यदि लक्ष्यं लक्षणं तन्निर्दिष्टं भवेत्। प्रभेदस्य च [8]तदा स्याद्यदि तन्निर्देशः स्यात्। न चात्र तद्वाचकमस्तीत्याह **तत्र त्रेधा-व्युत्पादने व्यवस्थिते सतीति**। एवञ्च निर्देशप्रदर्शनं परं कृतं बोद्धव्यं न तु लक्षणानुवादेन लक्ष्यविधिर्दर्शितः।

**हेतुरिति** तु लक्ष्यमनूद्य **पक्षधर्म** इत्यादिलक्षणं विधेयमवसेयम्। **इतिना** नियमस्याकारो दर्शितः। प्रतिपाद्योपलक्षणं [8b][1]भावग्रहणं। तेन **भावेषु** अभिधेयेषु इत्यर्थः। अभावेषु तथा न स्यात्।

अत्र तु साहायकं कुमारिलसाक्षिणमुपक्षिपन्नाह **तदुक्तमिति**। **संवित्तेरनुगमोऽनुबन्धः** स्थैर्यम्। धारावाहित्वमिति यावत्। **सकृज्जाता तु** विपक्षाभावसंवित्तिरदृढा यत्र, न तत्र, **यथावधारणमि**त्यनेन सूचयति। [1]**हि**र्यस्मा**दिन्द्रियस्य भावाङ्ग-(वांशे)नैव संयोगः। संयोग**शब्देन [2]संबन्धो विवक्ष्यते। न त्वन्यतरकर्मादिगुण एव। सामान्यादेरप्रत्यक्षत्वप्रसङ्गात्। सोऽपि कस्मादित्याह—**योग्यत्वा**दिति। भावांशेन सह सम्बद्धमिन्द्रियं योग्यं मीमांसकमते। सतोरेव सम्बन्धोपपत्तेरिति भावः। स विषयोऽस्येति **तद्विषय**स्तस्य भावस्तत्ता। कस्य सेत्यपेक्षायामाह **प्रत्यक्षस्ये**ति। कस्मादित्याह—**अर्थे**ति। विरो[3]धिन्यनुपपन्ना **चतुर्धा** चतुर्भिः प्रकारैः।

असामान्यतयैव तत्साधनीभविष्यतीत्याह—**तत्र** इति।

**अनुक्रान्तं रूपं** [६.९] स्वभावो यस्य तत् तथा। **अनुक्रान्तं** प्रकान्तम् एकज्ञानसंसर्गितुल्ययोग्यतालक्षणं वाच्यम्।

हेत्वन्तरमपि तथा भविष्यति इत्याह—**यदि** [६.९] इति सम्भावयति। **हिः** [६.९] यस्मादर्थे। **स्यात्** तथारूपमिति प्रस्तावात्। **आदि**[६.९][4]शब्दात् कालस्य संग्रहः। घटवदिति चाशयः।

**अयं प्रकारः**[2] [६.१२] कार्यकारणव्याप्यव्यापकलक्षणः। **तस्मात्**[3] [६.१२] कार्यकारणभावाद्यभावात्। **ते** [६.१२] कारणव्यापकानुपलब्धी। न च तस्य चात्यन्तासतोऽविकलकारणस्य भावः सम्भवति इति भावः।

---

१. 'भावांशेनैव संयोगो योग्यत्वादिन्द्रियस्य हि' इति श्लोकवा० अभाव० १८।

२. 'प्रकारोऽयं'—S

३. 'तत्'—S

अमूषां सम्भवमभ्युपपद्येदानीं दूषणं दत्ते—**सम्भवे च** [६.१४] [5]इति।

ननु कथमयं नियमः सिध्यतीति प्रश्ने किमिदमकृतं नियमसिद्ध्यनङ्गमभिधीयत इत्याशङ्क्याह—**एवं मन्यत** [६.१८] इति। **एवं** वक्ष्यमाणकम्। **इह** [६.१८] वाङ्मये व्यवहारे। **तद्विपर्ययेण** [६.१८] तस्य नियम्यमानस्य विपर्ययेण। **तद्विपक्षस्य** [६.१९] तस्य नियमविषयस्य विपक्षः तद्विपक्षस्तस्य **व्याप्तौ**। [६.२१] सत्याम्। [6]प्रतिषेध्यस्य हेतुत्वस्य यः **स्वभावस्तेन यद्विरुद्धं** हेत्वाभासत्वं तस्य **उपलब्ध्या** [६.२५]।

ननु हेतूक्तलक्षणप्रतीतिकाम(मो) हेतोरेव रूपं प्रतीयताम्, कथं पुनः परस्परपरिहारवत्तया तयोर्विरोधः प्रतीयत इत्याह—**तदात्मे**[७.१]ति। तस्य हेतोर्य **आत्मा** तत्र **नियतो** यः **प्रतिभास**स्तस्य यज् **ज्ञानं** संवे[7]दनं तस्माद्धेतोः **विपरीतस्य अन्यतया** तदनात्मतया सामर्थ्यात् ज्ञातया। इत्थंभूतलक्षणा चेयं तृतीया। **तदाभासता** तस्याः **प्रतीतेः** [७.२] सामर्थ्येन निश्चयात्।

तस्मात् किं भवतीत्याह—**परस्परमिति** [७.२]

स्यादेतत्—अत्यन्तासतो हेत्वन्तरस्य न केनचित् सह विरोधावगतिः येन विरुद्धोपलम्भात् अभावगतिर्भवति। तत्र च हेतुत्वम[8]त्यन्तासत् कथं निषिध्येत इति पूर्वपक्षद्वयमुत्प्रेक्षमाण आह–**ते च** [७.४] इति। **चो** यस्मादर्थे। नापि च तेन निषिध्यमानं हेतुत्वमत्यन्तासत्तयोपगतमिति सम्बन्धनीयम्। तर्हि किमत्र तत्त्वमित्याह—**केवलं** [७.६] इति।

**अन्यत्र** [७.६] कार्यादौ **प्रसिद्धं** निश्चितं **व्यामोहाद्** अज्ञानात् **तत्र** [७.६] हेतुत्रयबाह्ये अर्थे **आरोपितं** [७.७] सत्त्वेन व्यवस्थापितम्। [1]**शङ्कित**[9a]-[1]**म्** 'अस्ति न वेति' संशयास्पदीकृतम्।

**तत्** [७.७] तस्मात्। **किं** कस्मात् सामर्थ्यात् प्रकाश्यमानमित्युक्तम्। एवमुपलक्षणत्वादस्य कथं निषेध इत्यपि द्रष्टव्यम्।

ननु किं हेत्वन्तरे हेतुत्वं भवत्वा[भवत् हेत्वा]भासत्वभावान्निवर्तमानमवगतं येन तस्यानेन विरोधो वक्ष्यत इत्याह—**न च** [७.८] इति।

इदानीमत्यन्तासत्त्वमभ्युपगम्यापि दोषाभावं प्रदर्शयितुमाह—**नापि** [७.१०] इति।

१. 'वा' S
२. 'आशङ्कितम्'-S

कथं पुनस्तत्रैव[2] तदवगमो न भवतीत्याशङ्क्याह—**न हि** [७.११] इति ।

मा तत्रावधारि विरोधोऽन्यत्रापि कथमत्यन्तः(ता)सतस्तदवगम इत्याह—**सर्वत्र**[1] [७.१३] इति ।

**लक्षणं** [७.१५] वस्तूनां विभक्तरूपं, तत् प्रयोजनमस्य इति तथा[2] । नियतरूपप्रतीतिरेव सर्वेण समं तस्य विरोधप्रतीतिरिति समुदायार्थः ।

**दुर्मतीनां विस्पन्दितानि** [७.१८] व्याकृतानि, तेषु ।

प्रकरणं निगमयन्नाह—**इति स्थितमे[3]तत्** [७.१८] इति । **इतिः** [७.१८] इति अनन्तरोक्तमुपपत्तिप्रकारं प्रत्यवमृपति । **इतिः** [७.२०] अभिप्रायस्याभिप्रायेण विषयीकृतस्याकारं दर्शयति ।

प्रमाणयोर्द्वैतात् द्वयोरनियतरूपदर्शने **कतरेणे**[७.२५]त्युक्तम् । **उपगतमि**त्यनेनारोपमाह । विशेषप्रतिषेधात् शेषविधानं लब्धमित्यभिप्रायेण **पक्षधर्मतासद्भावेऽपि**[4] [७.२७] इत्याह ।

भवतु अविनाभावाभावो हेत्वाभासत्वन्तु कस्मादित्याह—**अविनाभावे**ति [८.२] । **असिद्धविरुद्धानैकान्तिकानां सामान्यधर्मेण** [८.३] साधारणेन धर्मेण ।

संप्रति विशिष्टेन नाम्ना साधनमिदमवच्छिन्दन् आह—**इति** [८.३] इत्यादि ।

अविनाभाववैकल्यमेव तु कुतः सिद्धमित्याह—**अविनाभाववैकल्यश्च** [८.५] इति ।

तेभ्यः[5] स्वभावादिभ्यो व्यतिरिक्तानां **व्यापकानुपलब्ध्या**[3] **[८.६]** वक्ष्यमाणस्य व्यापकस्यानुपलब्ध्या ।

तदनुपलब्धिरेव कुत इत्याह—**त्रिविधे**[८.५]ति । तद्भावे हि त्रिविधान्तर्भावादेव तद्व्यतिरिक्तत्वमेव न भवेदिति भावः ।

किं तद्व्यापकानुपलब्ध्या तत्सिद्धिमध्यारोहतीत्याह—**तथा हि** [८.६] इति ।

तादात्म्येन तदुत्पत्ता[6]वेवेति(त्पत्त्या वेति) विवक्षितम् । न तु द्वाभ्यामेव । तस्मादुत्पत्तिस्तत्कारणाद्वोत्पत्तिश्च तदुत्पत्तिरिष्टा द्रष्टव्या ।

कुतस्ताभ्यां तस्य व्याप्तिरित्याह—**तयोः** [८.७] इति । **तत्र** [८.७] अविनाभावे । **तस्य** [८.८] अविनाभावस्य । **तयोः** [८.८] सतोरेव ।

---

१. S प्रतावत्र शङ्कितः पाठः । आलोकानुरोधेन स तु ' विरोधोऽपि तु सर्वत्र ' इति गम्यते ।

२. लाक्षणिकः [ ७.१९ ]

३. व्यापकानुपलब्धितः—S

कस्मात् तयोरेव तस्य भावः ?। किं पुनरन्यथापि न भावः इत्याह–**अतत्स्वभावस्येति** [८.८]।

पूर्वोक्तत[7]दुत्पत्तिनिषेधेन यस्य यस्मादनुत्पत्तिर्यत्कारणाद्वा तस्या**तदुत्पत्ते**रिति [८.८] बोद्धव्यम् ।

अत्र स्वातन्त्र्यजिहासया वार्तिकमुपन्यस्यति–**तदुक्तम्** [८.९] इति ।

स्यादेतत्–दृष्टचरमिदं यत् अतत्स्वभावेन अनुत्पन्नेन च केनचित्कस्यचिदव्यभिचारो यथा रसादिना रूपादेरित्याह–**रूपादिना** [८.१५] इति ।

**रसादेरविनाभावः** [८.१५] अव्यभिचारित्वम् ।

[S]केनेत्याह—**रूपादिना** [८.१५] इति । **आदि**शब्दात् स्पर्शादिसङ्ग्रहः ।

**तत्कारणोत्पत्तिरेव** [८.१६] इत्यभिदधानस्तदुत्पत्तिशब्देन पूर्वं द्वे विधे विवक्षिते इति स्फुटयति ।

एतदेवा**न्यथा** [८.१७] इत्यादिना द्रढयति ।

विशेषाभावोऽसिद्धः, एकार्थसमवायित्वमेव विशेष इत्यभिप्रेतुर्वचनम् **एकार्थ** [८.१९] इत्यादिना शङ्कते ।

एकार्थसमवाय इत्यत्र द्वयी व्युत्प[9b][1]त्तिः–एकस्मिन्नर्थे एकस्मिन् समवाय एकार्थस्य वा समवाय इति ।

अत्र तु **एकस्मिन्नर्थे** द्वयोः **समवायः** इति विवक्षितम् । स **निमित्तं** यस्य **अविनाभावस्य** स तथा ।

सिद्धान्ती प्रतिविधास्यमानश्चोदयति–**ननु** [८.२०] इति ।

" अयुतसिद्धानामाधार्याधारभूतानां यः सम्बन्ध इहप्रत्ययहेतुः स समवायः " [ प्रशस्त० पृ. ६९६ ] इत्यादावाधार्याधारग्रहणादु**पवर्ण्यते** इत्या[2]ह ।

अस्तु तथाविधयोरसौ का क्षतिरित्याह–**स च** [८.२०] इति । **चो** यस्मादर्थे।

तस्याभिधेयत्वेनाभिमतस्वरूपान्धकारे अतिप्रसक्तिदोषान्न **सिध्यति** [८.२१]। स्थित्यादिकरणेनाधारभावस्यान्यत्र निषिद्धत्वादिति भावः । **इतिः** [८.२१] हेतौ ।

समवायमभ्युपेत्य एतदुक्तम् । तदेव तु नास्तीति संप्रति प्रतिपादयन्नाह–[1]**यथा च** [८.२२] इति । **तादा**[3]**त्म्ये चे**[1][९.१]ति **तेन** सहेत्येव योजनीयम्।

१. S प्रतेरत्र त्रुटितत्वात् ' °समवायो[ऽवसे]यः ' इति कल्पनया पूरितः पाठः । आलोकानुरोधेन तु स एवं स्यात्–' °समवायोऽवसेयः । यथा च समवायः '

२. वा–S

**ये** [ ९.२ ] वस्तुस्वभावाः **एवं भवन्ति** [ ९.२ ] तथाभूताऽव्यभिचारिणो भवन्ति ।

भवन्तस्तर्हि किं कर्तार इत्याह—**केवलम्** [ ९.३ ] इति । **द्रष्टारः** [ ९.३ ] परिच्छेदकाः तथाभूतवस्तुस्वभावानामिति प्रकरणात् ।

'अकस्मात्'शब्दोऽनिमित्तवचनः तेनाकस्माद्भवोऽहेतुक इत्यर्थः । **इतिः** [ ९.४ ] तस्मात् **न कस्य चिद्व**[4]**स्तुनः स स्वभावो** विरमेत् । सर्वस्य सर्वः स्वभावः स्यादित्यर्थः ।

दिगादिवदहेतोः सतो देशकालनियमो नेष्ट एवेति वादिनि तु **देशकाल**ग्रहणं दृष्टान्तार्थं द्रष्टव्यम् । तेन यथा देशकालनियमो हेतुरहितस्य नास्ति तथा द्रव्यनियमोऽपि न स्यादित्यर्थः ।

एतदेव **तद्धि** [ ९.५ ] इत्यादिना समर्थयति । [5]**हि**र्यस्मात् **तद्ध**मकं वस्तु कर्तृ **किञ्चिद्र**म्यं [1]**कश्चिद्**( क्वचिद् ) धर्मिण्यु**पनीयेत** अग्निर्वा **न वेति** [९.५] तद्विपरीतं वा स्यात् । **यस्य** [ ९.५ ] वस्तुनो **यत्र** [ ९.६ ] गम्ये **किञ्चिद्** द्रव्यम् **आयत्तं, न वे**ति अस्य विवरणम् **अनायत्त**मिति ।

अन्वयमुखेनोक्त्वा व्यतिरेकमुखेणाप्युपपादयति **अन्यथा** [९.६] इति ।

[2]**तस्माद्** [ ९.७ ] इत्यादिनोपसंहरति ।

**पादप्रसारिका** [ ९.९ ] इति । सुखा[6]वस्थानोपलक्षणमिदं द्रष्टव्यम् । अभिधातव्यमेव कारणम् ।

न तु भवदभिप्रेतमित्याह **तच्च** [ ९.१० ] इति । **इतिः** [ ९.१० ] तस्मात् । **तद्विकला** [ ९.११ ] अविनाभावरहिताः । एतदेवाचार्यवचनेन संस्यन्दयन्नाह—**तथा चाह** [ ९.११ ] इति ।

स्यादेतत्—असत्यपि तत्स्वाभाव्ये तत्कार्यत्वे वा किञ्चिदर्थान्तरमव्यभिचरद्दृष्टमेव यथाऽऽ[7]तपे तरुच्छाया । यथा तुलाया अर्वाग्भागोन्नामावनामौ परभागावनामोन्नामाविति । एवमाद्यस्माभिर्धर्मोत्तरप्रदीपे विस्तरेण निरूपितमित्यास्तां तावदिह ।

स्यादेतद्—अविनाभावस्य तादात्म्यतदुत्पत्त्योरव्यभिचारे निमित्तम् न तावत्तादात्म्यतदुत्पत्ती स्तो यथा चायं तथा तदन्योपि तदव्यभिचारी च स्या[8]न्न च तस्य तत्स्वभावत्वं तत्कार्यत्वञ्चेति ।

---

१. ' क्वचिद् ' इति मुद्रिते संपूरितः पाठः सम्यक्

२. ' ततो ' इति मुद्रिते संपूरितः पाठः ।

अत्रोच्यते। नाविनाभावो नामान्य एवान्वयव्यतिरेकवतोऽविनाभाविनो रूपात्। केवलं कयाचिद्व्यपेक्षया ततो भिन्न इव कथ्यते। न तु तावता वस्तुतो भिन्न एव। अविनाभावि च रूपं किञ्चिदव्यभिचरितव्यादर्थान्तरं किञ्चिदनर्थान्तरम्, तस्य तत्कार्यतयैव प्रतिबन्धोऽनर्थान्त[10a][1]रस्य तु तादात्म्येन। अत एवाविनाभावभावात्तादात्म्यतदुत्पत्तिव्यवहारः साध्यते। तदभावे तु तदपि रूपं नास्तीति प्रतिपाद्यत इति सर्वमवदातम्।

**अत्र** [९.१५] अस्मिन्नर्थे **प्रयोगो**[९.१५] द्व्यवयवं साधनवाक्यम्। तदुत्पत्तिपक्षे तु तत्कारणेन चेत्यपि।

स्यादेतत्—यथा तादात्म्यतदुत्पत्त्यभावेऽप्यनुपलब्धिः साध्याव्यभिचारिणी तथान्यदपि किं न भवेदित्याशं[2]क्याह **स्वभावे**[ ९.१८]ति। अभावव्यवहारयोग्यतायाः साधनादित्यभिप्रायः। **तादात्म्यं** [ ९.१९] **लक्षणं** निबन्धनं यस्य स तथा। तदपि-आचार्यस्याभिमतमिति दर्शयन्नाह **तदुक्तम्** [९.२२] इति।

इदानीमिममेव 'पक्षधर्म'इत्यादिश्लोकं अन्यथा व्याचिख्यासुरनेन यावन्तोऽर्था निर्दिष्टाः तावतः परिसंख्यातुमाह—**तदेवम्** [९.२५] इति। [1]**तस्य** संख्यानियमस्यो**पपत्ति**[3]र्युक्तिः।

एतच्छ्लोकव्याख्यानस्यापरामपि विधां दर्शयन्नाह—**अथवा**[९.२८] इति। पूर्वन्तु लक्ष्यानुवादेन लक्षणविधानपरं विवक्षितम्। न त्ववधारणचिन्ताकृतेति ततो भिन्नमिदं व्याख्यानम्। कथमिदमुक्तमवधारणमुपपद्यत इत्यभिप्रेत्य पृच्छति। **किं कारणम्** [१०.१] अत्रेति प्रस्तावात्। **किमि**ति सामान्यतः कारणं पृच्छति। अवि[1]नाभाव[2]भावादिति श्लिष्टनिर्देशमभिसन्धाय **त्रिविधस्य च** [१०.३] इत्युक्तम्। तथा ह्यविनाभावे नियमान्नियतत्वादित्युक्ते कस्येत्याशंकायां **त्रिविधस्य च** श्रुतत्वात् त्रिविधस्येति युज्यते वक्तुम्।

एवमुभयावधारणे(णेन) व्याख्यातेन कोऽर्थातिशयः प्रकाशितो भवतीत्याह **तेन** [१०.३] इति। द्वावपि **इति** शब्दौ हेत्वर्थौ। एवमु[5]क्तं भवति। **ततः** [१०.७] कारणात् **त्रिविधहेतुबाह्येषु हेतुव्यवहारं कुर्वन्तो निरस्ता भवन्ति।** कुतः? **अवि[3]नाभावस्याभावात्। त्रिविधे च हेतावहेतुतामाचक्षाणा निरस्ता भवन्ति।** कुतः अत्रावि[3]**नाभावस्यावश्यं भावात्** [१०.८]।

१. 'तदुपदर्शकं च प्रमाणम्'–S। 'तदुपपत्तिश्च' इति आलोकसंमतः पाठः।

२. अविनाभावनियमात्–S

३. आलोकसंमतः पाठः सम्यक्, न तु यथा संपूरितः

४. अहेतुत्वम्–S

अस्मिन्व्याख्याने “ **हेत्वाभासास्ततोऽपरे** ” इति व्याख्यातुं पूर्वपक्षं रचयन्नाह [1]**तथैतत्** [ १०.११ ] [6]इति । द्वेधा हि तदंशव्याप्तिविरहो विपर्ययव्याप्तेः विपर्यये बाधकप्रमाणाभावादित्यभिप्रायेणाह **विपर्यये**[ १०.१७ ]त्यादि । **ते** [ १०.१७ ] बुद्धिनिविष्टा **असिद्धविरुद्धानैकान्तिका हेतुरूपविकलतया हेत्वाभासा गम्यन्त एव । असिद्धे**त्यादि तु वास्तवानुवादः । न तु तत्संज्ञया ज्ञातैस्तैः प्रयोजन(नं) हेतुत्वमात्रज्ञाने[7]न चरितार्थत्वात् । एवमपि वा प्राज्ञैः ज्ञायन्त इति न काचित् क्षतिः ।

एवदेव सामान्यन्यायोपदर्शनमुखेन प्रसाधयन्नाह—**तथाहि** [ १०.१९ ] इति ।

अत्रापि व्याख्याने अङ्गाङ्गिभावेन प्रतिपादितानामर्थानामवच्छेदं कुर्वन्नाह—**तदत्रेति** [ १०.२७ ] । **तदुभयस्य**—त्रिविधो हेतुरेव, त्रिविध एव हेतुरित्यस्यावधारणद्वयस्य **कारणम्** [ ११.१ ] उपपत्ती द्वे [8]इत्यर्थत्वात् । **श्लिष्टस्य** षष्ठ्या सप्तम्या च संगतस्य, अविनाभावनियमात्—इत्यस्य निर्देशात् । अनन्तरोक्तास्त्रयोऽर्था इमौ च द्विकारणलक्षणौ द्वावर्थापत्तयश्चक इति षडर्था भवन्ति ।

अस्मिन्नेव श्लोके पूर्वव्याख्यानापरित्यागेनावृत्त्यैवापरमपि व्याख्यानमभ्युच्चिन्वन्नाह **किञ्चेति** [ ११.४. ]।

ननु प्रथम एव व्याख्याने ‘त्रिविधैव(त्रिधैव) स[10 b][1]इति प्रभेदस्य व्युत्पादनम्’ इति ब्रुवता स हेतुस्त्रेधा कार्यस्वभावानुपलब्धिभेदभिन्न इति प्रकाशितमेवैतत्, कथं व्याख्यानान्तरमिदमिति चेत् । सत्यमेतत् । केवलं ‘त्रिधैव स’ इत्यत्र व्याख्यानान्तरमिदं विधेयं तच्च तदा सुज्ञातं भवति, यद्यस्य प्राक्प्रवृत्तं व्याख्यानमुपदर्श्य प्रदर्श्येत इत्यभिप्रायेण तद् व्याख्यानमनूदितम् । एतदपेक्षेण तु अ[2]थवेत्यनेन किञ्चशब्दार्थमुज्ज्वलयता यत् प्रदर्श्यते तदेव व्याख्यानान्तरं द्रष्टव्यम् । अजहत्कार्यत्वादिप्रभेद एवायं प्रभेदो ज्ञातव्यः । तेनायमर्थः—कार्यादिभेदभिन्न एव प्रत्येकं पक्षधर्मत्वान्वयव्यतिरेकात्मकस्त्रिरूप एवेति । एतेनैकद्विपदपर्युदासेन षट्पक्षान् प्रतिक्षिप्य सप्तमपक्षपरिग्रहेणानुमानलक्षणमभिप्रे[3]तं वार्तिककृतो दर्शयति ।

यत एकपदपरिग्रहेण त्रयः पक्षा, द्विपदपरिग्रहेणापि त्रय इति षट्(क)म्, तत्पर्युदासेन सप्तिका(सप्तम)परिग्रहः । तथाहि पक्षधर्मो हेतुरित्युच्यमाने यस्य सपक्षेनान्वयो विपक्षे च प्रवृत्तिः सोपि हेतुः स्यात् । यथा नित्यः शब्दः कृतकत्वादिति । सपक्षे यस्यान्वय इत्युच्यमा[4]ने विपक्षप्रवृत्तेरपक्षधर्मस्य हेतुत्वं स्यात् । यथा नित्यः शब्दश्चाक्षुषत्वात्सामान्य-

१. तत्रैतत्—S

वदिति । य(त)था सपक्षव्यतिरेक इत्युच्यमाने योऽपक्षधर्मः सपक्षे च नास्ति स हेतुः स्यात् । यथा अनित्यः शब्दोऽसत्त्वादिति । पक्षधर्मे सपक्षे च योऽस्ति स हेतुरित्युच्यमाने नित्यः शब्दः प्रमेयत्वादिति[5] विपक्षवृत्तिर्हेतुः स्यात् । पक्षधर्मः सपक्षे नास्तीत्युच्यमाने नित्यः शब्दो जातिमत्त्वे सति श्रावणत्वादित्ययं सपक्षवृत्तिहीनो हेतुः स्यात् । सपक्षेऽस्ति विपक्षे च नास्तीत्युच्यमाने अनित्याः परमाणवः कृतकत्वादित्ययमपक्षधर्मो हेतुः स्यात् । तदेतत्सर्वम्मा भूदिति समुदायोपादाने प्रयो[6]जनमिति । इदमेव च सर्वं बुद्धावाधाय धर्मोत्तरप्रदीपेऽस्माभिरभ्यधायि "त्रिरूपाल्लिङ्गादिति च आचक्षाणेन" इत्यादि ।

ननु पक्षधर्मवचने पक्षधर्मतोक्ता । अन्वयव्यतिरेकात्मकयोस्तु रूपयोः केनाभिधानं येनैवं व्याख्यायत इत्याह **तदंशे**[ ११.६ ]ति । अत्रैव सामर्थ्यावच्छिन्नमवदर्शयन्नाह [7]**नाबाधिते**[ ११.७ ]त्यादि । पूर्वप्रभेदापरित्यागेनास्य भेदस्य विवक्षितत्वात् । उभयमपि तच्छब्देन परामृषति । अविनाभावभाव एवाबाधितविषयत्वस्य भावात् न तद्रूपान्तरम्, वस्तूनाञ्च विरुद्धस्वभावद्वयाभावात्तत्रैकस्मिंस्तदविनाभाविनि तद्विरुद्धरूपाविनाभाविनोऽन्यस्यासंभवेनापि(प्य)प्रतिपक्षत्वं नाम तदन्तर्गतमेव । यस्य तु तद्व्य[8]तिरिक्तमिष्टं तदभिप्रायेण **व्यतिरिक्त**[११.१०]ग्रहणम् । **रूपान्तरस्य**[११.१२] **सम्भवः**[११.१२] सद्भावः, स यस्यास्ति तस्मिन् ।

अविना[भावा]भावमेव **नहि** [ ११.१३ ] इत्यादिना समर्थयति । रूपान्तरयोगिन्यप्यविनाभावासम्भवादसिद्धस्तद्भाव इत्याह **तद्भावे**ति [ ११.१४ ] प्रतिबन्धनिबन्धना[विना]भाववतीति । यदि तस्मिन्नपि रूपान्तरं स्यात् केवलमप्रमाणकमेतदुच्यत इत्याह **यथा चे**[ ११.१५ ]ति । [11a] [1]**वक्ष्यते**[1] हेतुना व्यक्तीक्रियत इति ।

पक्षो धर्मधर्मिसमुदायः । तथाभूतसमुदायसाधकप्रमाणाभावेन तद्धर्मतया सर्वस्यैव ग्रहीतुमशक्यत्वादिति भावः । अथ कथञ्चित्तद्धर्मस्य **सिद्धिः** [ ११.१९ ] निश्चयस्तस्यां वा सिद्धप्रयोजनत्वात्तस्य हेतोर्वैयर्थ्यम् ।

परस्थानपतितत्वात्पर एवासावित्यभिप्रायेण ईश्वरसेन एव **परः**[१२.६]अभिप्रेतः ।

**अधि(व्यधि)करणत्वेन**[2] साध्याधिकरणाद्भिन्नाधिकरणत्वेन **असिद्धम्** [१२.१२] अनिश्चितम्, तत्र चिरास्पदीभूते धर्मिणि द्वयोरप्यन्ययोरासिद्धत्वात् । इदमिह स्वरूपासिद्धमिदं तु व्यधिकरणासिद्धमित्येतदेव कुतो व्यवस्थाप्यमिति चेत् । सत्यमेतत् । केवलं तत्रासिद्धोऽपि हेतुरन्यधर्मिगतत्वेनोपादीयते, स व्यधिकरणासिद्धो बोद्धव्यः ।

---

१. वक्ष्यति—S

कस्मात्तत्संबन्धना[3]र्थं नाशङ्कनीयमित्याशंकायां तदभिधानीयं तदभिव्यक्तत्वादनेन नोक्तम्। धर्मो हेतुस्तदंशेन व्याप्त इत्युक्ते वा [ सक ]लोपि हि जानात्येव। न तस्यात्मन एवांशेन व्याप्त इत्यभिप्रायात् ।

**आचार्येण** [ १३.२२ ] इति । आचार्यदिग्नागेन ।

पक्षस्य धर्मिणो धर्मस्यानुपपत्तेः न तावत्कर्मधारयोऽत एवासंख्यापूर्वकत्वा[4]च्च न द्विगुः । अनव्ययत्वाच्च नाव्ययीभावः । यच्छब्दवाच्यासंभवात्, न हि स एव धर्मी स एव धर्म इत्यर्थविरोधाच्च समासान्तस्यानिच्प्रत्ययप्रसक्तेश्च न बहुव्रीहिः । नपुसंकलिङ्गात् द्विवचनप्रसङ्गाच्च 'चा'र्थासंभवाच्च न द्वन्द्वः । सप्तमीसमाससूत्रे च धर्मशब्दस्यासंग्रहाद्योगविभागेन तत्समासभावे[5]ऽपि षष्ठीसप्तम्योरभेदादित्यभिप्रायवान्प्राह [1]**षष्ठीतत्पुरुषाद्** [ १४.२२ ] इति । षष्ठीसमासे च राजपुरुषादौ स्वाम्यन्तरव्यवच्छेदो दृष्टो राज्ञः पुरुषो वाच्युस्येति(°षो नान्यस्येति)। तद्वदिहापि पक्षस्य धर्मो नान्यस्येत्यन्ययोगव्यवच्छेदः स्यादित्यभिसम्बन्धः ।

ननु **ज्वाला** [१५.२१] वह्निः । **आदि**शब्दाद्बुद्ध्यादि क्षणिकत्वेनेष्टमिति तत् क[6]थमक्षणिवादिनं तं प्रति पक्षस्य(स्या)भाव इत्याह **यदपीति** [ १५.२१ ] । **न प्रत्यक्षतः** [ १५.२२ ] इति ब्रुवतोयं भावः—यदि प्रत्यक्षेण क्षणस्योपलक्षणं स्यात्, तदा दृष्टान्तपर्येषणा पर्यवसानं गच्छेत् । यदा त्वनुमानतस्तदा तदपि तेषामनुमानमदृष्टान्तकं कथं स्यादिति साधनं दुःखमिति । एतच्च कस्यचित्परस्य क्षणिकत्वाभ्यु[7]पगममभ्युपगम्योक्तम् । न तु सहेतुनाशवादिभिर्बुद्ध्यादेरप्युत्पत्तिक्षण एव भावो न तु द्वितीये क्षण इति एवं लक्षणं क्षणिकत्वमेष्टव्यम्, आशुतरविनाशित्वाभिप्रायेण क्षणिकशब्दप्रवृत्तेरिष्टत्वादिति द्रष्टव्यमिति। तत्र प्रतिबन्धनिबन्धनस्याविनाभावस्य बाधकप्रमाणतः सिद्धावप्यन्यत्वेऽत्रैव वृत्तिरपेक्षणीयेति परिभाषातः [8]**काल्पनिकत्वं** [ १५.२४ ] तस्य प्रतिपन्नं स्यादित्याशयः । **प्रतिपन्नं** [ १५.२५ ] स्वीकृतमभ्युपगतमिति यावत् । स्व(**स**) [१५.२६] इति ससाध्यप्रतिबन्धः। **अन्यत्र** [ १६.१ ] विनिश्चये। **यद्वस्तु** धूमादिकं **क्वचित्**पर्वतादौ **दृष्टं** निश्चितं **तस्य** धूमादेः **यत्र** वह्न्यादौ **प्रतिबन्धः** प्रतिबद्धत्वम् **तद्विदः** प्रतिबन्धविदः पुंसस्त**स्य** प्रतिबन्धविषयस्य वह्न्यादेः **तद्धू**मादि[11b][1]कं **गमक**मनुमापकं **तत्र** पर्वतादौ **इतिः** एवमर्थे । **गति**र्बलं सामर्थ्यमिति यावत् ।

**एवंपरम्** [ १६.५ ] एवंप्रधानमेतदर्थं ' तत्तुल्ये सद्भावः ' इति वचनम् । स हेतुनापि तत्त्वेन (हेतुः कल्पितत्वेन) धर्मो यस्य स **तद्धर्मा** [१६.५] साध्यधर्मी तस्य । वस्तुबलादागतं **वास्तवम्** ।

---

१. षष्ठीसमासाच्च—S

पक्षत्वेन तस्य सपक्षत्वं निराक्रियत इत्याह **साध्यत्वेने**[१६.६]ति । इच्छाऽव्यवस्थितलक्षणत्वेन तस्यावास्तवत्वं [2]दर्शितम् । तेन हीनबलत्वम् साध्याविनाभावित्वस्याविनाभावादिति सम्बन्धः । कस्मात्तन्निबन्धनं तदित्यपेक्षायामाह–**अन्यथा** [१६.८] इति । **तस्या**विनाभावित्वस्या**योगाद**युज्यमानत्वादिति । **इदम्** [१६.१०] अत्राननुवृत्तेरिति ।

**सत्यमि**[१६.१०]त्यादिना प्रतिविधत्ते । **कस्यचिदि**[१६.१४]ति शिंशपात्वादेर्वृक्षत्वादिव्यवहारसाधनस्य । यदापि तथाविधस्य हेतोरन्यत्वे च प्रसिद्धेन [3]प्रतिबन्धेन कार्यं तदाप्यन्यत्राप्यननुवर्तमानः कथं दुष्येदित्याह **तदा ही**[१६.१८]ति । विरुद्धोपि विपर्यये सम्यग्घेतुनेति चेति विपर्ययानिश्चितवृत्तित्वमुक्तम् । तस्मिन्धर्मिणि संशयहेतुः स्यात् । साध्यभावाभावयोरित्यर्थात् ।

साध्यभावाभावविमुक्त एव धर्मी भविष्यति प्रकारान्तरसद्भावात्, तत् कथमसौ तत्र संशयहे[4]तुः स्यादित्याशंक्याह–**तदुभयबहिर्भावायोगात्** [१६.१९] साध्यवृत्तिव्यवच्छेदे वहिभावाऽयोगात् । कस्येत्याशंकायामाह **तद्धर्मिणः**[१६.१९] तस्य हेतोराश्रयस्येति । कस्मात्पुनस्तेन साध्यधर्मव[ता] । तदभाववता वा भवितव्यः (व्यम्) प्रकारान्तरस्यापि सम्भवादित्याह **साध्ये**[१६.२०]ति । अन्योन्यव्यवच्छेदरूपाणामेकाभावस्या[5]परविधिनान्तरीयत्वात् कुतः प्रकारान्तरं संभवतीति भावः ।

स्यादेतत्–अन्तर्व्याप्तिप्रसाधकादेव प्रमाणाद्विवादाध्यासितस्य धर्मिणस्तद्धर्मत्वज्ञानान्मौलस्य हेतोः कथमतिव्यक्तमपि वैयर्थ्यं भदन्तधर्माकरदत्तेन न लक्षितमिति । अहो अभिप्रायापरिज्ञानविलसितम् । एवं हि ब्रुवतोऽस्यायमाश[6]यः–दृष्टान्तधर्मिणीव साध्यधर्मिण्यपि सर्वोपसंहारेण धर्मानवच्छेदेन व्याप्तिग्रहे मौलादेव साध्यसिद्धेः कुतो वैयर्थ्यम् । इतरथा दृष्टान्तधर्मिण्यपि विपर्यये बाधकप्रमाणवृत्ताविष्यमाणायां कथमिव मौलो हेतुर्वैयर्थ्यं नाश्नुवीत । तथाहि तत्रापि तत्प्रवृत्तं धर्मिसामान्योपग्रहेण व्याप्तिं प्रतिपद्यते । [7]तथा च पक्षीकृतस्यापि जिज्ञासितधर्मवत्त्वं तत एव सिद्धमिति ।

अथोच्यते–बाधकप्रमाणमाहात्म्यात्सत्त्वस्य क्षणिकत्वसिद्धावपि किं न शशविषाणादेस्तत्त्वं सिद्धं ततस्तद्व्यावृत्तिरूपताप्रतिपादनार्थं धर्मिणोऽवश्यं 'संश्चायम् शब्दादिः' इत्यर्थः [उप]संहर्तव्यः । इतः सत्त्वहेतोरेवासंहृतात् शब्दादेः क्षणिकत्वावगतिर्नास्मन्मते हेतोर्वैयर्थ्यमि[8]ति ।

ननु समानमिदमस्माकमपि । तथाहि व्याप्तिग्राहकात्प्रमाणात्तत्र प्रवृत्तादपि धर्मिविशेषापरिग्रहेण प्लवमानाकारा प्रवृत्तिः क्षणिकत्वसत्त्वयोस्तादात्म्यग्राहिणी जाता न तु प्रवृत्त्यङ्गम् । 'य(स)श्चेदम्' इति तु दर्शिते सति 'इदं क्षणिकं शब्दादि' इति प्रवृत्त्यङ्गं प्रतीतिरुपजायते, यतो विशिष्टे देशादौ प्रवर्त्तेत इति । कथमस्मन्मते मौल[12a][1]स्य हेतोर्वैयर्थ्य-

ममन्दमन्दाक्षेणोच्यत इति। धर्मोत्तरादिभिर्विगर्हितेऽप्यस्मिन्मते गतिरियं अस्माभिरुपवर्णिता। अत्रापि तु यत् किञ्चिद्वाच्यं तदस्माभिरेव स्वयूथ्यविचारे दर्शितमिह-तु मा भूद्विरसीभाव इति नोच्यत इति।

ननु विशेषणेन सहोदितो निपातोऽयोगं व्यवच्छिनत्ति। "विशेषणविशेष्याभ्यामिति" वचनात्। अत्र च पक्ष एव [2]व्यवच्छेदकवद्विशेषणमिति तेनैव सहावधारणं वाच्यम्। तथा च पक्षस्यैव धर्म इत्युक्तौ तदवस्थो दोष इति चेत्। नैतदस्ति। "विशेषणविशेष्याभ्याम्" इत्यत्र शाब्दीं गतिमनाश्रित्याश्रितत्वाद्विशेषणम्, आश्रयत्वाद्विशेष्यमित्यार्थेन विशेषणविशेष्ययोरभिप्रेतत्वात्। सति चैवं पक्षो न विशेषणम्, आश्रयत्वाद्विशेष्यस्तु भवति, धर्मस्त्वाश्रि[3]तत्वाद्विशेषणमेव न विशेष्य इति। तेन सहोदितनिपातोऽयोगमेव व्यवच्छिनत्तीति सर्वमवदातम्।

**चैत्रो** [ १७.४ ] नाम कश्चित्पुरुषः। तेनैवाकारेण ज्ञातस्य ज्ञानाय प्रश्नानुपपत्तिः। **साम[1]र्थ्यम्** [ १७.११ ]। **आदि**[ १७.११ ] शब्दात्प्रकरणादिसंग्रहः। **प्रकृष्टे** अनन्यसाधारणे **गुणे**ऽतिशये **वृत्तिर्यस्य** स [ १७.१२ ] तथा। तदुक्तं "[4]न हि विशेषसन्निधिरेव सामान्यशब्दानां विशेषावस्थितिहेतुरपि तु प्रकरणसामर्थ्यादिकमर्पेय-(मपि" इ)ति। **पार्थे हीं**[ १७.१२ ]त्यादिनैतदेव समर्थयते। **पार्थः** पृथायाः कुन्ताया अपत्यम्। योगरूढिश्चैषा तेनार्जुन एवाभिधीयते। **श्रोतुः** [ १७.१९ ]अर्थात्प्रष्टुः प्रतिपाद्यस्येति यावत्। **तादृशं** [१७.१३] **सातिशयं** धानुर्द्धर्य( यं य)दान्य[5]गामि निषिध्यते।

कस्मात्तत्र धनुर्धरत्वमात्रमित्याह **प्रतिपाद्ये**[ १७.१५ ]ति।

परामृष्यते[2] [ १७.२१ ] वाच्यत्वेन परिगृह्यते।

अनभिमतं प्रतिषेधयति **न धर्म** [ १७.२१ ] इति। कुत इत्याह—**धर्मस्ये-**[१७.२२]ति।

ननु कैषा वाचोयुक्तिर्द्धर्म**स्य धर्मासंभवादि**ति। किं धूमादीनां आश्रितत्वेन धर्माणां धूमत्वपार्थिवत्वादयो धर्मा न सन्ति[6] ? येनैवमुच्यत इति। सत्यमेतद्वा केवलं बोधे यत्नः करणीयः। धर्मशब्देनेह साध्यो वह्न्यादिरभिप्रेतः स च तस्य धर्मो नास्त्येवेति किमवद्यम्। अथात्र केन धर्मोऽभिहितो येन धर्मस्य धर्मभावप्रतिपादनं युज्यत इत्याह

---

१. आलोकसम्मतः 'सामर्थ्यादिना' इति सम्यक्। न तु यथा मुद्रितः 'प्रकरण सामर्थ्यादिना' इति।

२. परामृश्यते—S

**अंशश्च** [१७.२२] इति। **चो** यस्मादर्थे। अंश इवांशो यथांशोऽ[1]शिविशेषणस्तथा धर्मोपि धर्मिविशेषक इत्यभिप्रायः। पक्षशब्देन समुदायवचनात्तदेकदेश एवांशो वक्तव्य इत्याह **पक्षशब्देन** [१७.२२] इति। तस्यैवैकदेशः किं नोच्यत इत्याह **तस्य[1]च** [१७.२२] इति।

**धर्माणां धर्मा[2]धारत्वासंभवादि**[१७.२८]ति पूर्वं बोद्धव्यम्। यतो व्याप्ये सति व्यापकस्य नियमेनोपस्थापनमेव व्यापकनिष्ठा व्याप्ति[S]स्तत्करणात्। **व्याप्यस्यैव** [१८.३] न तु व्यापकस्य **व्याप्तताप्रतीति**रविनाभाविताप्रतीतिः। किमपेक्षा सा तथा प्रतीतिरित्याह [3]**व्यापके**[१८.२]ति। व्यापकभावमपेक्षते "ईक्षिक्षमिभ्यांश्च" [वा० १९८१] इति कर्मोपपदे णः। **व्यापकस्य भावं** नियमविषयं रूपमपेक्ष्य पर्यालोच्य तथा प्रतीतिर्भवतीत्यर्थः।

तत्र भावमेवेत्यभिमतमवधारणं प्रदर्श्यानभिमतं निरा[12b][1]कुर्वन्नाह **न त्वि**-[१८.३]ति। **नापि तत्रैवे**[१८.५]ति। अवधार्यत इति वर्तते। **साधारणः** [१८.६]सपक्षासपक्षसाधारणः। दोषान्तरसमुच्चयार्थश्चकारः। **वा**[१८.८]शब्दो व्यापकधर्मापेक्षया पक्षान्तरमवद्योतयति।

**तत्रैवे**[१८.८]त्यवधारणमभिमतं प्रतिपाद्यान्यथावधारणं निषेधयन्नाह **अत्रापीति** [१८.९]।

एतदेव सूत्रकारवचनेन संस्यन्दयन्नाह **तदुक्तमि**[१८.१७]ति। [2]**लिङ्गे** साधने सति **लिङ्गी** साध्यं **भवत्येव**। अनेन व्यापकधर्मगता व्याप्तिर्दर्शिता। **इतर**लिङ्गं **पुनर्लिङ्गिन्येव** साध्य एव भवतीति। अनेन व्याप्यधर्मगता व्याप्तिरुक्ता। उक्तेन प्रकारेण **नियमस्या**वधारणस्य **विपर्यासे** वैपरीत्ये–विपर्यासश्च एकत्रायोगव्यवच्छेदेन विशेषणा(णम)परत्रान्ययोगव्यवच्छेदेन तस्मि**न्विपर्यासे** सति [3]**लिङ्गलिङ्गिनो[र]-सम्बन्धो(ऽ)**व्याप्तिरित्यर्थः। [4]**तेन** [१८.२०] व्याप्तेरुभयत्र एकाकारताप्रतिपत्ति-प्रतिषेधप्रदर्शनेन। अयञ्च दोष आचार्येण ये धूमं संयोगिनं हेतुमिच्छन्ति, तान्प्रत्यभिहितो न तु नैयायिकान्प्रति। तैर्धूमस्य एकार्थसमवायित्वाल्लिङ्गत्वेनोपगतत्वात्। ते हि धूमा-

१. मुद्रिते 'च' रहितः पाठः कल्पितः किन्तु आलोकसम्मतः पाठः 'तस्य च एक०' इति।

२. अयमेव सम्यक् पाठः न तु यथा कल्पितोऽस्माभिः 'धर्माणां धर्मान्तरस्वाभावात्' इति।

३. आलोकसम्मतः 'व्यापकभावापेक्षा' इति पाठः सम्यक्, न तु यथा अस्माभिः कल्पितः।

४. ऐतेन–S

वयविनं प्रदेशं वा धर्मिणमाधाय[4] साग्नित्वसिषाधयिषया धूमत्वं धूमवत्त्वं वा सामान्यं हेतुमुपाददत इति ।

**इह** [१८.२३] व्याप्तिवत्सद्गमकत्वे **आख्यातं** [१८.२३] प्रकाशितम् । **तथाही**[१८.२३]त्यादिनैतदेव समर्थयते ।

एतदपि तद्वचनेन संस्यन्दयन्नाह—**तथा च** [१९.१] इति । द्विष्ठत्वात्सम्बन्धस्य कथमुभयत्रैकाकारताव्याप्तिर्न स्यादित्याशंक्य **यद्यपि** इत्यनेन द्विष्ठं सम्ब[5]न्धं वास्तवमभ्युपगम्यापि प्रतिविधत्ते । कयोरसावित्याह—**अङ्ग** [१९.२] इति । अंगेञ्प(अङ्गेर्ज्ञानप)-रस्य ग्रहणादंग्यते लिङ्गयते प्रतीयतेऽनेन परोक्षार्थ इत्यङ्गं लिङ्गम् । तेन लिङ्गलिङ्गिनोरित्यर्थः ।

किंभूतः स इत्याह । **सहे**[१९.२]ति । तयोरेव युगपद्भाविप्रकृतत्वात् । द्विष्ठत्वाभ्युपगमादेव च सहभावित्वाभ्युपगमो[6]प्यायातः । **'यद्यपि'**शब्दसान्निध्यात् 'तथापी'त्यर्थतो द्रष्टव्यम् । **तस्य** संबन्धस्य **वृत्ति**र्वर्तनम् । तयोर्लिङ्गलिङ्गिनोरित्यर्थात् । कयोरिव सेत्याह—**आधाराधेययो**रिवेति सप्तम्यन्ताद्वतिः ।

यथा आधाराधेयभावलक्षणः सम्बन्धो द्विष्ठोपि नैकरूपया वृत्त्या द्वयोर्वर्तते यत एवैकसम्बन्धयोगेपि नाधारस्या[7]धेयत्वमाधेयस्य वाऽऽधारत्वं तथा लिङ्गलिङ्गिनोर्व्याप्तिरपि धूमत्वादावन्यथा, अन्यथा च वह्नित्वादौ । अत एव धूमत्वादिरेव व्याप्यतया गमको न प्रमेयत्वादिः । वह्नित्वादिरेव व्यापकतया गम्यो न तु तार्णत्वादिर्नापि धूमो गम्यो वह्निर्गमक इति ।

यत एवं तस्य वृत्तिः **तेन** [१९.४] कारणेन । **इती**[१९.४]त्यादिना प्रकरणोपसंहारः ।

**अन्यत्र**[8] [१९.१०] इति न्यायविन्दौ । विनिश्चयेपि "त्रिरूपाल्लिङ्गात्" इत्यादिनोक्तः ।

स्पर्धयाऽवस्थानं **कक्षा । तुल्या कक्षा** [१९.२२] यस्य स, तद्भावस्तत्ता, तस्याः **सूचनं** प्रकाशनं तदेव **अर्थः** प्रयोजनं यस्य **'वा'**शब्दस्य ।

**परमार्थतस्तादात्म्यात्** [१९.२४] इति ब्रुवता तदुपपादयता चान्वयेन व्यतिरेकगतौ व्यतिरेकेण चान्वयगतौ स्वभावहेतुरधिकृत इति दर्शितम् । तेन यत् के[13a][1]नचिदुपक्षिप्तम्—

" सामर्थ्यमिच्छतः कीर्तेर्नष्टं द्वित्वावधारणम् " इति

—तदपहस्तितम् द्रष्टव्यम् ।

[1]**प्रसङ्गतो** निश्चयरूपात्प्रस्तावात् । “ पक्षधर्मस्तदंशेन व्याप्तो हेतुः ” इति वचनात् । **सूत्रस्य क्रमेण** परिपाट्या । **सर्वस्ये**ति सर्वस्यैवेत्यवधारणीयम् । **प्रत्यक्षानुमानाभ्या**मिति सामस्त्यनिषेधो बोद्धव्यो न तु कस्यचित् । द्वाभ्यामन्यस्य पुनरेकैके[2]नेति ।

अविकल्पनत्वात् प्रत्यक्षस्य कथं ततो निश्चयस्तस्य सम्भवीत्याशंक्याह–**प्रत्यक्षेण** [2]**प्रती**[२०.८]ति । **चो** [२०.८] यस्मादर्थे । **सामान्यविकल्पजननादि-**[२०.९]ति धूमादिलिङ्गप्रत्यक्षाभिप्रायेणोक्तम् । **उपचारत** [२०.९] इति प्रत्यक्षतो **निश्चय** इत्युपचारतः **उच्यत** इति ।

ननु सामान्यं लिङ्गं कथं तस्याध्यक्षतो निश्चय इत्याह **यद्यपी**[२०.११]ति ।

**यस्तु**[२०.१९] इत्यादिना उद्द्यो[3]तकरमतमाशंक्यते । **अग्निसम्बन्धी** [२०.१९] वह्निमान् । **स देशोऽप्रत्यक्षो**ऽधोदेशस्य ताद्रूप्यादित्याशयः । किं तथाभूतं नभोस्ति ? सत्त्वे वा किं तस्य भागोस्तीत्याशंक्य बौद्धाभिप्रेतमेव दर्शयन्पर आह **आलोके-**[२०.२०]ति । आदिग्रहणात् तमसो ग्रहणम् । तदुक्तम् “आलोकतमसी नभः” इवा(इत्या)शयः । **प्रदेशो** वस्तुतः साधर्म्या(साध्या)धा[4]र इति द्रष्टव्यम् । तर्ह्यनुमानोत्सेद एव प्राप्त इत्याशंक्य पुनरेव व्यवस्थां कुर्वन्नाह **तस्माद्** [२०.२२] इति ।

कथं पुनः स एव धर्मी स एव हेतुर्भवितुमर्हतीत्याह **साग्निः** [२०.२२] इति । अनेन धूमविशेषस्य धर्मित्वं धूमसामान्यस्य हेतुत्वं दर्शयति । समानचोद्योपदर्शन-मुखेन **तुल्या(तस्या)पि** [ २०.२३ ] इत्यादिना सिद्धान्ती प्र[5]तिविधातुमुपक्रमते । **तस्यैवं** मतेः । **तावत** [ २०.२७ ] इति दृश्यादृश्यविभागवतः धूमेपि धर्मिणि उक्तेन प्रकारेण एतत्संगच्छत इति साम्याभिमानशष्यं(शस्यं) परस्य सा(शा)तयन्नाह **प्रदेश एव चे**[ २१.१ ]ति । **चशब्दः** परमताद्विशेषार्थः । अन्यत्रोपलभ्यमानस्यान्यदेशापेक्षया गमकत्वं कथमित्याह **देश[6]काले**[ २१.२ ]ति ।

आचार्येणाप्येतदभिमतमित्युपदर्शयन्नाह **यदाचे(हे)**[ २१.३ ]ति । अतश्चैवमभ्यु-पेतव्यमिति दर्शयन्नाह **यथे**[२१.९]ति । अनुमानहेतुत्वादनुमानं प्रत्ययभेदभेदित्वादि ।

**धर्मिणो वा**[ २१.१५ ] स्वरूपग्रहणमपि तावत्कथं युज्यते इत्येव योज्यम् ।

**तयोः सम्बन्धस्य** [ २१.१५ ] आधाराधेयलक्षणस्य ग्रह[7]णम् । **इतिः** [ २१.१६ ] प्रत्यवस्थीयमानस्याकारं दर्शयति ।

---

१. अत्र S प्रतेरेकं पत्रं नष्टम् ।

२. S प्रतौ ' प्रति ' इति नास्ति ।

एवमसौ प्रत्यवतस्थ इति कथं ज्ञायत इत्याशंक्याह **तेन ही**[२१.१६]ति। **हि**र्यस्मा**त्तेन** कुमारिलेन। ज्योतिष्टोमादेः श्रेयःसाधनत्वं **धर्मो** बोद्धव्यः। यदाह शबरस्वामी "को धर्म्मो यः श्रेयःसाधनः" [शाबरभा० १.१.२] इति।अतएव कुमारिलोप्याह "श्रेयःसाधनताप्येषां नि[8]त्यं वेदात् प्रतीयते" [ श्लोकवा० २.१४] इति।

जैमिनिसूत्रे शबरस्वामीय**मेतद्भाष्यम्** [२१.१७]। एतद्भाष्यमिति चार्थद्वारेणोक्तम्। न त्वीदृश एव भाष्यग्रन्थः। प्रमाणस्येति विवक्षायाम् **अनुमानादिन** [२१.१८] इति निर्देशः।

कदा तत्पूर्वकं तदित्याह **यदे**ति। **निर्विकल्पा** कल्पनाशून्या **इन्द्रियस्य धीः** [२१.१९]। सैव कथं तथेत्याह **स्मृती**[२१.१९]ति।

यस्मादर्थे वा [13b][1]**यदा**शब्दो द्रष्टव्यः। विकल्पनमन्तरेणापि कथं न तथा ग्रहणमित्याह **नचे**[२१.२०]ति। लिङ्गादेः प्रत्यासन्नत्वात् लिङ्गादिकमेवाऽ**विकल्प्ये**ति द्रष्टव्यम्। **तथा** सम्बद्धत्वेन **गृही**ति**र्ग्र**हणम्। **इतिः** आक्षेपस्याकारं दर्शयति।

प्रत्यक्षेणाग्रहणं कस्येत्यपेक्षायामाह **लिङ्गादे**[२१.२३]रिति। कुत इत्याह—**अविकल्पना**दिति। **त**दित्यग्रहणम्। **ने**ति निषेधयति। विकल्प[2]स्यापीष्टत्वात् प्रत्यक्षेणेति प्रकरणात्। किं विकल्पमात्रस्य तथोत्पत्तिरित्याशंक्याह—**अर्थे**[२१.२४]ति। **अर्थरूप**मुपकारि यस्य, तस्माद्वोपकारोप्यस्तीति तथा।

ननु निर्विकल्पसविकल्पभेदेनार्थविज्ञानस्य द्वैते सतीदं वक्तुं युज्यते। न चैतत्संभवीत्याह **अस्ती**[२१.२५]ति। **हि**र्यस्मादर्थे। विकल्पात् पूर्वं भावात् **प्रथमम्** [२१.२५] आद्यम् बालादिषु तथा[3]विधविकल्पानिष्टेर्ज्ञानं दृष्टान्ततयेष्टम्। **शुद्धवस्तुजम्** [२१.२६] शब्दस्मरणरहितवस्तुजमित्यर्थः। **ततः** [२१.२७] आलोचनाज्ञानात् **पर**मुत्तरकालम्। **पुन**रप्रथमे। **जात्यादिभिर्विशिष्टं यया बुद्ध्याऽवसीयते सापि** न केवलमालोचनाज्ञानमिति **अपि**शब्दः। एवं च ब्रुवतोऽयंभावः—यद्यपि प्रथमं निर्विकल्पकबोधेन द्व्यात्मकं [4]वस्तुगृहीतमिन्द्रियसंबन्धात् तथापि न विशेष्यविशेषणभावापत्त्या गृहीतम्, अयःशलाकाकल्पयोर्जातितद्वतोः साक्षात्करणात्। तथा गृह्णत्विदं प्रमाणमेवेति। **इति**ना[२२.१]उक्तेः आकारं दर्शयति। **उक्तं** [२२.३] सामर्थ्यादेतदुक्तम्। न तु साक्षात् तेनोक्तमेतत्। यस्मात् तेनैवं ब्रुवता सामर्थ्यादेतत् प्रकाशि[5]तं **ततः** [२२.३] तस्मात्। **तेन** कुमारिलेन **उपद**[1]**र्शितो** यो **दोषः** 'सौगतानामेव प्रत्यक्षेण लिङ्गाद्यग्रहणाम्' इत्येवंलक्षणस्तस्य **प्रतिविधानाय**।

---

१. उपवर्णित S।

शिष्याणां सुखप्रतिपत्त्यर्थं **सधूमं ही**[२२.४]त्यादिफक्किकायाः समुदायार्थमुपदर्शयन्नाह **अयमत्रे**[२२.५]ति ।

ननु चाविकल्पकं प्रत्यक्षं नेयतो व्याधान( व्यापारान् )कर्तुं समर्थं तत्[6] कथं तन्निबन्धनस्तन्निश्चय इत्यभिधातरि कथमिदं 'सधूमं ही'त्यादिवचो न प्लवत इत्याशंकायाम् **अत्रे**-[२२.५]ति । **हिः** [२२.५] अवधारणे ।

एकस्य साक्षादितरस्य सामर्थ्याज्जननात् **विधिप्रतिषेधविकल्पद्वयं जनयती**-[२२.९]त्युक्तम् ।

कदाचिद्विधिविकल्पं कदाचित्प्रतिषेधविकल्पं जनयतीत्यभिप्रायेण चैतदुक्तम् । **एवमेतदि**[२२.१०]ति यथायोगं वि[7]धिविकल्पो दर्शितः । **नान्यथा** [२२.१०] इत्यादि यथायोगं प्रतिषेधविकल्पः । किमनुभूतेऽर्थे विकल्पोदयः? नैवमुच्यत इत्याह **'यथाभ्यासमि**[२२.११]ति (यथानुभवमिति)। यद्यनुभवानतिक्रमेण विकल्पोदयस्तदा सर्वत्रांशे तदुदयप्रसङ्गः इत्याह **अभ्यासे**[२२.११]ति । **अभ्यासादिसहकारिणा-मित्य**भ्यासादिसहकारिकाणामिति बोद्धव्यम् । न तु विकल्पस्योत्पद्यमानाभ्या-(मानस्याभ्या)सादिः [8]सहकारी, अनुभवस्य तु भवति । केचित्( कश्चित् ) खलु यन्नम(?)नुभवो भूयोदर्शनलक्षणाभ्याससहकार्यनुरूपं विकल्पं जनयति । अस्याप्ययमर्थः—नानुभव इत्येव विकल्पं जनयति । किंतु कश्चित् पुनःपुनस्तत्रोत्पद्यमानस्तादृशो भवति। यथा रूपकादिपरीक्षकाणाम् । कश्चित्तु स्वभावातिशयलक्षणं पाटवमपेक्ष्य जनयति । अस्याप्यय[14a][1]मर्थः—कश्चिदनुभवः प्रकृत्यैव पटीयान् जायते यस्तत्र क्षमः । यथा योगिनां सर्वत्र । अस्मदादीनां के( क्व )चिद्विषये । कश्चित्पुनरविद्यानुबन्धात्सदृशापरापरोत्पादविप्रलब्धश्च सर्वदैव तिरस्कृतपटिमा यो नैव तत्क्षमो भवति । यथाऽर्वाग्दर्शिनां क्षणिकत्वादौ । **पाटवादी**[२२.११]त्यत्रादिग्रहणात् प्रत्यासत्तितारतम्यादयो गृह्यन्ते ।

स्यादेतत्—स[2]म्बन्धोऽयमिति निश्चयाऽननुभवनात्कथं सम्बन्धनिश्चयस्तन्निबन्धन उच्यत इत्याशंक्याह **तथाही**[२२.१३]ति । पाश्चात्यविधिप्रतिषेधविकल्पजननं यथोक्तः प्रकारस्तेन ।

ननु सम्बन्धस्याधाराधेयलक्षणस्याननुभवात्कथं तन्निश्चयस्तन्निबन्धन उपवर्ण्यत इत्याह **न चे**[२२.१६]ति। **तथा** [२२.१९] औत्तराधर्येण **अवस्थितमर्थद्वयमाश्रित्य** [२२.१९] गृहीत्वा ।

१. यथानुभवमिति—S

यदि [3]तथाभूतवस्तुद्वयादन्यो नास्ति तर्हि कथम् 'अनयोरयं संबन्धः सम्बन्धिनौ चैतौ' इति व्यवहार इत्याह—**तेनेति**[२२.२०]। येन तथाभूतवस्तुद्वयानुभवाश्रयतः समारोपितः सम्बन्धः **तेन** कारणेन **व्यवहार**[२२.२१]श्च 'अयं धर्मी अयं धर्मः' इति शाब्दोऽभिप्रेतः। **धर्मधर्मितये**[२२.२१]तीत्थंभूतलक्षणा चेयं तृतीया। एतद्व्यवहारे कारणमाह **भे**[4]**दान्तरे**[२२.२०]ति। न त्वयं परमार्थिको व्यवहार इत्यर्थः।

ननु च तथाभूतवस्तुद्वयादन्यस्य सम्बन्धस्याभावात्, तस्य च प्रत्यक्षेण ग्रहणात् सम्बन्धनिश्चयस्तथाभूतवस्तुद्वयकृतोऽस्तु, लिङ्गसामान्यनिश्चयस्तु कथं तत्कृतः। प्रत्यक्षेण लिङ्गसामान्यस्याग्रहणात्। न च विशेषो लिङ्गमित्याशंक्याह **सामान्ये**[२२.२२]ति। [5]**अपि**शब्दः सम्बन्धव्यवहारात् सामान्यव्यवहारस्यानतिशयख्यापनार्थः।

स्यादेतत्—अनुगतस्य वस्तुनोऽभावेऽनुगतप्रत्ययो निर्हेतुकः कथं भवेदित्याह **तेषामेव**[२२.२३] इति। न स्वलक्षणस्य विकल्पजनने साक्षाद् व्यापारस्तस्यातद्विषयत्वादित्याह—**अनुभवे**[२२.२३]ति। यदि ते विजातीयस्वभावास्तथापि कथं त[6]त्प्रत्ययहेतुत्वं तेषामित्याह—**विजातीये**[२२.२४]ति। **एकाकार**स्याभिन्नाकारस्य **परामर्शः**, स चासौ **प्रत्ययश्च** [तत्र] **हेतुत्वात्**। आचार्यवचनेनैतत्संस्यन्दयन्नाह **तथा चाह** [२२.२५] इति। [एकस्या]भिन्नस्य प्रत्यवमर्षस्तदेवेदमिति सम्बन्धाहार(समन्वाहार) इति विग्रहः कार्यः न त्वेकश्चासौ प्रत्यवमर्षश्चेति। एवं हि प्रत्यवमर्षश्चा(स्या)पि भिन्न[7]त्वात् कथमेकत्वं? तदपरैक(परा)मर्शादिति यद्युच्येत तदा तस्यापि तत्त्वं तत इत्यनवस्था। तथा च यावदन्तिमस्य तथात्वं न ज्ञायते तावदादिमस्यापि तत्त्वव्यवस्था न स्यात्, असत्यां च तस्यामेकधीहेतुभावेन व्यक्तीनामप्यभिन्न[त्वम]र्पयितुं न शक्येतेत्यलमिह विस्तरेण।

यस्मात्तैरयं विकल्पो जन्यते **ततः** [२३.१]।

अनुभूतालम्बनं ज्ञानं स्मृतिः, अत्र तु [8]सामान्यं केनानुभूतमयं गृह्णाति, येन स्मृतित्वं स्यादित्याह **तत्प्रतिभासिन** [२३.१] इति।

विजातीयव्यावृत्तं स्वलक्षणं प्रत्यक्षेणेक्षितम्, न तु व्यावृत्तिरित्याह **नही**[२३.३]ति।

स्यादेतत्—विकल्पानामनर्थग्राहितया बाह्यार्थासंस्पर्शादेव कथं गृहीतग्राहित्वलक्षणं स्मृतित्वमित्याश्चर्यं उपसंहारापदेशेनाह—**तस्मात्** [२३.४] इति। यद्येवं द्वैधमपि विकल्पः प्रतिपत्तुरध्यवसा[14]b[1]यवशाद्गृहीतबाह्यार्थग्राहितया स्मृतिरुच्यते, तर्हि परमार्थतः किंविषय इत्याह **वस्तुत** [२३.७] इति। यतोऽयं विकल्पः परमार्थतो निर्विषयोपि प्रतिपन्त्रध्यवसायानुरोधात्स्मृतिरभिप्रेतः **ततः** [२३.७] तस्मात्। **यदे**तद्वक्ष्यमाणकम् **आह**

कश्चित्कुमारिलादिः । किमाहेत्याह **सामान्ये**[२३.७]ति । **अभेदेना**भिन्नाकारं यद्विज्ञानं **तदेतत्स्मार्तं**[1] स्मृतिरूप[2]मिति **यो** बौद्धो **वदेत्** । **तस्यै**वंवादिनो **नूनं** निश्चितं **वन्ध्यासुतेऽपि** विषये **यत्स्मरणं** तत्र **शक्तता** सामर्थ्यमस्तु । वन्ध्यासुतस्यापि स्मर्तुं यत्सो(°तुंमसौ) शक्त इति यावत् कथं तस्यात्यन्ताभावस्मरणशक्ततोपकल्प्यत इति आशंकायां चूर्णकेनोपपत्तिमाह **सामान्यस्य।ननुभूततया** अननुभूतत्वात् । एवं ब्रुवतोऽपि(ऽयं) भावः–अनुभूते [3]हि स्मृतिर्भवति । यदि वाऽननुभूतेपि स्मरणमुपपद्यते तदा वन्ध्यासुतेप्यननुभूतत्वाविशेषात्स्मार्ता बुद्धिः किं न कल्प्यत इति ।

अङ्ग[२३.१८]शब्दोऽध्येषामन्त्रणे । **किं**शब्दः सामान्यतः प्रश्ने । **पुनः**शब्दस्तु विशेषतः । तेनायमर्थः–युष्मानेवाध्येष्य सामान्यतो विशेषतश्च एतत्पृच्छाम इति । शतं संवत्स[4]राः पुरुषायुषम् । अत्र स्वातन्त्र्यपरिजिहीर्षया तत्कारिका उपक्षिपन्नाह–**तथा चाहे**[२३.१९]ति । **यस्य**[२३.२०] बौद्धस्य मतेन । तस्य **एकलिङ्गिनि**[२३.२८] **गतिर्युगसहस्रेषु बहुष्वपि न विद्यत** [२३.२९] इति सम्बन्धः कार्यः ।

**आनन्त्यात्** [२३.२८] इति हेतुः । तस्यैव समर्थनं सर्वम् ।

अलिङ्गजमेवानुमानं भविष्यतीत्याह–**नचे**[२३.२१]ति । **चो** यस्मादर्थे । [5]**लिङ्गविनिर्मुक्तं**[२३.२१] लिङ्गरहितम् । **असामान्य**स्य स्वलक्षणस्य अनवगतमेव लिङ्गं लिङ्गिज्ञानं करिष्यतीत्याह–**नचे**[२३.२३]ति । **चः** पूर्ववत् । प्रदीपयोग्यतया गमकत्वस्याभावादिति भावः । **तस्य**[२३.२४] सामान्यरूपस्य लिङ्गस्य । **तस्य** लिङ्गसामान्यग्राहिणोऽनुमानान्तर**स्योद्भूतिः** [२३.२५] जन्म । किंभूताल्लिङ्गात् **सामान्यज्ञा**[6]**नसंहितात्** सामान्यज्ञानयुक्तात्सामान्यात्मना ज्ञातादिति यावत् । अस्य च लिङ्गसामान्यस्य ज्ञायमानस्यानुमेयत्वम्, प्रत्यक्षेण त्वन्मते सामान्याग्रहणादिति भावः । **तस्य** लिङ्गस्य सामान्य**स्योद्भवस्तदुद्भवो**[२३.२६] लिङ्गेनापरेणेत्यर्थात् । तेनापि सामान्यरूपतया अनुमानान्तरादेव ज्ञातेन तथाभाव्य[7]मित्यभिप्रायेणाह–**अनुमानान्तरादेव ज्ञातेने**[२३.२७]ति । अस्त्वेवं का क्षतिरित्याह **एवं चे**[२३.२७]ति ।

नन्वेवं लिङ्गानुमानस्यैवानन्त्यं न तु लिङ्ग्यनुमानस्य तत् कथंलिङ्ग्यनुमानानामित्युक्तमिति चेत् । सत्यं, केवलं तदेवाद्यं लिङ्गं ज्ञापकहेत्वधिकारात् ज्ञायमानसामान्यरूपतया चानुमानता(°मानेन) निश्चीयमानं लिङ्गि जातम् । स्वलिङ्गपेक्षया लिङ्गनपेक्षत(र्नपीप्यत) इति अभिप्रायाददोष एव ।

**एकस्मिल्लिङ्गिनि**[२३.२८] धर्मिणि ।

ननु च सामान्यरूपस्य लिङ्गत्वे तस्य चानुमानेनैव ग्रहे न प्रत्यक्षतस्तन्निश्चय उपपद्यत इत्यभिधातरि कथमिदमाचार्यीयं **सधूमे**त्यादिना प्रत्यक्षतस्तन्निश्चयस्योपवर्णनं युज्यत इत्याशंक्याह **एवं मन्यत** [२३.३०] इति ।

**प्रकृत्या विभ्रमाद्** [२४.१] भ्रान्तत्वात् । [15a][1]**सामान्यं** हि विजातीयव्यावृत्तिः । अयमर्थो—विजातीयव्यावृत्तेरन्यस्य सामान्यस्याभावात् विजातीयव्यावृत्त्यवगम एव सामान्यावगमः । वासनाद्वयनिबद्धश्च विकल्पः स्वप्रतिभासमेव नियतं बहीरूपतया साधारणतया प्रतिपद्यमानो बाह्य एव विजातीयव्यावृत्त्या मया प्रतीयत इति मन्यत इति । प्रकृत्या भ्रान्तत्वात्सामान्यस्य । स विवेचित[2]भेदो[ऽ]भेद एव विकल्पेन प्रतीयत इत्युक्तम् ।

अथ यदि प्रकृतिभ्रान्तोऽयं विकल्पस्तर्हि कथं तस्य अतद्व्यावृत्तवस्तुप्रापकत्वलक्षणं संवादकत्वमित्याह **लिङ्गविकल्पस्य चे**[२४.२]ति । कस्मात्पुनर्विकल्पाभाससामान्यस्य लिङ्गं(ङ्गत्वम्) न तु धूमादिस्वलक्षणस्येत्याह **नही**[२४.६]ति । **तस्ये**[२४.६]त्यादिनोपपत्तिमाह । अत्रैवोपचयहेतुं दर्शयन्नाह **साध्ये**[२४.७]ति ।

अय[3]मत्राभिप्रायः । अवश्यं हि किञ्चिदनुमित्सता धूमादिस्वलक्षणदर्शनोत्तरकालम्—'इदं साध्यमिदं साधनम्' इति संकलयितव्यम् । सति चास्मिन् संकल्पे सतः क्षणभङ्गितया वस्तुदर्शनाभावात् । दर्शनेन च विषयिणा विषयस्य दृश्यस्या[1]भिधानं तेन दृश्यस्य लिङ्ग(लिङ्ग)स्वलक्षणस्याभावादित्यर्थः । ततश्च कथम् स्वलक्षणदर्शनाश्रयो [4]गम्यगमकभावो भवेद् येन कल्पितधर्मद्वारको गम्यगमकभावो [न भ]वेदिति ।

ननु यदि प्रत्यक्षपृष्ठभाविनापि विकल्पेन सामान्यं प्रतीयते, तर्हि न्यायबिन्दौ यदवादि [ते]न "अन्यत्सामान्यलक्षणं सोऽनुमानस्य विषयः" इति विरुध्येतेत्याशंक्याह **यत्तूक्तमि**[२४.९]ति । **तदन्यस्ये**[२४.११]त्यनुमानोत्तरकालभावि[5]नोऽप्राप्तप्रामाण्यस्याग्निरत्रेत्याद्याकारस्यान्यस्यापि स्वतन्त्रस्य विकल्पस्य ।

एवमपि किमर्थमवधार्यत इत्याह **स्वलक्षणेति**[२४.१२] । **स्वलक्षणं विषयो** ग्राह्यत्वेन नैव भवतीति प्रतिपादयितुमित्यर्थः ।

पूर्वपक्षद्वयपूर्वकं फक्किकायाः समुदायार्थं व्याख्यायावयवार्थं व्याख्यातुं **तत्र**[२४.१३] इत्यादिनोपक्र[6]मते । **आदि**[?]शब्दादेकविनाशे सर्वविनाशादिसङ्ग्रहः "प्रत्यक्षेण दृष्टवतः"

१. P दृश्यस्य लिङ्गं । N प्रतेरत्र सम्यक् पाठः । अत एव स एव मूले स्थापितः ।

इत्यस्य तात्पर्यार्थमाह **न त्वि**[२४.२६]ति । कथं पुनरस्य तथामननमनुपपन्नमित्याह **नही**[२४.२७]ति । **वस्तुबलभाविने**[२४.२७]ति हेतुभावेन विशेषणम् ।

स्यादेतत्—केयं विविक्ततताप्रतीतिः । यदि केवलप्रतीतिस्तर्हि साऽभावसंवित्तिमन्तरेण[?] नतरां प्रसिद्ध्यतीति कथं प्रत्यक्षेण तथाग्रहणमुपवर्ण्यत इति । तदसत् । तथाहि भिन्नमभावमिच्छताऽपि वस्तूनां स्वरूपं परानुप्रविष्टमवश्यैष्टव्यम्, अन्यथा प्रातिस्विकामेवं तदभावस्यैवायोगानाम् (?) । अतः परानुप्रवेशेन ग्रह एव केवलग्रहः । इतरथेतरेतराश्रयत्वप्रसङ्गः । तावत् खल्वभावसंवित्तिर्नास्ति तदा[6]त्मवद् यावत्केवलग्रहो न भवेत् । तावच्च केवलग्रहो नास्ति यावत् नाभातसंवित्तिरिति ।

किञ्च यथा केवलोऽभावोऽपरेणाभावेन विना प्रतीयते तथा भावोप्यन्तरेणापराभावं केवलः किं न मीयेत । एवमनभ्युपगमे वाऽनवस्था प्रसज्येतेति । तदाह वार्तिकालंकारे प्रज्ञाकरगुप्तः

"प्रपरानुनु[[15b]'वेशेन प्रतीतिः केवलग्रहः ।
ननु केवलसम्व(संवित्ति)रभावविवितितः कुतः ।
सापि केवलसंवित्तिं विना नेति समानता ॥
यथा वा केवलोऽभावो विनाऽभावेन मीयते ।
तथाऽभा(तथा भा)वोपि नैवञ्चेदनवस्था प्रसज्यते ॥ " इति ।

कथं निर्विषयस्य विकल्पस्य यथादृष्टभेदस्य परमार्थविषयत्वमुच्यत इत्याह '**निश्चयेत्यादि** ।

**अनेनै**तदुपपत्त्यपे[2]क्षया । परमार्थशब्दयोगो वार्तिककारस्य टीकाकृता दर्शितः । लक्ष्यते चायमाचार्यस्याभिमतः । समानो यद्वत् यादृशो दृष्टो **यथादृष्टः** । स चासौ **भेद** एव **परमार्थः** । स एव **विषयो**ऽध्यवसायवशाद्यस्येति स तथा । इतरथा तु परमार्थतोऽविषय एव ।

'परमार्थशब्दं प्रयुंजानो वार्तिककारः कथं न प्रमाये(य ?)ति' एवं तु भट्टा[3]र्चटेन कथं न व्याख्यातमिति न प्रतीमः ।

प्रमाणलक्षणसामान्येन योगमुपदर्श्य प्रमाणविशेषस्य प्रत्यक्षस्यापि लक्षणेन योगं दर्शयन्नाह **सदिति** । **इन्द्रियाणामि**ति व्यक्तिविवक्षया बहुवचनम् । चक्षुरिन्द्रियापेक्षया ग्रन्थस्यास्य योजनायां तु इन्द्रियस्य नायनरश्म्यवयविन इन्द्रियस्यानु[4]मानसिद्धस्य संभारदर्शेन संयोगे संबन्धे सत्यस्य विकल्पस्य नीतोपनित्यात्मनो भावादिति ।

---

१. S प्रतिरत्र त्रुटितः ।

"यद्वेन्द्रियं प्रमाण(णं) स्यात्तस्य चार्थेन संगतिः" [श्लोकवा० ४.६०] इत्यादिवचनात् स्वाभिमानात्प्रत्यक्षत्वेनेन्द्रियमुदाहरणीकृतं परेण । न पुनः प्रतिपाद्यप्रतिपादकयोर्बुद्धिसाम्यविषयो दृष्टान्तो भवितुमर्हति । बौद्धस्यै[5]वमनिष्टेर्बाधकाभिधानाच्चेति ।

**प्रथममिती**[२५.१३]त्यत्र च्छेदः सुबोध एव। **आद्यमि**[२५.१२]त्येतद्व्याचक्षाण आह **आदौ** [२५.१४] इति । कस्मादा[द]वित्याकांक्षायां आह **विकल्पप्रवृत्तेरि**[२५.१४]ति । **आदौ भवमिति** स्वर्थ[ः] यस्यार्थस्येत्यादिना स्वलक्षणेनासाधारणस्यैवोपलक्षणाद् **असाधारणविषयं स्वलक्षणमि**ति व्याचष्टे । **इतरयो**-[२५.१६]र्विधिप्रतिषेध[6]विकल्पयोः । उक्तमेवार्थं **तथाही**[२५.१७]त्यादिनोपपादयति ।

**असंकीर्णरूपे**[२५.२५] [अ]परामिश्र(मृष्ट)स्वभावे ।

ननु च तस्यासंकीर्णरूपता [न] स्वतः किं स्वभावांशसद्भावात् । तत्कथमेवमभिधीयत इत्याशंक्य कारणमाह **तथाही**[२५.२६]त्यादि। **अन्यथा** [२५.२८] तस्य पररूपमिश्रताप्रकारेण। **स एवा भावांशः** [२५.२८] पराभावो **न सिद्ध्येत्** परात्मव[7]दिति भावः । अत्रैवाभ्युच्चयहेतुमाह **न चेति** [२५.२८] । **सा** [२६.१] संकीर्णरूपता कथं न युक्तिमतीत्याह **स्वहेतुबले**[२६.२]ति । **स्वहेतुबलायातस्य** तद्धेतुभावेन विशेषणम् । योगपरिवर्जनं तस्यायोगात् **तेन** वस्तुनेति सामर्थ्यात् ।

ननु तेन तस्य संकीर्णरूपस्य विनाश[ने] पराभावेन सर्वेषामेव भावानामुदयक्षणादूर्ध्वमभावादभावैक[8]रसं जगत् स्यादिति प्रसंजयितुं युक्तं न भू(तु) **तेन संकीर्णरूपविनाशेन**[1] **वरं स्वहेतोरेवासंकीर्णरूपाणामुदयोऽस्त्वि**[२६.४]ति । सत्यम् । यथाश्रुति(ते) स्यादेष दोषः। केवलमस्य तात्पर्यार्थबोधे यत्नः करणीयः । इह खलु भावानां क्षणभङ्गित्वेपि सदृशापरापरक्षणोदयाद्वस्तुसन्तानविषया प्रतीतिरस्ति न स्वभावविष[16a]-[1]यैव । अतएव तत्त्ववार्मतथ( ? )यामुपप्लवतोत्पद्यते । उदयोत्तरकालमव्यवधानेन वस्तुविषया च प्रतीतिः कथमुपपद्येत यदि स एवाभावः पूर्वसिद्धं संकीर्णरूपं विनाश्यादन्यसं(विनाश्यात्यदसं)कीर्णरूपमुत्पादयेत् । सति चैवं वरं स्वहेतोरेव तथाविधानामुदयोऽस्त्वित्युच्यत इति । हेतुत्वेनार्थक्रियाकारित्वेन वस्तुरूपत्वादभाव[2]रूपतैव हीयेतेत्येतदुपेक्षे-(क्ष्यै)व चैतदुक्तं द्रष्टव्यम् ।

प्रथमं संकीर्णरूपाणामुत्पादोभ्युपेयते पश्चादसंकीर्णरूपाणामुदयमुपगन्तुम्—का पुनरत्र हानिरित्याशंक्याह **किमि**[२६.५]त्यादि । कश्चित्किल परिव्राडशुचौ पतितं

---

१. °विनाशने च वरं–S

मोदकं करेण गृह्णन्केनचित्सोत्प्रासं पृष्टः 'किमशुचेर्मोदकमुद्गृह्णासि' इति। स एवं पृष्टस्तं प्रत्य[3]वादीत् 'प्रक्षाल्यो(ल्या)न्नैव त्यक्षा(क्ष्या)मि' इति। सोऽयं **परिव्राजको(क)मोदकं-(क)ग्रहणार्थो न्याः यस्तदुपगमेन किम्** [२६.६]। यथा च तत्र तन्मतम् 'अत्रैव-त्यक्तव्य एवायं' तदा किमशुचिम्रक्षितस्यान्नस्य ग्रहणेन, वरमयं पूर्वावस्थाने नै(ए)वास्तु इत्युपालम्भस्तथात्रापि। यदि स्वभावत एवासंकीर्णरूपाणां पश्चादुत्पादोऽभ्युपेतव्यो [4]वरं प्रथमत एव तथाभूतानामुदयोऽभ्युपगम्यतामित्यभिप्रायः। ततस्तथाविधो(ध)स्य प्रमाणप्रसिद्धौ चायमुपालम्भाभिप्रायो द्रष्टव्यः। **तस्मादि**[२६.६]त्यादिना प्रकृतोपसंहारः।

**प्रत्यक्षबलेन** [२६.१३] इत्यस्य तात्पर्यार्थं दर्शयन्नाह—**यदि तु** [२६.१३] इति। **यदिः** संभावयति **तु**र्भिनत्ति। **व्यवच्छेदविषया** [२६.१४] व्यवच्छिन्नरूपविष[5]याऽतद्रूपपरावृत्तरूपविषयेति यावत्। तथा सत्य**पि स्मृतिर्न स्यात्**। व्याप्तिग्राहकप्रमाणानधिगतस्य विशिष्टदेशादिवर्तितदसाधारणरूपस्य ग्रहणादिति भावः।

'अन्यरूपमिदं न भवति' इत्य(ती)यमभावप्रतीतिः केन प्रमाणेनेष्टा येनास्याः प्रामाण्यमाचार्येण निवार्यत इत्याशंक्याचार्यस्याभिप्रायं [6]परिस्फुटयन्नाह—**नाभावे**[२६.२०]ति। कस्मात्पुनरेतत्प्रतीतिजनकत्वेनान्यद[भा]वाख्यं प्रमाणं न भवति, एषा च तत्फलमित्याह **नही**[२६.२०]ति। आक्रियते अध्यवसीयत इति **आकारो** [२६.२१] विशेषो व्यावृत्तिरेव। किंभूत इत्याह—**पाटवे**[२६.२२]ति। **पाटवं** तीक्ष्णता बुद्धेरिति प्रकरणात्। **आदि**शब्दात् प्रत्यासत्तितारतम्यादेर्ग्रहणम्। पाटवा[7]दिप्रत्ययान्तरं स्वनिश्चया[या]पेक्षत इति तत्सापेक्ष उक्तः। एतदेवोपपादयन्नाह **नही**[२६.२२]ति।

**अनाधिगमादिति** [२७.१०] वस्तुनो विशेषणत्वेनाग्रहणादिति द्रष्टव्यम्। न तु सर्वथा[ऽ]ग्राह एव वाच्यः। अयःशलाकाकल्पस्य स्वतन्त्रस्य तेन ग्रहणस्याभिमतत्वात्। अ(न्य)था "निर्विकल्पकबोधेन द्व्यात्मकस्यापि वस्तुनो ग्रहणम्।" (श्लोकवा० प्र. ११८) इत्यादि विरुध्येत। इन्द्रियसम्बधाधीनालोचनाज्ञानोत्पत्तिश्च कथमनिष्टमात्रेण निवर्त्येते(निवर्त्स्यते)ति। **पुनर**[२७.१४]प्रथमे। **वर्ण्यत** [२७.१६] इति वदन्प्रमाणाप्रसिद्धतां दर्शयति। प्रख्यानं प्रकाशनं प्रतिभासनं प्रख्या। **तै[मि]रिकादिज्ञानस्येव प्रख्या** [२७.१७]यस्य स तथोक्तः। अत एव तत्सदृश इत्यर्थः।

अथ मा भूत्सामान्यमर्थक्रियासाधनं व्यक्तिस्तावत्तत्साधनीभवति। [10b] [1]तदध्यवसायितयैव च विधिविकल्पः प्रमाणं किं न भवतीत्याशंक्य **न तत्र प्रामाण्यमिति** [२७.२४] दूरस्थेन सम्बन्धः कार्यः। **तस्य** [२७.२३] विधेर्विकल्पस्येति प्रस्तावात्।

कथमप्रामाण्यमित्याशंक्यं योज्यम्। **तस्य** निर्विकल्पकप्रत्यक्षविषयस्य निर्विकल्पकज्ञानेनाधिगमादिति। **चो** [२७.२३] व्यक्तमित्यस्मिन्नर्थे । न मयार्थक्रियासाधननिर्विकल्पप्रत्यक्षविषयाध्यवसातृत्वं [2]तस्योच्यते, येन त्वयैवमुच्यत इत्याह **ततः परमि**[२७.१९]-त्यादि। **चो** [२७.२१] यस्मादर्थे। ततोयमर्थः—यस्मादेवमुच्यते पूर्वपक्षवादिनेत्यर्थात् । एवमभिधानेऽपि कथं तदध्यवसाय उक्तो भवतीत्याशंक्याह **तत्रेति** [२७.२१]।

जातिमतिरिक्तामधिगच्छतोऽस्य प्रामाण्यं भविष्यतीत्याशंक्योक्तमेवार्थमधिकविधानार्थमनुवदन्नाह **जातेस्त्विति** [२७.२४]। **अपिः** [२७.२५]अक्षमायाम्। तस्या[3] अर्थक्रियासाधनत्वाभावेनानर्थत्वाद्, अर्थक्रियासाधनस्यैव चार्थत्वात् । अपूर्वार्थविज्ञानत्वस्य प्रमाणलक्षणस्याभावादभिप्रेत्य **न प्रामाण्य**मित्युक्तम्।

अनेन यः परेण विधिविकल्पस्य "तत्रापूर्वार्थविज्ञानम्" इत्यादिना सामान्येन प्रमाणलक्षणयोगो दर्शितः स नास्तीति दर्शितम्। योपि "सत्संप्रयोग" इत्यादिना [4]विशेषेण प्रत्यक्षलक्षणयोगो दर्शितः सोऽपि नास्तीति दर्शयन्नाह **अत एवेति** [२७.२५]। **अतएव**—जातेरर्थक्रियासाधनत्वाभावेनानर्थत्वादेव । **प्रत्यक्षतापि** अस्य विकल्पस्य **असंभविनी**। कथं न संभवतीति आह—**अर्थक्रिये**[२७.२५]ति। तेन **सहेन्द्रियाणां** [२६.२६] यः **संप्रयोगः** सम्बन्धस्तस्या **अभावात्** [२७.२६]।

मीमांसकमतेन सदै(तै)व सहेन्द्रियं सम्बन्धं(बन्द्धुं) प्रभवति नाऽसतेत्यभिप्रायः। तदुक्तं कुमारिलेन—

"भावांशेनैव सम्बन्धो योग्यत्वादिन्द्रियस्य हि" (श्लोकवा. प्र. १८) इति।

[5]**अस्य**[२८.१३]अर्थक्रियासाधनस्य वि(साधनवि)षयस्य ज्ञानस्य **अर्थक्रियासाधने** [२८.१४] वस्तुनि **प्रवृत्त्यङ्गत्वादु**पदर्शितार्थप्रापकत्वादिति यावत्। **नेतरत् प्रमाणं ब्रवीती** [२८.१३]ति संबन्धनीयम् । **इतराद**[२२.८]त्यर्थक्रियासाधनविषयं यन्न भव[6]तीति । **तद(द्)विपरीतत्वाद**[२८.१४]र्थक्रियासाधने प्रवृत्त्यनङ्गत्वात्। एतदेव समर्थयन्नाह **तथाहीति** [२८.१४]। **अप्रतारक**[२८.१५]मुपदर्शितार्थप्रापकमित्यर्थः। **लोकेपी**[२८.१५]त्यत्रच्छेदो व्यक्त एव। **लोके** व्यवहर्तरि जने। **अपि** व्यक्तमेतदित्यस्मिन्नर्थे।

ननु यदि नाम तदर्थक्रियासाधने प्रवर्तकं न भवति तथापि तत् प्रापकत्वेनाविसंवाद[7]कतया प्रमाणं किं न भवतीत्याशंक्याह **यच्चे**[२८.१६]ति। **अनधिगच्छन्निति** (गँच्छदि)ति [२८.१६]। अत्र हेतौ शतुर्विधानात् प्रवर्तते। अनधिगमादिति कारणमुक्तम्।

---

१. तस्य S।

**तत्साध्यतया**[२८.२२] सामान्यजन्मजन्य(सामान्यजन्य)तयोपगतामभिन्नज्ञानाभिधानलक्षणाम् । "समानप्रसवात्मिका जातिः" इति वचनात् । **व्यक्तिसाध्याम्** [२८.२३] इति व्यक्तिसाध्यतयोपगतामिति प्रत्येतव्यम् । अनेन यैवार्थक्रिया[s] युष्माभिर्व्यक्तिसाध्यतयोपगम्यते सैव तत्साध्या भविष्यतीत्यपि पक्षः प्रतिक्षिप्तः । उभयत्रापि व्यक्तेरेवान्वयव्यतिरेकाभ्यां साक्षात्पारंपर्येण च तत्र सामर्थ्यस्य प्रमाणेनावगतत्वादित्यभिप्रेतम् ।

ननु कस्मिन्काले करोतीति प्रश्ने "**स्वलक्षणप्रतिपत्तेरूर्ध्वम्**" [२८.२३] इत्युक्तम् युक्तम् । न तु [1]कीदृश इति प्रश्ने इति चेत् । सत्यम् केवलं **स्वलक्षण**-[17a][1]**प्रतिपत्तेः**[२८.२४] उत्तरकालं प्रतीयमानत्वाद् **ऊर्ध्व**मुत्तरकालमित्युक्तम् उपचारत इति बोद्धव्यम् । तत्प्रतिपत्तेरूर्ध्वं प्रतीयमानत्वमेव दर्शयन्नाह **तत्सामर्थ्येति** [२८.२५] । यद्वा कीदृशमिति प्रश्नयित्वैव **तत्सामर्थ्येति** योज्यम् । तत्सामर्थ्योत्पन्नविकल्पग्राह्यत्वमपि किं स्वलक्षणप्रतिपत्तेरूर्ध्वमेव किं वा कियत्कालपरि(र्य)वसाने इत्यपेक्षायामुक्तम् तत्प्रतिपत्ते[2]रूर्ध्वमिति **एवं ब्रवीति** [२८.२७] । किंविशिष्टं सामान्य तथातया प्र(ब्र)वीतीति । पराभिप्रायेणाप्येवमभिधानं किमर्थमित्याह **दर्शनेति** [२८.२७] । ननु किं सामान्यमात्रमेवार्थक्रियासाधनं न भवति, येन **परै**स्तथाऽ**भिधानादेवं ब्रवीती**त्युच्यत इत्याशंक्याभ्युपगममेवोत्तरं रचयन्नाह– **सर्वमेवेति** [२८.२९] ।

यद्येवमनुमानविकल्पग्राह्यस्यापि सामान्यस्य तथात्वा[3]त् तद्विषयस्यानुमानविकल्पस्यापि प्रामाण्यन्न स्यात् । ततश्च शब्दप्रवेशेऽक्षितारानिर्गमवृत्तान्तो जात इत्याशंक्याह **यत्त्विति** [२९.१] । तुर्विशेषार्थः । यत् **सामान्यमर्थक्रियानुपकल्पयति** [२९.३] । कीदृशमित्यपेक्षायामाह–**अनधिगतेति** [२९.२] । **अनधिगतं** पूर्वज्ञानेनापरिच्छिन्नं **यदर्थक्रियासाधनं** तद्विषय आश्रयत्वा[4]ध्यवसायेन यस्य तत्तथा । हेतुभावेन चैतद्विशेषणम् । अनेन च विधिविकल्पावभासिसामान्यस्यार्थक्रियासाधनविषयत्वेपि नानधिगतार्थक्रियासाधनविषयत्वमिति न तद्विषयस्य प्रामाण्यमिति दर्शितम् । तद्विषयत्वमेवास्य कुत इत्याह **सम्बद्धेति** [२९.२] यदर्थक्रियायां सम्बद्धं क(का)रणभावेन तत्संबन्धा[5]त्तदारूढत्वात्तन्निष्ठत्वादिति यावत् । सम्बद्धसम्बन्ध(द्ध)त्वमेवेदृशमस्य क इत्यपेक्षायां **कारणे**[२९.१]त्यादि योज्यम् । तथाभूतलिङ्गनिश्चयद्वारेण प्रतीयमानत्वात् **कारणव्यापकसंबद्धलिङ्गनिश्चयद्वारायातम्** [२९.१] उक्तं वेदितव्यम् । कार्यस्य व्याप्यञ्च तथाऽवसीयमानं स्वकारणं व्यापकं चातद्रूपपरावृत्तं [6]मत्यापयतीति भावः । अनेन सर्वेणैतदुक्तं अनुमानविकल्पेन हि परमार्थतोऽर्थक्रियासाधनमेव वह्न्यादि विशिष्टदेशाद्य-

१. कीदृशं S

च्छेदेन । एकतो व्यावृत्त्योल्लिख्यमानं सामान्यं, नान्यदतस्तदध्यवसायिनस्तस्य प्रामाण्यमुपपद्यते ।

ननु दर्शनोत्तरकालभाविनो विकल्पस्य विशिष्टदेशादितया गृहीत[7]स्यैवार्थक्रियासाधनस्य तथाध्यवसायादिति विधिविकल्पग्राह्यमपि सामान्यमनधिगतार्थक्रियासाधनविषयं सत् स्वग्राहिणं विकल्पं प्रामाण्येन योजयिष्यतीत्याह–**इदमिति**[२९.४] । **तुः** पूर्वाद्वैधर्म्यमस्य द्योतयति ।

**उदाह्रियते** [२९.९] । उदाहरणीक्रियते । प्रकृतपरित्यागे किं कारणमिति चाशयः । **निराकर्तुमु**[२९.१०]दाह्रियत इति संबन्धनीय[8]म् ।

दृष्टान्तमेव विघटयितुं **कां पुनरि**[२९.१०]त्यादिनोपक्रमते । परस्परं व्यावृत्त्या हि व्यक्तयो भिन्नमेव ज्ञानमुपजनयेयुः । कथं पुनरभिन्नां धियमभिधानं चादधतीत्याशंक्याह–**एवम्**[२९.२३] इति । **तदेकं** वाहदोहादिकार्यं तत्र **प्रतिनियमः** । प्रतिनियतत्वमवश्यं प्राग्भावित्वं **लक्षणं** [२९.२३] यस्या सा तथोक्ता । उपकर्तव्यमभिव(व्य)क्तव्यं न तु जनयितव्यमित्यवसे[17b][1]यम् । नित्यतया तस्य परेण तथात्वानभ्युपगमात् । पराभ्युपगमानपेक्षायां चास्य दृष्टान्तत्वानुपपत्तेः । तस्माद्विवक्षिता**दपरं सामान्यं** [२९.२४] तदेकसामान्यं व्यंजकत्वाख्यम् । **अन्यथा** [२९.२४] तदपरसामान्ययोगेन व्यंजकत्वप्रकारेण । तदभिव्यक्तयेपि तदपरं सामान्यं तदेकसामान्याभिव्यंजकाख्यं सामान्याभिव्यञ्जकत्वाख्यमपरमुपेयम् । [2]तथा तदभिव्यक्तयेप्यन्यदित्यन**वस्थाया** अपर्यवसानस्य **प्रसंगात्** [२९.२४] प्राप्तेर्हेतोः । साधयिष्यन्ति विवक्षितसामान्ययोगमन्तरेण स्वभावत एवेति प्रकरणादवसेयम् ।

ननु किं प्रमाणपरिदृष्टार्थापलापे प्रयतिर्भवतां येनैवमभिधीयत इत्याह **किम्**[२९.६] इति । अथ किमज्ञायमानप्रमाणकमसदवश्यं भवति येन सर्वथा तदर्थक्रियो[3]च्छेदः क्रियत इत्याह **प्रमाणबाधितेन चे**[२९.२६]ति ।

प्रमाणबाधामेव मात्रया दर्शयितुं **तथाही**[२९.२७]त्यादिनोपक्रमते **नोपलक्षयाम** [२९-२८] इति वदन्दृश्यानुपलम्भं बाधकं दर्शयति । **अविभावनं**[३०.२] निर्लुठितगर्भवद्विभागेनाप्रतिपत्तिः । रूपरूपिणोरनन्यत्वेन भेदे रूपिण एम भेदापत्तेरित्यभिप्रेत्याह **पदार्थ[4]द्वयोपगमप्रसंगादिति** [३०.५] । **आदि**[३०.५]शब्दाच्छब्दज्ञानपरिग्रहः ।

ननु भिन्नसामान्ययोगाद्भेदो भावानां, न पुनः प्रतिभासभेदादित्याशंक्य यद्यप्यत्र शतं दोषाः सम्भवन्ति, तथापि ग्रन्थ[va]स्तिरभयादेकमेव दूषणं दत्ते **सामान्यस्येति**

[३०.७]। एवं मन्यते यदि सामान्यभेदाद्भावभेदस्तदा गवाश्वस्येव गोत्वा[5]श्वत्वयोरपि भेदस्तदपरसामान्यभेदाद्भवेदिति सामान्यस्याप्यपरसामान्यप्रसक्तेरिति। अस्त्वेव का क्षतिरित्याह—**निःसामान्यस्येति** [३०.७]। **अस्ये**[३०.७]ति सामान्यस्य।

**एतेनेति** [३०.१०] 'न तथाविधमुपलक्षयाम' इत्यादिनोपदर्शितेन दृश्यानुपलम्भेन। कथं पुनर्दृश्यानुपलम्भः सिद्धो येन तन्निराकृतमे[6]तत् स्यात् **यत** [३०.१५] इति। **तदाऽसिद्धमि**[३०.१५]त्यन्व(नु)गमापेक्षत्वं बुद्धेरिति प्रकरणाद्द्रष्टव्यम्। **तत्र** [३०.१६] इन्द्रियबुद्धाव**नुपलक्षणाद्** [३०.१६] अप्रतिभासनात्। अस्पष्टनीलाद्याकाराः सा-(रा सा)मान्यबुद्धिरभिमतं संवेद्यत इति चात्राभिप्रेतम्। व्यक्तिरूपमपास्यान्यस्येष्ट(स्पष्ट)-मेवरूपमुपगतम्। तत्रावभासते तदेव सामान्य[7]मस्माकमित्याशङ्क्य तदपि नास्तीत्यभिप्रायवानाह **स्पष्टस्यापी**[३०.१७]ति। अनुपलक्षणादित्यभिसम्बद्ध्यते। संप्रति द्वितीयस्य स्पष्टरूपस्योपलक्षणमभ्युपगम्य तस्यानुगामिरूपत्वं प्रतिषेधयन्नाह। **तद्भावे चे** [३०.१७]-ति। **चो** विशेषार्थाभिधानाभ्युपगमे। अनेन किं तद् द्वितीयं स्पष्टं रूपं शाबलेयबाहुलेय-व्यक्तिद्वयान्तरालं न व्याप्नोति[8] किं व्याप्नोतीति विकल्पयोर्बुद्धिस्थीकृतयोर्मध्येऽव्यापनपक्षे दोषं दर्शयति। **व्यक्तिद्वयस्यान्तरालमवकाशमव्याप्नुवतः** [३०.१७] स्वसत्तयानभिसम्बन्ध(ध्न)तः। **कथं तदनुगमो** [३०.१८]व्यक्त्यन्तरानुगमो व्यक्त्यन्तरव्यापित्वं निष्क्रियत्वेन गत्वा व्यापारासंभवात्तथात्वेपि पूर्वव्यक्तिवियोगानुषङ्गात्। न च तत्साङ्गमिति च भावः।

द्वितीय [18a] [1]विकल्पेप्याह **व्याप्तौ चे**[३०.१८]ति। **तत्र**[३०.१९] अन्तराले।

न तस्य तत्र व्यक्तं रूपमस्ति,व्यञ्जकाभावात् तेनानुपलक्षणमित्याह **न ही**[३०.१९]ति। अवश्यं हि भूतले तत् कयाचिद् व्यक्तमिति न तस्याव्यक्तरूपसंभव इति भावः। वार्तिककारस्याप्ययमर्थोऽभिमत इति प्रतिपादयन्नाह—**तथा चे**[३०.२०]ति। प्रकृतोपयोगिभाग एव पठितुं युज्यत इति वार्तिकस्य पादत्र[2]यमेवायमपठत्। उक्तयोपपत्त्या व्यक्तैकरूपसंभवे चेद-मन्यदा(त्रा)पीति निदर्शयन्नाह—**एकत्रापीति** [३०.२३]। **चो** वक्तव्यान्तरसमुच्चये। सर्वसर्वगतवादिनमधिकृत्योक्तं **सकलेति** [३०.२३]। स्वाश्रयसर्वगतवादिनं तु प्रति **स्वाश्रये**[३०.२४]ति। **नाम**[३०.२५]शब्दोऽसम्भावनायाम्। इह **एकत्रैवाश्रय** इत्यने[3]नाप्यंशेनायं न दृष्टान्तः किन्तु यथा क्षणिकत्वस्य निर्विकल्पकबोधेन दृष्टस्यापि न दर्शनावसायस्तथा सकलस्वाश्रयरूपप्रतिभासेपि न दर्शनावसाय इत्यनेनैव। अस्तु तर्हि सर्वभुवनवर्तिरूपस्य निश्चयः। सर्वस्वाश्रयवर्तिनो वा का

क्षतिरित्याह **तत** [३०.२७] इति । **तत**स्तादृशरूपनिश्चयात्। **तच्च**[३१.१]च्छब्दे[4]न सामान्यं प्रत्ययमृप्यते। **सहचारि**शब्देन च संबद्धं विवक्षितम्। तेनायमर्थस्तत्सहचारिणः सामान्यसंबद्धस्य तत्समवायविषयस्येति यावदिति । एतच्च नैयायिकादीन्प्रत्यभिहितम् ।

मीमांसकं प्रत्याह—**तदभिन्नस्वभावस्य चे**[३१.१]**ति** ।

किमिन्द्रियबुद्धौ सामान्यस्य प्रतिभास आहोस्विद्विकल्पबुद्धा[5]वनुमानात्मिकायामिति विकल्पयोरन्तर्निहितयोरेकं विकल्पं निराकृत्यापरं निराकर्तुमाह **अथे** [३१.३]ति । **आदि**शब्दाद् शब्दवा(शब्दादि)परिग्रहः । प्राक्तनमे**वाभिप्रेत्ये**[२०.१५]ति पदमत्राभिसंबध्यते। ततः **अनुमानादिबुद्धिमिति** द्वितीयया निर्देशः। यथाऽ**स्पष्टो व्यक्त्याकारो**ऽर्थाकारो वा **लक्ष्यमाणः** सम्वेद्य[6]मानोस्ति न तथा **स्वलक्षणप्रतिभासो** व्यक्त्याकारो लक्ष्यमाणोस्तीति योज्यम्। कस्मादेवमित्याह—**तदभाव** [३१.५] इति तस्य स्वलक्षणस्याभावे **तासां** [३१.६] सामान्यबुद्धीनाम्। अत्रैवाभ्युच्चयहेतुमाह-**आकारान्तरेण चे**[३१.६]ति । **स्वज्ञाने** इन्द्रियजन्मनि ज्ञाने । स्पष्टास्पष्टरूपद्वययोगि स्वलक्षणं तेनेन्द्रि[7]यज्ञाने स्पष्टेन रूपेण प्रतिभात्यन्यत्र पुनरस्पष्टेनेत्याह **अनेके**-[३१.६]ति । **अतिप्रसङ्गादि**[३१.७]ति घट प्रतिभासेपि पटप्रतिभासकल्पना स्यात् । घटपटलक्षणरूपद्वय(या)योगित्वात्पटस्येत्यादेरुत्तरस्यात्रापि सुवचत्वादित्यभिसन्धिः । **तस्मादि**[३१.७]त्यादिनोपसंहरति । **इयमभिन्नाभासा** सामान्याकारा स्वलक्षणादुद्भवोऽस्या इति **स्वलक्षणोद्भवा सती भिन्नार्थग्राहिणी** व्यावृत्तवस्तुग्राहिणी **न प्रतिभाति** । **किं त्वनादी**[३१.९]ति ।

'दृढत्वात्सर्वदा बुद्धेरि'ति ब्रुवता यदि बुद्धेर्दार्ढ्यमभिहितं तदपि निरूपयन्नाह—**दृढत्वञ्चे**[३१.१०]**ति** । सहेतुकविनाशवादिपक्षे **क्षणिकत्वाभ्युपगमादि**-[३१.१०]त्याशुतरविनाशित्वाभ्युपगमादिति वेदितव्यम् । **अस्याः** [३१.११] सामान्यबुद्धेः । **तद्** [३१.१०] अबाध्यमानत्वम् ।

[18b][1]स्याच्छब्दोऽनेकान्तवचनो नियतोस्ति तेन **स्याद्वादो**[३१.१२]ऽनेकान्तवाद, यद्वा स्यादक्षणिकः स्यात्क्षणिक इत्यादि [३१.१२] स्यादिति वादः **स्याद्वाद**स्तस्य **भंगो** निराकरणं तस्मादेवावधारणीयो बाधक इति प्रकृतत्वात् । स्याद्वादभङ्गमधीत्येति कर्मणि ल्यब्लोपे चेयं पञ्चमी द्रष्टव्या ।

**एवं मन्यत** [२९-२२] इत्यादिना यदुपक्रान्तं तदुपसंहरन्नाह [2]**तस्मादि**-[३१.१३]त्यादि । **यस्तु** [३१.१८] **मिथ्यात्वे**[1]**दोष**[३२.१] इति सम्बन्धः ।

१. 'मिथ्यात्वप्रसङ्गदोषः'–S

उक्तः [३२.१] परेणेत्यर्थात् । किं कृत्वाऽसावुक्त इत्याह **पूर्वपक्षयित्वेति** [३१.१९] । **सामान्यम्** [३१.२२]इत्यादि**र्भविष्यती**[३१.२२]त्यन्तः पूर्वपक्षग्रन्थः । अस्यैव पूर्वपक्षस्याकारम् **इति**[३०-२३]शब्दो दर्शयति । **तस्य**[३१.१९] सामान्यस्य **वृत्ते**[३१.१९]र्वर्तनस्य । **नियामकं** व्यवच्छेदकम् । सावलेयादिषु कर्कादिसाधारणे परस्परं भिन्न[3]त्वेपि गोत्वमेव वर्तते नाश्वत्वमित्येतन्निमित्तम् । **यथैक**स्मात्सावलेयात्कर्को भिन्नस्तथा बाहुलेयोपि तत**स्तुल्येपि भिन्नत्वे** [३१.२१] भेदे **केषुचित्** [३१.२१] सावलेयादिषु वृत्तिर्गोत्वस्य **अवृत्तिता**ऽविद्यमानवृत्तित्वमविद्यमानत्वमेवाश्वत्वस्यादिशब्दसंगृहीतस्य । कस्य केषुचिद्वृत्त्यवृत्तितेति अपेक्षायामुक्तं[1] **गोत्वादेरि**[३१.२२]ति । **अनिमित्ते**[2]**ति** काकाक्षिन्यायेनोभयत्रापि वृत्त्यवृत्तितायां बुद्धावपि संबध्यते । तेनायमर्थो यथा गोत्वादेः केषुचिद्वृत्त्यवृत्तिताऽनिमित्तापि नियामकसामान्यरहिताऽपि **तथा** [३१.२२] **तद्बुद्धि**[३१.२२]रभिन्नाभासा धीरनिमित्ता जनकगोत्वसामान्यशून्याऽनादितथाविधवासनासामर्थ्यात् केषु[3]चिदेव **भविष्यती**[३१.२२]ति । **तेन** विषयं विना कुतोत्प(विना बुद्ध्युत्प)त्त्यभावेन **तत्**[३१.२५]सामान्यं **ध्रुवं** नित्य**मिच्छंति** । यद्वा **तेन** कारणेन **तत्सामान्यमिच्छन्ति ध्रुवं** निश्चितम् । **तेनाभिन्ने**न विषयेण विना अनुगमात्मिकानां बुद्धीनामुत्पादे को दोष इत्याह । **ता हीति** [३१.२६] । **ता** अभिन्नाभासा सामान्यबुद्धयः । अनेन सामान्याभावे तथाभूतबुद्ध्युत्पादे बाधकप्रमाणमुक्तं परेण । असावेव वन्दीकृतमर्थं प्रतिकुर्वन्नाह— **न त्विति** [३१.२७] । **वृत्ति**र्नियतेति प्रकरणात् । न **दुष्यती**[३१.२७]ति ब्रुवतोऽयं भावस्तदन्तरेण तथाविधबुद्ध्युत्पादे मिथ्यात्वदोषोस्ति बाधकः । **सामान्यस्य** [३१.२७]तु सामान्यान्तरमन्तरेण केषुचिदेव वृत्तौ किमस्ति बाधकं येन तत्रान्य[1]सामान्यमभ्यनुजानामीति । **असौ** [३२.१] मिथ्यात्वप्रसक्तिदोषो **न तथागत**सिद्धान्तनीति**परिशुद्धबुद्धीन**[३२.२]स्मदादीन् **बाधते** व्यथयति । कस्मादित्याह **सामान्ये**[३२.२]ति । यद्यपि पूर्ववत् सामान्यबुद्धेर्मिथ्यात्वव्यवस्थानिबन्धनं प्रमाणं मान्यया दर्शितं तथापि बहुमुखमेवास्या मिथ्यात्वव्यवस्थापकं प्रमाणमस्तीति प्रतिपादयितुं **तथाही**[३२.३]त्यादिनो[3]पक्रमते । **सास्ना** [३२.४] गलकम्बलः । **आदि**शब्दात्ककुदादिपरिग्रहः । [4]**नासाधारणं** सामान्यरूपताहानिप्रसङ्गात् । नोदयव्ययप्रसङ्गयोगि नित्यत्वाभावप्रसङ्गभावादिति बुद्धिस्थम् । **इतिः** [३२.८] अनन्तरोक्तं प्रत्यक्षमुपैति । कुतो न युक्तमित्याह **विरुद्धे**[३२.९]ति । अमुमर्थं सातिरेकं कारिकाभिर्वक्तुं पर

१. 'अनिमित्ता '–S   २. न चास्ति–S

मुखेनाह **ने**( °खेनाह आहचे )त्यादि । **नाश** इति व्यक्ते[19a][1]रिति-प्रकरणाद् द्रष्टव्यम् । **अजातता** [३२.१०.] **केनेष्टे**[३२.११.]ति लिङ्गविपरिणामेन संबन्धनीयम् । **केन** [३२.११.] कारणेन । **तद्वद्** व्यक्तिवत् । **अनन्वयो** [३२.११.] व्यक्त्यन्तराननुगामित्वम् ।

ननु च "सामान्यान्यपि चैतानि नाशीन्याश्रयनाशत"[श्लोकवा. पृ. ३८०] इति वचनान्मीमांसकैर्व्यक्तिनाशे नाश इष्ट एवेति किमुच्यते व्यक्तिनाशेऽनाशः । केनेष्टे(ष्ट इ)ति प्रकृतं मीमांसकमतमिति । सत्यमेत[2]त् । केवलमेवंवक्तुरयमाशयः यद्येकं सामान्यं ततो भिन्नश्चाभिन्नश्च संगच्छते तदा व्यक्तिरूपेण व्ययते तद्व्यतिरिक्तेन च रूपेणानुवर्तेत इति स्यादपि यदि परं मनोमोदकोपयोगमात्रवदेतदिति । एतच्चाधस्ताद्यथावसरमिहैव प्रतिपादयिष्यते । अत एव च कैश्चिन्नैयायिकैर्नाशीनीत्युपलभ्यानीत्येतदर्थं[3] कुमारिलेनोक्तं व्याख्यातमिति ।

व्यक्तिजन्मनि जन्मानिष्टौ सामान्यस्य दूषणमिदमुपस्थितमिति दर्शयन्नाह—**व्यक्तौ**-[३२.१२.]त्यादि । जातिरिति वक्ष्यमाणापेक्षया स्त्रीलिङ्गेन निर्देशः । निष्क्रियत्वाज्जाते-रित्यभिप्रेत्य नागतेत्यभ्युपगमयति । **प्राग्**[३२.१३.] व्यक्त्युदयात्पूर्वम् । दृश्याया अनुपलब्धत्वादित्यभिप्रायेण च **नासीदित्यु**[4][३२.१३.]पगमयति । **चेदि**[३२.१२.]त्यत्रापि संबध्यते । तस्या व्यक्तेरुत्पद्यमानायां **देशो** दिश्यतेऽस्मिन्निति कृत्वाऽऽधार उक्तः । अनेनैतद्दर्शयति । तत्संबन्धोरु(?)न्धनेन वा प्रकारेण भवेत् स चैकोपि न भवतीति । **सा** जातिः **तया** व्यक्त्या **सङ्गता** संबद्धा **कथं** [३२.१३.] न कथञ्चित् । तज्जन्यजन्मनि सामान्यस्येष्यमाणे[5] तादात्म्यं तावदतिभवान्न(तावद् भेदान्न) युज्यते । तत्सम्बन्धमात्रमपि न संगच्छत इत्यभिप्रायोऽस्यैवं च वदितुर्बौद्धस्योऽन्यथा मीमांसकमते तादात्म्यादन्यस्य सम्बन्धस्यानिष्टेरागताश्रयान्तरादित्यादिद्वारा सम्बन्धमात्रनिषेधोऽनुपयुक्तः प्रसज्येत प्रस्तुतश्च तन्मतमिति । व्यक्तिनाशेऽविनाशित्वेष्टौ[6] च सामान्यस्ये(स्या)यं दोषः स्यादिति दर्शयन्नाह **व्यक्ति**(क्तीति)[३२.१४.] । निष्क्रियत्वादित्यभिप्रायेण **नागते**-[३२.१४.]त्याह । **तच्छून्ये**[३२.१४.] नष्टव्यक्तिरहिते दृश्यादर्शनाभिप्रायेण च **न स्थिते**त्याह । **केति** [३२.१५.] काकाक्षि(काका) प्रश्नयुक्तः कथं(कथ)नाऽशक्यत्वं प्रतिपादयति । जातेर्व्यक्त्यात्मकत्वोपगमे तदुदयव्यययोस्तदन्वय[7]व्ययौ न स्याताम् । सत्याञ्च तदिष्टावयमयञ्च दोष इति प्रतिपाद्य तत्तदिष्टौ च जातेस्तादात्म्योपगम एव जघन्य इति प्रतिपादयन्नाह **व्यक्ते**[३२.१६.]रित्यादि । सा व्यक्तिरात्मा स्वभावो यस्य तद्भावः । **अनुपप्लुतं** [३२.१७.] बाधादिभिरप्रापितास्वास्थ्यं चेतो

येषां तेषाम्। कथमिष्टम्। क्षेपे चायं किमः प्रयोगः। उपप्लुतचेत[6]सामेव मीमांसकानामिदमिष्टमिति सामर्थ्याद्दर्शितम्। प्रमाणासि(मासि)द्धौ प्रकृष्टं कारकं प्रमाणमुच्यतेऽविशेषाधायित्वे च साधकतमत्वाभावात्कथमस्य तत्त्वं स्यादित्याशयः।

नैवे[३२.२७.]ति व्याचक्षाणश्च[३२.२७.]कारमवधारणे दर्शयति। **लिङ्गग्रहणान्तरकालभाविनो** [३२.२८.] विकल्पस्येति प्रकरणात्। तस्मिन्विकल्पे [19b] [1]प्रतिभासनात्तस्य सामान्यमिति प्रकाशितम्। संबद्धसंबन्धादित्यादिः पूर्वोक्तः प्रकारः। व्यक्तिस्वभावत्वे तस्य कथं तदकर्तृत्वमित्याह **तस्येति** [३३.३.]। **कल्पितं** विकल्पेन घटितं **रूपं** [३३.३] स्वभावो यस्य तस्य। **तदसंभवाद्** [३३.३.] रञ्जनाद्यर्थक्रियानुपपत्तेः। सर्वनित्यसाधारणदूषणमिह समुच्चिन्वन्नाह। **नचे**[३३.४.]ति। **अन्या 'चे** [३३.५]ति तदेकसाध्यतयोपगताऽभिन्नज्ञानाभिधानल[2]क्षणमवसेयम्। **इति**[३३.६.]रेवमर्थो **मन्यते** [३३.६.] चेतसि निधत्ते वार्त्तिककार इत्येवं ब्रुवाण इति चार्थाद् द्रष्टव्यम्।

अनधिगतार्थविषयं प्रमाणमिति प्रमाणलक्षणं परेण कारिकया दर्शितमिति दर्शयन्नाह **तत्रापूर्वेति**[३३.११.]। **अहमहमिकया** क्रिया **आहोपुरुषिका तया** [३३.१६.] करणभूतया। तत्स्वलक्षणमस्पष्टरूपतया अनुकरोतीति तदनुकारी[3]ति विवक्षितमिति प्रकटयन्नाह। **अस्पष्टनीलस्वलक्षणानुकारी** [३३.२७.] अस्पष्टनीलस्वलक्षणाभासमित्यर्थः। सर्व एव हि विकल्पोऽस्पष्टस्वलक्षणाभः। नीलादि पश्यतस्तु विकल्पयतो यः स्पष्टार्थप्रतिभासाभिमानः स तद्विकल्पसमसमयजन्मनो निर्विकल्पस्य प्रसादात्। यथा चैतत्तथोभे(चे) समीचीनमाचार्यो [4]विनिश्चयमिति( य इति ) तत एवा[व]गन्तव्यम्। कथं पुनरस्पष्टनीलस्वलक्षणानुकारि न तु निर्विकल्पवत्स्पष्टस्वलक्षणानुकारीत्याशंक्य योज्यम्— **साक्षाद**[३३.२७.]व्यवधानेन **अनुत्पत्ते**स्ततः स्वलक्षणादिति प्रकरणात्। यदि ततस्तन्नोत्पन्नं तर्हि तस्य नियतनीलाद्याकारपरिग्रहः कुतस्त्य इत्याशंक्य योज्यम्—**दर्शने**[३३.२७.]ति। दर्शने[5]नामुधेना(नानुभवेना)हितः **संस्कारो** [३३.२७.] वासना **तस्या 'वेध** [३३.२७.] आक्षेपस्तद्वशात्। **चो**[३३.२७.] व्यक्तमेतदित्यस्मिन्नर्थे )

ननु यत्तत्रावभासते तत् स्वलक्षणम्। येन स्पष्टनीलस्वलक्षणानुकारीत्युच्यत इत्याह **दृश्ये**[३३.२८.]ति। **दृश्यविकल्प्ययोरेकी**करणात्। दृश्यविकल्प्यावर्थावेकीकृत्यास्य प्रवृत्तेरित्यर्थः। दृश्यविकल्प्यैकीकरणं[6] च तस्य तथोत्पत्तेरेव द्रष्टव्यम्। तदवभासिनोऽबाह्यत्वादेव न परमसावनुकरोतीत्याशयः। **स** [३४.१.] विकल्पः। त पो(पा)नालम्बने कथं गृहीतग्राहित्वलक्षणं स्मृतित्वमित्याशंक्याह **तथाही**[३४.१.]ति।

१. वेति S। २. स्याचेव S।

स्मृतिरूपत्वमेवानुमानविकल्पस्य प्रतिपादयन्परः प्राह–**तथाही**[३४.११.]त्यादि। अग्नित्वादिना रूपेणानवच्छिन्न[7]त्वात् **अनग्निव्यावृत्तं वस्तुमात्रमि**त्याह। **महान-सः** सूपकारशाला। **आदि**[३४.१२]शब्दादयस्कारकुड्यादेर्ग्रहणम्। **प्राक्**[३४.१५] पूर्वं व्याप्तिग्रहणकाल इत्याकूतम्। **प्रदेशविशेषे** पर्वतादौ। **तद्वद्** [३४.१३.] अनुमानविकल्पवत्।

नन्वधिगतावधिगन्तुरप्यनुमानविकल्पस्य प्रामाण्यप्रदर्शनेनास्यापि तथाभूतस्य प्रामाण्यमावेदितमेवति किमनेनोक्ता[8]नतिशायिनोक्तेनापीत्याशंक्याह **एवं मन्यत** [३४.१४.] इति। पूर्वपक्षिणैतस्मिन्नुक्तेप्येवं ब्रुवाणो नियतमेवं वक्ष्यमाणकं **मन्यते** [३४.१४.] चेतसि निवेशयति। **यदि**[३४.१४.]त्यादिना मननीयमेव दर्शयति। **आदि**[३४.१५.]-शब्दात्कालस्य परिग्रहः। **साध्यधर्मिग्राहि** [३४.१७] पर्वतादिग्राहि। **दृष्टान्त-धर्मिगाहि** [३४.१७.] महानसादिधर्मिग्राहि। तत्र दृष्टान्तधर्मिग्राहिणा दर्शने[न] नैव [20a] पर्वतादिविशिष्टमनग्निना व्यावृत्तं वस्तु गृहीतम्। नापि तदाह न पर्व(नापि पर्व)-तादिसाध्यधर्मिग्राहिणान्वयाद्यवेदिनो(ना)पि। तथात्र विपत्ति( तथात्वेऽविप्रतिपत्ति )प्रसंगा-त्तद्विशिष्टमनग्निव्यावृत्तम् वस्तु गृहीतमितिदर्शनान्वया(दर्शनद्वया)नधिगतमुक्तम्। **अयोग-व्यवच्छेदेन** [३४.१८.] संबन्धव्युदा[ने]न। **तद्विपरीतत्वाद्**[३४.२०.] अनुमानविकल्पविपरीतत्वात्। तेन यथा(था)द[ृष्ट]स्यैव निश्चयनात्।

ननु **वस्त्वधिष्ठानत्वाद्**[३४.२३.]स्त्वालम्बनत्वादित्यभिप्रेतम्। तथा चानुमानासंग्रह इत्याह **वस्त्वधिष्ठानत्वं चे**[३४.२३.]ति। **चकार**स्तुशब्दस्यार्थे। प्रमाणस्य व्यापारः प्रापणम् तस्य विषयस्तमभिप्रेत्योच्यते। **नालम्बनलक्षणं** [३४.२५.] विषयमभिप्रेत्योच्यते इति सम्बन्धनीयम्। आलम्बनलक्षणं ग्राह्यरूपम्। उक्तादन्येन प्रकारेण **अन्यथा**ऽव्यापिनी सर्वप्रमाणासंग्राहिका। **विप्रकृष्टो** दे[3]शकाल-स्वभावैर्व्यवहितो विषयो यस्याः सा तथोक्ता।

**तत्रापी**[३५.१.]त्यादि प्रतिविधानम्। विकल्परूपस्यैव वस्तुनो धर्मित्वात्। तस्यैव च तत्प्रधानत्वाद्यनुपादानत्वसाध्यत्वात्। तत्रापि प्रमाणव्यवस्थायास्तदेव विकल्परूपं वस्त्वधिष्ठानमस्तीति समुदायार्थ। दर्शनविधिप्रतिषेधविकल्पानां दर्शनस्यैव [4]प्रामाण्यं नेतरयोरिति प्रकृतम्। उक्तञ्च 'तत्र तदाद्यमेव' [३५.११.] इत्यादिना। तत्कुतोऽस्य वस्त्वाश्रयेण प्रमाणव्यवस्थाप्रतिपादनस्यार्थोत्पा(स्योपपा)दनमित्याशंक्य संगतिं दर्शयितुम् **इदं चे**[३५.१२.]त्यादिनोपक्रमते। **तस्य** अनधिगतवस्तु-रूपाधिगन्तृत्वस्य **असिद्धता**। तस्या **उद्भावनं** [३५.१६.] प्रकाशनं तदर्थम्।

**तस्यैव** [३५.२०] स्वलक्षणस्यैव। सामा[5]न्यस्याप्यर्थक्रियास(सा)मर्थ्यलक्षणत्वात्तद्विषयोपि विकल्पः प्रामाण्यान्नापैतीति पूर्वपक्षमुत्पश्यन्नेवं ब्रुवाणः किं मन्यत इत्याह **सामान्यस्येति** [३५.२१.]। **तद्विपरीतत्वाद**[३५.२१.]र्थक्रियासामर्थ्यलक्षणविपरीतत्वात्। यथा च तस्यार्थक्रियाकारित्वमसंभवि तथा पुरस्तादुक्तमिति। गूढाभिसन्धिश्चैवं **मन्यत** [३५.२१.]इति द्रष्टव्य[6]म्। **ततोपि** [३५.२३] **वस्तुन्येव** [३५.२४]**पुरुषस्य प्रवृत्तेरि**[५.२६.]ति संबन्धः। **तत्सामर्थ्यजन्मा विकल्पो न प्रमाणमि-**[३५.२६.]ति साध्ये च हेतुपदमेतत्। कथं प्रवृत्तिरित्याह **तदध्यवसायेने**[३५.२४.]ति। कस्मात्तदध्यवसायेन प्रवृत्तिः कल्प्यते इत्य**न्यथे**[३५.२५]ति। **तत्र** [४५.२५.] स्वलक्षणे पूर्वस्या उपपत्तेरस्याश्च तुल्यत्वात् किमनेन पुनरुक्तेने'त्याह **पूर्वमि**[३५.२७.]ति। एवञ्च शाब्दीं गतिमाश्रित्य भेदो दर्शितो द्रष्टव्यः। अथार्थाभेदात्किं मुखभेदमात्रेण भेदेनोपदर्शितेनेति निर्बन्धस्तदेवोच्यत इत्यभिप्रायवानाह **यद्वे**[३६.१.]ति। **किमिती**[३६६.]तिनिपातानिपातसमुदायः कस्मादित्यस्यार्थे वर्तते।

स्यादेतत्स्वलक्षणे निर्विकल्पकविषये प्रवर्तयन्नपि तदनुभवात्प्रमेया[6]न्तरविषयः सन् प्रामाण्यं प्राप्स्यतीत्याशंक्याह **अयमस्याभिप्राय** [३६.१२.] इति। **तत्रैव** [३६.१३.] प्रमेयान्तरे स्वविषय एव [1]**प्रवर्तयेदि**[३६.१४.]ति। सम्भावनपदमेतत्। शक्यार्थे वा। किं कर्तुं प्रवर्तयेदित्याह—**रूपं** [2]**तत्साध्यामि** [३६.१४.]ति। प्रमेयान्तरमात्रं तद्विषयमभिप्रेत्य तत्रैव प्रवर्त्तयेत् **तत्साध्यामर्थक्रियामधिगन्तुमि**[३६.१४.]त्युक्तमधुना तु यदि सामर्थ्य[20b](सामान्य)[1]लक्षणं तत्प्रमेयान्तरं तदा **नैव वा**[३६.१४.] इत्युक्तम्। **नैव वा प्रवर्तयेत्** न स्वलक्षणे नापि सामान्ये न **क्वचिदपीति** प्रवृत्तिमात्रप्रतिषेधाद् ध्रियते।

यद्वा पूर्वं सामान्यसाध्यामर्थक्रियामनाकलय्याभिहितम्—**तत्रैव**[३६.१३.]इत्यादि। इदानीं तु तत्साध्यामर्थक्रियामाकलय्योक्तम्—**नैव वे**[३६.१४.]ति। कस्मादेवमित्याह—**तद्विषये**[३६.१५.]ति। तत्सिद्धय एव प्रवर्तयिष्यतीति आह **विकल्पे**[३६.१६.]इति। **तत्सि[2]द्धे**[३६.१४.]रभिन्नज्ञानलक्षणाया अर्थक्रियाया निष्पत्तेः। सामर्थ्याच्चाभिन्नाभिधानलक्षणायाश्चेत्याभेदम् (श्चेत्यपि वेद्यम्)।

ननु ततः प्रमेयान्तरविषयोपि प्रत्ययस्तद्विषये प्रवर्त्तयन्निष्पादितस्वविषयार्थक्रियो वा क्वचित्प्रवर्त्तयन्प्रामाण्यमपि प्राप्स्यतीत्याह—**नही**[३६.१६.]त्यादि। **प्रत्यया**[३६.१७.] इत्यत्र बहुवचनेन साकल्यं दर्शयति। **साधिता** निष्पादिता **अर्थक्रिया** [३६.१८.]।

१. प्रवर्तयतु S। २. तत्साध्यामर्थक्रियाम् S।

स्वविपर्यार्थक्रि[3]या येषान्ते तथा, तेषां **क्वचिदपि** [३६.१९.] न **प्रवर्तयन्तीति** पूर्वेकेणाभिसम्बन्धः । **विशेषेण** [३६.१९.] विशेष्यैव यैर्मीमांसकैरेवं **व्याख्या[य]ते** [३६.१९.] तेषां मत इति सामर्थ्यात् । **द्व्यात्मकस्य** [३६.२१.] सामान्यविशेषात्मकस्य । विज्ञानाभिन्नहेतुत्वादिच्छादेर्विज्ञानात्मकं(कत्वं) सिद्धमभिप्रेत्य प्रामाण्यानुषङ्गः कुतो(कृतो) वेदितव्यः । **प्रमाणानामियत्ता** [३६.२६.] व्य[4]वच्छेदः । कुमारिलमतेन प्रत्यक्षानुमानोपमानार्थापत्तिशाब्दाभावाः षडेव प्रमाणानीत्येवंरूपा **विशीर्येत** [३६.२७.] त्रुट्येत् । **धारया** प्रवाहेन **वहनशीलानि** [३७.१.] भवनधर्माणि । **अनेकान्तस्तद्भिन्नयोगक्षेमत्व**लक्षणो हेतुरिति प्रकरणात् । एकस्मिन्नर्थे सजातीयानि सजातीयविजातीयानि वा[5] **प्रमाणानि संप्लवन्ते** प्रवर्तेन्त इति **वादी** [३७.५.] । **प्रतिक्षणं** [३७.७.] **भिद्यत** [३७.८.] इति सम्बन्धः । केषां क्षणविशेषे(ष)साध्येऽर्थे वाञ्छा भवति । यद्यस्मदादीनां तथाऽर्थादर्शित्वादेव न संभवतीत्याह **योगिनामि**[३७.११.]ति । योगश्चित्तैकाग्रता स येषामस्ति तेषाम्, नित्ययोगे प्रशंसायां वाऽय[मि]निर्द्रष्टव्यः । शमथविपश्यने वा योगस्तद्व[6]ताम् । ननु तेषां स्वार्थासंभवात्किमभिप्रेत्यास्मिन्वाञ्छा भवतीत्याह—**परे**[३७.११.]ति ।

अथ परोपकारिणः परेषामेवोपकुर्वन्तु कस्मात्पुनः क्षणविशेषसाध्यमर्थं प्राप्तुं परिहर्तुं वाऽभिलषन्तीत्याह **कस्यचिदि**[३७.१२.]ति । **कस्यचि**त्क्षणविशेषसाध्यस्यार्थस्य **कथंचि**त्साक्षात्पारंपर्येण **वोपयोगादुप**[३७.१२.]युज्यमान[7]त्वात् । **क्वचित्**[३७.१२.] प्राणिनीति प्रकरणादवसेयम् । अनेन परोपकाराङ्गत्वं तस्य दर्शितम । **तदा**[३७.१२.] नानायोगक्षेमत्वमिति सम्बन्धनीयम् । तदेत्यत्रच्छेदो व्यक्त एव । एतदेव निदर्शयन्नाह— **यथे**[३७.१२.]ति । सामान्योच्छेदस्यार्थस्य विषयोपदर्शने यथैतद्दर्शितम्, तथाऽन्यदपि द्रष्टव्यमिति यथाशब्दस्यार्थः ।

भावनामार्गव्युदासेन[1] **दर्शनमार्ग** [३७.१२.] इत्यु[8]क्तम् । दुःखे धर्मज्ञानक्षांतिः, दुःखे धर्मज्ञानम । दुःखेऽन्वयज्ञानक्षांतिः, दुःखे अन्वयज्ञानम् । समुदये धर्मज्ञानक्षान्तिः, समुदये धर्मज्ञानम् । समुदयेऽन्वयज्ञानक्षान्तिः, समुदयेऽन्वयज्ञानम । निरोधे धर्मज्ञानक्षान्तिः, निरोधे धर्मज्ञानम् । निरोधेऽन्वयज्ञानक्षान्तिः, निरोधेऽन्वयज्ञानम् । मार्गे धर्मज्ञानक्षान्तिः, मार्गे धर्मज्ञान[म्] । मा[21a][1]र्गेऽन्वयज्ञानक्षान्तिरित्येवं पञ्चदशक्षणा दर्शनमार्गः तदुक्तमभिधर्मकोशे " अदृष्टदृष्टेर्दृङ्मार्गस्तत्र पञ्चदशक्षणाः " [अभि. ६.२८.] इति । तस्मिन्दर्शनमार्गे फलभूताः पञ्चसंक्लेशस्कन्धाः । दुःखाख्यं सत्यम् ।

१. अत्र विशेषार्थिना विसुद्धिमग्गोऽनुसतव्यः पृ. ३९९ ।

तस्मिन् दुःखे **धर्मज्ञानक्षान्तिः** [३७.१३] स्वरूपज्ञानयोग्यता । दुः
साक्षात्संका(क्षात्का)रिज्ञानोपजननयोग्यः कुशल इति यावत् ।

स क्षणः किं करो[2]तीत्याह । [1]**दशानामि**[३७.१३]ति । राग-प्रतिघ-मा
अविद्या–विचिकित्सा पञ्च, सत्कायदृष्टि–मिथ्यादृष्टि–अन्तग्राहदृष्टि–दृष्टिपरामर्ष–
परामर्षलक्षणा दृष्टयः पञ्च–दशानुशयाः एषाम् **वासनां निरोधयति** [३७.१
विनाशयति। कथं करोतीत्याह । **तद्विरुद्धे**[३७.१४]त्यादि । तैरनुशयैर्विरुद्धोऽयमा
यश्चित्तसंतत्यवस्थाविशेषस्तस्यो[3]त्पादनात्। दुःखे धर्मज्ञानक्षान्तिक्षणस्यार्थक्रियामुपदर्श्य दु
धर्मज्ञानक्षणस्य ततो भिन्नामर्थक्रियां दर्शयितुमाह–**दुःख** [३७.१४] इति । दुः
**धर्मज्ञानं**[३७.१४.] दुःखस्वरूपसाक्षात्कारि(र)प्रवृत्तज्ञानम् । **निर्वाणं** [३७.१
मोक्षः प्राप्यते अनयेति व्युत्पत्त्या, निर्वाणस्य प्राप्तिर्यस्मादिति व्युत्पत्त्या वा तावत्
विविक्तता **निर्वाण[4]प्राप्ति**शब्देनोक्ता। दर्शनमार्गप्रहेयाणां द्वात्रिंशतः क्लेशानां मध्ये
दशानामेव क्लेशानां वि(नि)रोधाद्दश(दश)क्लेशविविक्ततानाततस्यात् पादनात
समुदयादिज्ञानादिप्रहातव्यक्लेशप्रहाणिप्रतिरूपा निर्वाणभावस्य दवीया(यः) सिद्ध्यवस्था
दन्यथैतदसमंजसं स्यादिति। अथवा निर्वाणशब्देन नैवाचेटः परमनिःश्रेयसात्मने यदेव
किंत्ववान्तरनिःश्रेयसं तथाभूतमिति न किञ्चिदवद्यम्। कथं तथाकरोतीत्याह **अनुशये**
[३७.१५]। सति तस्मिन्मनागपि ते पुनर्नोत्पद्यन्ते । अपि तु तद्विविक्त एव क्षणप्र
इति तदा क्षुदार्व्यापादनं तस्याधीसयम् (?)। पूर्वकेन च क्षणेन क्लेशा निष्क्लेशिता उ
तु यथा ते[6] पुनर्न प्रविशन्ति, तथा आचरितमित्यनयोर्व्यापारप्रयोजनम्। अतएवाभिधर्म
"चौरनिष्काशनकपाटपिधानवद्" इति (अभि. ६.२८ भा. ) दर्शितम्। दुःखे धर्मज्ञ
क्षान्तिधर्मज्ञाने च कामावचरक्लेशप्रतिपक्षतया ज्ञातव्ये दुःखे धर्मज्ञानक्षान्तिधर्मज्ञानयो
हरणा(ण)दिङ्मात्रत्वेन अन्येषामपि तथा विवि[7]क्तत्वा**देषामि**[३७.१६]ति बहुवचने
**ग्राहकाण्यालम्बकानि** । कानि पुनस्तानि ग्राहकाणीत्याह **परे**[३७.१६]ति
परचित्तविषयाणि ज्ञानानि **परचित्तज्ञानानि** [३७.१६] ।

एतदुक्तं भवति। दर्शनमार्गमधिगच्छतो दुःखे धर्मज्ञानक्षान्त्यादिक्षणाः । क्रमभावि
क्रमभाविभिर्ज्ञानैर्योग्यंतरेण यदालम्ब्यते परार्थोद्देशेन तथा तद्विषयाणि तं योगान्तरज्ञान
**पृथगेव** [३७.१६.] पूर्वपूर्वज्ञानाद्भिन्नान्येव प्रमाणानीति दर्शनमार्गाधिगन्तृज्ञानविषय
योगिज्ञानानां पृथगेव प्रामाण्यमिति प्रतिपाद्य संप्रति सामान्येनैव योगिज्ञानानि भिन्न
क्रियासामर्थ्यक्षणविषयाणि सर्वाण्येव प्रमाणानीति प्रतिपादयिष्यन्नाह–**परह्निने**[३७.१

स्वविपयार्थक्रि[3]या येषान्ते तथा, तेषां **क्वचिदपि** [३६.१९.] न **प्रवर्तयन्ती**ति पूर्वेकेणाभिसम्बन्धः। **विशेषेण** [३६.१९.] विशेष्यैव यैर्मीमांसकैर**ेवं व्याख्या[य]ते** [३६.१९.] तेषां मत इति सामर्थ्यात्। **द्व्यात्मकस्य** [३६.२१.] सामान्यविशेषात्मकस्य। विज्ञानाभिन्नहेतुत्वादिच्छादेर्विज्ञानात्मकं(कत्वं) सिद्धमभिप्रेत्य प्रामाण्यानुषङ्गः कुतो(कृतो) वेदितव्यः। **प्रमाणानामियत्ता** [३६.२६.] व्य[4]वच्छेदः। कुमारिलमतेन प्रत्यक्षानुमानोपमानार्थापत्तिशाब्दाभावाः षडेव प्रमाणानीत्येवंरूपा **विशीर्येत** [३६.२७.] त्रुटयेत्। **धारया** प्रवाहेन **वहनशीलानि** [३७.१.] भवनधर्माणि। **अनेकान्तस्तदभिन्नयोगक्षेमत्व**लक्षणो हेतुरिति प्रकरणात्। एकस्मिन्नर्थे सजातीयानि सजातीयविजातीयानि वा[5] **प्रमाणानि संप्लवन्ते** प्रवर्त्तन्त इति **वादी** [३७.५.]। **प्रतिक्षणं** [३७.७.] **भिद्यत** [३७.८.] इति सम्बन्धः। केषां क्षणविशेषे(ष)साध्येऽर्थे वाञ्छा भवति। यद्यस्मदादीनां तथाऽर्थादर्शित्वादेव न संभवतीत्याह **योगिनामि**[३७.११.]ति। योगश्चित्तैकाग्रता स येषामस्ति तेषाम्, नित्ययोगे प्रशंसायां वाऽय[मि]निर्द्रष्टव्यः। शमथविपश्यने वा योगस्तद्व[6]ताम्। ननु तेषां स्वार्थासंभवात्किमभिप्रेत्यास्मिन्वाञ्छा भवतीत्याह—**परे**[३७.११.]ति।

अथ परोपकारिणः परेषामेवोपकुर्वन्तु कस्मात्पुनः क्षणविशेषसाध्यमर्थं प्राप्तुं परिहर्त्तुं वाऽभिलषन्तीत्याह **कस्यचिदि**[३७.१२.]ति। **कस्यचि**त्क्षणविशेषसाध्यस्यार्थस्य **कथंचित्**साक्षात्पारंपर्येण **वोपयोगादुप**[३७.१२.]युज्यमान[7]त्वात्। **क्वचित्**[३७.१२.] प्राणिनीति प्रकरणादवसेयम्। अनेन परोपकाराङ्गत्वं तस्य दर्शितम। **तदा**[३७.१२.] नानायोगक्षेमत्वमिति सम्बन्धनीयम्। तदेत्यत्रच्छेदो व्यक्त एव। एतदेव निदर्शयन्नाह—**यथे**[३७.१२.]ति। सामान्योच्छेदस्यार्थस्य विषयोपदर्शने यथैतद्दर्शितम्, तथाऽन्यदपि द्रष्टव्यमिति यथाशब्दस्यार्थः।

भावनामार्गव्युदासेन' **दर्शनमार्ग** [३७.१२.] इत्यु[8]क्तम्। दुःखे धर्मज्ञानक्षांतिः, दुःखे धर्मज्ञानम्। दुःखेऽन्वयज्ञानक्षांतिः, दुःखे 'अन्वयज्ञानम्। समुदये धर्मज्ञानक्षान्तिः, समुदये धर्मज्ञानम्। समुदयेऽन्वयज्ञानक्षान्तिः, समुदयेऽन्वयज्ञानम्। निरोधे धर्मज्ञानक्षान्तिः, निरोधे धर्मज्ञानम्। निरोधेऽन्वयज्ञानक्षान्तिः, निरोधेऽन्वयज्ञानम्। मार्गे धर्मज्ञानक्षान्तिः, मार्गे धर्मज्ञान[म्]। मा[21a][1]र्गेऽन्वयज्ञानक्षान्तिरित्येवं पञ्चदशक्षणा दर्शनमार्गः तदुक्तमभिधर्मकोशे "अदृष्टदृष्टेर्दृङ्मार्गस्तत्र पञ्चदशक्षणाः" [अभि. ६.२८.] इति। तस्मिन्दर्शनमार्गे फलभूताः पञ्चसंक्लेशस्कन्धाः। दुःखाख्यं सत्यम्।

१. अत्र विशेषार्थिना विसुद्धिमग्गोऽनुसर्तव्यः पृ. ३५९।

तस्मिन् दुःखे **धर्मज्ञानक्षान्तिः** [३७.१३] स्वरूपज्ञानयोग्यता । दुःख-साक्षात्संका(क्षात्का)रिज्ञानोपजननयोग्यः कुशल इति यावत् ।

स क्षणः किं करो[2]तीत्याह । [1]**दशानामि**[३७.१३]ति । राग-प्रतिघ-मान-अविद्या-विचिकित्सा पञ्च, सत्कायदृष्टि-मिथ्यादृष्टि-अन्तग्राहदृष्टि-दृष्टिपरामर्ष-व्रत-परामर्षलक्षणा दृष्टयः पञ्च-दशानुशयाः एषाम् **वासनां निरोधयति** [३७.१३] विनाशयति । कथं करोतीत्याह । **तद्विरुद्धे**[३७.१४]त्यादि । तैरनुशयैर्विरुद्धोऽयमाशयश्चित्तसंतत्यवस्थाविशेषस्तस्यो[3]त्पादनात् । दुःखे धर्मज्ञानक्षान्तिक्षणस्यार्थक्रियामुपदर्श्य दुःखे धर्मज्ञानक्षणस्य ततो भिन्नामर्थक्रियां दर्शयितुमाह-**दुःख** [३७.१४] इति । **दुःखे धर्मज्ञानं**[३७.१४.] दुःखस्वरूपसाक्षात्कारि(र)प्रवृत्तज्ञानम् । **निर्वाणं** [३७.१५] मोक्षः प्राप्यते अनयेति व्युत्पत्त्या, निर्वाणस्य प्राप्तिर्यस्मादिति व्युत्पत्त्या वा तावत्क्लेश-विविक्तता **निर्वाण**[4]**प्राप्ति**शब्देनोक्ता । दर्शनमार्गप्रहेयाणां द्वात्रिंशतः क्लेशानां मध्येऽनेन दशानामेव क्लेशानां वि(नि)रोधाद्दग्ध(दश)क्लेशविविक्ततानाततस्यात् पादनात (?) समुदयादिज्ञानादिप्रहातव्यक्लेशप्रहाणिप्रतिरूपा निर्वाणभावस्य दवीया(यः) सिद्ध्यवस्थानादन्यथैतदसमंजसं स्यादिति । अथवा निर्वाणशब्देन नैवार्चटः परमनिःश्रेयसात्मने यदेवमूचे किंत्ववान्तरनिःश्रेयसं तथाभूतमिति न किञ्चिदवद्यम् । कथं तथाकरोतीत्याह **अनुशयेति** [३७.१५] । सति तस्मिन्मनागपि ते पुनर्नोत्पद्यन्ते । अपि तु तद्विविक्त एव क्षणप्रबन्ध इति तदा सुदार्व्योपादनं तस्याधीसयम् (?) । पूर्वकेन च क्षणेन क्लेशा निष्क्लेशिता उत्तरेण तु यथा ते[6] **पुनर्न** प्रविशन्ति, तथा आचंरितमित्यनयोर्व्यापारप्रयोजनम् । अतएवाभिधर्मकोषे "चौरनिष्काशनकपाटपिधानवद्" इति (अभि. ६.२८ भा. ) दर्शितम् । दुःखे धर्मज्ञान-क्षान्तिधर्मज्ञाने च कामावचरक्लेशप्रतिपक्षतया ज्ञातव्ये दुःखे धर्मज्ञानक्षान्तिधर्मज्ञानयोरुदाहरणा(ण)दिङ्मात्रत्वेन अन्येषामपि तथा विवि[7]क्तत्वा**देषामि**[३७.१६]ति बहुवचनेनाह **ग्राहकाण्या**लम्बकानि । कानि पुनस्तानि ग्राहकाणीत्याह **परे**[३७.१६]ति । परचित्तविषयाणि ज्ञानानि **परचित्तज्ञानानि** [३७.१६] ।

एतदुक्तं भवति । दर्शनमार्गमधिगच्छतो दुःखे धर्मज्ञानक्षान्त्यादिक्षणाः । क्रमभाविनः क्रमभाविभिर्ज्ञानैर्योग्यंतरेण यदालम्ब्यते परार्थोद्देशेन तथा तद्विषयाणि त[8]द्योगान्तरज्ञानानि **पृथगेव** [३७.१६.] पूर्वपूर्वज्ञानाद्भिन्नान्येव प्रमाणानीति दर्शनमार्गाधिगन्तृक्षणविषयाणां योगिज्ञानानां पृथगेव प्रामाण्यमिति प्रतिपाद्य संप्रति सामान्येनैव योगिज्ञानानि भिन्नार्थ-क्रियासामर्थ्यक्षणविषयाणि सर्वाण्येव प्रमाणानीति प्रतिपादयिष्यन्नाह-**परहिते**[३७.१७]-

---

१. दमानांऽइति त्वसम्यक्

त्यादि । **भगवताम्** [३७.१८] **अध्यक्षचेतसां नानायो**[21b][1]**गक्षेमत्वात्** [३७.२१]। पृथगेव प्रामाण्यमिति शेषः प्रकरणलभ्यं वा । अधिकरणे चेयं षष्ठी । तेन भगवत्सम्बन्धीनि यान्यध्यक्षचेतांसि साक्षात्कारप्रवृत्तानि ज्ञानानि तेषामित्यर्थः । किंभूतानां भगवतामित्याह **सर्वे**[३७.१९]ति । **सर्वभावान्** भावनाबलजेन ज्ञानेन **प्रतिक्षणमी**[1]**क्षमाणानां** [३७.२०] पश्यताम् । कथं तेषां नानायोगक्षेमत्वमित्याह **तद्विषये**[३७.२०]ति । तेषां भगवत्स[2]म्बन्ध्य**ध्यक्षचेतसां** [३७.२०] ये विषयाभिन्नाः क्षणास्तेषां **भिन्नास्वर्थक्रियासूपयोगतो** [३७.२१] व्यापारात् । अनेन विषयस्य तथात्वाद्विषयिणस्तथात्वमुक्तमवसेयम् । कस्मात्पुनस्ते प्रतिक्षणं भावान्वीक्षन्त इत्याह—**कश्चिद्देवे**[३७.१८]ति । **इतिः** [३७.१९] हेतौ । अनुग्राहकविबन्धकानुरूपमाचरितुमित्यर्थादेव स्थितम् ।

ननु तथापि सिद्धार्था भगवन्तः स्वार्थमणी[3]यांसमप्यपश्यन्तः कस्यचित् क्षणस्य कस्यचित्प्राणिनोऽनुग्राहकत्वे विबन्ध[क]त्वेपि कस्माद् भावान् प्रतिक्षणं वीक्षन्त इत्याशंक्यतेहे(क्य हे)तु भावेन भगवद्विशेषणपदमाह **परहिते**[३७.१७]ति । परस्मै हितमायति पथ्यं तस्याधानं करणम् । तस्य **दीक्षा** अनुष्ठेयमेवैतदिति नियमस्तद्वताम् । नित्ययोगे चायं मतुप्[4] । **ज्ञान**मेव सदसद्विवेककरणादालोक इवा**लोक**स्तेना**वभासित** उद्योतितो**ऽन्तरात्मा** येषान्तेषाम् [३७.१८] । अन्तरात्मेति लोकभाव(न)योक्तं परमार्थ(त)स्तु तथाभूतज्ञानावलोकवतामित्यर्थः ।

अशब्दविषये प्रथने वाच्ये वेः परात्स्तृणातेर्घञोऽभावाद्वस्तुविस्तर इत्यसाधुरयं प्रयोग इति [5]चेत् । तत्तु नातिश्लिष्टम् । यतः सूत्रे प्रथनं विस्तीर्णत्वमभिप्रेतम् । तदाह काशिकाकारः " प्रथनं विस्तीर्णता " इति । न चात्र विस्तरशब्देन वस्तूनां विस्तीर्णत्वमभिप्रेतमपि तु बाहुल्यं यथा तृणस्य विस्तर इत्यत्र। अतएव "प्रथन इति किं? तृणविस्तर" इति प्रत्युदाहृतम्। अस्य चार्थं भागवृत्तिकारोपि अञ्जसा[6]ऽव्य(सा व्या)ञ्जीत् "तृणस्य विस्तरो बाहुल्यम् इत्यर्थः" । तत्कथमप्रथने वर्त्तमानादस्माद्धातोर्घञ् भवितुमर्हतीति । अतएव प्रज्ञाकरगुप्तोपि वार्तिकालङ्कारस्यादौ " प्रायः प्रस्तुतवस्तुविस्तरभृतो नक्षन्त एवोच्चकैर्वक्तारः " इत्यवोचदिति ।

किं सर्ववेदिनोऽधिकृत्य भवताऽयं हेतुरनेकान्त उच्यते, अ[7]थास्मदादीनिति विकल्पयोर्बुद्धिस्थीकृतयोः पूर्वस्मिन्विकल्पे प्रतिसमाधायापरस्मिन्नपि प्रतिविधातुकामः **तद्यदी** [३७.२१]त्यादिनोपसंहर्तुमुपक्रमते । **क्षणानां विवेकः** पृथक्त्वं तद् द्रष्टुं शीलं येषां तान् **अधिकृत्यो**[३७२१.]द्दिश्य **उच्यते** ।

१. °क्षणं वीक्षमाणानां–S

प्रकरणात् 'पूर्वेणाभिन्नयोगक्षेमत्वादि'ति हेतुरनैकान्तिक इत्याख्यायते। तदा 'नानैकान्तः स हेतुरि'ति [8]प्रकरणात्। विपक्षगमनाभावादिति भावः। **अथे**[३७.२३]ति पक्षान्तरमुपक्षिपति। **संव्यवहारः** प्रवृत्तिनिवृत्तिलक्षणमनुष्ठानं प्रयोजनं येषां **तान्**[३७.२३]। परमार्थतो भेदकारणमुक्त**मन्यान्यकारणतये**[३८.५]ति। तत्राद्य एव प्रमाणम्। न सम्यञ्चोऽपि पराञ्चः प्रत्यया इति समर्थयितुं **तथाही**[३८.८.]त्यादिनोपक्रमते। **तत्साधन**[३८.८]मर्थक्रियासाध[22a][1]नं तस्य **प्रापणं** तत्र **समर्थे**[३८.९]। [1]**अक्लीवा**ऽविद्यमानविप्लवा **धी**[३८.१०.]र्येषाम् ते तथा तेषां प्रेक्षापूर्वकारिणामित्यर्थः **अर्थस्य क्रिया** निष्पत्तिस्तस्याः **साधनं** निष्पादकं तस्य **भेदो**भिन्नत्वात्। **संधुक्षण**[३८.१६.] संदीपनमादिशब्दात्पवनस्वेदनादिपरिग्रहः।

**यद्येवमि**[३९.१८]त्यादि यच्चोद्यम्। **तथाही**[४०६ ?]त्यादि

प्रत्यक्षं प्रमाणमभ्रान्तमित्युक्तं भवतीति वक्त[4]व्यम्। अनन्तरोक्तादेव कारणकलापात्। प्रत्यक्षलक्षणानुक्तौ च प्रत्यक्षस्यैवानभिधाने परोक्षप्रतिपत्तेः सर्वस्या अनुमानेऽन्तर्भावप्रदर्शनेपि कथं प्रमाणद्वैतमाख्यातं भवति? दर्शनमेव प्रमाणमित्याख्यानाच्च नाज्ञानमिन्द्रियादि प्रमाणमिति दर्शितं भवति। भिन्नायास्तु प्रथमायाः कथमपाक[5]रणम्? किं च मुख्यवृत्त्या यदुद्दिश्य शास्त्रं प्रवर्तते तदर्थं तदुच्यते। न तु सामर्थ्यानुषंगतो वा यद् व्युत्पादयति तदर्थं तदुच्यते। नच प्रत्यक्षव्युत्पादनाभ्युपगमेपि मुख्यवृत्त्या तद्व्युत्पादने प्रवृत्तमिदमिति कथं सामान्येन' सम्यग्ज्ञानव्युत्पादनार्थमुच्यते। अन्यथा अनुमानव्युत्पादनार्थत्वेपि तस्य सामर्थ्यादनु[6]मानाभासप्रतिपादनमनुषङ्गतो विकल्पस्य धारावाहिनाञ्च पराञ्चा( पराचां ) विकल्पज्ञानानां प्रमाणाभासत्वप्रतिपादनमस्तीति अनुमानतदाभासव्युत्पादनार्थमिति प्रमाणाप्रमाणव्युत्पादनार्थमिति वा किंनोच्यते? यद्य(यद)प्यन्यत्सम्यग्ज्ञानव्युत्पादनार्थमभिप्रेतम्, तत्रापि कल्पनाप्रवृ( भृ )तेर्मिथ्याज्ञानस्यापि[7] प्रसंगतो व्युत्पादनमस्तीति तदपि सम्यग्ज्ञानव्युत्पादनार्थमिति किं नोच्यत इति यत्किञ्चिदेतत्। तथा यद्यनुमानतस्तथाभूतस्य निश्चयात्तस्य प्राधान्यमुच्यते, तदा प्रत्यक्षतो धर्मिग्रहणं व्याप्तिग्रहणञ्चान्तरेण नानुमाने प्रवृत्तिरस्तीति तस्यापि किं न प्राधान्यमुच्यते? न च तस्यापरभावात्प्राधान्यकल्पना ज्यायसी। कि[8]ञ्च तदपि तत्त्वे निश्चायकमनुमानं समस्ततत्त्वनिश्चायकसाक्षात्कारप्रवृत्तप्रत्यक्षाङ्गमुपसर्जनम्। तदेतभूयेयं (?) प्रधानं भवितुमर्हतीति कथं विपर्यस्तास्तत्त्वविदः।

अपि च स्वसंवेदनं प्रत्यक्षमन्तरेण सर्वथा न कस्यचित्तत्त्वव्यवस्थानमिति तस्यैव प्राधान्यं किं न कल्प्यत इति। स हि मिथ्याज्ञानं प्रत्यक्षस्य विषयो [22b] [1]यत(त्र) तेनानुरूपो निश्चयो जनितः न च तत्र विवादः संभवति येनानुमानात्तन्निश्चयः पाध्यते। अथोत्तर-

१ 'अक्लीवधियां' इति आलोकसंमतः पाठः। 'अविक्लवधियां' इति S

कालभाविनः संशयस्यानुमानतो निरासात्तस्य तथात्वमुच्यते । तर्हि प्रत्यक्षस्यातिशयेन तद्वाच्यम् , तत्संशयोनो(यानु)त्पादस्य प्रत्यक्षनिबन्धनस्य बहुलमुपलम्भात् । अथ तदा तत्प्रत्यक्षं गृहीतग्राहितया न प्रमाणव्यपदेशयोग्यं सत्संशयं निरस्य[2]ति अनुमानमपि तथैवेति किमनेनोक्तेन ? न च क्षणिकत्वादि प्रत्यक्षस्य विषयो येनानुमानतस्तन्निश्चयात्प्राधान्यं तस्य कल्प्येतेत्यलं बहुना । प्रत्यक्षस्यापि पटुनः प्रवर्तकत्वात्किं न प्राधान्यं? नहि योग्यता योग्याद्वस्तुनोऽन्या या परोक्षा सती तेन निश्चेतुमशक्याऽन्येन निश्चीयेत तन्निश्चायकं तज्ज्ञानमन्यत्प्रमाणं सदनुमानं स्यात् । किन्तु [3]योग्यमेव वस्तु योग्यता, यथा च प्रत्यक्षस्यार्थस्यैकप्रकारा प्रतिपत्तिस्तथाचार्येण स्वयमेवान्यत्र दर्शितम् । अथ यद्यपि योग्यता योग्यवस्तुस्वभावा तथापि परोक्षफलसव्यपेक्षा परोक्षेति । ननु फलस्य परोक्षत्वे सा किं परमार्थतः परोक्षा किं वा परोक्षकल्पा ? तत्र यदि परोक्षमते(?) परोक्षैव तदा प्र[1]त्यक्षपरोक्षयोरेकात्मतानुपपत्तेर्भिन्नैव स्यात् । यथा मीमांसकानां कार्यार्थापत्तिसाधना । अथ परोक्षैव; कथं पुनः प्रत्यक्षस्वभावा परोक्षैव । तन्निश्चयस्य कर्तुमशक्यत्वादिति चेत् । यदि नामाभ्यासात्पूर्वं निश्चेतुमशक्या तथाप्यभ्यासदशापन्नेन पटीयसा प्रत्यक्षेण स्वतोऽपसारितभ्रान्तिनि[5]मित्तेन किं न निश्चीयते ? फलमपि तस्य दाहादि नात्यन्तपरोक्षमन्यत्र तत्कृतस्य तस्यानेकशोऽनुभवात् । अत एवाभ्यासेन तत् पटुतरं जातम् । नत्वमभ्यु( न तु अभ्यु)दयादि दानचेतनादिकार्यत्वेन निश्चितं केनचिद्येन तत्राप्यभ्यासात्तथानिश्चयः स्यात् । यावतात्यन्तपरोक्षमेव । अतस्तदपेक्षया दानचेतना[6]शक्तेरनिश्चयो युक्तः । तदयमर्थो येनासकृद् वह्न्यादेर्दाहाद्यनुभूतं स तदा फलस्य परोक्षत्वेपि दाहादिजननयोग्यमेतदिति प्रत्यक्षेण निश्चिनोत्येव । यथा चानभ्यासावस्थायां पुंसः कृत्रिमाकृत्रिममुक्तादिप्रतिपत्तेः परोपदेशापेक्षणात्स्वतोऽसंभवेपि सत्यप्यभ्यासे स एव पुरुषः पुरुषा[7]न्तरनिरपेक्षो मुक्तादेः कृत्रिमादिरूपतां स्वयमेव प्रतिपद्यते । तथानभ्यासावस्थायां स्वतस्तद्योग्यताऽनिश्चयेपि अभ्यासादितः पटिमप्रत्यक्षं स्वयमेव तद्योग्यं निश्चाययिष्यतीति किं नानुमन्यते । आह चात्र भर्तृहरिः "मणिरूप्यादिज्ञानं तद्विदां नानुमानिकम् " इति । किञ्च न व्याप्तिस्मरणमन्तरेणानुमानं प्रवर्तते । न चाग्न्या[8]दि वस्तु दृष्ट्वा तत्साध्यार्थक्रियावाञ्छया प्रवृत्तौ यद्यदेवमर्थक्रियाकारि यथा महानसादि दृष्टं तद्वास्त्विति प्रवृत्तौ(त्तेः) प्राग्व्याप्तिस्मरणं सत्यवादिना वदितुं शक्यत इति कथं तत्रानुमानस्य प्रवर्तकत्वकल्पना न साहसम् । अतश्चैवं यतस्ताद्रूप्यावसाये प्रत्यक्षं नानुमानसापेक्षमनवस्थाप्रसक्तेः । यथा च तस्य पाटवं ताद्रूप्यनिश्चयं[23a] [1]चरितार्थमुपवर्णनीयम् , तथा योग्यतानिश्चये किं न वर्ण्यते इत्यलमतिविस्तरेण ।

यत्तु **तच्चानुमेयत्वं नातिपतति**[४०.१९] तत् स्वपरसंतानवर्तिनीर्बुद्धीरधिकृत्योक्तम् ' अन्यत्रानुभूतविषयेभ्य ' इति वचनादिति । अत्र च सर्वत्र समाधानं धीमद्भिरेव विधेयम् ।

आत्मा (?) **साध्यसाधनभावो** [४१.२०] गम्यगमकभावः । कृतकत्वादौ **पारमार्थिकं** [४१.२४] **साध्यसाध**[2]**नयोर्धर्मिणश्च भेदं** [४१.२४] भिन्नं रूपं **नालम्ब**[ति] नाश्रयते । कुतो नालम्बत इत्याह **सम्बन्धे**[४१.२५]ति । परमार्थभिन्नानामकार्यकारणभूतानां सम्बन्धाभावे तथात्वाभावप्रसंगात् । एकस्मिन्नर्थे द्वयोः समवाय **एकार्थसमवायो**[४१.२६]ऽत्र विवक्षितः **कृतकत्वानित्यत्वे** [४१.२६]आदी यस्य तस्य । कृतकत्वमादिर्यस्य सावयवत्वादेः साधनधर्मस्य । अनित्यत्वमादिर्यस्य[3] सावयवत्वादेः साध्यधर्मस्य । **तस्ये**[४१.२७]ति समवायस्य । अत्रैवोपचयहेतुमाह **समवायादि**[४२.२]ति । [4]**आदि**[४२.३]शब्दादाकाशदिक्कालमनःपरमाणूनां संग्रहः । कथं पुनः कृतकत्वादेः शब्दादौ वृत्तावात्मादिवृत्तिरासंज्यत इत्याह । **य एव ही**[४२.३]ति । **तस्य** [४२.५] समवायस्य । "न च संयोगवन्नानात्वं भाववल्लिङ्गाविशेषात् विशेषलिङ्गा[4]भावाच्च तस्माद्भाववत्सर्वत्रैकः समवाय" [प्रश० भा० १७२ पृ०] इति वचनादेकत्वेनाभ्युपगमः । अथापि स्यात् न समवायाद्वृत्तिरपि तु समवाय एव वृत्तिरिति तदप्यवद्यम् । संबन्धाभावेन भावोयं वृत्तिरिति कल्पनाया अयोगात् । संबन्धान्तरकल्पनायाश्चानवस्थाप्रसंगात् । यदि च समवायस्तस्य वृत्तिरात्मादिष्वपि तस्य भावात्[5] कथं न तस्य वृत्तिरिति तदवस्थो दोष इति । **अथ**[४२.६]शब्दः पक्षान्तरमवद्योतयति । एतस्मिन्नुपगमे गड्डुप्रवेशेऽक्षितारानिर्गमवृत्तान्तो जात इति दर्शयन्नाह **सैव तर्ही**[४२.८]ति ।

अभूत्वा यो न भवति भूत्वा च [ न ] विनश्यति स **तद्विपरीतरूप**स्तस्य **यः समारोप**स्तस्य**व्यवच्छेदः स विषयो** [४२.९]यस्यास्तस्याः । सा किम[6]वश्यांभ्युपगमनीया येनान्यस्योपगमो निषिध्यत इत्याह **सैवेति** [४२.८] । परमार्थेन भेदो धर्मिणा सहेत्यर्थात् तद्वतोः परमार्थभेदवत्त्वञ्च पराभिप्रायेणोक्तं द्रष्टव्यम् । **धर्मिणि** [४२.११] शब्दादौ । तद्धर्मतानपेक्षायान्तु नित्याभिमतेष्वपि तौ वर्तेयातामिति भावः । उत्पत्तिविनाशधर्मतायाः कल्पनाबुद्धेश्च**अन्तराले** घाटामस्तकान्तरालवर्तिमांसपिण्डापरनाम **गड्डुरिव गडु**[४२.११]र्निष्फलत्वात् तेन । **व्यतिरेको** भेदस्तद्वत्ता [४२.१२] ।

अयमभिसन्धिः । यदि कृतकत्वादयो धर्मा व्यतिरेकिणस्तव धर्मिणि प्रमाणसिद्धाः स्युस्तदा सत्यामपि तस्य वस्तुनस्तथातायामजागलस्तनवदनुपयुक्ता अपि केन नाम नाभ्युपगम्येरन् । वस्तुस्वभावाना[8]मपर्यनुयोज्यत्वात् । केवलं तदेव प्रमाणसिद्धत्वं न संभवति प्रत्यक्षप्रमाणबाधितत्वमेव लक्ष्यत इति ।

---

१ पूर्वत्र शंकाचिह्नितं ' आत्मा (?) ' इति पदं अत्रत्यं सम्भवति

अथ किं कल्पनानिवेशिनः कृतकत्वादयो धर्माः साध्यधर्ममवबोधयन्ति येनावश्याभ्युपगमनीत्याया(नीयाया) उत्पत्तिविनाशधर्मताया एव तथाविधबुद्धिनिबन्धनत्वात् किमन्येनेत्युच्यत इत्याशंकायामभ्युपगम [23 b] [1]एवोत्पत्तिर(वोत्तर)मित्यभिप्रायवानाह **तथाही**[४२.१२]त्यादि। **सत्तामात्रेण** [४२.१२] तन्निश्चायकज्ञाननिरपेक्षेण स्वरूपेण वस्तुन उत्पत्तेः प्रभृति सर्वदेति वेदितव्यम्। **अनवरतं** [४२.१४] सततं **तद्धर्मस्य** साध्यधर्मस्य **प्रतीति**स्तस्याः **प्रसङ्गात्** [४२.१४]। कथं नाम ते तत्प्रतीतिनिबन्धनं भवन्तीत्याह **किंत्वि**[४२.१४]ति। ननु वस्त्वसंस्पर्शित्वे विकल्पस्य कथं वस्तुनः कृत. कत्वादिरूप[2]ताप्रतीतिरित्याह **स चे**[४२.१५]ति। **चो** यस्मादर्थे। **तद्रूपस्य** [४२.१७] कृतकत्वादिरूपस्य वस्तुनोऽ**संस्पर्शे**ऽप्यग्रहणेपि। तदग्राहिणः कथं तदध्यवसाय इत्याह **परम्परये**[४२.१७]ति। **तदुपादानत्वात्**[४२.१८]कृतकत्वात्कृतकत्वादिरूपवाह्योपादानत्वात्। **तस्य** विकल्पस्येति प्रकरणात्। ननु च न कृतकत्वादयो धर्मास्तथाविधबुद्धिनिबन्धनत्वेनेष्यन्ते किन्त्व[3]र्थक्रियाकारितया, तत्कथं तथाविधविकल्पः स्याद्यतः प्रसवेत् (विकल्पस्य ततः प्रसवः)। तस्य तस्य धर्मस्य वैयर्थ्यमित्याह **तद्व्यतिरिक्तास्त्वि**[४२.१८]ति। **तु** शब्दो यस्मादर्थे। तस्मादभूत्वाभवनधर्मणो भूत्वा चाभवनधर्मणो धर्मिणो **व्यतिरिक्ता** अन्ये **तस्याः कल्पना**बुद्धे**रुत्पत्ति**स्तस्या **निमित्तं** केवलं **निमित्तमात्रम्**[४२.१८] तद्भावस्तया। एतदुक्तं[4] भवति यदि कृतकत्वादि(दिः) धर्मिणोऽन्यो न स्यात्तर्हि कृतकादिबुद्धिरनुभवसिद्धा निर्निबन्धना स्यात्। न चैवमतोऽस्त्येतद्बुद्धिकारी कृतकत्वादिति(दिरिति) तत्कल्पना। ततश्च तन्मात्रकारित्व(त्वं) परिकल्पनीयं साधीयः। तथापि तथाविधाद् भावादन्ये ते तन्निबन्धनं कल्प्यंतामित्याह **तद्वरमि**[४२.१९]त्यादि। यस्मादेवमनन्तरोक्तं **तत्**[5][४२.१९]तस्मात्। तस्य कृतकत्वादेर्या कल्पना। 'अत्रैवेदं कृतकत्वादि नाऽऽत्मादिषु' इत्येवंरूपा तस्या यन्निबन्धनमभूत्वाभवनधर्मतादि तदेव **तथाविधविकल्पप्रसवनिमित्तं वरमस्तु**[४२.२०]। हेतुमस्यानिष्टेराह **तस्ये**[४२.२०]ति। अस्तु तदभ्युपगमस्तथापि कथं तस्य वैयर्थ्यमित्याह। **तदभ्युपगमे चे**[४२.२१]ति। **चरितार्था** [४२.२१] अन्येन [6]निष्पादितप्रयोजना **व्यतिरेकवन्तः** [४२.२१] तद्व्यतिरिक्ताः कल्पनानिर्मितास्तु ते संतु। तत्र [न] काचिद्बाधेति चार्थात्सूचितम्।

स्यादेतत्—यदि व्यतिरिक्तानित्यतादिधर्मयोगेपि वस्तुन एवावस्थायित्वादिरूपं व्यवहर्तारः प्रतिपादयन्ति, तदा तस्य भूत्वाभवनधर्मताद्युपगमे तदुपगमे च तस्यैतद्बुद्धिनिबन्धनत्वस्य युज्यमानत्वाच्चरितार्था व्यतिरेकिणो धर्मा न भ(धर्मा भ)वेयुर्यावता व्यतिरिक्तानित्यत्तादिभावे तदेव व्यवहर्तारः प्रतिपद्यन्ते। तत्कथं यदेव तत्कल्पनानिबन्धनमित्याद्युच्यमानं परभागं पुष्णातीत्याशंक्याह **अवश्यञ्चे**[४२.२२]ति।

**चो** यस्मादर्थे। व्यक्तमेतदित्यस्मिन्नर्थे वा। अनित्यताग्रहणं चोपलक्षणं तेन कृतकत्वादावपि यथा[8]योगमेव तत्प्रत्ययं **प्रतिपद्यन्ते**[४२.२३] निश्चिन्वन्ति । कृतकत्वादनित्यतामतमन्धन्त(तामनुमिन्वन्त) इति प्रकरणात् । कस्माद्वस्त्वात्मानं ते तथा प्रतीयन्तीत्याह **तस्मा**दनवस्थायीस्वभावस्या**नुरूपा** समीचीनोचिता या **अर्थक्रिया** तद**र्थितया प्रवृत्तेः** [४२.२४] प्रवर्तनात् । तेषामनुमातृणामित्यर्थात् । अत्र विपर्यये बाधकमाह **अन्यथे**[४२.२४]ति । **व्यतिरि**[24a][1]**क्ता**ऽनित्यतायां सत्यां **नित्यत्वात्** [४२.२५]स्थिरत्वा**त्तस्य** शब्दादिवस्तुनः प्रस्तावात् । **नित्यत्वादि**[४२.२५]ति ब्रुवाणस्यायमाशयो भिन्ननित्यतायोगेपि वस्तुनो नान्यथात्वं तस्यास्तत्राकिञ्चित्करत्वात् । किञ्चित्क्रियायां वा भेदाभेदादिदोषानुषङ्गात् । भेदेपि ततो व्यावृत्त(व्यावर्त)मानस्य तस्याकाशादेरिव नित्यत्वव्यवस्थेति वस्तुनो **नित्यत्वाद्धे**[४२.२५]तोस्तस्य नित्यत्वस्य [2]वस्तुनो योऽ**वगमस्तेनार्थि**[1]**त्वे** न्यायप्राप्ते सति **अयमनु**माता दि(ता ह्यनि)त्यशब्दादिपदार्थ**साध्यार्थक्रियार्थी**–[४२.२५][2]**इति**स्तस्मा**च्छब्दादिकं नित्यमाशंकमानः** [४२.२६] तदसंदेहेऽनुमानायोगात् । तथा सन्दिहानः **किं** कस्माद्वस्तुनोऽ**नित्यताविचारं प्रत्याहितास्थः** [४२.२६] कृततात्पर्यार्थः । अनित्यतायास्तद्व्यतिरिक्तत्वात्तस्य स्थिरात्मतानिश्चयादेव[3] तत्संशयपूर्वकानित्यताविचारस्यैवायोगादिति भावः ।

**व्यतिरिक्तानित्यत**येति क्वचित्पाठः । तत्र नित्यत्वे प्रयोज्ये हेतौ तृतीया प्रत्येया । व्यतिरिक्तायामनित्यतायां वस्तुनस्तथा विचारो न युज्यत इति प्रतिपाद्य दोषान्तरमपि तस्यां दर्शयन्नाह **व्यतिरिक्तायां चे**[४३.१]ति । **तत्रैव** प्रतिपन्नायामनित्यतायां न वस्तुन्यप्रतिपन्न इत्यर्थात् सूचितम् । **तद्द्वारेण** [४३.२] व्यतिरिक्तानित्यताद्वारेण । **प्रतिपत्ते**[४३.२]र्वस्तुनस्तथात्वज्ञानात् । व्यवधीयते वस्त्वनेनानित्यतादिनेति **व्यवधिस्तेन** [४३.३]। व्यवधानं वा व्यवधिस्तेन **किम्** [४३.३]। **अव्यवहितस्यैव** भिन्नानित्यतादिव्यवधानशून्यस्यैव वरमस्तु प्रतिपत्तिः । विशेषहे[5]तुमाह–**तेनैवे**[४३.४]ति । व्यतिरिक्तानित्यताप्रतिपत्तावपि वस्तुनस्तथात्वप्रतीतिः कथं युज्यत इत्यादिदोषशतमुत्पश्यन्सोत्प्रासमाह **तदेतदि**[४३.४]ति । **एषो**[४३.८]ऽनन्तरोक्तो दोषो **न** [४३.८] भवति । **तत्स्वभावतया** [४३.८] हेतुभूतया । **कथञ्चि**[४३.९]त्केनचिद्रूपेण यो **भेदस्तस्योपगमे किञ्चित्फलमुत्पश्यामो** [४३.१०] नोत्प्रे[6]क्षामहे । यदि कथंचिद्भेदो न स्याद्भेदाधिष्ठानः साध्यसाधनभावः कथमुपपद्येतोयोनु(द्येतेत्याह) **साध्ये**[४३.१०]ति । **अपि** [४३.११] न्यायबलायातां संभावनामाह ।

---

१. अवगमार्थित्वेन S ।

२. नास्ति S ।

साध्यधर्मस्य साधनधर्मरूपतोपगमे सति भेदोपगमे फलं न किञ्चिदिति प्रतिपाद्य संप्रत्येकात्मसाध्यसाधनयोर्भेद एव न संभवति । तत्कथं स चे[7]तनोपगम्येति(गम्य इति) (?) प्रतिपादयन्नाह **न चे**[४३.११]ति। **कथंचित्** केनापि स्वभावेन यो **भेदः** [४३.१२] कृतकत्वानित्यत्वयोः स **न** युक्तः। कस्मादित्याह **एकस्मादि**[४३१.२]ति । येन धर्मिस्वभावेन तयोरभेद इष्यते तस्मादे**कस्मात्स्वभावभेदान्नयो**[४३.१२]-धर्मयोरिति प्रस्तावात् । येन स्वभावेन **तयोर**[४३-१३]भेदस्तेनापि [न] भेद एव येनायं दोषः स्यात् । कि[8]न्तु ततोपि स्वभावात्तयोः कृतकत्वानित्यत्वयोः कथंचिद्भेदाभेदौ न भेद एवाभेद एवे(एव वे)ति। येन स्वभावेनाभिन्नाविष्येते तदेकस्वभावादपि **भेदवतो-**[४३,१४]भिद्यमानयोः । **तेन** भेदावधिना स्वभावेन **कथञ्चिद्भेदनिमित्तम्** [४३.१४]इति। यद्यभेदो नेष्यते तदैकान्तिको भेद एव स्यात्। सति चैवं पूर्वको दोष इति प्रायेणो[24b][1]क्तम्॥ **तेनाप्य**[४३.१६]भेदनिमित्तेनाभिन्नेन स्वभावेन कथंचिद्भेदनिमित्तमिति प्रस्तावाद्बोद्धव्यम् । **अपरोक्षोऽभ्यु(रोऽभ्यु)पगन्तव्यः**[४३.१५] । अत्रापि यदि तेन स्वभावेन तयोरभेद एव भवेत्तदैकान्तिकोऽभेद एव तदा च कल्पनावभासिभेद-निबन्धनः साध्यसाधनभावः स्यात् तथा चास्मन्मतानुप्रवेशप्रसङ्ग इत्याशयोऽवसेयः। अभेद[2]-निमित्ते भेदनिमित्ते च स्वभावान्तरेऽभ्युपगते माभूदैकान्तिकोऽभेदो भेदो वेति पुनस्तथाभूत-स्वभावान्तराभ्युपगमो न्यायप्राप्तः । पुनस्तत्राप्येवमित्यभिप्रायवानितिशब्दहेतावभिप्रायाह **अनन्तैव** [४३.१६]ति (°प्रायवानाह इत्यनन्तैवेति। इति शब्दो हेतौ) । न केवलम-विकल्पिकायां बुद्धावत्यौ**प**[४३.१६]शब्दः । **परंपरा** [४३.१७] परिपाटिः । **तत्कल्पनया**[४३.१८] भिन्नाभिन्नस्वभावकल्पनया **विप्रलम्भ[3]न्ते** [४३-१८] विसम्वादयन्ति । दूषणान्तरमप्यत्रोपचिन्वन्नाह। **कथंचिचेति** [४३.१९] । भेदपक्षभाविना संबन्धाभावेन साध्यसाधनभावायोगादित्यादीनां दोषाणां कथम**नवसरो**[४३.२०]ऽ-वसरोऽवकाश एवेत्यर्थः । इतोपि भिन्नाभिन्नरूपोभयधर्मासंभव इति संक्षेपेणाह **यश्चे-**[४३.२०]ति । **पुरोधाय** [४३.२०]पुरस्कृत्य विकल्पबुद्ध्या आलम्ब्येति [4]यावत् कल्पनाघटितस्य प्रतिषेधात् **पारमार्थिक**[४३.२४] इत्याह । **इतिः** त्रितयस्याकारं दर्शयति । त्रयोऽवयवा अस्येति **त्रितयम्**[४३.२०] ।

प्रकरणमुपसंहरन्नाह **तस्मादि**[४३.२४]त्यादि । **स चो**[४४.१८]क्तरूपोऽ-न्वयः । **तस्या विरोधाद**[४४.२०]नुपपत्तेः।

---

१. स्वभावादभेदात् S ।

२. नास्ति S

यथा चायोगस्तथोपरिष्टात्सहकारिपर्वणि निर्णेष्यते ।

भवतोऽस्मादभिधानप्रत्ययाविति **भावः** [४५.५] **कार्यत्वा**श्रि[४५.५]त्यादिना तमेवाभिव्यनक्ति । तद्भेदानुविधानमेव साधयन्नाह **चन्दने**[४५.२६]त्यादि । **ऊर्णा** मेषलोम **भेदो** विशेषः । अनेनैतदाह—यद्यदृश्यं तस्य कारणं स्यात्तत्कथमकारणस्येन्धनादेर्भेदमनुवि[द]ध्यादिति । इन्धनभेदानुविधानं धूमस्य प्रतिपाद्य वह्निभेदानुविधानं प्रतिपादयन्नाह—**अल्पे**[४५.२७]ति । अल्पश्च महाँश्चाल्पमहान्तौ तौ च ताविन्धनविकारौ च तत्कारिणः। प्रातिपदिकग्रहणे न हि तदन्तस्य ग्रहणम् इति । "आन्महतः समानाधिकरण" [पा. ६.३.४६ ] इत्यात्वन्न भवति । **तदनुरूपस्या**[४५.२७]ल्पमहतो वा धूमस्य दर्शनादिति सम्बन्धः । अदृश्यात्मनोऽग्न्यादिसामग्रयां नियतं सन्निधान[7]मुपेक्ष्याऽग्न्यादेरेव कार्यं धूम इति । एतत्साधिकामुपपत्तिमभिधायाधुना तन्नियतसन्निधानमेव तस्य न युज्यत इति दर्शयन्नाह **न चे**[४५.२८]ति । **चो** वक्तव्यान्तरसमुच्चये । तस्याऽग्न्यादेः **कार्यं तत्कारणं** तद्भावस्**तत्ता** [४६.१] । तस्यैवादृश्यस्य तदनन्तरं भावान्न धूमः स्यादिति भावः । **चो**[४६-३]ऽदृश्यकार्यत्वेन समं धूमादिकार्यस्य तुल्योपायत्वं[8] समुच्चिनोति । **तस्या**दृश्यस्य सत(सतः)तद्भावानुविधानम् । **चो**ऽवधारणे **समान**[४६-४]मित्यस्मात्परो द्रष्टव्यः । [1]**अत्रापि** वृक्षेन्धनयोरपि **तथाभावकल्पनायां तदेवोत्तर**[४६.५]मिति । तदुपलम्भे प्रागुपलब्धिलक्षणप्राप्तमुपलब्धमुपलभ्यत इति । वृक्षादिभावे नियतसन्निधेरदृश्यात्मनः कुतश्चिदिन्धनस्य भाव इति **पुनर**[४६.६]प्रथमे **चोद्ये** [25a] [1]परकीय**एष**[2] **एव** वाक्य(वृक्ष)भेदानुविधानादिन्धनस्य वृक्षादिसन्निधानेऽदृश्यात्मनो नियतसन्निधानता युक्ता, प्रतिबन्धाभावात् **प्रतिबन्धे**[४६.२]**चे**[3]त्यादि । वृक्षादिकारणत्वं तस्य **वृक्षादेः स्वहेतोरेव**[४६.५]बीजादे**र्भावदर्शनादि**[४६.५]ति परिहारः । **तत्रा**प्यदृश्यात्मनो ऽनियतसान्निधेरित्यादिचोद्यपरिहारयोराभीक्ष्ण्येनानवस्थानात् पर्यवसानं च(नं न) स्यात् । ततश्चै[2]कस्यापि नियतकार्यत्वं न स्यादित्याकूतम् । यदि वा तस्याप्यदृश्यस्य भावे नियतसन्निधान[न]परमदृश्यं कारणं किं न कल्प्यते ? न्यायस्य समानत्वात् । तथात्राप्येवमि**त्यनवस्था** न व्यवस्थितः कार्यकारणभावो भवेदित्यर्थः । अथवा **तत्रापि** [४६.५] वृक्षादौ **तथाभावकल्पनायाम्** [४६.५] दृश्यभावकल्पनायां परेण क्रियमाणायां तदेवोत्तर [[3]मिन्धना]देर्वृक्षादिभेदानुविधानात् । न च वृक्षादिसन्निधाने नियतसन्निधानता युक्तेत्यादि । नापि वृक्षादिकारणत्वमदृश्यात्मनो वृक्षादेः स्वहेतोरेव बीजादेर्भावदर्शनादिति

१. तत्रापि S
२. स एव S
३. बन्धे वा–S

च। उत्तीर्यतेऽनिष्टपक्षादनेनेत्युत्तरमेतत्। बीजादिभावे नियतसन्निधिरित्यादौ **पुनश्चोद्ये** [४६.६] च परस्य स एव बीजादिभेदानुवि[4]धानादित्याद्यनंतरोक्तोऽस्माकं **परिहारः** [४६.६] परचोद्यप्रतिविधानम्। **अनवस्था** [४६.६] चानन्तरं व्याख्यातेति। **एतेने-**[४६.६]न्धनादेः स्वहेतोरेव वृक्षादेर्भावदर्शनादिति वचनसामर्थ्यात्, यस्य यस्माद्भावो दृश्यते तस्य तत्कारणत्वमिति प्रतिपादितेन। यस्या एव सामग्र्या अग्नीन्धनादेरुत्पत्तिस्तस्या एव तद्दृश्यत्व[5]मुपजायत इति। **एकसामग्र्यधीनता**[४६.७]तयोर्नियतसन्निधाननिमित्तं सापि **प्रत्युक्ता** प्रत्याख्याता कस्यचिद्भावे विज्ञायमानस्यैव तत्कार्यत्वव्यवस्थासिद्धेः। तद्भावेऽनुपलभ्यमानस्य तु तत्कार्यत्वकल्पनायामतिप्रसंगादिति भावः। अत्रैव वक्तव्यान्तरं समुच्चिन्वन्नाह **तदि**[४६-७]ति। तस्यादृ[6]श्य**स्यान्वयव्यतिरेकानुविधानात्** [४६.७]। **तद्**[४६.८]दृश्यम्। **तच्चा**[४६.८]न्वयव्यतिरेकानुविधानम्। निमित्ताभावमेवावेदयन्नाह **कार्येति** [४६.१०]। सत्स्वन्येषु कारणेषु समर्थेषु कार्यमभवत्कस्त(वत्त)दुत्पत्तौ कारणान्तरमपेक्षणीयं प्रतिपादयति। न तु भवे(व)देवेति समुदायार्थः।

संप्रति स(त)त्कारणत्वमुपेत्यापि[7] नास्मत्प्रतिज्ञातस्य काचित्क्षतिरिति प्रतिपादयितुमाह **रूपन्त्विति** (भवत्विति) [४६.१२]। **यतो**[४६.१४]वह्नयादेः कारणत्वहानेः अग्न्यादेरन्यस्यापि [2]भावः[भावे] धूमं प्रति कारणत्वेन कथं न अग्न्यादेः **कारणत्वहानिः** [४६.१४]। कथञ्च तन्निश्चयेन प्रवृत्तौ न विसम्वाद इत्याशंक्याह तस्य (?)। अभ्युपगमनीयदृष्टान्तद्वारेणामुमर्थं द्रढयन्नाह[8] **नही**[४६.१५]त्यादि। दृष्टस्य कारणस्य **हान**मभावो न ह्यकारणत्वेन प्रतीतस्य कारणत्वहानिरित्यर्थः। **तस्य** दृष्टकारणस्य **कार्ये तद्दर्शनात्** [४६.१६]। **अतत्प्राप्ति**[४६-१६]र्दृष्टकारणाप्राप्तिः प्रसज्यत आपद्यते अनेनेति प्रसङ्गापादनमतिशयितः प्रसङ्गोऽ**तिप्रसंग**स्तेनालं [४६.१६] न किञ्चित्। ननु च तद्भावे भावस्तदभावेऽभावश्च [25b][1]कार्यधर्माविमौ तत्कथमयमेव कार्यकारणभाव इत्युच्यते। कार्यभाव इति तु युक्तं वक्तुमिति। सत्यमेतत् केवलमेतास्मिन्कार्यधर्मे कथिते कारणधर्मोपि स्वभावे भावो भावनं भावो भावयितृत्वं सत्तयाऽभिसम्वन्धयितृत्वं स्वाभावे चाभावोऽभावनमभावयितृत्वमनुत्पादयितृत्वं यत् तल्लक्षणः सुज्ञानो भवतीत्याचार्येणैव[2]मुक्तमनेनाप्येवं व्याख्या-

१. अत्र 'यतो वह्नयादेः कारणत्वहानेः' एतावान् पाठः अग्रे 'विसंवाद इत्याशङ्क्याह' एतदनन्तरं संगच्छते। प्रमादात् प्रागायातो भाति।

२. अग्रेतनं 'तस्य ?' इति शंका चिह्नितं पदं अत्रत्यं भाति। तथा च 'तस्य भावे' इति 'तद्भावे' [४६.१३] इत्यस्य विवरणम्।

तम्। तेनायमर्थः—अर्थान्तरत्वे सति यः प्राग्भावी सो(स्वा)न्वयव्यतिरेकावनुविधापयति तत् कारणम्। यश्च पश्चाद्भाव्यन्वयव्यतिरेकानुविधापनान्वयव्यतिरेकानुविधानलक्षणः **कार्य-कारणभाव** [४६.२२] इति। यद्वा कार्यकारणभावनिश्चयहेतुत्वादयमेव तथोक्तः। तथा हि कार्यगताभ्यामेव तद्भाव[3]भावतद्(तद)भावाभावाभ्यां तयोः कार्यकारणभावो विभाव्यते। असति कारणत्वे तद्भाव(वा)भावयोस्तद्भावाभावावेव न भवेतामिति। नायमेवमयमेव कारण-भावो नाम अन्य एव द्विष्ठः सम्बन्धोऽस्तीत्याशंक्याह **स हीति** [४६.२३]। **हि** यस्मा-दर्थे। **ताभ्यां** [४६.२३] तद्भावभावतदभावाभावाभ्याम्। स्वरूपे[4]णास्वीकृतकार्यकारण-रूपयोरग्निधूमयोः दूषणान्तरमन्वचिन्वन्नाह **स्वभावेन चे**[४७-१]ति। **तस्य**[४७.४] अपूर्वस्य रूपस्य तेन निष्पाद्यमानस्य। **ततो**[४७.४]ऽकार्यकारणरूपाभ्याम्। नहीत्वाय(?) र्थान्तरस्यत्व समर्थनम् (?)। ततस्तस्य **ततो**[४७.९]ऽर्थान्तरत्वात्। **पूर्वके**[४७.९] इति कार्यकारणभावसम्बन्धेन क्रियमाणो(माणात्) [5]रूपात्प्राग्भाविनी वह्निस्तस्य धूमरूपे (?) **तद्भावः** [४७.१३] कार्यकारणभावः। तयोस्ताद्रूप्येपि कारणबुद्धावस्योपयोगान्न वैयर्थ्य-मित्याह—**कार्ये**[४७.१३]ति। **अपि** [४७.१४] न्यायतः सम्भावनां दर्शयति। कथमवसीयते नार्थान्तरनिमित्ते इत्याह **तस्ये**[४७.१४]ति। **तस्य** तत्सामर्थ्यो-(तस्य ताभ्यामर्थो)न्तरस्य **तथाविधस्य** [४७.१६] तद्विवेकेनाप्रति[6]भासिनः। **अपि** [४७.१६]व्यक्तमित्येतदस्मिन्नर्थे। सर्वं सर्वत्र गृहीतमितीष्टं धर्ममतिक्रान्तः प्रसङ्गो**ऽति-प्रसङ्गः** [४७.१६]। तस्यानुपलब्धिलक्षणप्राप्तत्वाद्विशेषे(ष)णासिद्धोयं हेतुरित्याह **अनु-पलब्धी**[४७.१६]ति। किमवश्यमुपलभ्यमानेन तेन तद्बुद्धिहेतुना भाव्यं येनैवमुच्यत इत्याह **न ही**[४७-१८]ति। **तद्बु[7]द्धी**[४७.१८] कार्यकारणबुद्धी। **अस्य** [४७.१९] अर्थान्तरस्य **तयोः** [४७.१९] कार्यकारणबुद्ध्योः। न चान्वयव्यति-रेकानुविधानमविदुषस्तद्बुद्धी भवत इति बुद्धिस्थम्। उपपत्त्यन्तरमत्रैव समुच्चिन्वन्नाह **न चे**[४७.१९]ति। **स्वविशिष्टप्रत्ययनिबन्धनं** [४७.२०] चों(स्वो)परक्तज्ञान-निबन्धनम्। **कार्यकारणबुद्ध्यो**[४७.२१]र्विकल्पात्मिकयोरिति प्रकरणाद् द्रष्टव्यम्। तद्बु[8]द्धिनिबन्धनत्वेपि तस्य कथमवश्यमुपलक्षणमित्याह **नही**[४७.२२]त्यादि। **चो** [४७.२४] वक्तव्यान्तरसमुच्चये। **कार्यकारणाभ्याम**[४७.२४]ग्निधूमाभ्या**मर्था-न्तरस्य** [४७.२४] भिन्नस्य। कार्यकारणभावरूपस्य सत्त्वस्य सबन्धान्तरसद्भावात् कथं न घटत इत्याह। **सम्बन्धे**[४७.२५]ति। तस्मात्कार्यकारणाभावसंबन्धादन्यस्य तेनाप्यर्थान्तरेण [26a][1]सम्बन्धेन सहास्य कथं संबन्ध इति पर्यनुयोगे संबन्धान्तरं कल्पनीयम्। पुनः पर्यनुयोगे पुनस्तथेति **अनवस्था**[४७.२५]प्रसक्तिस्ततः। न चैवं सम्बन्धान्तरं परिकल्प्यते। क तर्हि कार्यकारणभूतवस्तुकार्यकारणाख्यसम्बन्धयोरकार्य-

कारणभाव एव सम्बन्ध इत्याह **कार्ये**[४७.२६]ति । [1]**तद्भावस्य** [४७.२७] कार्यकारणभावस्य भिन्न[2]स्य कल्पितस्य ततोऽसहभावित्वात् । **कार्यकारणकाले**[४७.२७] कार्यकारणभूतवह्निधूमादिवस्तुकाले । तयोश्चैककालिकत्वं कुतो येनैकजनकत्वं स्यादिति । अत्र गजनिमीलिकां कृत्वैतदुक्तं द्रष्टव्यम् । **स च** [४८.३] कार्यकारणाध्यवसायः । भवत्वसौ कल्पितविषयस्तथापि भिन्नसम्भवः कथं न भवेदित्याह–[3]**कल्पिते**[४८.४]ति । **तदध्यवसायस्य** कार्यकारणताऽध्यवसायस्य । **त**[3]**स्य**[४८.४] भिन्नस्य कार्यकारणभावस्य । माभूत्कल्पितविषयोयं तदवसाय इति हि तस्य कल्पना स चेत्तथाविध ऐषितव्यः किं तेनेति भावः । किं कल्प्यमानोसौ तद्भावः किं कार्यकारणभावाभ्यां सहिताभ्यां जन्यते आहोस्विदे[4]कैकेनेति पक्षयोराद्यं पक्षं क्षपयन्नाह **कार्येति** [४८.५] । कार्येण जन्यमानः कार्यभावः स्यात् । कारणेन जन्यमानश्च कारणभाव इत्यभिप्रेत्य **कथमि**[४८.६]त्याह । प्रत्येकजन्यमानतायामपि कारणमुद्दिश्य निरूपयन्नाह–**यदा चे**[४८.६]ति । **पश्चा**[४८.८]च्छब्दापेक्षया तु सकार्यस्येति वि[5]भक्तिविपरिणामेन योज्यम् । अ[3]तसर्थप्रत्यययोगेनषष्ठी प्राप्तेः । **तत्तस्मादुभयोः**[४८.९] कार्यतद्भावयोः ।

नन्वेकसामग्र्यधीनतैवानयोः सम्बन्ध इति कथं परस्परासम्बन्ध उच्यत इति चेत् । न, कार्येणापि सममस्य कार्यकारणभावस्य संबन्धस्य प्रकृतत्वात्सूक्तमिदम् । एक[6]सामग्र्यधीनतेष्टौ च तदुत्पत्तेः पूर्वं कारणं न कारणं स्यात् । त्वन्मते तद्योगात्तदव्यवस्थितेर्योयमप्राप्तत्वादिति दोषो द्रष्टव्यः । **कार्यस्य** धूमादेः **क्रिया** [४८.११] करणं **कथम्** । **तदपेक्षं** [४८.१३] तद्धूमादिक्रियापेक्षम् । **अस्य**[४८.१२]वह्न्यादेः असत्त्वान्मा स्म तज्जनयत, का नो हानिरित्याह **तद्भावश्चे**[४८.१५]ति[7] । **तद्भावः** कार्यकारणभावः **संबन्धः** । कारणाभावादनुत्पन्नश्च(न्नाश्च)शशविषाणा यथा नः (न) कथं तद्भावसम्बन्धो भवितुमर्हतीत्याशयः । संप्रत्यक्षणिकपक्षमभ्युपगम्याह–**अक्षणिकत्वेपीति** । प्रत्ययहेतुः कार्यकारणबुद्धिहेतुर्वा नातिवर्तते । यदि हि तदाश्रितं स्यात्तदा तत्र तथाविधं बोधं विदध्याद[8]न्यथाऽसति विप्रकर्षाभावात्सर्वत्र तद्बुद्धिं जनयेन्नो वा क्वचिदपीति भावः । इदं पुनरत्र साधु दृश्यते । अयं खलु कार्यकारणभावः कार्यकारणयोर्वस्तुनोर्वर्त्तमानो नांशेन वंशदण्डवद्वर्तते अखण्डरूपत्वात् । कार्याभावः कारणा[4]भाव इति प्राप्तेरनेकरूपतापत्तिप्रसक्तेश्च । प्रत्येक[26b][1]रूपकार्यत्वेन वर्तमानश्च यथाकार्यकार[ण]योः कार्यकारणबुद्धी जनयति तथा प्रत्येकं जनयेत् । सति चैवं वह्नावेव धूमापेक्षयैव कार्यकारणबुद्धी प्रसज्येयातां तथा धूमेपि तद्वह्न्यपेक्षयैव कार्यकारणबुद्धी प्रसङ्ग(सज)तः । मा स्म वा कार्यकारणयोरपि

---

१. सद्भावं S  २. तस्या S ।  ३. षष्ठ्यतसर्थप्रत्ययेन ( पा० २. ३. ३०. )
४. 'कारणभाव' इत्यपि पठ्यते ।

भूतामिति । तदेकप्रका(हा)रनिहतेऽपि सम्बन्धेऽस्मिन्निमामीदृशीं सूक्ष्मेक्षिकां कुर्वता भट्टार्चटेन [2]कथमयं स्थवीयान्दोषो न दर्शित इति न प्रतीमः ।

ननु यः किल कार्यकारणलक्षणसंबन्धान्तरवशात्कयोश्चिद्वस्तुनोः कार्यकारणरूपतामुपैति तं प्रत्येतदुच्यमानं शोभेत । अस्माकं तु कार्यसमवायं कारणत्वं कारणसमवाय(यि)त्वं च कार्यत्वमिच्छतामित्यनन्तरोक्ताद्दोषान्न(क्ता दोषा न) किंचिदुपघ्नन्तीति नैयायिकवचनमाशंक्य तदभि[3]मानमप्युन्मूलयन्नाह—**समवायीति** । समवायिकारणस्यैव कपालादेः । तत्रैव घटादिकार्यस्य समवायात् । **चो** यस्मादर्थे । **निमित्तकारणं** कुलालादि । **असमवायिकारणं** कपालसंयोगादिः । तयोर्न कार्यसमवायोस्तीति न कारणं स्याच्च-तश्चाव्यापित्वं लक्षणदोष इति सामर्थ्याद्दर्शितम् । कार्यलक्षणे[4](ण)स्याप्यकार्यस्य **वेति** वाशब्दोऽपिशब्दस्यार्थे । **तत्समवायः** कारणसमवायः । समवायिकारण एव कपालादौ समवायः कार्यत्वं न निमित्तासमवायिकारणयोरिति सप्तम्यन्तं स(पद)द्वयमिह सम्बन्धव्यम्, कपालादिसमवायिन एव घटादेरुदयोपगमात् । ततश्च निमित्तासमवायिकारणपेक्षया घटादि[5]कं कार्यं न स्यादित्यत्रापि अव्यापितैव दर्शिता ।

इदानीं साधारणं दूषणमुपदर्शयन्नाह **तस्य चेति** । **तस्य** समवायस्य **चो** वक्तव्यान्तरसमुच्चये । अन्यथात्वव्याख्यानमत्र साहसमिति नानूद्यतेपि । व्यक्तिभेदविवक्षयोपयुक्तकार्ये वा **सर्वत्र**शब्दप्रयोगात् । **सर्वत्र** कार्यकारणभूते वस्तुनि । **अविशेषाद्**[6]-विशिष्टरूपत्वात् । **परस्परम**न्योन्यं वह्नेर्धूमो धूमस्यापि वह्निः । कार्यं कारणं च स्यात्, समवायस्य कार्यत्वकारणत्वलक्षणस्य विशेषादुभयस्ताद्रूप्यमताद्रूप्यं वा न समं स्यादित्येवं वदितुरभिप्रायः । अथवा सर्वत्र काले वस्तुनि अकार्यकारणभूतेपि । सर्वत्र वा अंतशो महासामान्यस्य सत्तायाः[7] समवायभावान्न समवायभावो विभावितः । किंत्वविशेष एवानूदित इति द्रष्टव्यम् ।

ननु नाविशिष्टः समवायः कार्यत्वकारणत्वलक्षणत्वेनेष्टोऽस्माकं किंतु पूर्वोत्तरभावाभावविशिष्ट इत्याशंक्याह **पूर्वेति** । पूर्वोत्तरकालावच्छिनौ पदार्थौ पूर्वोत्तरावुक्तौ । तयोर्यौ भावाभावौ, पूर्वभाव एव यदुत्तरस्य भावः । तदभा[8]व एव योऽभावोऽभवितृत्वम्, पूर्वस्यापि यः स्वभाव एव भावो भावनं सत्तयाऽभिसंबन्धकत्वं स्वाभाव एव च योऽभावोऽभावनं समं (?) [अ]भावयितृत्वं तद्विशेषणः समवायः कार्यकारणलक्षणम् । एतदुक्तं भवति योऽर्थान्तरं स्वान्वयव्यतिरेकावनुविधापयति, यश्चार्थान्तरस्यान्वयव्यतिरेकावनुविधत्ते एव अन्वयव्यतिरेकानुविधा[पनाऽ][27a][1]न्वय व्यतिरेकानुविधायिनी वस्तुनी विशेषणे यस्य समवायस्य स तद्विशेषणः । कार्यकारणत्व-

लक्षणत्वेनेष्ट इति न सर्वत्र तथाभावप्रसङ्ग इति । अन्यथा व्याख्यानं स्वभावशब्दस्य दुर्योज्यत्वात्साहसमिती नानूद्यतेपि। एतन्निषेधयन्नाह । **अयुक्तेति** । हेतुमाह **तदिति** । **तेन** भावाभाववता पूर्वोत्तरकालेन वस्तुनाऽ**संबन्धाद्**वि[2]द्यमानसम्बन्धत्वात् । अयमर्थो विशेषणं व्यवच्छेदकं भवति । [3]तत्र केन संबन्धेन तथाभूते च वस्तुनि समवायमिममवच्छिन्नो(च्छिन्तो) येन तद्विशेषणं स्यात् । एवमेव च तथात्वे सर्वं सर्वस्य विशेषणं स्यादिति ।

ननु विशेषणविशेष्यभाव एव [4]सम्बन्धः । न च सम्बन्धेन सम्बन्धान्तरानुसरणं श्रेय इत्याशंक्याह **निरतिशयस्येति** । निष्क्रान्तोऽतिशयो व्यवस्थितरूपाद्विशेषो यस्मान्निष्क्रान्तो वातिशयात् । तस्य केनचिदतिशाययितुमशक्यस्येत्यर्थः । नित्यत्वाच्च निरतिशयत्वमिति बुद्धिस्थम् ।

एवं ब्रूवाणश्चैवमभिप्रैति विशेषणेन तावदतिशा[5]यके नावश्यभाव्यमन्यथा सर्वं सर्वस्य विशेषणमापद्येत । तत्रानित्यस्य काश्चिदतिशयमादधत् किञ्चिद्भवेदपि विशेषणम् । यदि तत्रापि सोऽतिशयः किं ततो भिन्न उताभिन्नः, यदि भिन्नस्तस्य किमायातमथाभिन्नस्तस्यैव तर्हि करणमापतितमिति काश्चिन्न पर्यनुयुञ्जीत, न तु पूर्वापरकालयोरविचलित[6]तद्रूपस्य नित्यस्येति। संप्रति ते यद्यवश्यं विशेषणे अस्यैष्टव्ये इति निर्बन्धस्तदेतत् युक्तरूपमित्युपग गर्भमुपदर्शयन्नाह **तयोरेव** वेति । **वा**शब्दोऽभ्युपगतं पक्षान्तरं दर्शयति । **तयोर**न्वयव्यतिरेकानुविधापनान्वयव्यतिरेकानुविधायिनो**स्तद्विशेषणयो**स्ततसमवायविशेषणत्वेना[7]भिमतयो**स्तल्लक्षणता** कार्यकारणलक्षणताऽस्तु । तयोरेव प्रमाणोपपन्नत्वादितरस्य च तद्बाधितत्वादित्याशयः । **इ**तिरनन्तरोक्तं प्रत्यवमृषति । **एवमभिप्रायवता** वार्तिककृतेति प्रकरणात् । अग्नीन्धनाद्येव सामग्रीत्यन्तर्नीतनियमः समासः कर्तव्योऽत एवामूं नियममसहमानस्य भिन्नसामग्रीवादिनो[8] मतमाशंक्य तन्निराकुर्वन्नाह **न चेति** । अन्यथा कुतोऽस्य प्रत्याख्यानग्रन्थस्योत्थानं स्यादिति । **स्वरूपत एवापर**सामग्रीनिरपेक्षेणैव रूपेण । **कार्ये** [४८.२६] जनयितव्ये **यतः** [४८.२६] शक्तिव्याघातात् । **अन्यत्रे**[४८.२६]ति निपातोऽन्यत्रवचनोस्ति तेनान्यदित्यर्थः ।

सामग्र्यपि जनयन्ती किं सामग्र्यन्तरसव्यपेक्षा जनयत्यथानपेक्षा । यदि [21b]साम[1]ग्र्यन्तरसापेक्षा तर्हि सैवान्वयव्यतिरेकाभ्यां जनिका स्यादाद्यसामग्र्यास्तु जनकत्वं हरीतकिं प्राप्य देवता रेचयन्तीत्यनेन तुल्यं स्यात् । अ(य)द्यनिरपेक्षा तद्वदभावोपि स्वहेतुलक्षणसामर्थ्यस्तन्निरपेक्ष एव किं न जनयतीत्यपि दूषणमिह द्रष्टव्यम् । न च सामग्री ततो भेदेनोपलभ्यते । न चास्या अनुपलब्धिलक्षणप्राप्तता युक्तेत्या[2]द्यपि पूर्ववद्द्रष्टव्यम् ।

**अन्वयो**ऽन्वेतृत्वमन्वीयमानत्वं च **व्यतिरेको** व्यतिरेचयितृत्वं व्यतिरिच्यमानत्वं च तावा**त्मानौ** यस्य तस्य [४९.११]।

**ये** [४९.१८] मीमांसकादयः । **तम**[४९.१८]न्वयनिश्चयम् ।

**तस्य स्वकारणाव्यभिचारद्वारक** [४९.२७] इत्याचक्षाणो यस्यार्थान्तरस्य येनान्वयः सकललोकसाक्षिकः सोऽवश्यं तज्जन्यस्तत्कारणजन्यो वे[3]ति प्रतिपादयति अतएव " कार्यकारणभावाद्वा " इत्यत्रापि तेन समं तत्कारणेन समं वा कार्यकारणभावादिति वेदितव्यमिति । तत्र स्वभावहेत्वादौ विपर्ययेण बाधकप्रमाणवृत्त्याद्येव दर्शितं तत्तु कथम**न्वयनिश्चय उक्त** [५१.१] उच्यत इत्याशंक्याह **स्वभावे**[५१.२]ति । **विपर्यये** [५१.२] साध्यविपर्यये हेतो**र्बाधकं**[4] विपरीतोत्थापकं **यत्प्रमाणं** तस्य **वृत्त्या** [५१.२] साध्यसाधनयोः तन्निबन्धनत्वात् । अन्वयनिश्चयस्येति प्रकरणात् । उत्तरत्राप्येवं द्रष्टव्यम् । तद्भावसिद्धेः तन्मात्रवृत्तिसिद्धेस्तद्धेतुकत्वात् । असद्व्यवहारस्य हि दृश्यानुपलब्धिमात्रे वृत्तौ सिद्धायां देशकालानवच्छेदेन यत्र यत्रोपलब्धिलक्षणानु[5]पलब्धिस्तत्र तत्रासद्व्यवहारयोग्यतेत्यन्वयनिश्चयप्रवृत्ते**र्निमित्तान्तराभावसाधकप्रमाणतस्तद्भावसिद्धिहेतुकत्वाच्चे**[५१.४,५]ति उक्तम् । **ते न ( ? )** कारणव्यापकानुपलब्धी ।

**तस्ये**[५१.१५]ति साध्याभावे हेत्वभावस्य । [3]**तद्भावसिद्धि**[५१.१९]**स्त**त्स्वभावतासिद्धिस्ततः **तादात्म्यतदुत्पत्तिलक्षणे** निमित्ते यस्य **प्रतिबन्धस्य**[6] प्रतिबद्धत्वस्य तस्य **निश्चयात्** [५१.२२] । तस्मादुत्पत्तिस्तत्कारणाद्वोत्पत्तिस्तदुत्पत्तिरभिप्रेतः । **अनुपलब्ध्योः**[५२.२] कारणव्यापकानुपलब्ध्योरिति प्रकरणात् । कदा पुनस्तद्विशेषणं नोपेक्षितुं शक्यत इत्याह **यदे**ति[५२.३] । **उपादत्ते** [५२.४] निदर्शनीयत्वेन स्वीकरोति प्रतिपादक इति प्रकरणात् । **असिद्धत्वादि**[7][५२.८]ति संदिग्धासिद्धत्वादिति द्रष्टव्यम् । **तत्** [५२.१२] साध्याभावेऽभावख्यापनम् । तादात्म्यतदुत्पत्तिसिद्धौ हि प्लवमानाकारायाः साध्याभावे साधनाभावप्रतिपत्तेरुत्पत्तिरित्याशयः । अमुमेवार्थं **तथा**[५२.१५]हीत्यादिना प्रसाधयति । फलवचनस्य कार्यशब्दस्य नपुंसकलिङ्गत्वादसति बहुव्रीहावजहल्लिङ्गत्वाच्च **कार्य**[५२.२१]मिति निर्देशो वार्तिककार[8]स्यावसातव्यः ।

**अनुपकारिका** [५२.२३] अकिञ्चित्करी । **अदर्शनमात्रा**[५२.२६]त्प्रतिबन्धविरहिताद्विपक्षेऽदर्शनात् केवलात् । **तदसंभवं** [५२.२६] व्यतिरेकासम्भवम् । तमेव

१. °भावप्रसाधक°S　　२. तदभावसिद्धिहेतुत्वाच्च° S ।　　३. तद्भावता° S

**तथाही**[५२.२७]त्यादिनोपपादयति । साध्याभावादन्यस्य तदनुपलब्धिकारणस्याभावात् एकत्र स्थितस्यापि तदनुपलब्धिरस्तीत्यभाव एव किं न भवतीत्याशंक्याह **देशे**त्यादि[1][28a]। **आदि**शब्दात्कालस्य परिग्रहः। **तत्र** [५३.३] धर्मिणि **सत्यपि**[५३.३] विद्यमानेपि **हेतौ अनुपलम्भमात्रस्य** [५३.४] उपलम्भविरहमात्रस्य । न तथाविधो व्यतिरेकोऽभिप्रेत इत्याह—**तथाविधस्ये**[५३.५]वेति ।

ननन्वदर्शनमात्राद् व्यतिरेकमिच्छतामुक्तेन न्यायेन तदसंभव एव दर्शितः। प्रतिबन्धमन्तरेण दर्शनमात्रादन्वयमिच्छतां तु न तदभावो भावितोऽव[2]श्यदर्शयितव्यश्चासौ "अविनाभावनियमोऽदर्शनान्न न दर्शनात्"( प्र० वा० ३.३० ) इत्यत्राभिधानादित्याशंक्यानन्तरोदित एवायमर्थ इति दर्शयितुमाह **अन्वयनिश्चयो**[५३.७]ऽपीति । **तेनापि**[५३.८] प्रतिबन्धनिबन्धनान्वयनिश्चयवचनेनापि । **दर्शननिबन्धनमिति** [५३.८] सपक्षे दर्शनमात्रनिबन्धनमिति प्रकरणाद् द्रष्टव्यम्। **अस्याप्य**[५३.९]न्वयस्यापि। न द[3]र्शनमात्रादन्वयमिच्छामो येनैवमभिधीयते किंतु भूयोदर्शनादित्याशंक्याह **न चेति**[५३.१२] । एवमुपलक्षणत्वादस्य नादर्शनमात्राद् व्यतिरेकमिच्छामोऽपि तु भूयोदर्शनादित्यपि द्रष्टव्यमेव । 'भूयोदर्शनगम्या हि '( श्लो०वा० अनु. १२ ) इत्यस्य शेषनिर्देशेनापि गमयितुमशक्यत्वाद् **व्याप्तिर**[५३.१३]न्वयात्मिकेति द्रष्ट[4]व्यम् । भवतोपि महानसमहाह्रदादौ भूयोदर्शनादर्शनाभ्यां किमन्यद् व्याप्तिनिमित्तमस्तीत्याह **असती**[५३.१४]ति । प्रतिबन्धनिबन्धनाभ्यामेव ताभ्यां सा सिद्ध्यति नान्यथेत्यनेन दर्शितम्। **क्वचिद् देशे बहुलं** [५३.१४] प्रचुरं यथा भवति **तथा दृष्टानां** [५३.१४] साहचर्येणोपलब्धानामामलकत्वकषायरसत्वादीनाम् । **अन्य[5]थात्वस्यापि** [५३.१४] क्षीरावसेकादिना मधुररसत्वादिभावस्यापि सम्भवात् । सम्भावनाया अवकाशं दर्शयितुं **तदसंभवे** [५३.१५] इति । **तस्यान्यथात्वस्यासंभवे**ऽभावे। एवमुपलक्षणत्वादस्य साध्यभावे भूयोदर्शनेपि न व्यतिरेकात्मिका व्याप्तिः सिद्ध्यति । के(क्व)चिद्बहुलं साध्याभावेऽभाविनामुपलम्भेप्य[6]न्यथात्वस्य संभवात्। तदसम्भवबाधकप्रमाणाभावादित्यपि द्रष्टव्यम् । तथाहि मधुररसत्वाभावेऽम्भस्त्वस्य साधनधर्मस्याभावः साध्यधर्मिणः सामुद्रादम्भसोऽन्यत्र सर्वत्र दृश्यत इति भूयोदर्शनेपि लवणोदधावेवान्यथात्वं दृष्टमिति । अन्यथाम्भस्त्वमपि महार्णवाम्भसो मधुरत्व[7]साध्ये सम्यग्घेतुरभ्यवगन्तव्यः प्रसज्येत । बाधकाभावात्कार्यव्याप्याभावव्यतिरेके सति स्याता(?)र्वाग्दर्शिभिरशक्यनिश्चयत्वेनालक्षणत्वादस्य साध्याभावे हीत्यलं बहुना ।

तादात्म्यतदुत्पत्तिलक्षण**प्रतिबन्धद्वयनिश्चयो** य एव स **चोपायः** [५४.१२] "सा विपर्यये बाधकप्रमाणवृत्तिः" इति वचनात् "प्रत्यक्षानुपलम्भसाधनः"

१. °निबन्धनाम् –S

इति वचना[6]च्च दर्शितः । **इति**[५४.१३]त्तस्मात्**पृथग्नोक्तः** [५४.१३] भेदे[न] नोक्त आचार्येणेति प्रकरणात् ।

प्रतिबन्धसिद्धावपि कथं कारणव्यापकानुपलब्ध्योरन्वयव्यतिरेकौ प्रसिद्ध्यत इत्याशंक्य एतदेवोपपादयन्नाह **तथाही**[५४.१४]त्यादि । कार्यव्याप्याभावव्यतिरेके सति किंरूपे तस्मिन्नित्याह [1]**तल्लक्षण** इति । तत्कार्यस्वभावात्मनि [28b] प्र[1]तिषेधप्रतिषेधस्य विधिरूपत्वादित्यभिप्रायः । **व्यतिरिच्यते** असंभवति । कथं व्यतिरिच्यत इत्याह । **कारणे**[५४.१४]ति । **अन्यथे**[५४.१६]ति यदि तद्व्यतिरेके न व्यतिरिच्यत इति ।

तदनु 'तादात्म्यतदुत्पत्त्योरविनाभावव्यापिकयोरि'ति पुरस्तादुक्तं कथं पुनरधुना **तादात्म्यतदुत्पत्त्योरविनाभावेन व्याप्तयोर्भावादि**[५५.२५]त्युच्यत इत्याशंक्याह **कृतक[2]मि**[५५.२६]ति । उभय[2]व्याप्तित्वादित्यर्थः । **प्रागेवोक्तमि**[५५.३०]ति-'अविनाभाववैकल्पञ्चे'त्यादिना पूर्वमुक्तत्वादित्युक्तम् । **यदि वे**[५६.१]त्यादिनोपपत्त्यन्तरमपि दर्शयति । कार्यहेतुप्रसङ्गात्**कार्यादप्यन्यदि**[५६.१]त्युक्तम् । **रोहिण्या** रोहिणीनक्षत्रस्य **आसत्ति**रुदेष्यमाणायाः प्रत्यासन्नता तस्याः **कॢप्तिः** [५६.१४] कल्पनाज्ञानमिति यावत् । **सापि** [५६.१४] तत्कल्पना **उक्तत्वादि**[५६.१६]त्येतज्जातीयं[3] प्रत्युक्तत्वेनोक्तमर्थादित्यर्थः ।

कथं पुनस्तस्यास्तदुदयानन्तरमुदयोऽवश्यंभावी संगच्छत इत्याशंक्योपसंहारव्याजेनाह **तस्मादि**[५६.१६]ति । **नक्षत्रचक्रस्ये**[५६.१६]ति कृत्तिकाख्यसप्ततारावृन्दस्येति प्रकरणादवसेयम् । **संक्रान्तिः** [५६.१६] पूर्वावस्थानदेशात्संक्रमणम् अभिव्यक्त्यवस्थाप्राप्तिर्वा तस्या हेतुरे[4]व **कालव्यवधानेने**[५६.१७]ति कियत्कालक्षेपेणेति द्रष्टव्यम् **कल्पयितव्य**[५६.१७]स्तद्धेतुत्वेनेति प्रकरणात् । अनेन तत्रापि प्रतिबन्धसद्भावो दर्शितः । नीडानुपघाते सत्यनुत्रस्तानां गृहीताण्डानां पिपीलिकानामेकदिगभिमुखानां सञ्चरणं दृष्ट्वा यद्वर्षानुमानं तदप्यसति प्रतिबन्धे न घटते तस्मा[5]त्तत्रापीयमेव गतिरिति दर्शयितुं **यथे**[५६.१७]तिना दर्शयति । इतरथा विवादाध्यासितसत्त्वादस्य कथं दृष्टान्तरूपतोपपद्येत । **भूतानां** [५६.१७] पृथिव्यादीनां **संक्षोभो**[५६.१७]ऽवस्थाविशेषः । य एव तथाभूतपीपिलिकासंक्षोभहेतुः स एव कतिपयकालव्यवधानेन पश्चात्कालभाविनो वर्षस्य हेतुरित्य[6]र्थोऽर्थाद्द्रष्टव्यः । कारणकारणतया च हेतुर्द्रष्टव्योऽन्यथा चिरातीतं कारणमिष्टं

१. तद्भावलक्षणे–S    २. कृतकत्वा–S

स्यादेष्टव्यंम्वा। **इति**[५६.१८]स्तस्मात् **हेतोः** कृत्तिकोदयस्य हेतोर्यो **धर्मः** [५६.१८] कतिपयकालात्ययेन रोहिण्युदयोपादानकारणशक्तिप्रबोधाऽऽधानेनान्यथा वा यज्जनकत्वं तदनुमानेन। इत्थंभूतलक्ष[7]णाचेयं तृतीया। **कल्पयितव्या** [५६.१८] रोहिण्यासत्ति कल्पनेत्यभिसम्बन्धात्स्त्रीलिङ्गेन निर्देशः। दृश्यत्वविशेषणानवच्छिन्नानुपलब्धि**रनुपलब्धिमात्रम्** [५६.२०]। **अभावायोगादि**[५६.२२]त्यभावविषयत्वायोगादिति द्रष्टव्यं **तद्द्वारेण** [५६.२४] विरुद्धोपलब्धिमुखेन। एवं ब्रुवाणः सैव विरोधग्रहणकालप्रवृत्ता दृश्यानुपलब्धिरिदानीं स्मर्यमा[8]णाऽभावसाधनी। तत्स्मारकत्वेन चोपलम्भस्यास्यैकज्ञानसंसर्गिवस्त्वन्तरानवच्छिन्नस्यानुपलब्धिरूपता अत एवोक्तं "प्रयोगः केवलं भिन्नः सर्वत्रार्थो न भिद्यते (प्र० वा० २.९०)" इत्यभिप्रैति। अत्र च यथा प्रज्ञाकरगुप्तेन पराक्रान्तं तथास्माभिर्धर्मोत्तरप्रदीपे दर्शितमिति नेहोच्यते। **अन्यथा** [५६.२५] यदि तद्द्वा[29a][1]रेणानुपलब्धिप्रयोगो नेष्यते। **अनिषिद्धाऽ**न्यभावे सत्यप्रतिषिद्धाऽनिवारितोपलब्धिर्यस्यान्यभावेपि सा तत्त्वत इत्यर्थः। **अभावासिद्धेर**-[५६.२५]भावानिश्चयादभावायोगादिति यावत्।

समुदायस्य साध्यत्वात्कथमसौ साध्य इत्याह **अवयव** [५७.५] इति। सम्बन्धव्यन्तरस्यानुपादानात्।

कस्यासौ स्वभावोऽवसातव्य इत्याह **साध्ये[2]ति** [५७.६]। तन्मात्रादन्वयित्वमपि तस्य संभाव्यते। ततो विशिष्यत इत्याह **यो हीति** [५७.१७]। यदि नाम न व्यभिचारस्तथापि कस्माद्विशेषणं नोपपद्यते इत्याह **संभव** [५७.२२] इति। परमतमपेक्षत इति **परमतापेक्षम्** ईक्षिक्षमिभ्यां चे(पा. वा. ४७०)ति कर्मोपपदेऽणः। परेपि किमेवमेषितारो न भवंति येन तन्मतापेक्षमिदमुच्यते इत्या[3]ह **नैयायिके**[५७.२५]ति। **वेगा**ख्यसंस्कारवता **द्रव्येण** मुद्गरादिना यः **संयोगा**[५८.४]ख्यो गुणस्तस्मा**दवयवेषु** घटादिद्रव्यारम्भकेषु कपालादिषु, **कर्माणि** क्रियाबहुवचनेन व्याप्तिमुपदर्शयति न तु बहुत्वसंख्यामेव। संयोगस्यैक्ये क्रियाया अप्येकस्या भावात्। यथा वेगवत्सू[4]च्यादिसंयोगे कुवलयदले आमे वा घटे, तथापि क्रियाप्रणालिकया द्रव्यनाशोऽस्त्येवेति। **तेभ्यः** [५८.४] कर्मभ्यः। **अवयवा**[५८.४]नां तद्द्रव्यारम्भकाणां द्रव्यारम्भकसंयोगप्रतिद्वन्द्वीविभागाख्यो गुण उत्पद्यते। **ततो**[५८.४] विभागात्संयोगविनाशो द्रव्यारम्भकस्य संयोगस्य विनाशः। ततः सं[5]योगविनाशात्। तेनावयवसंयोगेनाऽसमवायिकारणेन यदारब्धं द्रव्यं तद्विनश्यति। द्वेधा हि द्रव्यस्य नाशो वैशेषिकादिभिरभ्युपेयते आश्रयविनाशादसमवायिकारणविनाशाच्च। अत्र चासमवायिकारणस्यास्य संयोगस्य विना-

शात् । कार्यग्रहणेन तु वास्तवं रूपम[6]नूदितम् । न तु तदारब्धं चाकार्यञ्चास्ति यद् व्यवच्छिद्यते । यदि चा(वा) कार्यत्वेनैव तन्नश्यति । यत्कार्यं तदवश्यं नाशधर्मकमिति प्रतिपादयितुं **कार्य**[५८.५]ग्रहणम् । आहेत्य(भि)सम्बन्धाद्द्वितीयया निर्देशः । समवायबलाद्वृत्तौ तस्यैकरूपत्वाद्विशेषाभावो विवक्षितः । कृतकत्वानित्यत्वयोरेकत्वे कथं गम्य[7]गमकभावो भेदे तस्योपपत्तेरित्याह [9]**दर्शनेति** [५८.२६] । **कृतकत्वानित्यत्वयो**र्धर्मयोर्यो **भेदः** पृथक्त्वं तस्या**वभासः** स विद्यते यस्यां सा च सा कल्पना चेति तथा । धर्मभेदमवभासयतीति वा तथा । सा च सा कल्पना चेति तथा । इत्थं पदसंस्कारं कृत्वा पश्चादभूत्वाभवन्धर्मकभूत्वाऽभवन्धर्मकवस्तुदर्शनबलोत्पन्ना च सा [8]कृतकत्वानित्यत्वधर्मभेदावभासिकल्पना चेति विग्रहः कार्यः । सैव **द्वार**मु[५८.२७]पायस्तेन । साधकप्रमाणाभावाद्बाधकसद्भावाच्च न तत्कल्पना युक्तिमतीति भावः । एवं साध्यसाधनभावोपपत्तावपि तत्कल्प्यताम् । यदि तदेव व्यतिरिक्तमनित्यत्वादि तत्साध्यामर्थक्रियां प्राप्तुं हातुं वार्थिभिश्चिन्त्यते तदपि नास्तीति दर्शयितुमाह[1] [29b]—**कल्पयित्वापीति** [५८.२८ । **वस्त्वात्मन एव** [५८.२८] तद्धर्मिस्वरूपस्यैव । हानोपादानविषयतया **चिन्त्यत्वाद्** [५८.२९] विचार्यत्वात् । कथं तस्यैव चिन्त्यत्वमित्याह—**अर्थक्रिये**[५८.२८]ति । कैश्चिन्तनीयत्वमित्याह—**तदर्थिभि**[५८.२९]रिति । तामर्थक्रियामर्थयन्तीति तथा तैः । अर्थक्रिया च तदायत्ता अत एवोपेक्षा(पेया)र्थिन उपायमेवानुसरंतीति । एतदेवाचार्यवचनेन संस्पन्दयन्नाह—**तदु**[2]**क्तामि**[५८.२९]ति । यस्मादेवमेवैतन्नान्यथा **तत्त**स्मादुक्तमाचार्येण । सन् हि शब्दार्थोऽसन्ध्यावृत्तिः(ऽसद्व्यावृत्तिः) शब्दार्थ इति यः **पक्षभेद**[५९.१]स्तेन तं हेतूकृत्य ये शब्दार्थान्नापह्वते(ह्नुवते) **तैर्वस्त्वेव** [५९.२] शब्दादिकमेव । व्यावृत्तिः शब्दार्थ इति वादिभिरप्यर्थात् व्यावृत्तमेव वस्तु तथापि प्र(था प्र)तिपाद्यत इति तेषामपि वस्तुचिन्तनम् । अथवा शब्दार्थमनपव[3]दद्भिः सदापेक्ष्याभे(दादिपक्षभे)देन सत्त्वेनासत्त्वेन च वस्त्वेव चिन्त्यत इत्यर्थः । तस्मा(कस्मा)**द्वस्त्वेव चिन्त्यत** इत्याहाशं(त्याशं)कायाम् **अत्रहीत्युक्तम्**। **हि**र्यस्मात् । **अत्र** [५९.२] वस्तुनि । यद्यप्यत्र विधौ सामान्यादिरूपे व्यावृत्तौ च प्रसज्यप्रतिषेधान्मति(धात्मनि) फलोदयो न **प्रतिबद्ध**[५९.२]स्तथा(थापि) किं तथात्वेन चिन्त्यते इत्यत आह **अर्थेति** । **षण्ढस्य**[1][५९.४] सुरतमाचरितुमक्षमस्य तृतीया(य)प्रकृतेः । **रूपं** च **वैरूप्यं** चेति द्वन्द्वैकवद्भावः तत्र **कामिन्या** वृषस्यन्त्याः **किं परीक्षया** [५९.४] विमृष्यावधारणेन ।

---

१. तद्दर्शन० S

ननु यदि वस्तुतः कृतकत्वानित्यत्वयोस्तादात्म्यम् तर्हि वस्तुनः कृतकत्वनिश्चयेऽनित्यत्वमप्यैकात्म्यान्निश्चितमेवेति कथमनुमानावतार इत्याशंक्योपसंहारव्याजे[5]नाह—**तस्मादि**[५९.६]ति । यस्मात्तस्यैव वस्तुनस्ताद्रूप्यमवश्यैपितव्यं तस्मात् । **दृष्टा अपि भावाः केनचिदात्मना निश्चितास्तदन्येनात्मना अनुमानतो** निश्चीयन्त इति संवन्धः । **दृष्टाः** साक्षात्कृता **भावाः** शब्दादयो धर्मिणः । **केनचि**[५८.६]त्कृतकत्वादिना रूपेण, किंभूतेन ? **तस्मात्**कृतकादन्यदकृतकं तस्माद् **व्यावृत्तेन**[6] । **कथञ्चिद्**भ्यासपाटवादिप्रकारेण **तदन्येना**नित्यत्वादिना **तद्रूपम**नित्यरूपं यन्न भवति तस्माद् **व्यावृत्तेन** [५९.७] । अनेन व्यावृत्त्यभेदेन व्यावृत्ति(त्ते)र्भेदो दर्शितः । कृतकत्वेनेव यदि तेनाप्यात्मना ते तदा निश्चेतुं शक्याः कथमनुमानान्निश्चीयन्त इत्याह [५९.८] **अनिश्चीयमाना** इति । अनिश्चय एव कुत इत्याह । **भ्रा**[7]**न्ती**[५९.७]ति । भ्रान्तेर्विभ्रमस्य कारणं निरन्तरसदृशापरापरोत्पत्तिरविद्या च तस्य सद्भावात् ।

अथ यदि तदानीमनिश्चितरूपेण समं तस्य निश्चितस्य रूपस्य प्रतिवन्धो नावसितस्तर्हि कथमसम्वद्धदर्शनात्तन्निश्चयो भवितुमर्हतीत्याशंकायामनुमानं विशिष्टमाह **निश्चिते**[५९.८]ति । **प्रमाणान्तरतो** [५९.८] विपर्यये वाधकात्प्रमाणात् । **प्रति**[8]**बन्धावसायः पुरोवर्ती** पूर्वभावी यस्यानुमानस्य तस्मात् [५९.९] इतिस्तस्मात् **तस्य** [५९.१२] विनाशस्या**र्थान्तरनिमित्ततया तन्मात्रानन्वयित्वे** ।

यस्मादेवंभूता सत्ता तत्समवायो वा अनित्यता **अतएव** [५९.१६] कारणात् आत्मादावेवंभूतसत्तासमवाययोरभावादिति भावः ।

अथास्त्वेवम् किं नश्छिन्नमनेन तावद्विशेषणेनास्माभिरतत्स्वभावता[1][30a]विनाशस्याख्याता तावतैव चरितार्थाः स्म इति सौगतमतमाशंक्य स्वसिद्धान्ताभ्यासव्यामोहापस्मारः परः प्राह—**विनाश इति च** [५९.१६] **इति** । इतिर्विनाशशब्दं प्रत्यवमृषति । तेन विनाशशब्देनेत्यर्थः । प्रागभावादिभेदेन भावाभावस्यानेकविधत्वात् विशिनष्टि **प्रध्वंसाभावलक्षण**मि[५९.१७]ति । **कृतकत्वम**[५९.१७]पि भवद्भिस्तदात्मकमेव[2] मन्यते ततोऽयुक्तमतत्स्वभावताप्रतिपादनमिति च पुनराशंक्य पर एवाह—**कृतकत्वमिति तु**[५९.१७]भिनत्ति **मन्यामहे** [५९.१७] इत्यभिसम्बन्ध्यते । **तथाविधस्य** [५९.२०] प्रध्वंसाभावलक्षणस्य । **हेतुमत्ताया** [५९-२०] विरोधादनुपपत्तेः । कथं पुनर्विरोध इत्याह **स्वयमि**[५९.२०]ति । एवं ब्रुवाणस्तदुपपत्त्यनभिधानकारणं दर्शयति । **प्रतिपित्सवो**[५९.२३]ऽनुतिष्ठा[3]संवः । **मुद्गरादेः** [६०-१] सकाशादुद्गतेऽगि **तस्य** [६०.२] प्रध्वंसाभावस्य ।

**भावे** [६०.२] विनाशो वस्तुनि। **अनुपयोगाद्**[६०.२] अव्यापारात्। अतादर्थस्थ्योऽनि(दवस्थ्यमनि)त्यत्वं तस्य च तदवस्थत्वात् कथमनित्यत्वमित्यर्थः। यदि नाम तद्भावे तत्पूर्वावस्थितरूपान्न विचलति तथापि तद्विशेषणौ सत्तासमवायौ तस्याऽनित्यता व्यवस्थाप्य[1]त इत्याह **अविचालितेति** [६०.४]। अविचलितमनापन्नान्यथाभावं रूपं यस्य तस्य सत्तायामाह—सामान्यस्य समवायस्य चैकत्वेनात्मादेरपि तथाभावो भवेदिति भावः। 'विनाश इति च भावाभावं प्रध्वंसलक्षणं मन्यामह' इति यत्परेणोक्तं तदवद्यं प्रतिपाद्य 'कृतकं त्विति च' यदुक्तं तदपि [5]दूषयन्नाह **स्वकारणे**[६०.६]ति। समवायस्यैकत्वेनात्मादेरपि तथाभावप्रसङ्गेनैवमनिच्छतोपि न सिद्ध्यतीत्याशयः। अमुमेवार्थं विधिमुखेन साधयन्नाह [अ]**भूत्वेति** [६०.८] **वर्ण्यते** [६०.८] लोकेनेति शेषः। अनेनैतद्दर्शयति वृद्धव्यवहारो हि शब्दार्थनिश्चयभूमिः। कृतकत्वशब्देन चैवंविध एवार्थोऽभिधीयते[6] वृद्धैरिति। प्राक्प्रध्वंसाभावयोस्तद्विशेषणरूपतामुपेत्य प्राग्दूषणमुक्तम्। संप्रति तु तामपि विघटयन्नाह। **न चे**[६०.८]ति। एतच्च पूर्वमेव व्याख्यातप्रायम्। **तदेव** [६०.१०] अभूत्वाभवनं भवितृत्वं कृतकत्वमस्तु। एवं तुल्यन्यायतया वा(चा)भवनमनिच्छतोऽनित्यता न सिद्ध्यति। भूत्वाऽभवनोपगमे वाऽस्थिरस्वभावतयैवानित्यतास्त्विति अभिप्रायवतोक्तम् **अस्थिरस्वभावता चे**[६०.१०]ति। यदि वा तस्मादनेन(ना)स्थिरस्वभावतैव भावस्यानुमातव्येति यदुत्पत्त्यभिधानपूर्वकमुपसंहृतिः तदभिप्रायेणैवमुक्तम्। **कृतकत्वस्य व्यभिचारः** [६०.१६] साध्यरहिता वृत्तिरनैकान्तिकत्वमिति यावत्। प्रतिषेध्यस्यावश्यंभावित्वस्य यद्विरुद्धं अनवश्यं[5]भावित्वम् तेन यद्व्याप्त(प्तं) हेत्वन्तरापेक्षित्वं तस्योपलब्धिः **विरुद्धव्याप्तोपलब्धिरि**[६०.१९]ति च विरुद्धव्याप्त्यो(तो)पलब्ध्यप्रसङ्ग इति द्रष्टव्यम् परोपगमेन पक्षधर्मतासिद्धेः। यत्र हि व्याप्तिर्वास्तवी पक्षधर्मता तु परोपगमसिद्धा स प्रसङ्गहेतुः। यत्र तु त्रितयं प्रमाणसिद्धं स स्वतन्त्रो हेतुरित्याशय एषः।

**तस्य**[६०.२०]**च** परिमितस्य[1][30b] हेतोः **तदाश्रयस्य** [६०.२१] रङ्गाश्रयस्य वस्त्रादेः। उपघातकः प्रत्ययो **विधुरप्रत्यय**स्तदुपनिपातेन **नावश्यंभावि**तेत्यनवश्यंभावितेत्यर्थः। **पुनः** शब्देन रागाद्विनाशं [६०.२२] भिनत्ति। **तद्धेतुसन्निधे**[६०.२४]र्विनाशहेतुसन्निधेः **प्राक्** [६०.२४]। त एवोपघातक(का) विनाशकाः स्युस्ततश्च सहेतुको विनाशः सिद्ध इत्यस्याभिप्रायः।

**तत्कारणानां**[2] **च** [६०.२७] **स्वकारणायत्तसन्निधित्वा**दित्येव संबद्ध्यते। **सन्निहितानामपि** विनाशहेतूनां संबन्धीनीमानि विरोधीनि शक्ति-

विबन्धकानि योगिपिशाचादीनि तेषा**मप्यानन्त्यात्** [६०.२८] । **तद्भावे** [६०.२८] तेषां विरोधिनां सद्भावे । **तच्छक्तिप्रतिबन्धात्** [६०.२८] तस्य नाशहेतोः शक्तेरुपघातात् । यदि ते तद्धेतवस्तैरवश्यं तत्फलैर्भाव्यमित्याह [3]**नाव-श्यमि**[६०.२८]ति । **इ**तिर्हेतौ **सापेक्षोऽपि** [६०.२९] हि निद्रादिर्वेते (हरिद्रादिवस्त्रे) द्रव्यापेक्षोपि किं न स्यादिति प्रश्ने बौद्धीयं वचनं **स्याद्** [६१.२] **यदि तथोपलभ्येते**[६१.२]ति । **तथा** [६०.३] सर्वगतत्वेन । **यद्येवमि-**[६०.३]ति परः । **अन्यथाभाव**[६१.४]स्य क्वचिदभवनस्य **शंका** संदेहस्तया **ना-धातव्यो**[६०.४] **न** करणीयो भवद्भिरिति च प्रकरणात् । [4]अनेनैतत्परो दर्शयति सर्वत्रोपलब्धस्यान्यथाभावशंकैव भवतः प्रेक्षावतो न युक्ता केवलमनेन व्याजेन नूनं परसिद्धान्तस्यानवद्यतया मनःखेद एव त्वया क्रियत इति । **किं**[1]**पुनरि**[६१.५]ति सिद्धान्ती । सामान्यविशेषाकाराभ्यां प्रश्नः किंपुनःशब्देन निपातानिपातसमुदायेन दर्शि[5]तः । **समस्तवस्तुविस्तरव्यापी** [६१.५] सर्ववस्तुबाहुल्यव्यापी **ज्ञाना-लोको** [६१.५] यस्य भवतः स तथा । यथा तु वस्तुविस्तरशब्दसिद्धिस्तथा पुरस्ता-दभिहितम् । **तथाभावे** [६१.६] सर्ववस्तुदर्शित्वे वा कस्यचिद्धेतुकृतो विनाशो दृष्टः। सर्वस्यैव ताद्रूप्यमनिवारितमिति आह—**कस्यचिदि**[६१.६]ति । **तु**रवधारणे **हेत्वा**[6]-**यत्तजन्मनाम्** [६१.७] कारणान्तराधीनोत्पत्तीनां वस्त्ररागादीनाम् **अन्यथापि दर्शनाद्** [६१.८] अपितृत्वे(अपीतत्वे)नाप्युपलब्धेर्हेतोः **उपजाताऽ**[६१.८]न्यथात्व **शंका** प्रकरणाद्विनाशस्याभावसंदेहो यस्य पुंसस्तथा सन् । अनेनार्थान्तरानुबन्धिनि विनाशे साध्ये कृतकत्वस्य संदिग्धविपक्षव्यावृत्तिकत्वेनानै[7]कान्तिकत्वमाह। **कृतकमपि चायम्** [६१.९]इत्यादिना तु साधारणानैकान्तिकं दर्शयति । **भावाऽभाव**[६१.१०]-शब्देन प्रध्वंसाभावो विवक्षितः । तस्यैव स्वनिष्पत्तावपेक्षितपरव्यापारत्वेन कृतकत्वात् । तथात्वेनेष्टत्वाच्च । नित्यतोपगमे कारणमाह **तद्विनाश** [६१.१०] इति । तस्य भावा-भावस्य प्रध्वंसलक्षणस्य विनाशे **भावस्य**[8] प्रध्वस्तस्यो**न्मज्जनमा**विर्भावस्तस्य **प्रसंगात्** [६१.१०] प्राप्तेः ।

स्यादेतन्नित्यं सत्त्वादिप्रसङ्गेन नाहेतुकं वस्तुनामुज्जनम् । न च घटादेर्भावस्य तद्विना-शविनाशोन्वयव्यतिरेकाभ्यां कारणत्वेनावगतोऽपि तु कुलालादिरेव । तत्कथं विनाशविनाशे तदुन्मज्जनमासंज्यमानमभजमानं न स्यादिति । तदे[1][31a]तदवद्यम् । तथाहि घटाभाव-

१. किं वा पुनरिति S

व्यावृत्तिरेव घटो घटविनाशश्च घटा(ट)भावव्यावृत्तिरिति घटाभावस्याभावे घटरूपोन्मज्जनासंजनं ज्याय एवेति।

अत्रैवोपचयहेतुमाह **न चे**[६१.११]ति। **स** [६१.१४] नाशोऽ**हेतुः** सन् **तस्य** [६१.१४] प्रध्वंसाभावस्य **कथं** [1]**जायेत** [६१.१४] जनितुमर्हति।

**भावानां** [६१.१७] वस्तूना**मयं** विनाशाख्यो **धर्म ऐकान्तिको**ऽ[६१.१७]वश्यंभावी। [2]अनेनैतद्दर्शयति—नवै कृतकत्वं निर्विशेषणं साधनमस्माभिरभिधीयते येनैवं स्यात् किन्तु वस्तुत्वविशेषणानव(णेनाव)च्छिन्नं ततो वस्तुत्वे सति यत्कृतकत्वं तदवश्यंभाविनाशमित्यर्थ इति। **कुतः पुन**[६१.१७]रित्यादिना सिद्धान्ती प्रतिविधत्ते क्षेपे किमः प्रयोगान्न कुतश्चिदित्यर्थः। **एतदि**[६१.१७]ति भावानामवश्यभावी विनाश इति। **तेषां** [3]भावाना**मन्यथात्वस्य** [६१.१८] अविनाशित्वस्यानुपलब्धेरेतदवसितमिति प्रकरणात्। **भवन्नपि** [६१.१८] विद्यमानोपि। **आत्मादेः** [६१.१८] **सत्ताया अनिवर्तक** [६१.१८] आत्माद्यभावस्यासाधकः **कथमन्यत्र** [६१.१८] वस्तुषु **अन्यथाभाव**मविनाशित्वं **निवर्तयति** [६१.१९] निषेधयति। आत्माद्युपन्यासेन चैतद्दर्शयति। यद्यविनाशित्वानुप[4]लम्भोऽविनाशित्वाभावं साधयति तर्हि विशेषाभावादात्माद्यनुपलम्भोपि तदभावं साधयेत्। न चायमपीति दृष्टान्तविघटनं परस्याशंकमान आह **तस्ये**[६१.१९]ति। **तस्य** आत्मादेः। आत्मनस्तावद्रूपरसादिप्रत्ययानामेकानेकत्वसाधकस्याबाधितप्रतिसन्धानविषयत्वादेरनुमानात्[5]। **आदि**[६१.१८]शब्दसंगृहीतस्य च दिगादेः पूर्वापरादिप्रत्ययादेरनुमानत इति बुद्धिस्थम्। **इतिना** [६१.१९] वक्तव्यस्याकारः कथितः। **तत्राप्यनुमाने** [६१.२०] तत्सत्त्वसाधके।

ननु यस्यानुपलब्धिस्तस्याभाव एवेत्यभिधातरि कोऽयमुपालम्भः। विपक्षेपि हेतोर्वृत्त्यदर्शनेऽभावसिद्ध्यविरोधात्; आत्मादेस्त्व[6]नुपलब्धिरेवासिद्धा ततो नाभावसिद्धिरिति। साधूक्तं भवता केवलं **तत्रापी**[६१.२०]त्यादि ब्रुवतोऽभिप्रायो न सम्यग्व्यज्ञायि। अयं खल्वस्याशयः। तावद्धेतोर्विपक्षेऽनीक्षणं न क्षमते अभावं विभावयितुं, यावद्यद्यन्नोपलभ्यते तत्तन्नास्तीति न सिध्यति। सति चैवमात्माद्यनुपलभ्यमानमसत्सि[7]द्धमिति प्रमाणप्रतिक्षिप्तं कथमनुमानस्य विषयः स्यात्? तदुक्तं "व्याप्तो हेतोरनाश्रय" इति। यदि वाऽनुपलम्भ एव प्रतिबन्धशून्यः केवलोऽनुपलम्भो देशकालविप्रकृष्टेषु कथं तथाभावमवबोधयेत्? यतस्तेन सिद्धिविपक्षा हेतुव्यावृत्तिरात्मादेः सत्त्वमनुमापयेदिति। **प्रयोगभङ्ग्यैव** [६१.२५] प्रयोग[8]विन्यासेनैव **प्रसङ्गेना**[६२.१]नुषङ्गेन प्रस्तावेनेति यावत्। साध्य-

---

१. संजायते S    २. अन्यथाभावस्य S

दृष्टान्तधर्मिणोः **समानः** [६२.३] सदृशो हेतुसद्भावलक्षणो **धर्मः** [६२.३] प्रतिपाद्यतया **यस्य** [६२.३] प्रयोगस्यासौ सधर्मा, समानस्येति योगविभागात् समानस्य पक्षादिष्विति वक्तव्ये परिग्रहाद्वा स भावस्तस्य **भावो** [६२.३] भवतोऽस्मादभिधानप्रत्ययाविति कृत्वा [31b][1]रूपविशेषः । तयोरेव **विसदृशो** [६२.४] हेतुसद्भावासद्भावलक्षणो **धर्मः** प्रतिपाद्यतया **यस्य तस्य भावः** [६२.५] अशेषस्य साध्येतरधर्मिणः (साध्यधर्मिणः) साध्यधर्मिणोवाऽन्यत्र सर्वत्र साध्ये हेतोर्व्याप्तिर्विवक्षिता । न तु साध्यधर्मिणोऽन्यत्र दृष्टान्तधर्मिणि प्रवृत्तेन सर्वोपसंहारेण गृह्यमाणा व्याप्तिर्**बहिर्व्याप्तिः**, तस्या **निरासः** [६२.९]।

ननु च सत्त्वलक्षणे [2]स्वभावहेतौ साध्यधर्मिण्यपि विपर्यये बाधकप्रमाणवृत्त्याऽपि व्याप्तिर्ग्रहीतुं शक्यत इति । नैतदपेक्षया हेतोरन्यत्र वृत्त्यपेक्षया किंचिद्येनेदमासज्येत, किंतु कार्यहेतोः सर्वस्य स्वभावहेतुविषयस्य चावश्यमन्यत्र प्र(अ)वृत्तिरपेक्षणीया । तदर्थमन्यत्राऽननुवृत्तिरित्याशङ्कितमिति किन्न भवान् व्याचष्टे[8] । आचार्यस्य च सत्त्व[3]हेतूपन्यासानन्तरं यथा **घटादय** [६२.९] इत्युदाहरणदर्शनात्तु त्वदीयं व्याख्यानमपव्याख्यानं लक्ष्यत इति निर्भर्त्सनामाशङ्क्यास्याचार्यस्यान्यादृशमभिप्रायमुद्घाटयन्नाह **यथा घटादय** [ ६२.९] इति । **यस्य** [६२.९] पुंसः । किं पुनस्तत्र स्मृत्याधानार्थं दृष्टान्तवचनम्, न तु दृष्टान्तमात्रप्रतिपादनार्थमित्याह—**दृष्टान्ते**[६२.११]ति[4] । अनेन पुरुषविशेषं प्रति एतदाचार्येणेति नास्मद्व्याख्यानस्य किं चिदवद्यमिति दर्शयति ।

विभक्तिविपरिणामेन सम्बन्धमेव **सर्वस्मिन्नि**[६२.१६]त्यनेन दर्शयति ।

बहिरेवव्याप्तिर्**बहिर्व्याप्तिस्ताम्**। **ते** [६२.२३] **निरस्ता भवन्ति**[६२.२५] इति सम्बन्धः । **यद्यपी**[६२.२३]ति निपातसमुदायो विशेषाभिधानार्थोऽभ्युपगमे । **तावत्ते**[६२.२४]ति साधनधर्मस्य साध्यधर्मेणान्वयदर्शनमात्रेणेति । **अस्य** [६२.२४] साधनधर्मस्य **तथाभावस्य** साध्येनान्वीयमानत्वस्य **अभावात्** [६२.२४] । प्रतिबन्धमन्तरेण तदभावेऽपि तदभा(तद्भा)वाविरोधादिति भावः । **इतिः** [६२.२५] हेतौ । **तस्य** प्रतिबन्धसाधकस्य प्रमाणस्य [5]**स्मरणाय** [६३.३] । **धर्मविशिष्टः** [६३.४] सिषाधयिषितधर्मविशि[6]ष्टो **धर्मी** [६३.५] शब्दादिः । **तस्याः** [६३.६] साध्यधर्मविशिष्टधर्मिप्रतिपत्तेः । व्याप्तिप्रदर्शनपूर्वके पक्षधर्मप्रदर्शनेऽभिधाय पक्षधर्मप्रदर्शनपूर्वके व्याप्तिप्रदर्शनेऽप्याह—**तत्पूर्विकायां चे**[६३.८]ति । **तत्पूर्विकायां** पक्षधर्मप्रदर्शनपूर्विकायां **व्याप्तौ** [६३.८]

१. तत्स्मृतये S ।

प्रदर्श्यमानायाश्चेति शेषः । सर्वोपसंहारेण व्याप्तिग्रह[7]णे प्लवमानाकारायाः प्रतिपत्ते-रुभयत्राविशेषान्मुखभेदमात्रेणैतदुक्तमित्यवसेयम् ।

साध्यनिर्देशः **प्रतिज्ञा**[६३.२४] तस्याः **प्रयोगः** [६३.२४] प्रयुक्तिः स **न[1] दर्शितः** [६३.२४] साध्यनिर्देशो न कृत इत्यर्थः । **प्रत्यक्ष**[६४.१२]ग्रहणं प्रमाणोपलक्षणं द्रष्टव्यं तेन तमिस्रायां रात्रौ प्राक्तनादिविप्रकृष्टे देशे कर्पूरोर्णादिगर्थ(गन्ध)-विशेषाद्धू[6]मविशेषमनुमानतो निश्चित्याग्निविशेषमनुमिन्वतोऽपि सङ्ग्रहः । **प्रतिज्ञाप्रयोगरहितादि**[६४.१६]त्यवधारणफलप्रदर्शनमेतत् ।

अत्रार्थितैव कर्णमागत्य बुद्धिस्थं प्रकाशयति या पिशाची सा किल **कर्णपिशाचिका** [६४.१८] ।

लिङ्गस्य पक्षधर्मान्वयव्यतिरेकात्मनो गमकस्य **अनुसरणं** [६५.१२] निश्चयनम् । **इतिः** [६५.१४] हेतौ । **उपहसति** [६५.१४] त[1][32a]चामधिरोहति । किमुपहसतीत्याह—**यत्तदि**[६५.१४]ति लोकोक्तिश्चैषा । कथं तत्स्पर्धोऽस्योच्यत इत्याह—**तत्तुल्यत्वादि**[६५.१५]ति । **अस्य** [६५.१५] अनुमातुः । **क्रमस्य** [६५.१५] समानाधिकरणषष्ठ्येव वा ।

'**तद्वचनस्ये**'[६५.२३]त्यादिना पूर्वं स्वयं कारणमभिधाय आचार्योक्तं कारणं दर्शयितुं परं प्रश्नेनोपक्रमयति **कस्मादि**[६५.२६]ति । यदि प्रतिज्ञाप्रयोगेऽपि सा शङ्का तर्हि[2] किं तेनेत्याशङ्क्य पर एवाह **अनित्य** [६६.१३] इत्यादि । तदा(तुना) [६६.१३] प्रतिज्ञाप्रयोगपक्षं विशिनष्टि '**असति साध्यनिर्देश**[६६.९]' इत्येवाभिसम्बध्यते । **हेतुश्च विरुद्धश्च अनैकान्तिकश्च** तेषां **प्रतीतिः** [६६.१४] निश्चयो न स्यात् । इदमेव दूषणं तेन समुच्चितम् । अत्रैव दूषणान्तरमपि समुच्चिन्वन्नाह । **हेतोश्चे**[६६.१७]ति । स्वपक्षविशेषं दर्शयन्नाह । '**सति त्वि**[६६.१८]ति । **यावते**[६६.२७]ति तृती[3]यान्तप्रतिरूपको निपातः किन्त्वेतस्यार्थे वर्तमानो अत्रोपपत्तेः । तस्मिन्निबद्धतद्(तस्मिन्निव तद्वत्) **विषयः** साध्यलक्षण **उपस्थाप्यते** [६७.३] उपनीयते **येने**[६७.३]त्यर्थकथनमेतत् । उपस्थाप्यते येन पुरुषेणासौ तथा, विषयस्य तथेति तु विग्रहः । तेनानिर्दिष्टविशेषेण **केनचिद्विना** [६७.४] कथं पुनस्तान[4](तेन) साध्यमुपस्थाप्यत इत्याशंकायां योज्यं—[3]**प्रतिज्ञाद्वारेणे**ति । [६७.३]

---

१. नोपदर्शितः S ।   २. 'तु' नास्ति S ।   ३. प्रतिज्ञावचनद्वारेणेति S ।

एवं तावदनेन व्याख्यातम्। केचित्पुनरन्यथाप्येतद् व्याचक्षते । **उपस्थाप्यते** प्रकाश्यते **येन** [६७.३] वचनेन **तेन विना** [६७.३] । अयमपि 'प्रमेयस्योपदर्शनमन्तरेण' [६९.२४] इत्यत्रोपदर्शनशब्देन वचनमेव व्याख्यास्य[ति] न तु पुरुषम् । तदपि [5]अग्निरत्राग्निमानयं साग्निरयमित्यादिरूपेणानिर्दिष्टविशेषं विवक्षितमित्यतः—केनचिदित्युक्तमिति **कार्यिणो**[६७.५]ऽर्थिनः। अर्थित्वं चान्यब्राह्मणप्राप्त्यादिना द्रष्टव्यम्। **मूल्यं** [६७.६] निष्क्रयं **मृगयते** [६७.६] प्रार्थयते । इतस्ततः पार्वणश्राद्धादिभोजी द्विजः **पर्वब्राह्मणः** [६७.६]। अमुमेव दृष्टान्तं विवृण्वन्नाह **यथे**[६७.६]ति । **दक्षिणा** [६७.७] अत्र प्रकरणाद्भोजनानन्तरं दानं द्रष्टव्यम्। **अन्यदा** [६७.७] अर्थविशेषप्राप्तिकालादन्यस्मिन्काले । प्रार्थनापूर्वकमितस्ततो भोजनशीलत्वादौर्ध्व[1]**रथिकः** पर्वब्राह्मणसदृशस्य चैतद्विशेषणं चरणम् । श्र(**श्रा**)**द्धादी**[६७.८]त्यत्रादिग्रहणादुपनयनसमावर्तनादिपर्वसङ्ग्रहः । अर्थित्वमा[7]त्रेपि नैतद्वचनं तस्य संभाव्यत इति तं विशेषयन्नाह—**श्रद्धालु**[६७.८]मिति । **श्रद्धालुं** श्रद्धावन्तम्। अनेन श्रद्धानुविद्धमेवार्थित्वं कार्यशब्देन वार्तिककृतो विवक्षितमितिदर्शयति । **घृतपुरः** [६७.८] खाद्यविशेषस्तं प्रति । सोपि मह्यं प्रचुरो दातव्य इति द्विरुक्तेन दर्शयति । [2]**रूप्यं** [६७.९] प्रचुरतरताम्रा-ईषत्तररूप्यघटितो द्रव्य[5]विशेषः । दक्षिणायथादौ(णादौ) च प्रायेण रूपकेण व्यवहारः । **ददा**[3]**ती**त्यभिसम्बन्धाद् द्वितीया। **तेन** [६७.९] एवंवादिना पर्वब्राह्मणेन ।

ननूक्तमेतद्यथा परार्थेऽनुमाने लिङ्गं परस्मादेव प्रत्येयमिति तत्पुनस्त्वया न अपहस्तितमिति आशंकायां **य**[4]**दस्मद्वचनादपी**[६७.१७]त्युक्तम् । तद् व्याख्यातुं **किं चे**[६७.११]त्यादिनोपक्रमते[1][32b] **किं चेति** च ब्रुवाणो नियतं वक्तव्यान्तरसमुच्चये । अर्थादाचार्यस्याभिप्रेत इति दर्शयति न त्वस्यैव वक्तव्यान्तरसमुच्चयार्थः **किंच**[६७.११]शब्दप्रयोगो घटते । यदपि ब्रवीषीत्यादेरस्मद्वचनादपीत्याचार्यवचनान्तरव्याख्यानपरत्वस्य व्यक्तत्वात् । अथवायं निपातानिपातसमुदायः किञ्चशब्दोऽस्य विवक्षितः किन्तु [2]चकारः अपिशब्दस्यार्थे । तेन किमपीत्युक्तं भवति । ततोऽयं वाक्यार्थो यदपि किमपि ब्रवीषीति । एवं च ब्रुवता लोकोक्तिरनुकृतेति। **तद्वचनस्य** [६७.१८] लिङ्गवचनस्य, **अनुसरिष्यति** [६७.२०] तदेव लिङ्गमिति प्रकृतत्वात। **अङ्ग**[६८.१]शब्दोऽत्राध्येषामन्त्रणे । **किं**[६८.१]शब्दः सामान्यतः प्रश्ने **पुनः** [६८.१] शब्दस्तु विशेषतः । तेनायमर्थो

१. और्ध्वरथिकः S । २. रूपकं S । ३. ददासि S ।
४. यतः अस्मद्वचनादपि S ।

युष्मा[3]नेवाध्येष्य सामान्यतो विशेषतश्चैव पृच्छाम इति। उपहासे चेयमध्येषणा प्रकरणाद् द्रष्टव्या।

**आदि**[६८.४]शब्दाद्वैधर्म्यवत्प्रयोगस्य हेतुविरुद्धानैकान्तिकानां हेतोस्त्रैरूप्यस्य च ग्रहणम्। प्राक् **प्रतीति**[६६.२३]शब्देनाचार्येण साधर्म्यवैधर्म्यवत्प्रयोगयोर्हेतुविरुद्धानैकान्तिकानां हेतोस्त्रैरूप्यस्य च स्वरूपप्रतीतिर्विवक्षितेत्यभिप्रेत्य **साधर्म्यवत्प्रयोगादेः** [६६.२४] प्रतीतिरिति व्याचष्टे। अतएव क्रमेणैतत्सर्वं दर्शयिष्यते।

ननु किमवश्यं प्राप्तिः पक्षधर्मस्य च प्रयोगो येनैवमुच्यमानं शोभते इत्याशंक्याह—**एवं मन्यत** [६८.९] इति। **तदनित्यमिति उक्ते** [६८.१८] इति योजयित्वा किं [5]तन्मात्रोक्त्या सोऽवगम्यत इत्याशंकायां **पक्षधर्मवचने सती**[६८.१८]ति योज्यम्। **यत्कचिदि**[६९.५]त्यादि तु [1]पूर्वमेव कृतव्याख्यानम्। **अनुमानकाल** एवात्र **व्यवहारकालो**[६९.६]ऽभिप्रेतः। **न पक्षादिसङ्केतग्रहणापेक्षा** [६९.६] **वस्तुगति**रित्यनुवर्तते। **आचार्यपादै**[६९.१२]रित्याचार्यवसुबन्धुमभिसन्धा[6]योक्तम्। **नान्तरीयकार्थदर्शनं तद्विदोऽनुमानमि**[६९.१२]त्यास्यायमर्थः। योर्थः किंचिदन्तरेण न भवति स नान्तरीयकः। अत्र च सामर्थ्याद्यमर्थमन्तरेण न भवति तन्नान्तरीयक इति ग्राह्यम्। स चासावर्थश्चेति तदा तस्य दर्शनम्। दर्शनेन च विषयिणा विषयस्य तस्यैव दृश्यमानस्य[7] निर्देशः। तेन निश्चीयमान एवासौ परोक्षार्थहेतुर्भवतीति दर्शितम्। **तद्विद** [६९.१२] इति तन्नान्तरीयकतां यो वेत्ति तस्येत्यर्थः। **अनुमान**[६९.१२]हेतुत्वाच्चानुमानमुक्तम्। **इति**[६९.१३]गैमकरूपमात्रस्य स्वरूपं दर्शयति [1]**वादविधौ** वादविधिसंज्ञके प्रकरणे। **तत्राप्या**[६९.१४]चार्यीये लक्षणे। **कैश्चि**[६९.१४]दुद्द्योतकरप्रभृति[भिः]! कुतः पुनरसंत एव दोषास्तैः कीर्त्यन्त [8]इत्याशंकायां योज्यं **स्वप्रज्ञे**[६९.१४]ति। स्वप्रज्ञाया अपराधो दोषस्तस्मात्। **तु**[६९.१४]रवधारयति। तथा ह्युद्द्योतकरेण किलानुमानसूत्रवार्तिकेऽ"परे तु ब्रुवते नान्तरीयकार्थदर्शनं तद्विदोऽनुमानमिति" (न्यायवा० पृ.५४) पठित्वा तस्यार्थं मात्रया विवृत्त्यैव "अत्रार्थग्रहणमतिरिच्यत" इति मात्रयैव दूषणमुक्त्वा पुनर्विपञ्चितम्—"नान्तरीयकार्थ इति समासपदमेतत्। तत्र यदि षष्ठी[1][33a]समासो नान्तरीयकस्यार्थ इति। नान्तरीयकं तावत्कृतकत्वम्, तस्यार्थो धर्मः प्रयोजनम्वा? यदि तावद् धर्मः कृतक[त्व]स्यार्थः, सत्त्वप्रमेयत्वाभिधेयत्वाद्यनुमानं प्राप्तम्। अथ प्रयोजनम् अनित्यत्वप्रतिपत्तिर्हेतुः प्राप्तः। अथ बहुव्रीहिर्नान्तरीयकोर्थो यस्येति। तत्रापि कृतकत्वं नान्तरीयकं तद्यस्य स हेतुः प्राप्तः। तच्च कृतकत्वं घटादेः [2]शब्दस्या-

१. पृ. २६० पं. २३ २. नास्ति S।

नित्यत्वस्य वा। यदि घटादेः, घटादिर्हेतुः प्राप्तः। अनित्यः शब्दो घटात्। अथ शब्दस्य, शब्दो हेतुः प्राप्नोति। अनित्यः शब्दः शब्दात्। अ(अथा)नित्यत्वस्य [1]साध्यसाधनकृतकत्वं धर्मस्तथाप्यनित्यः शब्दोऽनित्यत्वादिति प्राप्नोति। अथानित्यत्वस्यार्थः कृतकत्वमिति। सर्वथा कृतकत्वमनित्यत्वे न हेतुः स्यात्। अथ समानाधिक[3]रणो नान्तरीयकश्चासावर्थश्चेति। तथाप्यसमर्थः समासो विशेषणविशेष्यनियमाभावात्। उभयपदव्यभिचारे सति समानाधिकरणो भवति नीलोत्पलवत्। नीलशब्दस्यानेकार्थप्रवृत्तत्वादुत्पलशब्दस्य च तथाभावात् सामानाधिकरण्यं भवति। न पुनरिह नान्तरीयकत्वे इत्यु(क इत्यु)क्ते[4]ऽस्ति व्यभिचारोऽर्थोऽनर्थ इति येनार्थग्रहणं समर्थं स्यात्। एकपदव्यभिचारेऽपि दृष्टं सामानाधिकरण्यं पृथिवी द्रव्यम्'' इति चाशंक्योक्तम् ''अन्यथा तं( तत् )पृथिवी द्रव्यमिति। अत्रोभयपदव्यभिचारः। प्रधानाङ्गभावस्य भेदेन पृथिवीशब्देन द्रव्यमप्युच्यते पृथ्वीत्वञ्च। द्रव्यशब्देन च प्रधानाङ्गविवक्षया[5] द्रव्यं द्रव्यत्वञ्च अत एवोभयपदव्यभिचारात् पृथिवी द्रव्यमिति युक्तमुक्तम्। इह पुनर्न युक्तं नान्तरीयकद(कार्थद)र्शनमिति। कस्मादर्थप्रत्यायनार्थत्वाच्छब्दप्रयोगस्य—अर्थप्रत्यायनार्थंहि शब्दस्य प्रयोगमिच्छन्ति। नान्तरीयक इति चोक्तेऽर्थो गम्यते। अतो न युक्तोऽर्थशब्द इति। तद्विद इति न युक्तम् नैवान्यथानान्तीयक(?) इति। न हि नालिकेरद्वीपवासिनो धूमदर्शनान्नान्तरीयक इति ज्ञानमस्ति। अतस्तद्विद इत्यपि न वक्तव्यम्।'' (न्यायवा० पृ. ५४-५५) असन्त एव दोषा इति ब्रुवाणश्चायमेवाभि(वमभि)प्रैति। समासान्तरपक्षभाविनस्तावद्दोषानभ्युपगममात्रेणैकप्रहारनिहताः। समानाधिकरणसमासस्त्वेकपद[7]व्यभिचारेपि दृष्टत्वान्नानुपपन्नः। तथाह्यर्थो नान्तरीयकोऽपि स्यादनित्यलक्षणोऽनान्तरीयकोऽपि स्यात् नित्यलक्षणः। तत एकपदव्यभिचारादपि सामानाधिकरण्यमविरुद्धम्। अथ त्वन्मते नित्यो नामास्त्येव कल्पविपरिवर्ति तावदस्ति, तत एवैतदुपलप्स्यते। अन्यथायमनित्यध्वनिः कं व्यवच्छिद्यात्। बौद्धाभिमतस्य[8] च तथाभूतस्य क्षणिकत्वस्य केनचिदनिष्टेः तथाभूतव्यवच्छेदात् नैवाक्षणिकज्ञानवास्त्वित्यादौ प्रयोगेऽयमक्षणिकध्वनिः कं व्यवच्छिद्यात्। अथ नान्तरीयक इति पूर्वमुक्तेऽर्थस्यावगतत्वात् किमर्थपदेन येनैवं समासश्चिन्त्येत। हन्ताकाशा[दि]शब्देनैव पूर्वभाविना द्रव्यादिरूपस्यावगतत्वात्किं द्रव्यादिशब्देन ये[1][33b]न तत्रापि तथा समासः स्यात्। तदेवमादौ य एव ते परिहारः समाधिर्मे(स मेऽपि भ)विष्यति इति यत्किञ्चिदेतत्। यत्तु पृथिवी द्रव्यमित्यत्रोभयपदव्यभिचारं दर्शयित्वा सर्वत्रोभयपदव्यभिचारादेव समानाधिकरणः समासो भवतीति दर्शितं तद्योयः(तत् पापीयः)। आकाशद्रव्यं दिग्द्रव्यं कालद्रव्यम्,

१. अनित्यत्वस्य साधनभावेन कृतकत्वं धर्मः। न्यायवा० पृ. ५४

सामान्यपदार्थः, विशेषपदार्थः, समवाय[2]पदार्थः षट्पदार्थः याचकपुरुष इत्यादौ उभयपदव्यभिचारस्य ब्रह्मणापि विभावयितुमशक्यत्वात् सामानाधिकरण्यस्य च दर्शनात् । न ह्येषामाकाशादीनां सामान्यं केनचिदिष्यते संगच्छते वा येनाकाशादिशब्दानामाकाशाकाशत्वाद्यनेकार्थवृत्तित्वादुभयपदव्यभिचारे समानाधिकरणः समासः स्यात् । [3]नापि षण्णां किञ्चित्सामान्यमस्ति यस्याप्यभिध्याद(भिधानाद)यमप्युभयपदव्यभिचारो वर्ण्यते । न च याचकशब्देन कर्मापि तज्जातिरपि वाऽभिधीयते । अत्र चोपपत्तिरन्यत्राभिहितेति नोच्यते । न चाकाशद्रव्यं, सामान्यपदार्थः, याचकपुरुष इत्यादि कर्मधारयः समासो न[4] दृश्यते । किञ्च यथा पृथिवीशब्देन पृथिवी पृथवीत्वञ्चोच्यत इत्युभयपदव्यभिचारात्पृथिवीद्रव्यमिति युज्यते वक्तुम्, तथा नान्तरीयकत्वं नान्तरीयकश्च, अर्थशब्देनाप्यर्थत्वमर्थश्चोच्यत इत्युभयपदव्यभिचाराद्युक्तार्थे एव समासः । अथ त्वन्मते नार्थत्वाद्यस्ति । यदि नाम वास्तवं नास्ति तथापि कल्पितं तावदस्ति । तावताऽपि शब्दसिद्धयुपपत्तेरुक्तप्रायमेतदिति किं बहुना ? वस्तुवृत्त्याभावान्नान्तरीयकार्थो धूमो भवति । तस्य **दर्शनं** [६९.१२] नान्तरीयकार्थदर्शनमपि भवति । तत्र यदि **तद्विद** [६९.१२] इति नोच्येत तदा नालिकेरद्वीपाया-तस्य धूमदर्शनमनुमानमापद्येत ततस्तद्विद इति वक्तव्यमेव । न च नान्तरीयकोऽर्थ इति ज्ञानमे[6]व नान्तरीयकार्थज्ञानमित्युच्यते, येनैवमुच्येत । किंतु वस्तुतोऽनान्तरीयको यो न भवत्यर्थः, तस्य यद्दर्शनं तदपीत्यलमतिशब्दार्थपर्यवदातमतीनां वचन विधा(चा)रणयेति । **प्रतिज्ञावचनं न युक्तमि**[६९.१६]ति सम्बन्धः । कथमयुक्तमित्याशंकायां **पक्षधर्मेत्या**[६९.१६]दिकारणवचनम् ।

**संशयितादिक**[६९.२५]मित्यत्रादि[7]ग्रहणेनाप्रतिपन्नस्य जिज्ञासोश्चावबोधः । सामान्यन्यायसिद्धाम् अस्तिक्रियामपेक्ष्य **मुक्त्वे**[६९.२९]ति पौर्वकालिकः प्रत्ययः प्रत्येयः ।

**संशयजिज्ञासादिक**[७०.९]मित्यत्रादिशब्दात् प्रयोजनादिपरिग्रहः । तथामुनैवादिग्रहणेन पञ्चम्यन्तस्यापि हेतुप्रयोगस्य संग्रहः कार्यः । असति हि साध्याभिधाने कुत एतदिति हेत्वा[8]कांक्षाया एवाभावात् । साध्यसिद्धौ हेतोर्निमित्तत्वं कथयन्तीं पंचमीमुच्चारयन्तं कथमिव विचक्षणा तयाऽऽच(णा न प्रत्याऽऽच)क्षीरन्निति । दृष्टान्त एव वचनकर्मतां नीयमान उपसंहरणं तदपेक्षः **उपसंहारो** [७०.११] ढौकनं सत्त्वप्रदर्शनम् । दृष्टान्तदृष्टसामर्थ्यस्य हेतोरिति च प्रकरणाद् द्रष्टव्यम् । साध्यशब्देनोपचारात् साध्यधर्मीष्टः । [३५a] [1]षष्ठीसप्तम्योरभेदाच्च साध्यधर्मिणीत्यर्थो बोद्धव्यः । **इति**[७०.१३]लक्षणस्य स्वरूपमाह । **प्रतिज्ञाया** [७०.१४] लक्षणमित्यनुवर्तते ।

**तस्य** प्रमाणबलायातस्यार्थस्य **संप्रत्ययो**[७०.२८]ऽन्यथाशंकार्थन्य(०काव्य) वच्छेदः तदर्थं यथा भवति। यदि प्रमाणानां व्यापारो निगमनेनोपसंहियते। तदैतद्युज्यते वक्तुम्। न चास्य तथात्वमित्याशंक्याह **अशाये**[७०.२८]ति **चो**[७०.२९] यस्मादर्थे[2]। व्यापारशब्देन व्यापारफलमभिप्रेतम्।

ननु कानि पुनरत्र प्रमाणानि सन्ति यद्बलायातार्थोपसंहरणमस्य वर्ण्यत इत्याशङ्क्य परैरेषामवयवानामेवं प्रमाणस्वरूपमाख्यातमित्याख्यातुं **तथाही**[७०.२९]त्यादिनोपक्रमते।

**उपरी**[७१.४]ति प्रकरणादन्यकृतस्य नाम्न इति द्रष्टव्यम्। तथाहि ते कस्यचिद्राजपुत्रस्य महामात्रस्य वा[3] योगिनो(ना)ऽन्येन सजातीयेन कृतं नाम श्रुत्वा अहोपुरुषिकया धनाशया चोदिता अन्यथा चा(वा) तदु[त्]साहवर्धनं नाम कृत्वा तल्लिखितुं प्रयुञ्जतेऽत एव **नामलेखनमि**[1][७१.४]ति णिचा निर्दिष्टम्। अयुक्ततया **निष्फलमपी**[2][७१.५]ति वास्तवानुवादोऽप्येष प्रकृतोपयोगी। **बालप्रतारकश्च तत्तदुपयोगवर्णनश्चेति**[4] तथा **तल्लक्षणया** [७१.१३]। वैयर्थ्यादि स्यादिति सम्बन्धात् **प्रतिज्ञावचनस्ये**[७१.२१]त्युक्तम्।

ननूद्योतकरोपवर्णितमस्य प्रयोजनमस्तीति कथं वैयर्थ्यमित्याह **यत्तूक्तमि**[७१.२२]ति। **दत्तमुत्तरमि**[७१.२३]ति। 'तेनैव तावद्दर्शितेने'[६६.३]त्यादिनोक्तत्वादुक्तम्। यथोक्ते च स्वयमुत्तरमाह **यश्चे**[७१.२३]ति। **तदभावे** [७१.२७] प्रथमं साध्यल[5]क्षणकर्मनिरूपणाभावे। **स्वार्थानुमानदृष्टश्चे**[७०.२१]त्यादिना च यदुपनयसमर्थनार्थं परेणोक्तं तत्प्रतिविधातुकाम आह **यश्चाग्नी**[७२.१]त्यादि। **चो** यस्मादर्थे। **कदाचिदि**[७२.४]ति यदा धूमं दृष्ट्वा तस्याग्निना व्याप्तिमनुस्मृत्य तं तत्त्वेन प्रत्यवमृश्य प्रत्येतीति। **अस्य** [७२.४] प्रत्यवमृश्य प्रत्ययार्थस्य। **तदे**[७२.४]त्याद्यु[6]त्तरम्। अथ तदन्तरेणापि यत् पक्षार्थप्रतीतेरविघातान्न तेन किञ्चिदिति ब्रूयात्। समानमिदं प्रकृतेऽपीति च बुद्धिस्थमस्यैवं ब्रुवतो द्रष्टव्यम्।

प्रमाणव्यापारसमर्थनार्थञ्च यदुक्तं[3] तत्राप्याह। **यत्पुनरि**[७२.७]ति। **न क्वचिदागमे पठ्यत** [७२.९] इति ब्रुवता चागमप्रतिज्ञयोरेकविषयत्वादागमः प्रति[7]ज्ञेत्युच्यत इति ये वर्णयन्ति [ति] निरस्ताः। यो हि प्रतिज्ञयोच्यतेऽर्थः स एव चागमेप्युच्यते तदैव तत्स्यात्। न चैवमतो निरासः।

---

१. नामलेखने-S २. 'अपि' नास्ति-S
३. पृ. ७० पं. २९.

हेतुशब्देन गमकवचनं वाच्यम्। गमकञ्च त्रैरूप्यवल्लिङ्गम्। न च पञ्चम्यन्तेन तेन शब्देन लिङ्गस्य त्रैरूप्यमभिधीयते किन्तु **पक्षधर्मत्वमात्रम्** [७२.११] निमित्तभाव एव चेत्येवं व[^4]दितुरभिप्रायः । एतेन तदपि विनिक्षिप्तम् यत्कैश्चिन्निपुण(णं)मन्यैर्नैयायिकैरुच्यते, "प्रतिज्ञार्थं साधयितुं समर्थं पक्षधर्मत्वेनोपसंहर्तव्यं लिङ्गम् अनुमानं तदभिधायी शब्दो हेतुः सोऽप्यभिधेयस्य नियमहेतुत्वात् वाक्याङ्गं सामानाधिकरण्यं चाभिधानाभिधेययोरभेदविवक्षया साक्षात्पारंपर्ये[314b][^1]ण चैकविषयत्वादिति ।" तावद्धि धूमादिवस्तु न लिङ्गं यावद्वह्न्यादिनान्तरीयकतया न निश्चीयते, धर्मिविशेषे च क्वचिन्नोपलीयते। तन्नान्तरीयकतया निश्चितं क्वचिदुपसंहृतं च साध्यसाधनसामर्थ्यं भवति नान्यथा। न च पञ्चम्यन्तेन 'धूमाद्' इत्यादिना शब्दे[न] तस्य तन्नान्तरीयकत्वं पक्षे च सत्त्वं कथ्यते। उदाहरणोपनययोर्वैयर्थ्यप्रसंगात् । [^2]तत्कथं प्रतिज्ञार्थसाधनसमर्थलिङ्गाभिधायित्वं तस्य शब्दस्य येन 'तदभिधायी शब्दो हेतुः' इत्युच्यते, स तथा वाक्याङ्गमिति चोच्यते 'हेतुरनुमानम्' इति सामानाधिकरण्यं तथा कल्पेतेति ।

प्रत्यक्षेण साध्यसाधनयोर्व्याप्तिस्तत्र गृह्यत इति दृष्टान्तः प्रत्यक्षोऽभिप्रेतः । अत एवायं **न सर्वः प्रत्यक्ष** [७२.१२] इति। नवै स[^3]र्वत्र दृष्टान्ते प्रत्यक्षेण साध्यसाधनयोर्व्याप्तिर्गृह्यते। यथा भवन्मत एव नित्य आत्मा सत्तासम्बन्धित्वे सत्यनाश्रितत्वात्, परमाणुवदित्यत्र दृष्टान्ते नित्यत्वं सत्तासम्बन्धित्वे सत्यनाश्रितत्वं यौ धर्मौ तयोर्व्याप्तिरनुमानेन गृह्यत इत्यभिसन्धिः। अनेनैतदपि प्रत्युक्तं यत्तैरेव नैयायि[^4]कप्रवरैरुच्यते— "साध्यसाधनयोर्व्याप्तितो विषयो दृष्टान्तः । तत्र प्रत्यक्षेण व्याप्तिं गृहीत्वा पश्चादुदाहरति। तेन प्रत्यक्षं नियामकमस्तीति"। उदाहरणमपि वाक्यस्य भागान्तरमिति प्रत्यक्षेण व्याप्तिग्रहणस्यासर्वविषयत्वात् क्वचिद्भावात्तथाभिधाने च तत एव दृष्टान्तोऽनुमान[^5]मित्यभिधीयेतेति ।

तस्य तदतिरिक्तार्थग्रहणाभावादित्यभिप्रायेण **उपमानं तु प्रमाणमेव न भवती**[७२.१३]त्याह । एतच्च बहुवाच्य(बहुवाच्य)मन्यत्रोक्तमिति नेहोक्तम्, सिद्धस्त्वर्थोऽनूदितः। अनयैव च द्वारा यदुच्यते तैरेव "यथातथेति दृष्टान्तदार्ष्टान्तिकयोः सारूप्यप्रतिपत्तिरुपमानमतिदेशवाक्य[^6]ता, पक्षधर्मत्वग्राहिप्रमाणवचनमुपनयः। अत्राप्युपमानं नियमहेतुत्व(त्वं) धर्मिणि वा साधनधर्मस्य संभवं बोधयदसंभवं निवर्तयति तत्प्रमाणं तन्नियामकमस्तीति उपनयोपि नियमहेतुमत्त्वाद्भागान्तरमि"ति तदपि प्रत्याख्येयं द्विविधस्यास्य वर्णितस्योपमानस्याप्रामाण्यादेव कथं नियामकम्? येनोपनयनस्य नियमहेतुक-

सिद्धया भागान्तरत्वं सिद्ध्येत्। धर्मिणि च साधनधर्मस्य सम्भवं परिच्छेद(च्छिद्य) प्रत्यक्षमनुमानं वाऽसंभवं निवर्तयतीति अत्रापि प्रत्यक्षं नियामकमस्तीति दृष्टान्तवदुपनयेपि प्रत्यक्षमिति वक्तव्यः। क्वचिदनुमानस्यापि तथात्वादनुमानमित्यपीत्यलमतार्किकवचननि[8]र्बन्धेन। **तद्व्यापार** [७२.१४] उपमानरूपोपनयव्यापारः। **स एवो**[७२.१६]पनय एव।

स्यादेतद्—अनित्यः शब्द इत्युक्ते कुत एतदिति श्रोतुरपेक्षोपजायते। न तु धर्मिणि लिङ्गस्य सत्त्वो(सत्त्वा)पेक्षा। तस्मात्प्रतिज्ञानन्तरं परापेक्षितसाध्यप्रतिपत्तिरपि तु प्रति(पत्तिहेतुप्रति)पिपादयिषया पञ्चम्यन्तस्य तदभिधायिनः शब्दस्य प्रयोगो न तु ध[35a][1]र्मिणि लिङ्गस्य सत्त्वप्रतिपादनार्थः। ततो न तस्य पक्षधर्मताप्रतिपादनं प्रयोजनमिति कथं पक्षधर्मत्वं स एव दर्शयिष्यतीति न किञ्चित्तेनेत्युच्यमानं शोभेतेति। अत्रोच्यते। अनित्यः शब्द इति प्रतिज्ञोपादानेपि तदनन्तरमेव यद्यत्कृतकं तत्सर्वमनित्यम्, यथा घटस्तथा चायं कृतक इत्युक्ते साध्यप्रतीतौ किं निमित्ताकांक्षोपश[2]मो नास्ति? येन पञ्चम्यन्तस्य लिङ्गाभिधायिन एव तदुपशमः प्रयोजनं वर्ण्येत। यदि सत्यवादी भवान्नैवं वक्तुमर्हतीति। किञ्च यो यस्मिन्किञ्चिन्निमित्तभावमपेक्षते न स तत्र शशविषाणायमानस्य तत्त्वमपेक्षते। अपि तु तत्र सत एवेति कथं शब्दानित्यत्वसिद्धौ कस्यचिन्निमित्तभावमपेक्षितवता सत्त्वं नापेक्षितम्। येन [3]परानपेक्षितं सत्त्वं प्रतिपादयितुं न तन्निमित्ताभिधायिनः शब्दस्य सामान्य(मर्थ्य)मस्तीत्युच्येत तस्माच्छब्दादौ धर्मिणि लिङ्गस्य साध्यसिद्धौ निमित्तभूतसत्त्वप्रतिपादनं हेतुप्रयोगस्य प्रयोजनमवश्यैषितव्यम्। य(त)च्चोपनयेनापि शक्यं संपादयितुमिति साधूक्तं **किं[1] तेने**[७२.१७]ति।

संप्रति निगमने यथाश्रुति [4]दूषणमाह—**यत्र[2] प्रतिज्ञाया**[७२.१८] इति। अथापि स्यान्नायं **पुनः** शब्दः [अ] प्रथमे किं तर्हि सादृश्ये, यथा 'अचिरप्रभा पुनर्निश्चरति' इत्यत्र। सादृश्यञ्च कियद्रूपेणास्त्येव। यद्वा यद्यपि सिद्धनिर्देशो निगमनं साध्यनिर्देशश्च प्रतिज्ञा, तथापि यस्यैव प्रतिज्ञायां साध्यत्वमासीत्तस्यैव निगमने सिद्धत्वमित्यवस्था[5]वन्तमेकमाश्रित्य समानविषयतया निगमनं प्रतिज्ञेत्युपचर्यते तथा च पुनर्वचनमप्युपपन्नमिति। न चैतन्निगमनं निष्प्रयोजनमाशंकनीयम् साध्ये विपरीतप्रसङ्गप्रतिषेधार्थत्वादस्य। तदुक्तं "साध्यविपरीतशंकाव्यवच्छेदार्थं निगमनमिति"। यद्यपि च लिङ्गमाश्रयवत्साध्याविनाभावि च[6] प्रतिज्ञादिभिरवयवैराख्यातं तथापि निगमनमन्तरेण व्यापकविरुद्धप्रसंगाशंका स्यात्।

१. न किञ्चित्तेन S। २. यत्र च प्रतिज्ञाया S।

अन्यदेव हि दृष्टान्तधर्मिणि साध्यं यत्साधनधर्मस्य व्यापकमासीत्। अन्यदेव च धर्मिण्यनित्यत्वं तच्च साधनधर्मस्य व्यापकं न भवतीति अव्यापकस्य सिद्धिं मन्यमानः साध्यविरुद्धमव्यापकत्वेन विशेषा[7]भावान्मूढमतिर्नित्यत्वमपि धर्मिणि प्रसञ्जयेत्। तथा च सति साध्यविपर्यये हेतोर्वृत्तिशंकायां बाधकं प्रमाणं तदेव वाच्यम् यदुदाहरणस्थयोः साध्यसाधनयोः प्रतिबन्धग्राहि। अतएव तस्मादित्यनेन सर्वनाम्ना प्रतिबद्धं लिङ्गं साध्यविरुद्धशंकां निवर्तयितुं प्रकृतत्वात्प्रत्यवमृष्यते। तस्माद्विपर्ययशंकानिवर्तकप्रमाणोपस्थाप[6]कं निगमनं साध्ये विपरीतप्रसंगप्रतिषेधार्थं भवतीति। तदेतन्नैयायिकप्रवरस्य प्रकृष्टं प्रज्ञास्खलितविलसितम्। तथा हि साध्ये निर्दिष्टे हेतौ चाभिहिते दृष्टान्ते चोदाहृते दृष्टान्तदृष्टसामर्थ्ये च हेतौ साध्यधर्मिण्युपनीते कः सचेतनो 'येन विना यो न भवति धर्मः स भवंस्तदभावमप्युपस्थापयति' इति निश्चीन्वीत संशयीत वा येन [35b][1]विरुद्धप्रसंगशंकानिराकरणाय निगमनमभिधीयेत। न चायमनुन्मत्तोऽनित्यत्वे द्वे पश्यति(पश्यति) येनान्यदेव दृष्टान्तधर्मिणि साध्यमनित्यत्वमन्यदेव च साध्यधर्मिण्यनित्यत्वं तच्च साधनधर्मस्य व्यापकं न भवतीति अव्यापकस्य सिद्धिं मन्येत यतो(ऽ)व्यापकत्वेन विशेषाभावात् अनित्यत्वमपि धर्मिणि प्रसञ्जयेत्। न च विशेषेण व्याप्तिमसावग्र[2]ही[दि]ति, विशेषेण व्याप्तेरेवासम्भवात्। तथा चोक्तं—"व्याप्तिः सामान्यधर्मयोः" इति। अन्यथा सत्यपि तस्मिंस्तदाशंके(का) नापाक्रियेत। एतेन सप्रतिपक्षत्वशंकानिराकरणत्वम् तत्प्रयोजनमिति यत्कैश्चिदुपवर्ण्यते तदपि परास्तमवसेयम्। अथ मोहमाहात्म्यादेवमपि संभाव्यत इति चेत्। अपयातं तर्हि पञ्चावयवत्वं वाक्यस्य। [3]सम्भवत्यपि कश्चिन्मूढतरमतिर्यः पञ्चावयवेऽपि वाक्ये प्रयुक्ते नानित्योऽपीति वचनमन्तरेण शब्दस्यानित्यत्वं नियतं न प्रत्येति। अस्ति च दिगम्बराणां विप्रतिपत्तिः—स्यान्नित्यः शब्दः स्यादनित्य इति। तद्भावव्युदासाय नाऽनी(ऽनि)त्योऽपीत्यपि किं नोच्यत इत्यलमतिविस्तरेण निष्प्रयोजनकत्वेन। निगमनस्य वाक्याङ्गत्वे[4] निरस्ते प्रथममुपदर्शितं यदुभयेषां मतं तदरण्यानीरुदिततुल्यं जातमिति किं तत्रोक्तेनेति। **ज्यायान्** [७२.२१] श्रेष्ठतरः। प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि **पञ्चावयवा** यस्य स तथा **तदात्मकः** [७२.२१] सामस्त्यनिषेधश्चैष द्रष्टव्यः। **हेतुरि**[७२.२५]त्यभिधानाभिधेययोरभेदविवक्षया साक्षात्पारम्पर्येण एकविषयत्वाद्वा[5] पक्षधर्मत्वाभिधायी शब्दो द्रष्टव्यः। हेतुश्चैवानुवादेनात्मना प्रतिपाद्यमानो व्याप्यरूपः प्रतिपादितो भवतीति प्रथमान्तेन तदभिधायिना शब्देन प्रतिपाद्यते। अतः प्रथमान्त एव तदभिधायी शब्दो न्याय्यः। हेत्वभिधायिशब्दमात्रापेक्षया तु पूर्वापरनियमखण्डनमाचार्यस्य द्रष्टव्यम्।

**साधनधर्मस्य साध्यस्वभावतायां एवे**[७३.१२]ति स्वभावहेत्वधिकारेण विवृतम्।

कार्यहेतुना व्यभिचारमाशङ्क्य **कार्यस्ये** [७४.६]त्याह। **तेन** [७४.७] प्रतिबन्धेन। **तयो**[७४.७]रन्वयव्यतिरेकयोः। [1]**तदभावख्यातिः** [७५.७] तदभावज्ञानम्, नियमं ख्यापयतश्चायमभिसन्धिः। तत्तुल्य एवास्तीत्यभिधानेऽतत्तुल्ये सर्वत्रान्यस्मिन्विरुद्धेऽसति च [7]नास्तित्वं लक्षणान्तरमितिप्रसङ्गे नियमार्थमित्येव नास्तित्वं रूपं तृतीयं न पुनर्विरुद्धे **अन्यत्र** [७५.८] चेति दर्शयितुमसत्येवेत्युक्तं सूत्रकारेणेति। **विरुद्धत** [७५.८] इति सहास्थितलक्षणेनैव विरोधेन विरुद्ध्यत इति। कथं **नानुष्णाशीतादपी-**[७५.१६]त्याह **अन्यतो** [७५.१६] विपक्षाद् **व्यवच्छेदस्या**भावस्य **प्रसङ्गादि-**[७५.१६]ति। **इति**[७५.१९]दोषस्याकारं दर्शयति। **तस्य** [७५.१९] तदभाव[8]स्य। **अन्यमिच्छतामि**[७५.२१]त्यभिसम्बध्यते। तथा **परस्परपरिहारस्थितलक्षणेनापि** [७५.१३] विरोधेन विरुद्धमित्यपि द्रष्टव्यम्।

**अभिघातो** [७६.१५] वेगवद्द्रव्यसंयोगविशेषोऽभिमतः। अभिघाता**ग्निसंयोगादेव नाशप्रत्ययौ** [७६.१५] तयोः **सन्निधिः** [७६.१६] तं **विना विनाशो न घटादिभिः संसर्गतां** [७६.१६] याति।

**तदनपेक्षालक्षणं बाधकम्** [७६.२६]। **प्रसङ्गमुखेन** [७६.२६] परोपगमसिद्ध[36a][1]पक्षधर्मताद्वारेण। **विपश्चयितुमि**[७७.१]ति ब्रुवाणेन चाधिकप्रतिपादनार्थमुक्तमेवोच्यमानमनुवाद एव न तु पुनरुक्तमिति दर्शितम्। आकाशादिनित्यद्रव्यापेक्षया **देशकाल**[७७.२]ग्रहणं दृष्टान्तार्थं द्रष्टव्यम्। तेनायमर्थो यथा नित्यानाममीषां देशकालनियमो नास्ति तथा शब्दगुणत्वादिस्वभावनियमोऽपि न युज्यत इति दृष्टान्तार्थम्। **देशस्वभा**[2]**वनियमायोग**[७७.२]स्तु दार्ष्टान्तिकः। **एकाङ्गवैकल्यात्** [७७.३] सत्त्वलक्षणैकाङ्गहीनत्वात्। **तदात्मतां** [७७.५] क्षणिकत्वस्य प्रकृतस्याकृतकसदात्मतां **प्रति** [७७.५]। **शास्त्रकार**[७७.५]शब्दः प्रकरणात् कीर्तिपादेषु द्रष्टव्यः। **सत्त्वस्य क्षणिकस्वभावतां प्रतिपादयिष्यती**[७७.९]ति सम्बन्धः। **वस्तुस्थित्यैव** [७७.७] वस्तुवृत्त्यै न परोपगमबलेनेत्यर्थात्। **अभावप्रसङ्गेन**[3] [७७.९] प्रकरणाद्विनाशसद्भावप्रसङ्गेनेत्यवसेयम्।

---

१. हेतोरभावख्यातिः S २. ०लक्षणतयापि S

**पूर्वाचार्योक्तं** [७७.११]दिङ्नागपादोक्तं **तं प्रत्यनपेक्षत्वं ख्यापयितु-मुपक्रमत** [७७.१२] इति सम्बन्धनीयम्। **तं** [७७.१२] परेष्टं प्रति।

**वस्तुगतौ** [७७.२५] वस्तुप्रकारे **तदात्मा** [७८.१] निर्वृत्तास्थिरात्मा। **तस्य** [७८.१] अन्यथाभावस्य। **प्रसङ्गात्** [७८.२] हेतोः। **तस्यैव** [७८.२] स्वहेतुतः स्थिररूपतया निर्वृत्तस्यैव **अन्यथात्वायोगा**[4]**त्** हेतोः। **तत्र** [७८.३] हेत्वगते स्थिररूपे **हेतुव्यापारस्य** [७८.३] **कल्पयितुमशक्यत्वाच्च** [७८.३] नान्यथाभावस्तदात्मा **शक्यते कर्तुम्** [७८.१]।

**तस्य** विनाशस्य स्वभावस्तत्**स्वभावस्**[७८.५]तमेव। **लक्षण**[७८.११]शब्दो रूपनिबन्धनः। स्वलिङ्गेन चास्यावस्थानं कृतम्। **तस्य** [७८.१६] भावान्तरशून्य-भावान्तररूपस्य। सर्वरूपशून्यस्य ह्यभावस्य हे[5]तुस(म)ता विरुध्यते न त्वस्येति भावः।

यदीदं भवतामपीष्टं तर्हि कस्मादस्मन्मतं नाभ्युपेयत इत्याह—**किंत्वि**[७८.१९]ति।

**तदुत्पत्तौ** [७८.२४] प्रध्वंसरूपभावान्तरोत्पत्तौ। एतस्मिन्पराभिप्रायेप्येवं ब्रुवाणो **नियतमेवं** [७८.२६] वक्ष्यमाणकं **मन्यते** [७८.२६] वार्तिककार इति चार्थात् **सर्वस्येन्धनादेः** [७८.२६] तथाभावः प्रध्वस्तत्वं [6]**गवादेस्तथाभावः** [७८.२७] प्रध्वंसरूपत्वमिति द्रष्टव्यम्। द्वयमप्येतदत्रकुर्वन् (?) परः प्राह। **तस्मिन्सती**[७९.१]-ति। अनेन दृश्यमानाङ्गारादिभावेन सर्वमिन्धनादि निवर्तत इति न सर्वस्य प्रध्वस्तत्वं नापि गवादौ सतीन्धनादि निवर्तत इति न **गवादेः** प्रध्वंसरूपतेति परेण दर्शितम्। **अस्य** [७९.७] अङ्गारादेः।

**ध्वंसंते**[७९.१३][7]ध्वंसमुपयान्ति विनश्यन्तीति यावत्। दीपापेक्षयाऽ**व्यक्तता** द्रव्या(बुद्ध्य)पेक्षया आत्मभावः। **भावरूपाव्यक्तताभाव** [७९.१५] इति ब्रुवाण-स्तथात्मकाभावरूपता यावद् व्यवस्थाप्यतामभावैकरसत्वात् प्रतिपत्तेः। न तु भावरूपा-व्यक्ततापत्तौ प्रमाणमस्तीति दर्शयति। एतदेव दर्शयन्नाह **यदिही**[७९.१६]त्यादि। **अत्रापि** [७९.१९] उपलब्धियोग्यताविकलरूप[1]तापत्तौ।

**पर्युदासेने**[८०.२]त्यस्य विवरणं **विवक्षितादि**[८०.३]ति।

**सन् बोधगोचरप्राप्तो**ऽस्वविज्ञानविषयतापन्नः **तद्भावे** [८०.१२] वह्न्यादिभावे **नश्यन्निति**। "लक्षणहेत्वो[ः] क्रियायाः" (पा० ३-२-१२६) इति हेतौ शतृ(?)-विधानाद्धेतुपदमेतत्।

ननूक्तया नीत्या नाशस्य तत्कार्यतोपपत्तेः कथमेतदाचार्येणोक्तमित्याशंक्याह **अय-मभिप्राय**[८०.१६] इति । स्यान्मतम् प्र[36b][1]तीतिविषयोपि न च तत्र प्रतीति-लक्षणार्थक्रियाकारी । यथा साध्याभावे हेत्वभावरूपो व्यतिरेको विकल्पेन प्रतीयमानः न विकल्पस्य । कारकश्च कथमुच्यते ? न ह्यकारणं विषयो अतिप्रसङ्गादिति । नैतदस्ति साक्षात्कारप्रवृत्तज्ञानाभिप्रायेण तदुक्तेर्न तत्र व्यभिचारोऽस्ति । अनेनापि च तथाविध-ज्ञानविषयेणावश्यभाव्य[ग]न्यथा [2]प्रत्यक्षानुपलम्भनिबन्धनः कार्यकारणभावः कथं व्यवस्था-प्येत अत एवाह [1]**तद्विषयस्य** [८०.२४] वा कथं **हेतुमत्तावगति**रिति वा सामर्थ्य-[2]**समंगिता** सामर्थ्ययोगिता **भावना** [८०.२७] वस्तुता, **अत्यन्तपरोक्षाणाम्** [८१.७] असर्वज्ञापेक्षया सर्वदा परोक्षाणाम् । तर्हिशब्दार्थश्चात्र प्रकरणाद्द्रष्टव्यः । **ज्ञानहेतुरूपतया** [८१.८] अनुमानसिद्धयेति विवक्षितम् । । [3]अनेन ज्ञानहेतुरूपतया प्रतिभासनये चामीषां प्रतिष्ठितेन रूपेण प्रतिभासनमिति परेण दर्शितम् । **न**[८१.८]-त्यनेन [अ]भावस्य प्रतिष्ठितरूपावभासनाभावं परेणेष्टं निवर्तयति । भवितृरूपत्वेन प्रतिभासनमेव शशविषाणाद्यपेक्षयाऽ**स्यापि**[८१.८] प्रतिष्ठितरूपावभासनमिति सिद्धा-न्तिनापि दर्शितम् । सर्वसामर्थ्यशून्यतालक्षणेनाभावे दोषान्तरमन्वाचिन्वन्नाह **सर्वरूप-विवेकस्य चेति**[८१.९] । **उन्मज्जनं**[८१.१०] प्रकाश्यं यच्च चक्षुरादीनां प्रतिष्ठितरूपावभासनसद्भावावबोधार्थम् तेषां ज्ञानहेतुरूपतया प्रतिभासनादिति परेणेरितं तदभावेपि शक्यं[5] कर्तुमिति दर्शयन्नाह **ज्ञानविषयतये**ति [८१.११] । पूर्वं त्वत्र गजनिमीलिकां कृत्वा अन्यदुक्तम् । **अस्याप्य**[८१.११]भावस्यापि **तद्धेतुरूपतयाऽवभासनस्य तुल्यत्वात्** [८१.११] । चक्षुरादि(दे)रिति-प्रकरणात् । यदि नामास्य ज्ञानविषयता तथापि न तद्धेतुता तत्कथं तद्धेतुरूपतयाऽव-भासनं तुल्यमुच्यत इत्याह **अहेतोश्चे**[८१.१२]ति । [6]एतच्च पूर्ववद्बोद्धव्यम् । यद्य-भावो नाम नास्त्येव भवन्मते तर्हि अमूरभावबुद्धयः कमालम्बेरन्नित्याह—**अस्माकं त्वि**[८१.१२]ति **स्ववासनापरिपाकान्वया** [८१.१२] इति हेतुभावेन विशे-षणम् । **तद्व्यतिरेकि**[८१.१९] ततो निवृत्तं तदभाववदिति यावत् । **संस्पृश्येत** [८१.१९] गृह्येत **तत्पर्युदासेन** [८१.१९] निवृत्त्यवधिव्युदासेन । सदिति प्रत्य[7]या-विषयस्य न भावतेति ब्रुवता यदसदात्मकत्वमस्योपगतं तत्र किं स्वरूपेणासन् किं वा पर-रूपेणेति पक्षयोरेकं भावं दूषयितुमाह—**न चास्ये**[८१.२४]ति **स्वरूपेणा**[८१.२४]-नपेक्षितभावान्तरसंसर्गेण तुच्छरूपेणाप्य**सतो**[८१.२४]ऽकिञ्चिद्रूपस्य । न च भावा-

---

१. तदविषय S २. सम्बन्धिता

भावयोर्यौगपद्यमुपपद्यते कदाचित्। न हि जीवत एव मरणमिति घटा[8]मञ्चतीति भावः। ध्वंसेन विनाशश्च क्रियमाणः किं तदात्मा ततोऽन्यो मृषा भावान्तररूपो वा तुच्छरूपो वेति तत्र ये विकल्पाः तत्र तृतीयस्मिन्विकल्पे **भवतु** [1]**चायं**[८१.२६] ततस्तद्भावेपि निमित्ती-त्यादि(किमितीत्यादि)दूषणपरिहारयोराभीक्ष्ण्ये चानवस्थावभि(स्थाभि)प्रायवानाह **ततश्चा-नवस्थेति** [८२.६]। **अत** इन्धनादेर्निवृत्तेः। **कथमिति** सिद्धान्ती। **तद्भेदा**[८२.८]-[37a][1]द्धेतुभेदात्। दृष्टं चैतत्सर्वत्र सहेतुकेऽन्यत्रेति दर्शयन्नाह **शाली**[८२.९]त्यादि। [2]**एकरसस्यै**[८२.१३]कस्य भावस्य। संक्षेपेणैतदत्रानेन विचारितम्। क्षणभङ्गसिद्धौ तु विस्तरेण ततश्च विस्तररुचिना तत एवावगन्तव्यम्। साप्यस्मदीया क्षणभङ्गसिद्धिर-पेक्षितव्येति अभिप्रायवानाह **विस्तरतश्चे**[८२.१४]ति। स्यादेतत् 'न भवत्येव केवलम्' इत्यनेन[2] किमग्न्यादिसंयोगकाले तस्य स्वरूपाभावः प्रतिपाद्यते किम्वा तदनुवृत्तिः। न तावत्तदनुवृत्तिरक्षणिकत्वप्रसंगादशब्दार्थत्वाच्च। अभावप्रतिपादने च पूर्वोक्ता दोषाः प्रसज्येरन्निति। नैष दोषः, अनया हि वचनभङ्ग्या परमसंकुचित-कालस्थाय्युत्पत्तिकाल एव स द्वितीये क्षणे न किञ्चिदिति यद्रूपं भावस्य तत्प्रतिपाद्यते[3]। न तु किञ्चिद्विधीयते। अत एवाह **नास्याभवनमन्यद्वा भवतीति** [८२.१८]। मा भूदग्निसंयोगादिर्नाशस्य कर्ता किं नश्छिन्नं यदि परहेतुरस्ति—इत्याह [अ]**कर्तुर-हेतुत्वमि**[८२.२२]ति। स खलु तस्य कर्ता न्यते(पठ्यते) यः प्राग्भावी सन्नर्थान्तरं स्वान्वयव्यतिरेकावनुविधापयति यथा चक्षुरादि विज्ञानस्य। तथाभूतस्यान्वय[4]व्यतिरेकानु-विधापनमेव हेतुत्वम्, तद्भावे भावस्य तदभावे चाभावस्य हेतुलक्षणत्वात्। अग्न्यादिभावे च भवनधर्मणः कस्यचिद्भा(चिदभा)वात्कर्तृत्वाभावे कथमिव तल्लक्षणम् हेतुत्वमेव संगम्यत इति चैवंवदितुरभिप्रायः।

**सू**[5]**च्यग्रेषु स्थातुमशक्तः सर्षप** [८२.२६] इति योज्यम्। यथायोगं सम्बन्धः [1]हेत्वन्तरापेक्षितत्वं तद्विरुद्धं चानपेक्षित्वम्। तेन च प्राप्तं(व्याप्तं) तत्स्वाभाव्यमिति।

**अवकाश**[८३.१५]शब्देनावकाशवद्वचनं विवक्षितम्। तेनावसरप्राप्तं वचन-माशङ्क्येत्यर्थो बोद्धव्यः। एवमन्यत्राप्येवंविधे प्रयोगे ज्ञेयम्। दृष्टान्तादागतो **दार्ष्टा-न्तिकः**[4] [८३.२१]। **कुशूल**शब्देन घटादिरचित आधारविशेष[6]उच्यते। तदादाव-**वस्था**ऽ[८३.२३]वस्थानं यस्य स तथोक्तः।

१. वाऽयं S
२. एकरूपस्य S
३. सूच्यग्रे स्था° S
४. कं S

**अवस्थानामिव** [८४.१८] **आत्मनः** प्रातिस्विकरूपस्य **तद्भेदे**[८४.१९]-ऽवस्थाभेदे । **कथंचित्** [८४.२४] केनापि प्रकारेणाभेद इत्यर्थस्य स्खलद्गतिपदमेवैतत्। तनोर्भेदादेव **भेदप्रसङ्गो** [८४.२६] भिन्नरूपताप्रसङ्गः । **तद्वद**[८४.२६]भिन्नरूपावस्थातृवत् । **अभेदस्य वा** [८४.२६] प्रसङ्ग[7] इति प्रकृतत्वाद्योज्यम् ।

ननु यदि भेदाभेदौ चैकान्तिकौ स्यातां स्याद[न]न्तरोक्तो दोषः । यावता तयोरपि केनचिद्रूपेण भेदः केनचिदभेद इत्याशंकमान आह—**तयोरपी**[८४.२६]ति । **तयो**र्भेदाभेदयोः, **अवस्था** च **तद्वान**वस्थावांश्च तयो**रात्मानौ** तयोश्च । **तस्याप्य**[८५.१]भेदनिमित्ततयेष्टस्यापि रूपान्तरस्य । [8]**ताभ्याम**[८५.१]वस्थातद्वद्भ्याम् । [८५.१] **अन्यथा** यदि ताभ्यां तस्याभेदनिमित्तस्य रूपान्तरस्य कथञ्चिद्भेदो न स्यादैकात्म्यं यदि स्यादित्यर्थः । स चासावभेदनिमित्तै**कस्वभाव**श्चेति तथा तस्मात् [८५.१] । **भेदाभेदावि**[८५.२]ति वदितुश्चायमाशयः—ऐकात्म्यपक्षे अभेदनिमित्ते रूपान्तरे वा ताभ्यामवस्थातद्वद्भ्यामनुप्रवेष्टव्यं तयोर्वा [37b] [1]तेनाभेदनिमित्तेन रूपान्तरेण। तत्र यदि तयोरभेदनिमित्ते रूपान्तरे अनुप्रवेशस्तदाऽभिन्नरूपमात्रस्य भावादवस्थातद्वतोरभेद एवेति भेदस्य वार्तापि न स्यात् । अथ तस्याभेदनिमित्तस्य रूपान्तरस्य तयोरनुप्रवेशस्तदाऽवस्थातद्वन्तावेवावस्थितावित्यपगतमभेदेनेति । एवं तर्हि तस्यास्तु ताभ्यां कथञ्चिद्भेद इत्याह—[2]**रूपान्तरस्ये**[८५.३]ति । **कथञ्चित्त**[८५.३]देताभ्यामिति तु प्रकरणात्। **तन्निबन्धनं** [८५.३] रूपान्तरस्य ताभ्यां किञ्चिद्भेदनिबन्धनम् । यथा पूर्वं **तथास्याप्य**[८५.४]पररूपस्य । **तदन्यत्** [८५.४] कथञ्चिद्भेदनिबन्धनम् । अयमस्य भावः—तस्यापरस्य रूपस्य तेभ्योऽवस्थातद्वद्भेदनिमित्तरूपान्तरेभ्यः कथञ्चिद्भेदोन्यथा तदपरैकस्वभावादत्यन्त[3]मभेदादवस्थाऽवस्थात्रभेदनिमित्तरूपान्तराणां प्राक्तनेन न्यायेनात्यंतं भेदाभेदौ प्रसज्येयाताम् । अतस्तेभ्यस्तस्य कथञ्चिद्भेदेऽवश्यैषितव्ये तन्निबन्धनमपरस्यापि रूपस्यापरं रूपमुपैतव्यमिति । तथा तदन्यत्राप्येवमेवेत्य**परिमितरूपतैवैकस्य**[८५.४] स्यात् । **तस्मा**[4]**दि**[८५.६]त्यादिना प्रकृतमुपसंहरति। **तद्बाधां** [८५.१०] प्रत्यक्षबाधाम् । अनेनैतद्दर्शयति । न प्रत्यक्षा सती प्रत्यभिज्ञा बाध्यते किंतु बाध्यमाना प्रत्यक्षाभासा सेति । एतच्चोपरिष्टादभिधास्यते । [1]**अनेकान्तोऽ**निश्चयो **भवेत्** [८५.१२] । अनिश्चयफलत्वं संशयहेतुत्वं स्यादिति यावत् ।

**एतदेव** [८५.१४] जनकाजन[5]कत्वमेव । [2]**धर्म(र्मि)लक्षणस्या**[८५.१७]-वस्थातुरित्यर्थः ।

---

१. अनैकान्तिकता भवेत् S ।

२. धर्मिलक्षणस्य । S.

न चा(चे)यमवस्था कार्यविज्ञानातिरिक्तं ज्ञानं जनयति येन ज्ञानलक्षणायामर्थक्रियाया-मस्योपयोगात् सामर्थ्यं कल्प्येतेत्यभिप्रायेण **सर्वसामर्थ्यविरहलक्षणस्ये**[८५.२२]-त्यवोचदिति । **अनुभवादि**[८५.२४]ति, हेतौ शतुर्विधानाद्बाधानुभवादि[6]त्यर्थः । बाधासद्भावाद् 'बाधवर्जितम्' इति सामान्यप्रमाणलक्षणस्याभावं प्रतिपाद्य विशेषलक्षणस्या-प्यभावं प्रतिपादयितुं **तत्प्रतिभासिनश्चे**[८५.२५]त्यादिनोपक्रमते । एकरूपाभावे कथं तत्त्वाध्यवसायः स्यात् सर्वेषामित्याशङ्क्यान्यथैवास्योपपत्तिमुपसंहारव्याजेन दर्शयन्[7] आह—**तस्मादि**[८६.३]त्यादि । **सदृश**[८६.३]शब्देन निरन्तरसदृशं विवक्षितम् । तेन निरन्तरस्य **सदृशस्यापरस्य भाव**[८६.३]स्तन्निरन्तर**निबन्धने**त्यर्थः । **केशा**दिषु लूनपुनारूढेष्वित्यर्थादवसेयम् । **आकारसाम्यमात्रेणापहृतं** प्रकरणात् यथात्वनिश्चयायोग्यीकृतं **हृदयं** [८६.४] चेतो येषां तेषाम् ।

ननु यदि आकारस्य साम्यं[8] सादृश्यं नाम त्वन्मते किञ्चित् स्यात् तन्मात्रापहृतहृदयाः प्रत्यभिजानीयुः । न चैतदस्ति, तत् कथमेवमुक्तमित्याह **न चे**[८६.८]ति ।

" एकप्रत्यवमर्शार्थज्ञानाद्येकार्थसाधने ।
भेदेऽपि नियताः केचित् स्वभावेनेन्द्रियादिवत् ॥ " [प्रमाणवा० ३.७२]

इत्यादिना विपञ्चितत्वादेवमुक्तम् ।

**तेषु** [८६.१७] भावेषु ।

त्रयाणामपि रूपाणां प्रमाणसिद्धत्वात् [38a] [1]स्वतंत्रहेतुरियं **व्यापकानुपलब्धिः** [८७.७] ।

**अनेन** [८७.९] प्रत्यभिज्ञानेन प्रत्यक्षरूपेण **अनिश्चिते**[८७.१०]त्यादि प्रति-विधानम् । तावदस्य बाधकत्वं न भवति यावत् प्रत्यभिज्ञानस्याप्रामाण्यं न सिद्ध्यति, अन्यथा अनेनैव बाध्यमानविषयत्वादस्य कथं प्रामाण्यं येन बाधकत्वं स्यात् ? तावच्च तस्याप्रामाण्यं नोपपद्यते यावदनुमानस्यास्य प्रामाण्यसिद्ध्या बाधकत्वं न सिद्ध्यति । **इतरथा** बाधवर्जितत्वादिलक्षणसम्भवे प्रामाण्यप्रच्युतिरितीतरेतराश्रयत्वं दोष इत्या-शङ्क्यमानमाह **नापी**[८७.१०]ति ।

**अनुमान**[८७.११]शब्देनोपचाराल्लिङ्गमभिप्रेत्य **स्वसाध्यप्रतिबन्धादि**-[८७.१२]त्याद्युक्तम् । यदि वा लिङ्गस्येत्यध्याहार्यम् अवचने च प्रमाणलक्षणयुक्ते बाध-सम्भवे तल्लक्षणमेव दूषितं स्यादिति सर्वत्रानाश्वास इत्यभि[3]प्रायः ।

नैवं ब्रूमहे [८७.१७] किन्तु प्रत्यक्षाभासा सती चार्थादवतिष्ठते । **अनुमानस्य विरोधो** बाधस्त**मश्नुवाना** [८७.२०] व्याप्नुवती भजमानेति यावत् । **आकारस्य** [८७.२०] रूपस्य **सामान्या**[1]**द्** [८७.२०] **एकतां** [८७.२०] तत्त्वं [2]**प्रतीयती** [८७.२१] निश्चिन्वती । **आदि**[८७.२१]शब्दात् फलस्य संग्रहः । सूर्योपराजित-शब्देन यस्य रूढिः । **आदि**[८७.२२]शब्दाद्वन्येतरकर्कोटादिपरिग्रहः । **तथा**[4]**भाव**-मेतद**नुभवति** [८७.२३] ।

अथ किं '**न च स पक्षे क्वचिद्वर्तेत** [८८.१९]' इत्यसिद्धत्वे कारणमिदमुक्तम्? एवञ्चेत् न तर्हीयन्तं कालं भवान् बुद्धवानसिद्धलक्षणम्, पक्षवृत्त्यादिना प्रकारेण हेतोस्तथाभावादिति । युक्तमवादीदिदं भवान् यदि परं **तदाऽयमसिद्धो हेतुरि**[८८.१८]ति वदितुरभिप्रायं नाज्ञासीत् । अयं खल्वस्याभिप्रायः [5]प्रत्यभिज्ञा नाम विकल्पविशेष एषः । स च विकल्पस्य विषयो यः शब्दस्य विषयः, शब्दसंसृष्टार्थप्रतिभासित्वाद्विकल्पस्य । स च शब्दस्य विषयो यः संकेतस्य विषयः, वाच्यवाचकभावसम्बन्धस्य वास्तवस्य व्युदस्तत्वात् । न चासामर्थ्यवैयर्थ्याभ्यां स्वलक्षणात्मनि संकेतः कर्तुं शक्यत इति कथं वस्तु[6]तो भावाः केचिदभि(पि) प्रत्यभिज्ञानविषयात्म(त्मा)नः । तत्र(तन्न) प्रत्यभिज्ञापनत्वं(ज्ञायमानत्वं) सिद्धिमध्यासीत । यद्यत् प्रत्यभिज्ञायते तत्तत्पूर्वापरयोः कालयोरेकस्वभावं यथेदमिति तथागतान् प्रतिपादयितुमशक्यत्वात् व्याप्त्यसिद्ध्याऽनैकान्तिकश्चायमिति । प्रौढवादितया सिद्धिमभ्युपगम्यापि दूषणान्तराभिधित्सया प्रवृत्त[7]स्य सिद्धान्तवादिनो **न चे**[८८.१९]त्यादिवाक्यम् । यद्वा दूषणान्तरमन्वाचिन्वन्नाह—**न चे** [८८.१९]ति

[3]**ज्ञानजनकस्वभावताविरहादि**[८८.२७]ति भवता चेदं दर्शितम् । यदि सर्वेषां जनकस्वभावता तस्यां चान्यापेक्षिता स्यात् स्याददनैकान्तिकत्वम्, न चेद[म]स्तीति । **भेद**[८८.२८]शब्दो विशेषवचनः ।

प्रकृते तव किमायातमित्याह—**तद्वदि**[८९.१०]ति । **तैः** [८९.१२] बीजादिभिः **अनेकान्त** इति मौलस्य हेतोरिति द्रष्टव्यम् ।

**सामान्येना**[८९.१४]विशेषेण ।

---

१. साम्यात् S । २. प्रतियती S

३. 'ज्ञान' इतिपदं नास्ति--S

न सह[८९.२२]शब्दो युगपदर्थवृत्तिराचार्येणेष्टोऽपि तु सहोदरवदेकार्थवृत्तिः। अपि तु एकार्थकरणमपि [११४.१९] यद्वर्णनमिति किं सहकारिलक्षणपर्वाणि प्रतिपादयिष्यते। न च युगपत्कारित्वादेव भावानां परस्परसहकारित्वं घटते। घटपटादीनामपि कदा स्वां स्वा[38b][1]मर्थक्रियां कुर्वतामपि तथाभावप्रसङ्गात्। तत्कथं **'सहकारिषु युगपत्करणशीलेषु'** [८९.२२] इत्येतद् भट्टार्चटो व्याचष्ट इति चेत्, नायं दोषः। न हि सहशब्दस्य एतद् व्याख्यानं युगपदित्यपि तु भाविकारणानभ्युपगमे अवश्यमेकार्थकारिणामेकदा करणमित्येकार्थं बुद्धावारोप्य वास्तवं रूपमिदमनूदितम्। तेन युगपदेकार्थकरणशीलेष्वित्यव[2]सेयम्। एकार्थकारित्वमेव तु लक्षणं न तु युगपत्करणमवश्यंभाव्यपि व्यभिचारात्। प्राज्ञाः पुनरेतद्यथाश्रुति समर्थयन्ति।

ननु लाभो महानयमिति, न च काचिदक्षमा। **नैवे**[८९.२५]ति व्याचक्षाणो **वै**शब्दमवधारणे दर्शयति। कः पुनस्तत्रेतरेषां व्यापार इत्याह–**भवनेति**[९०.३]। **व्यापारोपयोगस्यास्य पारमार्थिकत्वं कारकत्वं हीये**[3]**ते**[९०.८, ९]ति संबन्धनीयम्। कुत एतदित्यपेक्षायां **कार्ये**त्यादियोज्यम्। **उपचारात्** [९०.८] कारकत्वस्येति प्रकृतत्वात्। **तथा** [९०.१७] तद्वत्। **तत एव** [९०.१७] स्वसन्निधिमात्रत एव।

**स्वत एव** [९१.१] कारणव्यापारनिरपेक्षाद्रूपादेव। **आत्मन** [९१.२] इति कार्यात्मनः। **प्रागपि** [९१.२] जन्मनः पूर्वमपि। रूपरूपिणोरनन्यत्वादित्यभिप्रेत्य **रूपभेदलक्षणात्वा**[4]**दित्यु**[९१.४]क्तम्। तत् **कुतो**ऽसत्त्वात्।

यत्र स्थितेन कार्यं जनयितव्यं स **कार्यदेशो**[९१.१२]ऽभिप्रेतः।

**यश्चासावभिप्राय**श्चेति तथा **तद्वता** [९२.३]।

ननु सर्वेषामङ्कुरोत्पादे सामर्थ्याप्रच्युतेरनेकाङ्कुरेण नियतमुत्पत्तव्यमेवेति यत्परेण प्रकटितम् तत्कथमेवंब्रुवताऽपहस्तितमित्याशंक्याह **अयमभिप्राय** [९२.४] इति।

**युगपत्कर्तृभ्य**[5][९२.१६] इति पूर्ववद्योद्धव्यम्। उक्ते सति किं नाम प्रतीयतामिति तत्स्वभावस्य जननादित्यस्यानैकान्तिकत्वे मौलस्यापि तथात्वमनिवार्यमिति परस्याशयः।

**न कारणभेदात्कार्यभेदः स्यादि**[९२.१८]ति प्रसङ्गे कार्यभेदस्य बाधके परेणोक्ते कथमेतद्वाधकं भवतीत्याशंक्याह **एवं मन्यत** [९२.२९] इति। **सामग्रीजन्यस्वभावत्वात्** [९३.१] तदवस्थाप्राप्तानेकसमर्थजन्यस्वभावत्वात्। **कार्यस्या**[९३.१]भिन्नात्मन इति प्रकरणात्। **नन्वि**[९३.२]त्यादि परः। **यद्येवमि-**

[९३.४]ति सिद्धान्ती । **यदनेकस्माद्भवताऽनेकेन भवितव्यमि**[९३.४]ति एकजातीयापेक्षयोक्तम् न तु कार्यमात्रापेक्षया, भिन्नजातीयस्यानेकस्योत्पादाभ्युपगमात् । **एकं** कर्तृ[7] **तत्कार्यमि**[९३.६]त्यभिन्नरूपकार्यम् । **एतत्त**[९३.८]द्भावे भवनम् । **भवतामि**[९३.१०]ति सांख्यानमिसंधायाऽऽह ।

धर्मवचनस्य संकरशब्दस्य भावा**दसंकराद**[९३.२३]सांकर्यादित्यर्थः । अत एवाह **परस्परे**ति [९३.२४] । परोदाहृतकार्यापेक्षया सामग्रीभेदाद्भेदं प्रतिपादयितुं **तथाही**-[९३.२५]त्यादिनोपक्रमते । **सादृ(गु)ण्यमा**भिमुख्यम् । **आदि**[९३.२६]-शब्दात् वासनाप्रबोधादिसंग्रहः[8] । **इन्द्रिय**[९३.२७]शब्देन तिमिरादिविकृतमिन्द्रियं विवक्षितमन्यतो भ्रान्तिज्ञानानुदयात् । **मात्र**ग्रहणेन चालम्बनस्यैव निरासो विवक्षितः । न त्वालोकादेः तदभावे तदनुत्पत्तेः । **तदन्ये**[९३.२८]त्यत्राप्यालोकादि द्रष्टव्यम् ।

**उपयोगविषय**[९४.४]स्तदेकं जन्यं विज्ञानं **तथाविधस्यै**[९४.४]कात्मता-लक्षणस्य । **न भिद्यते** [९४.६] नानात्वं न भव(ज)ति । **किंन्वि**[९४.८]ति नि[39a]-[1]पातानिपातसमुदायः प्रश्ने । यदि वा वितर्के **नु**शब्दः **किं**शब्दस्तु प्रश्ने । **वै**[९४.८]-शब्दो निपातोऽत्र संबोधने ।

अनेकस्य भावे तेषामनेन(क)जनकत्वमित्युपगते हृदयनिहितशङ्करस्वामिचोद्यः कश्चि**न्नन्वि**[९४.१२]त्यादिना चोदयति । स एव स्वातन्त्र्यपरिजिहीर्षया नैयायिक-प्रवरवचनेन संस्पन्दयन्नाह **आह चे**[९४.१८]ति । शङ्करस्वामी च बुद्धिस्थमस्य[2] । **तत्तस्मात्किं**[९४.१९] कस्मात् । **विज्ञानाभिन्नहेतुक(ज)मि**[९४.१९]ति हेतुभावेन विशेषणम् ।

तेषामवान्तरसामग्रीभेदाद्भेद इति प्रतिपादयितुं **तेषामि**[९४.२०]त्यादिनोपक्रमते । विज्ञानोत्पत्तौ विज्ञानमुपादानकारणम् । चक्षुरादिसहकारिकारणम् । चक्षुःक्षणोत्पत्तौ **तु** चक्षुरुपादानकारणम्, विज्ञानादि सहकारिकारणमेवमन्यत्रापीत्ये[3]कमुपादानकारणमितरत् सहकारि कारणं कृत्वा सामग्रीणां वैलक्षण्यमीक्षितव्यम् । **कार्याणां** [९४.२५] विज्ञानचक्षुःक्षणादिरूपाणाम् ।

**बोधरूपतादेरि**[९४.२८]त्यादि सिद्धान्ती । अनुकार इति करोतेः णिजन्ता-द्घ द्रष्टव्यः । **अनुकार**[९४.२८]णम स्वसंततिपतितकार्यकर्तृकत्वं वाच्यम् ।

एतच्चास्यैवोपसंहारे व्यक्तीकरि[4]ष्यते । तस्यानुकारणमेवानुकर्तृमुखेन दर्शयन्नाह **तथाही-** [९५.१]ति । द्वितीयलक्षणं विवृण्वन्नाह **नियमेन चे**[९५.३]ति । **समनन्तर-** **शब्दः** समश्चासौ बोधरूपत्वेनानन्तरश्चाव्यवहितेनेति व्युत्पत्त्यापि प्रकृतत्वान्मनस्कार एव द्रष्टव्यो न त्वागमसिद्ध्याश्रयणेनोपादानमात्रे, उपादान[5]लक्षणस्यैवाभिधानात् शकन्ध्वादिपाठाच्च दीर्घत्वाभावोवसेयः । न **चक्षुरादेर्नियमेन व्यापार** [९५.४] इत्यर्थात् । **चक्षुषो** [९५.५] नियमेन व्यापार इति प्रकृतत्वात् । जन्यतया यत्त्व- **विज्ञानं** तस्य **योग्यता**ऽर्थादुत्पत्तुर्या **योग्यता तद्धेतोः** [९५.५] । ज्ञानोत्पादहेतोरित्यर्थः । चक्षुर्विशेषणत्वेऽपीत्थ[6]मेवास्यायमेवार्थः । अत्रापि समनन्तरशब्देपिनमन(ब्देन मन)स्कारोऽभिप्रेतः । उक्तयोर्लक्षणयोराद्यं लक्षणं दुर्बोधत्वादुपसंहारव्याजेन स्पष्टयन्नाह— **तस्मादि**[९५.६]ति । **स्वसंतति**व्यवस्थैव कुतो येन तत्पतित**कार्यप्रसूतिनिमित्तं** [९५.७] ज्ञातव्यमित्यपेक्षायां योज्यम् । **यदेकाकारे**[९५.७]ति । **इतिः** [९५.११] हेतौ । **आ**[7](अवा)**न्तरविशेषकृतत्वात्त**[९५.१२]स्या एवोक्तलक्षणावान्तरविशेषकृतत्वादित्यर्थः । **तस्मादि**[९५.१५]त्यादिना प्रकृतमुपसंहरति ।

**कार्यस्यै**[९५.१५]कजातीयस्येति विवक्षितम् । कार्यमात्रापेक्षयाऽनेकत्वस्येष्टत्वात्प्रसङ्गानुपपत्तेः । अन्ये(अथ) तदभ्युपगमात् सिद्धं भवताम् । ततो नैवं वक्तुमुचितमित्याशंक्याह **न चे**[९५.१६]ति ।

एवं तावद्भट्टार्चटेनोपादानसहकारिलक्षणं प्रणीतम् । केचित्पुनरत्रैवं ब्रुवते, नैवेदं लक्षणद्वयमुपपद्यते अव्याप्तेः । तथाहि यदि यदेकाकारपरामर्षप्रत्ययनिबन्धनतया स्वसन्ततिपतितकार्यप्रसूतिनिमित्तं तदुपादानकारणमित्युच्यते, तदा चन्द्रकान्तादपां प्रसवे ज्योत्स्ना न स्यादुपादानकारणम् । यदि चन्द्रकान्त[39b][1]मणेरुपयतीनामपां चन्द्रिकया सममेकाकारपरामर्शप्रत्ययहेतुत्वमस्ति येन तथा तया तासां तदेकसंतानव्यवस्थासिद्धौ स्वसन्ततिपतितकार्यजनकत्वेन शशाङ्कवदुपादानकारणं कल्पेरन् । न च तत्रान्यस्य तदुपादानकारणत्वमुपपद्यते । एवम्वनस्पतिभ्यः फलप्रसूतौ त्वग्भावा[1]विशेषस्य न स्यात्तदुपादानत्वम् । [2]कियद्वा शक्यते निदर्शयितुं दिङ्मात्रं तावदुपदर्शितम् । द्वितीयेऽपि लक्षणेऽनेनैवाव्याप्तित्वमुन्नेयम्, न हि चन्द्रिकादेरबादिमात्रोत्पत्तौ नियमेन व्यापारः शक्तेनापि शक्यते दर्शयितुम् । तादृशोत्पादो विद्यत इति चेत् । चक्षुरादेरपि तादृग्विज्ञानोत्पादे नियमेन व्यापार इति तस्यापि तथात्वप्रसक्तिरिति यत्किञ्चिदेतत् । [3]सहकारिलक्षणमप्यवद्यम् । सिद्धसंतान एव हि वस्तुनि प्रागवस्थापेक्षविशेषहेतुत्वं कस्यचित्कल्प्येत ।

---

१. 'भावविशेषस्य' इत्यपि दृश्यते ।

सन्तानापेक्षकस्य तु प्रथमक्षणस्योत्पादे कथमेवमभिधानं [न] साहसमित्यलं बहुनेति । अत्र तु समाधानमतद्भि(नं महद्भि)रेव विधेयम् ।

**उभय**[९५.२३]मित्येकसामग्रीमध्यप्रविष्ट**कारणस्य भेदा**द**नेकत्वा**[5]**त्कार्यस्य** । एकजातीयस्याभेद एकत्वं **कारणभेदा**[९५.२०]त्सामग्रीलक्षणस्य कारणस्य सामग्र्यन्तरापेक्षया वैलक्षण्यात्। **कार्यस्यापि भेदः** [९५.२०] सामग्र्यन्तरकार्याद्वैलक्षण्यमिति । **ताव**[९५.२६]च्छब्दः क्रमे । **कुलालः** [९५.२७] कुम्भकारः **व्यग्रस्वभावानि** [९६.१]अन्योन्यासहितस्वभावानि **कारणान्तरसाहितानि**[९६.१] सन्ति यानि **कार्याणीष्टकादिरूपाणि** [९६.१] **साधयन्ति** निर्वर्तयन्ति । मृत्पिण्डस्य चर्मकारादिकारणप्रतिलम्भे सतीष्टकादिकार्यं, कुलालस्य दात्रादिप्रत्ययान्तरप्राप्तौ लवणा(ना)दिकार्यम् । सूत्रस्य कुविन्दादिहेत्वन्तरसाहित्ये प(पु)टादिकार्यम् । तान्यपि किं भूतानि साधयन्तीत्याह **तदन्ये**[९६.१]ति । मृत्पिण्डापेक्षया बीजादिजन्येभ्योऽङ्कुरादिभ्यो [6]**भिन्नस्वभावानि, तेभ्यो**[ ९६.२] व्यग्रावस्थाप्राप्तकारणान्तरसाध्येभ्यो **विलक्षणमेव घटात्मकं कार्यं समग्राणि** सन्ति **जनयन्ति** [९६.२] **मृत्पिण्डकुलालसूत्राणी**ति सामग्र्युपलक्षणमुक्तं न पुनरियन्त्येव घटस्य कारणानि । एवं वक्ष्यमाणेष्युपदर्शने द्रष्टव्यम् । उपदर्शितमेवोपपादयन्नाह **तथाही**[९६.४]ति ।

ननु यदि[7] कुलालादिसहितो मृत्पिण्डस्तदन्यसामग्रीमध्यप्रविष्टमृत्पिण्डकार्याद्विशिष्टं कार्यं जनयति, न तर्हि सामग्रीवैलक्षण्यात् कार्यवैलक्षण्ये निदर्शनमिदमुपपद्यत इत्याशंक्याह **कुलालादीति** [९६.४]। **तदात्मकमेव** [९६.६] मृदात्मकमेव घटादिलक्षणमेव करोति । **मृत्पिण्ड** [९६.४] इति प्रागुक्तोऽभिसम्बध्यते कर्ता । कुतो विलक्षणं [8]करोतीत्याह **तत्कार्यादपीष्टकादेरिति** [९६.७]। केन कारणेनेत्याह **केवले**[९६.७]ति । **केवलमृत्पिण्डाद्भिन्नः स्वभावो** यस्य मृत्पिण्डस्य स तथा तस्य भावस्तत्ता **तया** [९६.७] । केवलशब्देन च कुलालादिरहि[त]तामात्रं विवक्षितम्। न तु कारणान्तरसाहित्यव्यवच्छेदस्तेन **तत्कार्यादि**[९६.७]ति कारणान्तरसहितमृत्पिण्डकार्यादित्यर्थः । कुतस्त्यस्तस्या[40a][1]सौ भिन्नः स्वभाव इत्याह–**तत्कारणे**[९६.६]ति । तस्य कुलालस्यार्थात् कुलाल[क्षण]लक्षणस्य प्रत्यासीदतो **यत्कारणं** प्राक्तनक्षणस्तेना**हित** उत्पादितो **विशेषो** [९६.६] विशिष्टं रूपं यस्य स तथोक्तः । अनेनैकसामग्र्यधीनाविशिष्टोत्पत्तिः सूचिता । हेतुभावेन चैतद्विशेषणम् । **चो** [९६.६] व्यक्तमेतदित्यस्मिन्नर्थे । एवमुपादानभावे चोभय[2]त्र व्याप्रियमाणस्यापि मृत्पिण्डस्य सह(का)र्यो(र्य)न्तरप्रतिलम्भादात्मनोपि सतः कार्यस्य तदन्यसहकारिसहितकार्यात् विलक्षणस्यैव

जनकत्वं प्रतिपाद्य सहकारणस्याप्युभयत्र सहकारिभावेनैव व्याप्रियमाणस्य कुलालादेरुपादानान्तरप्राप्तौ तदन्यसहितकार्याद्विलक्षणकार्यजनकत्वमतिदिशन्नाह—**एवमि**[3][९६.८]ति **तदन्योपादानसहितं** [९६.८] मृत्पिण्डलक्षणादुपादानाद्यदन्यदुपादानं तेन सहितम्। **मृत्पिण्डसहितं** [९६.८] **तद्विलक्षणमेव** [९६.९] । तस्मात्तदन्योपादानसहितकार्याद्विसदृशमेव घटादिकं **कार्यं जनयति** [९६.१०] । **इति**[९६.१०]यथा मृत्पिण्डादीत्यादेराचार्यीयवाक्यस्य यः समुदायार्थस्तस्याकारं दर्शयति[4]। **तत्रे**[९६.१?]त्यादिनेदानीमवयवार्थं व्याचष्टे । **बुध्न**[९६.१५]शब्देन मृषय(मृण्मय)पिधानविशेष उच्यते। तस्य **पृथु**[९६.१५]शब्देन विशेषणसमासं कृत्वा तस्योद**रा**[९६.१५]दीति तत्पुरुषं विधाय **तदिव** तस्येव वाऽऽ**कारो** [९६.१५] यस्येति बहुव्रीहिः कार्यः। आदिशब्दात्तदवयवान्तरविशेषस्य भिन्नजातीयस्य कम्बुग्रीवादे[5]र्वा संग्रहः। **सूत्रात्तस्यैव घटस्य** [९६.१८] **चक्रादेर्विभक्तः स्वभावो भवतीति** [९६.२१] सम्बन्धः। मृत्संस्थानविशेषात्मतयैव(तैव) घटस्य कुतस्स्येत्याह **मृत्पिण्डे**[९६.१७]ति। **तज्जननस्वभावत्वात्** [९६.१९] मृत्संस्थानात्मताजननस्वभावत्वात्कारणात् । **घटस्य तद्रूपयोगात्** [९६.१९] मृत्संस्थानरूपयोगात् । अन्यदेव सूत्रसाहित्येपि तयोः कथं तज्जननस्वभाव[त्व]मित्याह **तन्निरपेक्षे**[९६.२०]ति । तच्छब्देन सूत्रं परामृश्यते, [1]**भिन्नस्वभावत्वा**द्विलक्षणस्वभावत्वात् तन्निरपेक्षावस्थातो भिन्नस्वभावत्वं च तयोः कथमित्यपेक्षायां **सूत्रकारणोपहितविशेषयोरि**[९६.२०]ति हेतुभावेन विशेषणपदमिदं योज्यम् । निर्दिष्ट[7]कारणाभिप्रायेण **कारणत्रय**[९६.२१]ग्रहणं न तु घटस्य त्रीण्येव कारणानि । **तदुपयोगैर्भिन्न**सामग्रीव्यापारैः **कार्यापेक्षस्व(ये स्व)भावविशेषाः** कार्याणां विशिष्टाः स्वभावास्तेषा**मसंकरो**ऽ[९६.२४]साङ्कर्यम्। तत्र यदि ते कुलालादयः प्रत्येकं जनकाः स्युस्तदा**ऽनुक्रान्तकारणत्रयजन्य** [९६.२१] इत्युच्येत। तथापि कथं सर्वतः समुत्प[8]द्यमानस्याखण्डात्मनः कार्यस्यायं विशेषोऽस्मादयञ्चास्मादिति व्यवस्थाप्यत इत्याशंक्याह **तस्य चैकैके**[९६.२५]त्यादि। इतोऽस्तु कार्यस्य तत्सामग्रीभूतसकलजन्यत्वं तद्गतस्य तु तत्तद्विशेषस्य कथं तज्जन्यत्वव्यवस्थेत्याह **तदेकैकस[जा]तीति** [९६.२७] मृत्पिण्डाद्यपेक्षया मृत्पिण्डादेरपरस्य तज्जातीयत्वं प्रत्येयम्। [40b][1]अनेनैतद्दर्शयति—नैकस्यामेव सामग्र्यां तस्मिन्नेवाखण्डात्मनि कार्ये तत्तद्विशेषस्य तत्तज्जन्यत्वमवधार्यते अपि तु तदुपचये तदुपचयस्य तदपोद्धारे तदु(द)पचयस्य दर्शनादेकत्राध्यवसायतश्चैकाधिकरणत्वेन

१ भिन्नात्मकतया S।

व्यवस्थापितादिति । व्यवहर्तारश्चैवं न विपाश्चि(श्चि)त इति **तत्त्वचिन्तकै**[९६.२९]-रित्युक्तम् । तेषामप्येवं [2]विवेचनेन किं प्रयोजनमित्याह **यत** [९६.२९] इति । यतोऽनन्तरोक्तविवेचनात् । अनेकमपि कारणं कस्मात्स्वीकुर्वन्तीत्याह **परस्परे**-[९७.१]ति । क्षेपवत्यां हि सामग्र्याम् अन्योन्योत्पादितातिशयकार्यप्रणालिकया वाञ्छिताङ्कुरादिकार्योपजननयोग्यकारणसामग्र्यसद्भावार्थम् । एतच्चोपरिष्टात्प्रदर्शयिष्यते ।

'यत्र यद्योग्यं रूप[3]मुपपद्यते स तस्य विषय' इति **तद्विषयस्य** [९७.१४] घटस्येत्यर्थः । **तदन्यावस्थाविषयात्** [९७.१५] प्राप्तसहकार्यन्तरावस्थाकार्यात् । **अस्ये**-[९७.१९]ति कार्यस्य । अनेन "**तज्जनितविशेषभेदस्ये**"ति मूलस्य **कार्ये**-[९७.१७]पदविशेषणस्य बहुव्रीहौ कर्तव्ये विग्रहो दर्शितः ।

**ज्ञानं** [९७.२७] **तद्रूपमनुकर्तुं युक्तम्** [९७.२८] । **ने**[९७.२६]त्यनुवर्तते[4] **न युक्तं** [९७.२८] नार्हतीति चार्थः । हेतौ ज्ञानचो विधानात्त**द्रूपाविकलार्थसामर्थ्येने**[९७.२८]त्पादादिति तद्रूपानुकारी(रा)युक्तताया हेतुरुक्तो द्रष्टव्यः । तथापि कस्मान्न युक्तमित्यपेक्षायामाह—**भ्रान्तते**[९८.१]ति । **ऐकान्तिकी** [९८.३] या परेणैकान्तिकत्वेनाभिमता सा नास्ति, एकत्वादेव प्रमाणसिद्धादित्यभिप्रायः । यदि[5] वानैकान्तिकी न निश्चयवती । अथवाऽनेकात्मतैवैकान्तिकी नेतिपूर्वेणाभिसंबध्यते ।

अथ विज्ञानोपजनने किमिन्द्रियादीनि स्वलक्षणान्तरान्तराप्रसवधर्माण्यपेतसंतानान्येव येनैकस्यैव कार्यस्य करणमेषामुपवर्ण्यते इत्याह **एतच्चे**[९८.६]ति ।

ननु **एकसामग्री**[९८.६]शब्देन यदि विज्ञानस्य जनकः कारणकलापोऽभिप्रेतः, तदोक्तमेव किमपेतं(त)संतानता तेषामिति ।

अथैकमुपादानमितरत्सहकारिकारणमभिसन्धाय एकसामग्रीत्युक्तं न तदपि चतुरस्रम्, तस्या अप्यवान्तरसामग्र्याः किं तदुपादानोपादेयस्यैव क्षणस्य प्रसवः । अथोपादेयमनेकं न भवतीत्यभिप्रे[7]यते । हंत तदपि सर्वं स्वं स्वमुपादानमपेक्ष्योपादेयमेवेति तदवस्थो दोष इति । उत्तर(उक्त) एव एकसामग्रीशब्दार्थः केवलं बोधे यत्नः करणीयः । एकमुपादानं सदेवेतरत्सहकारिकारणसदेव व्याप्रियते यदा तदा एकस्यैव विज्ञानस्य मनस्कारोपादानस्य चक्षुरादिसहकारिकारणस्यैव सत उत्प[8]त्तिर्न तु चक्षुःक्षणस्यैवंभूतस्य स[त] उत्पत्तिरपि तु चक्षुरुपादानस्य मनस्कारादिसहकारिकारणस्य सत इति । एवं रूपादिक्षणस्याप्युत्पादे द्रष्टव्यम् स्वयम् । अत्र समुदायार्थो मनस्कारोपादानकारणचक्षुरादिसहकारिकारणात्मिका सती सामग्र्येकमेव कार्यं जनयति । तदैवान्यज्जनयन्ती तु नैवमात्मिका सती ज[41a][1]नयति । किं तर्हि चक्षुरुपादानकारणमनस्कारादिसहकारिकारणात्मिका ।

एवं रूपादिक्षणजन्मि(न्म)न्यपि प्रत्येयम् । अत एवैषामान्तरसामग्रीभेदः कृतः परस्परतो भेद इत्युक्तं पुरस्तादिति सर्वमवदातम् । कस्मात्पुनरिष्टैकसामग्र्यपेक्षयैवैतदुच्यते, न च सामग्रीमात्रापेक्षयापीत्याह **परमार्थतस्त्व**[९८.६]ति । **तत्सामग्र्यन्तर्गतानां**[2]मि[९८.७]ति **सा** च सा चक्षुरादिसहकारिकारणात्मिका सामग्री चेति तथा यत्रोपादानभावेनान्तर्गतानामन्तर्भूतानां यत्र सामग्र्यां सहकारित्वेन तेषां व्यापारस्तत्र । तत्सामग्र्यन्तरं तदवयवत्वेन । **कार्यान्तरस्ये**[९८.८]ति सोपादेयक्षणापेक्षया तद्विज्ञानं चक्षुषः कार्यान्तरम् एवमन्यस्याप्यन्यत् तस्य कार्यान्तरस्यापि प्रारम्भादित्यनुवर्तते [3]अनेक-कार्यकर्तृत्वमिति र(च) शेषः कार्यः अन्यथा कस्मिन्साध्ये पञ्चमीयं हेतुभावमभिदध्यात् । अस्यैवार्थस्य दृढीकरणार्थं दृष्टान्तयन्नाह **यथे**[९८.९]ति । **तदा** [९८.१०] तद्वदनेक-**प्रत्ययजनितरूपी**[९८.९]त्येकमित्यस्यानुवृत्तेस्तथानेकप्रत्ययजनितमेकमपि नास्तीत्यर्थः । **इति** [९८.९] हेतौ । **अपि** [९८.१०] न्यायतः सम्भावनामाह । [4]यदि वा परमार्थतः **कारणानेकत्वात्कार्यानेकत्वोपगमेऽपि न काचित्क्षतिरि-**[९८.९]ति सम्बन्धः कार्यः । कस्मान्न क्षतिरित्याह–**तत्सामग्र्यन्तर्गतानामि-**[९८.७]ति । यथेत्यादि च पूर्ववद् व्याख्येयम् । इतिस्त्वनन्तरोक्तान्योपादानकारणानि सहकारिकारणानि प्रत्यवमृषति, ततोयमर्थ उक्तलक्षणकारणानेकत्वादिति । संप्रति प्रकृतमुपसंहरन्नाह **तत** [९८.१०] इति । **सामान्येन** [९८.११] कार्यमात्राश्रयेण । अथ सिद्धसाधनत्वं हेतोः को दोष इति चेत् । तदेतद्धर्मोत्तरप्रदीपेऽस्माभिर्विवेचितं विस्तरतश्च स्वयूथ्यविचार इत्यास्तां तावदिह ।

**द्रव्य**[९८.१६]शब्देन द्रवति पर्यायान्गच्छतीति व्युत्पत्त्या धर्मी परिणामिनित्यो विवक्षितः [6]पर्यायशब्देन च परि समन्तादेत्येति द्रव्यमिति व्युत्पत्त्या धर्माः । **आदि-**[९८.१८]शब्दात् स्पर्शादिसंग्रहः । **घटो द्रव्यं रूपादयः** [९८.१९] पर्याया इति द्रव्यपर्याययोरेतदुदाहरणम् **इतिः संख्याभेद**[९८.१९]स्याकारं दर्शयति द्वितीयस्तु संज्ञाभेदस्य । इति[९८.२२]ना लक्षणभेदस्याकारो दर्शितः । **वस्तुराग** [९८.२३] इत्युपलक्षणमेतत् । **इति**[7]ना [९८.२३] कार्यभेदस्य स्वरूपमाह **इति**र[९८.२४]-नन्तरोक्तभेदाभेदं प्रत्यवमृषति । चक्षुरादीनाम**भिन्नो य आत्मा** एककार्यजनकः सामान्यभूतस्तज्जन्यता **तस्य**[९८.२६] । **एतदेव द्वया**मित्यादिनोपसंहरति परः ।

सामान्येन पररूपाणां आत्माभेदस्य बो(स्याबा)धकत्वं प्रतिज्ञाय विशेषेणेदानीं दर्शयितुमाह–**संख्याभेदस्तावदि**[९९.७]ति । **बहुत्वेन**[8] **व्यवहारो** बहुवचनान्तस्य प्रयोगः । बहुवचनं च 'युष्मदि गुरावेकेषाम्' इत्यनेन । अनेन संख्याभेदादित्यस्य

साधारणानैकान्तिकत्वं दर्शितम् । धर्मधर्मिसमुदायात्मकस्य **कात्स्न्र्यस्याप्रतीतिः** [९९.१२] प्रसज्येत । तत्प्रतीतौ वावस्थात्रयस्थाविषयपूज्यताप्रत्ययगोचरत्वस्य **गौरव-** स्याप्रतीतिः प्रसज्येत। अत्रैव वक्तव्या[41b][1]न्तरमुचिन्वन्नाह **व्रीह्य** [९९.१२] **इति** **चे**त्यत्र बहुवचनं "जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्"[पा.१.२.५८] इत्यनेन। **न च पर्यायरूपेण भिद्यन्त** [९९.१६] इति ब्रुवता च यदि संख्याभेदोऽनेकत्वस्य साधकः स्यात् तदा तदभेदोऽप्येकत्वस्य साधकः स्यात् । अन्यथा तस्यायोगात् । न चैवं तस्मात्संख्याभेदो न समर्थोऽनेकत्वं साधयितुमिति दर्शितं द्रष्टव्यम् ।

**तत**ः[2] [९९.१९] संज्ञाभेदात् । अनेन संज्ञाभेदादित्यस्य संदिग्धविपक्षव्यावृत्त्याऽनैकान्तिकत्वं दर्शितम् । संप्रति साधारणानैकान्तिकत्वमपि दर्शयन्नाह **एकस्मिन्नपि चे**ति[९९.१९] अत्र गजनिमीलिकया पूर्वदोषो द्रष्टव्यः । **समस्तस्य**[९९.२१] शक्तिशक्तिमदात्मकस्य धर्मधर्मिसमुदायस्य । **तयो**[९९.२३]र्धर्मधर्मिणोस्त**द्वाचिनां** [९९.२४] धर्मवाचिनाम् । **मात्रा** [९९.२६] लेशः ।

[3]सर्वदैकरूपेणावस्थानं **कूटस्थनित्यता तथा** [९९.२८] तत्तदवस्थारूपेण परिणमतोऽवस्थानं **परिणामनित्यता**: तदु**पगमात्** [१००.१] **सा च** [१००.१] परिणामनित्यता । **अस्य** [१००.२] परिणामनित्यस्य सुवर्णादेर्द्रव्यस्य । **तद्रूपेण** [१००.२] पर्यायरूपेण **च्छेदो** विनाशः । **पर्यायाणामि**वेति वैधर्म्यदृष्टान्तः । **इयं** परिणामनित्यता । [1]**कूटस्थनित्य**[4]**ता द्रव्ये** पर्यायातिरिक्ते **न संभवति**[१००.४]। कुत इत्याह **पर्याये**[१००.५]ति ।

**विभक्तपरिणामेष्वि**[१००.१२]ति पाठे विभक्तः परिणामो येषामिति विग्रहः। विभक्तो विशिष्टकार्यकारित्वेन नियुक्त इति चार्थ इति पूर्वे निबन्धकृतो व्याचख्युः । इदानीमपि केचित्पण्डितंमन्या अनेनैव पाठेन कथमपि व्याचक्षते । तदेतत्पापीयः [5]विभक्ति[वत]शब्दस्यान्यार्थत्वात्, न ह्ययं विभक्तशब्दो विशिष्टकार्यकारित्वेन नियुक्तं वक्ति । अपि तु विभागेन व्यवस्थापितम् । किञ्च किमस्य शब्ददारिद्र्यं येन विशिष्टकार्यकारिपरिणामेष्विति वक्तव्यं विहाय इदमीदृशमवाचकमाचक्षीत । सर्व एव च परिणामस्तदन्यकार्यापेक्षया विशिष्टकार्यकारीति कोऽन्यस्माद[6]स्य पटादिपरिणामस्य विशेषः, कश्चास्य नियोक्तेति किमस्थानपराक्रमेण । तस्मात्क्वचित्पुस्तके प्रमादपाठ एषः । विभक्तपरिमाणेष्विति तु पाठो युक्तरूपः । तत्र परिमाणं मानव्यवहारकारणं

१ अत्र 'कूटस्थनित्यतावत्' इति पाठः टिबेटनानुसारी सम्यग्भाति ।

गुणविशेषः । परप्रसिद्ध्या चेदमुच्यते तच्च दीर्घत्वाद्यनुत्पाद्यमत्र विवक्षितम् । तत्र विभक्तं विभागेन[7] व्यवस्थापितम् परिमाणं येषां पटादीनां तेषु विस्तारितेषु दीर्घीकृतेष्विति यावत् । विभक्तायामादिकर्पटादयः किञ्चिदावृण्वते किञ्चिच्च धारयन्ति किञ्चिदुपवघ्नन्तीति । **प्रागचिन्त्यात्वं कस्यचिद्(द्)भावे भवदुत्पद्यमानं कार्यम्** [१४०.१८] । हेतौ च शतुर्विधानात् पूर्वमभावा(भव)त्कस्यचिद्भावे भावा-(भव)दित्यर्थः । भवेत्कार्यमिति तु पापीयान्पाठः ।

यदि[8] परस्परोपादानाहितरूपविशेषस्तत्सामग्र्यन्तर्गतः सर्व एव क्षणः प्रत्येकं समर्थ उत्पद्यते । यतो विज्ञानादिप्रसूतिस्तेन तावदवश्यं ज्ञानजननस्वभावेनैव भाव्यम्, अविज्ञान-जननस्वभावेनैव वा, न तु परस्परविरुद्धतदतज्जननस्वभावेन भेदप्रसङ्गादित्यभिप्रायवान्परश्चोद-यन्नाह **नन्वि**[१००,२४]त्यादि । **कथं तदन्यकार्य**[42a][1]**संभव** [१००.२६] इति ब्रुवतश्चायमभिप्रायः—

"तदतद्रूपिणो भावास्तदतद्रूपहेतुजाः ।
तद्रूपादि किमज्ञानं विज्ञानाभिन्नहेतुजम् ॥"

( प्रमाणवा० २.२५१ ) इति ।

**अनेककार्यक्रियास्वभावत्वाद्वि**[१०१.३]ज्ञानात्मकानेककार्यकारिरूपत्वात् । **तेषां** [१०१.४] सजातीयेतरक्षणानाम् । **तेषां** चक्षुरादीनां **सत्ता** तदा[न]-**न्तर्येण दर्शनं** [१०१.५] तस्मात् । ननु तत्सन्निधौ विज्ञानलक्षणकार्यदर्शनात् विज्ञानस्यैव [2]जनक इत्यवधारणात् तदवस्थे दोषे कस्मादिदमुच्यत इत्याह **तत्रे-**[१०१.५]ति । अनेनैतदाह धर्ममात्रस्य संदेहादयोगव्यवच्छेद एवात्र न्यायप्राप्तो नान्य-योगव्यवच्छेद इति ।

ननु च येन रूपेण विज्ञानं विज्ञानं जनयति यदि तेनैकरूपेणैव रूपं जनयति तदा तेनावश्यं तद्विज्ञानवद्बोधात्मना भाव्यम् । अथ तदन्येन रूपेण जनयति तर्हि विरुद्ध-रूपद्वयाऽनुषङ्ग इत्याशङ्क्याह **न चात** [१०१.७] इति । **अतो** विज्ञानाविज्ञान-जननस्वभावत्वात् । कस्मान्न स्यादित्याह—**एकस्यै**[१०१.७]ति । **आत्मसात्कृतस्य** [१०१.७] स्वहेतुप्रत्ययसामर्थ्योपजातविज्ञानाविज्ञानोपजननयोग्यस्वभावविशेषस्य । **तेनै-**तद्दर्शयति एकेनैव रूपेण तत्तज्जनयति [3]केवलं तदेकं रूपमीदृग्विज्ञानाविज्ञानजननमिति । एतदुक्तं भवति तत्सामग्र्यन्तर्गतानां सर्वेषामेव क्षणानां स्वहेतुभिरिदं रूपमुपजनितं यदुत पुण्यप्राग्भावेऽनेकेनैव बोधाबोधात्मकेन कार्येण जनितव्यमिति । एवं तर्हि विज्ञानानि-

हेतुजत्वेन सुखादीनां बोधात्मकत्वं दुःखसाध[कत्व]मापनीय(प)न्नम् । तत्रापि हीदं शक्यते वक्तुं प्रोषितागतप्रियपुत्रादिक्षणस्य स्वहेतुसमूहादेव तथाभूतं रूपमुप(द)पादि येन विज्ञानमविज्ञानात्मकं च सुखमन्यच्च जनयतीति शुद्धाद्रूपे (?) यदिमे(?)तद्विशेषवद्विशेषाख्यानेऽस्माभिः परिहृतमिति तत एवानुगन्तव्यमिति । पूर्वमवधीरितावधारणनिरूपेणा[6]क्तावुक्तमधुना पुरस्कृतावधारणोक्ताविति भेदो द्रष्टव्यः । इदंतया व्यपदेशयोग्यं **सनिदर्शनम्** । स्वदेशे परोत्पत्तिनि(वि)बन्धकं **सप्रतिघम्** [१०१.११] । इयं चागमभाषा । भिन्नप्रवृत्तिनिमित्तयोरेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम् तेषां तन्निमित्तानां तदयोगादेकत्रैव वृत्त्यनुपपत्तेः । **अपेक्षायां** [१०१.१४] [7]तदेकोपकारापेक्षायाम्, उपकारस्योपकार्यभेदान्न्यायप्राप्तादिति । उक्तमेवाधिकाभिधानार्थमवतारयन्नाह—**नापी**[१०१.१७]त्यादि । प्रतिबन्धाभाव एव कुत इत्याह—**तद्ग्राहकेति** तदभावमेव प्रतिपादयितुमाह **प्रत्यक्षम** [१०१.१८] इति । **एकात्मतयैव** [१०१.१९] ज्योतीरूपायात्मतयैव । प्रत्यक्षेणैवमुपलम्भान्न तावत्प्रत्यक्षं तत्प्रतिबन्धसाधकमित्यर्थाद्दर्शितम् । येनानुमानेन कार्यभेदस्य कारणानेकत्वप्रतिबन्धः साध्यते **तत्रापि** [१०१.२०] एतच्चैकसामग्र्यन्तर्गतविशिष्टैकैककारणापेक्षया द्रष्टव्यम् न तु कारणमात्रापेक्षया कलापात् कलापोत्पत्तेरिति । अत्रैव दोषान्तरं समुच्चिन्वन्नाह **एकस्ये**[१०१.२१]ति । सहकार्युपादानभावेना**नेकक्रियानभ्युपगमे**[१०१.२१] यदि [42b][1]एकस्यानेकरूपत्वमस्माभिरभ्युपेतं स्यात्प्रमाणोपपन्नं तदा धर्मिस्वभावतयैव तदुच्येतेत्यभिप्रायेणोक्त**मेकस्यानेकस्वभावताया एव चिन्त्यत्वादि**[१०१.२५]ति । **तद्वद्**[१०१.२७]नेकवत् । **अन्यथे**ति यदि येनानेकेनैव(क)स्वभावतामनुभवति तदेव परं भिद्यते । न त्वसौ धर्मीति । **इति**[१०२.३]हेतौ ।

**एकं कार्यं** यस्यानेकस्य तदेककार्यं तस्य भाव**स्तत्ता**[१०२.४] एक[2]कार्यकारित्वं न स्यादित्यर्थः । तस्यैव कार्यस्य यदात्मपुरस्कारेण धर्मिपर्यायव्यवस्था तेन भेदादेवैकरूपत्वाभावादिति समुदायार्थः ।

ननु नैवास्माभिरेकमनेकं करोतीत्युच्यते येन त्वयैवमुच्येत, किन्तु समग्रावस्थायां तदेकैकमेव तदेकैकमुपकल्पयतीत्याशंक्य **न चैके**[१०२.६]त्यादि प्रथमतो योज्यम् । कस्मान्न [3]जनयतीत्यपेक्षायां तु पश्चाद्योज्यम् । **नहीं**[१०२.४]त्यादि । **सहैव**[1] युगपदेव । एतद्दोषभयात् परस्परोपादानकृतोपकारापेक्षत्वे चेष्यमाणे तेषामेकैकेन भावतस्तावतः क्षणस्योपकारात् । कथमेकमनेककार्यकृन्न स्यादिति चानेन दर्शितम् । **ततश्चे**-

१. सहैक S

[१०२.६]त्येकस्यानेककार्यकारित्वासंभवात् । गतार्थमप्येतत्कण्ठोक्तं कुर्वन्नाह । अनेकस्ये[१०२.७]त्यादि । यथायोगमेकानेकशब्दौ सम्बन्धनीयौ । अनभ्युपगमादेवैकस्यानेकक्रियाविरहादुक्तया नीत्याऽनेकस्याप्येकक्रियाविरहादिति चार्थो द्रष्टव्यः ।

ननु च एकस्यानेककारित्वप्रकारादनेकस्यैवैककारित्वप्रकारात्किलान्यः प्रकारो नास्ती[5]त्यभिमतम् । अस्ति खल्वनेकमेवानेकं करोतीति प्रक्रान्तं तत्कथमेतत्संगंस्यत इति चेन्न । अनेकैकसामग्र्या(य)न्तःपतितेनानेकक्रियोपगमे सर्वस्यैवोपादानसहकारिभावेन सजातीयविजातीयविशिष्टक्षणारम्भस्य न्यायप्राप्तस्योपगमादेकस्यानेकक्रियोपगमप्राप्तेरित्यभिप्राया[6]त्सर्वमवदातम् । अहेतुकत्वे च तन्नियमायोगादिति भावः । द्रव्यपर्याययोस्तावद्भिन्नं कार्यमिष्टम् । तौ चैकस्वभावावेकं वस्त्विति कथमेकस्यानेककार्यकारित्वमनुन्मत्तेन प्रतिक्षिप्यत इत्यभिप्रायवानाह द्रव्ये[१०२.१३]त्यादि । एकस्वभावत्वेऽपि नैकवस्तुतेत्याह—स्वभावस्यैवे[१०२.१५]ति । अन्यथा यदि वस्तुनोऽन्यः स्वभावः स्यात् तस्य [१०२.१५] वस्तुनः एवं स्वभावस्याप्यवस्तुताप्रसङ्गादित्यपि द्रष्टव्यम् येनाभिप्रायेण कथं नोन्मत्तः [१०२.१४] इत्यवादीत् तमिदानीं स्फुटयन्नाह एकस्वभावत्वे चे[१०२.१६]ति । यदा हि तूलपिण्डादिद्रव्यं द्विपिण्डकद्रव्यनिर्माणसमय एव काकतालीयन्यायेन पवनावधूततूलांशुप्रभृतिना स्वल्पपरिमाणेन [2]द्रव्यान्तरेण संयुज्यते द्रव्यारम्भकसंयोगाप्रतिद्वंद्वी(द्वि)विभा[ग]ज(भागज)नकक्रियाहेतुं च सहकारिकारणं प्रतिलभते । तदेतद्द्रव्यं द्विपिण्डकं तूलद्रव्यम् । गुणं च तथाभूतसंयोगाख्यम् । कर्म च तथाभूतां क्रियामेकदैव करोतीति द्रव्यगुणकर्मणां समवायिकारणं वैशेषिकैरवश्यैषितव्यमित्यभिप्रायोऽस्यैवं वदितुरवसातव्यः । [43a][1]अन्यथा कार्यद्रव्योदयसमकालं कार्ये [न] शुक्लादिरूपमुत्पद्यते । किन्तूत्पन्ने कार्ये पश्चात्कारणादुत्पद्यते अत एवैकस्मिन्क्षणे द्रव्यमरूपमस्पर्शमरसमगन्धमुपगम्यते योगैः । तस्य तु गुणस्योत्पद्यमानस्य समवायिकारणं तदेवानन्तरोत्पन्नं द्रव्यं न तु तत्कारणं द्रव्यम् । एवं तावदिदमस्माभिर्यथा कथञ्चिदुपपादितम् । [2]कर्मणश्चैकस्येति तु संयोगसंस्कारापेक्षयोपपादयितुं शक्यते न पुनः संयोगविभागापेक्षया । न हि कुतश्चिदपि कर्मणो युगपत्संयोगविभागावुत्पद्येते किन्तु प्रथमं विभागस्ततः प्राच्यसंयोगविनाशस्तदनन्तरमुत्तरसंयोग इति पदार्थविदः प्रजानते । न च युक्त्यायाया(पा)येतद्वक्तव्यम् । वैशेषिकप्रक्रियायां[3] स्थित्वैवैतदभिधानस्य प्रक्रान्तत्वात् । अन्यथा किमस्ति कर्म किमस्ति संयोगादिर्येनैवमुच्येत । अतश्चैवं यत्कृतानन्त्कोपेने[१०२.१७]त्याह । अभिन्नकालं च कार्यं विचारयितुं प्रक्रान्तं न तु भिन्नकालमिति किं बहुना । पुनश्च वैशेषिकशैलीमनुपालयन्तो यदि केचन निपुणा मनीषिणो यथाश्रुति समर्थयन्ति कामं समर्थयन्तु न नो हानिः काचिदपि तु महानेव लाभ इति ।

अनवय[1]वत्वेन [१०२.२४] कार्त्स्न्येन । न तु सजातीया विजातीयाः समस्ता व्यक्तीर्व्यश्नुवीरन्नि[१०२.२५]त्यर्थः । कथया [१०३.१] विचारेण ।

देशकालस्वभावभेदानां मध्ये देशकालभेदस्याभेदसाधने साधारणानैकान्तिकत्वं प्रतिपादयन्नाह तथाही[१०३.४]त्यादि[5] । स्वभावाभेदेऽपि निरूपयन्नाह—स्वभावोऽपी[१०३.५]ति । अपिरुपगमप्रदर्शने । द्वितीयः पुनरपि [१०३.६] अवधारणे रूपतेत्यस्मात्परो द्रष्टव्यः । अनुवृत्तिव्यावृत्तिरूपते[१०३.६]ति द्रव्यस्यानुवृत्तिरूपता पर्यायाणां व्यावृत्तिरूपतेति यथाक्रमं योज्यम् । प्रत्येकमिति प्रतिवस्त्वित्यर्थो द्रष्टव्यः न तु प्रत्यात्मेति । [6]नहि द्रव्यस्य व्यावृत्तिरूपतापि नापि पर्यायाणामनुवृत्तिरूपतापि । तदयमर्थो यदि प्रतिवस्तु द्रव्यपर्याययोरनुवृत्तिव्यावृत्तिरूपतैवोपगम्यत इत्यन्योन्यव्यावृत्तिस्वभावद्वयाविष्टं घटपटलक्षणपदार्थद्वयं स्यान्न त्वेकं द्विरूपम् । इति[१०३.८]हेतौ । तस्मात् [१०३.८] स्वभावाभेदात् । पदार्थद्वयस्यैव न्याय[7]प्राप्तत्वात् स्वभावाभेदस्यैवं सिद्धत्वादिति भावः । अनुवृत्तिव्यावृत्त्योस्तत्स्वभावत्वमुपेत्यैतदुक्तमेतदेव तु नास्तीति दर्शयन्नाह—न चे[१०३.८]त्यादि । अनुवर्तमानव्यावर्तमानाधानत्वं [१०३.९] च भावत्वं निमित्तमिहाभिप्रेतम् यदनन्तरं व्यक्तीकरिष्यते ततस्तयोस्तत्स्वभावत्वायोगात् । तत्स्वभावत्वमेवानयोः कथं न युज्य[8]ते येनैवमुच्यत इत्याह—भावत्वेने[१०३.११]ति भावत्वेन क्रियात्वेन । भावयित्रधीनत्वात् [१०३.११] कर्त्रधीनत्वात् । भावयद्वा(यन्वा) उत्पत्तिमान्धर्मस्तत्त्वेन भविता धर्मी तदधीनत्वात न तु तत्त्वादिति । यद्येककार्यकर्तृत्वादेकत्वं तर्हि अनेककार्यकर्तृत्वादनेकत्वं स्यात । अन्यथा तद्यो(तदयो)गात् न चैवमिष्टं युक्तं वा तस्मादेतदपि विपर्यये बाध[43b][1]काभावान्न वक्तुमुचितमित्यभिप्रायवानाह एकस्यापीति [१०३.२२] । एकस्याप्यनेके[१०३.२४]त्यादि ब्रुवतः पूर्ववदभिप्रायो बोद्धव्यः । कृताकृतानां [१०३.२५] संकेतितासंकेतितानाम् । एकाभिधानाभिधेयत्वासंभवे विश्वस्य तद्योग्यत्वं हेतुः । विषयभेदं प्रकृतत्वात् शब्दानामभिधेयलक्षणविषयभेदं [१०३.२६] ब्रुवाणं [१०३.२६] प्रत्यभिहितम[१०३.२६]नन्तरमेव । एकत्रापी[१०३.२७]ति ब्रुवतश्च[2] पूर्ववदभिप्रायो ज्ञेयः । अनन्तरोक्तया वचनभङ्ग्या संदिग्धविपक्षव्यावृत्त्याऽनैकान्तिकत्वं सूचयित्वा सम्प्रत्येकविज्ञानविषयत्वादित्यस्य साधारणानैकान्तिकत्वं ख्यापयितुमाह बहूनाञ्चेति [१०४.१] । ननु यद्येकं द्विरूपन्नेष्यते कथं तर्हि तदेकं विज्ञानं बोधरूपं नीलाकारं चोत्पद्यत इत्युच्यत इति परस्य वचनमाशंक्या[3]ह [3]किंत्विति । नीलप्रतिच्छायतया [१०४.३] नीलसरूपतया भावतो[१०४.५] वस्तुतः । अनेन व्यावृत्तिभेदमुपादाय तथोच्यते न तु वास्तवं द्वैरूप्यमिति दर्शितम् ।

१. अनवयवेन S  २. 'त्वेन' इत्यपि पठितुं शक्यम् ।  ३. विज्ञानं तु S

**संमूर्च्छितत्वाद्**[१०४.६]भूयोन्योन्यावयवाप्रविष्टत्वात्। शबलरूपत्वे चायं हेतुः। दृष्टान्तमेव विघटयन्नाह **स ही**[१०४.८]त्यादि। **स** हिरण्यकशिपुवधार्थनिर्मि[1]तनरसिंहात्मकः। अवयविनः प्रमाणबाधितत्वादित्यभिप्रेत्य **परमाणुसंहा(घा)तरूप** [१०४.८] इत्युक्तम्। **प्रत्येकं नरसिंहरूपा न भवन्ति** [१०४.९]। सर्वत्र नरसिंहद्रव्य-(बुद्ध्य)भावादिति भावः। अनेनैव संमूर्च्छितत्वाभावेन शबलरूपत्वासिद्धेः साधनशून्यो दृष्टान्त इति दर्शितम्। तथा चाव्यवस्थितपरमाणुप्रच[5]याभिप्रायेण भागशब्दप्रवृत्तिर्न तु परप्रसिद्धा तस्यावयवाभिप्रायेण अवयव्यारम्भस्यानभ्युपगमात्। संप्रति भवतु नरसिंहभागाभ्यां नरसिंहावयविनो निर्माणं तथापि तस्य शबलरूपत्वासिद्धेः साधनशून्य एव दृष्टान्त इति दर्शनाद्दर्शयितुमाह **जात्यन्तरं चे**[१०४.१०]ति। तासु ता[6]सु ह्यवस्थासु स एवायं नर इत्यनुवृत्तिप्रत्ययहेतोर्नरत्वजातेरूर्ध्वतासामान्यशब्दाभिलाप्यायास्तासु चावस्थासु सिंहः सिंह इत्यनुगामिप्रत्ययहेतोः सिंहत्वजातेस्तथाभूताया अन्या तासु तास्ववस्थासु स एवायं नरसिंह इत्यनुवृत्तप्रत्ययहेतुभूता तथाभूतैव जातिर्जात्यन्तरमवसेयम्। [7]**स** [१०४.१०] इति सामानाधिकरण्येन निर्देशश्च तस्य तद्वतश्चाभेदविवक्षया समुदायविवक्षया वा द्रष्टव्यः। दिगम्बरमतस्य च प्रकृतत्वात् एवं व्याख्यायते तेन हि तिर्यक्सामान्यं नेष्टमुपरिष्टाच्च एतद्भट्टार्चटेनापि स्फुटयिष्यते। नापि तिर्यक्सामान्यमत्र कल्पयितुं युक्तम्, नरसिंहस्य तथाभूतस्यैकत्वात् अनेकवृ[8]त्तित्वाच्च सामान्यस्येति। शबलरूपत्वाभावमेव **विचित्रं ही**-[१०४.११]त्यादिना प्रतिपादयति। अयमस्याशयो यदि संमूर्च्छितत्वं त्यक्त्वा यथा कथञ्चिदनेकरूपत्वेनापि शबलरूपतोच्यते तथाप्येकत्वाभावस्य न्यायप्राप्तत्वान्नैकस्य (शबलरूपतोच्यते। तथाप्येकत्वाभावस्य न्यायप्राप्तत्वान्नैकस्य[1]) शबलरूपत्वमिति[44a] [1]प्रकृतमेव-हीयेतेति। अवश्यं हि शाबल्यमिच्छता वैचित्र्यं नानारूपत्वमेष्टव्यमित्यभिप्रायेणाह (वैचित्र्यं नानारूपत्वमेष्टव्यमित्यभिप्रायेणाह[1]) **विचित्रं ही**[१०४.११]ति। यद्येकं शबलरूपं चो(नो)पपद्यते कथं तर्हि लोकः शबलमिदमिति मन्यत इत्याशङ्क्याह **केवलमि**-[१०४.१३]त्यादि। **एक**प्रत्यवमर्शाद्येकं **कार्यं** तस्य **दर्शनात्** [१०४.१३]। एकव्यवहारे चायं हेतुः।

इह खलु[2] वास्तवधर्मापेक्षो वास्तवो धर्मी। धर्मश्च पूर्वं कृतकविचारेण पारमार्थिको निरस्तस्तदपेक्षो धर्म्यपि वास्तवो व्युदस्त इत्यभिप्रायेण **धर्मधर्मिणोर्निषेधादि**-[१०४.१८]त्युक्तम्।

---

१. कोष्ठकान्तर्गतः पाठः पुनरावर्तितः।

अनन्तरोक्तमर्थजातं सातिरेकं स्वकृताभिः कारिकाभिः प्रतिपादयितुं परमुखेणाह—**आहे**[१०४.२०]ति ।

**वस्तुन** [१०४.२१] एकस्येति प्रकरणात्। **किल**[१०४.२१]शब्दो वक्तुररुचिं ख्यापयति। **तयो**[१०४.२२]र्द्रव्यपर्याययोः।

तत्र संज्ञाभेदस्य तावद्भेदकत्वं प्रतिषध्नन्नाह **इन्द्रिये**[१०४.२३]ति। **वस्तुरूपं शब्दानां नैव** [१०४.२४] गोचरो विषयः। अपोहस्यापि वस्तुत्वेनाध्यवसायात् विशेषयन्नाह **इन्द्रियज्ञाननिर्भासी**[१०४.२४]ति। बहुवचनेन व्याप्तिमाह **तत्तस्मात्केन** [१०४.२३] हेतुना। लोकोक्तिश्चैषा द्रष्टव्या। **संज्ञा** सांकेतिकः शब्दस्त**द्भेदा**[4]**त्** [१०४.२४]। अत एव सामान्येन शब्दाविषयत्वं प्रतिपादितम्। शब्दानां वस्तुगोचरत्वनिषेधद्वारा च संज्ञाभेदस्याभेदकत्वं प्रतिपादयतोऽयमाशयो यदि पुनः शब्दा वस्तुवृत्त्या इन्द्रियज्ञानानीव बाह्यविषया अभविष्यन्नियतमिमे अन्योन्यभिन्नरूपाः सन्तो लोचनादिचेतांसीव रूपादीन्यर्थान्स्वस्वविषया[5]नभेत्स्यन्त इति।

वस्तूनां तद्गो(तदगो)चरत्वे कारणमाह—**परमे**[१०४.२५]त्यादि। अभिधानाभिधेययोरभेदविवक्षायामि**त्यादिवचनादि**[१०४.२५]त्यादिवचनप्रतिपादितादर्थादित्यर्थोऽवसातव्यः।

**तत्त**[१०४.२७]स्मात्**कल्पितगोचराः** [१०४.२७] कल्पनारूढरूपविषयाः। **तत्त**[१०४.२८]स्माद्यदि **संज्ञाभेदाद्भेदः** [१०४.२८] कल्पितस्यैव भेदो **भवे**दिति यो[6]ज्यम्।

कल्पितभेदे किं वस्तुभेदो न भवतीत्याह **व्यावृत्तिभेद** [१०५.१] इति। अर्थाक्षिप्तमेव कंठोक्तं कुर्वन्नाह **न वस्तुन** [१०५.१] इति।

ननु किमेकद्विवचनबहुवचनान्येव संख्या येन तद्भेदः संख्याभेदः (संख्याभे'द) उच्येत। न चैतत्। किन्त्वर्थै(?)वैकत्वादिरूपा संख्या तदभिधायकं तु वचनमत एव पाणिनिः[7] 'बहुषु बहुवचनाम'( पा. १-४-२१ )त्याद्याचख्याविति। स्यादेवैतत यद्येकादिव्यवहारहेतुः संख्या एकद्रव्याऽनेकद्रव्या वा प्रमाणबाधिता न स्यात्। केवलमित एव नास्ति। अस्ति तु तथाभूतसङ्केतानुरोधादेकादिवचनमेवैकादिव्यवहारनिबन्धनमित्यनेनाभिप्रायेणोक्तम् **नैवान्यो मतो वचनभेद** [१०५.२] इति।

**मतो** [१०५.३] वचनभेदात्मका[8]त्संख्याभेदात्**कल्पितस्य** [१०५.३] कल्पनाविपरिवर्तिनो रूपस्य **न तु वस्तुन** [१०५.४] इति दूरस्थमिह संबन्धनीयम्। **कथञ्चिद्**

१. कोष्ठकान्तर्गतः पाठः पुनरावर्तितः।

[१०५.४] द्रव्यपर्यायरूपेणान्यथा वा। **अभिन्न**ते[१०५.३]ति भेदाध्यवसायोऽवसेयः। कुतः पुनः सिद्धमेतद्वचनभेदात्मकः संख्याभेदः, स चाभेदक इत्याह—**येषामि**-[१०५.४]ति। अत्रापि वाच्यवाचकयोरभेदविवक्षया इत्यादि प्रतिपादि[44b]त एवेत्यादिशब्देनोक्तो द्रष्टव्यः।

अधुना लक्षणभेदमधिकृत्याह **अविनाश** [१०५.५] इति। **किं** [१०५.६] कस्मात्। **तदात्मका** [१०५.६] नैव, विरुद्धधर्माध्यासादिति भावः। यदि वा **तदात्मका** इति हेतुभावेन विशेषणं तेन तदात्मकत्वात् **किं** कस्माद् द्रव्याविनाशे **नाशिन** [१०५.६] इत्यर्थः। अनेनैकस्य एतल्लक्षणद्वयायोगाल्लक्षणभेदोऽसिद्ध उक्तः।

उक्तदोष(षं) निराचिकीर्षोः प[2]रस्य वचनमा[शङ्कमा]न आह **नष्टा**[१०५.७] इति। **ते** [१०५.७] पर्यायाः। **चेदि**[१०५.७]ति पराभ्युपगमं दर्शयति। **पर्यायरूपेण**[१०५.७] न धर्मिरूपेणेत्यर्थादवस्थितम्। एतन्निराकुर्वन्नाह—**द्रव्येति**। द्रव्यस्वभावतोऽन्यस्वभावता तेषां किमस्ति? पृच्छतश्चायमभिप्रायो यद्यन्यस्वभावता तेषां भवेत्स्वभावभेदेन स्वभावाभेद एव न भवेदिति। अत एवायं वेद[3]भपरस्य प्रश्नः। सिद्धान्तवाद्येवैतद्दोषदर्शिनोऽन्यस्वभावतानिषेधमाशंकमान आह **न चेदिति**[१०५.८]। अत्राप्याह **नाश** [१०५.८] इति। **तथा** [१०५.८] तेन प्रकारेण। पर्यायाः पर्यायरूपेण नष्टा न धर्मिरूपेणेत्येवमात्मना **कथं नाशः** [१०५.८]। नो चेदिति तु क्वचित्पाठः। तत्रापि **नष्टाः पर्यायरूपेण** द्रव्यस्वभावेन **नो**[1] **चेत्** [१०५.८] न यदि प्रकृताश्च पर्यायाः कर्तृकत्वेनाभिसंबध्यन्ते। एतदाशंक्य सिद्धान्त्येवाह **किमन्यरूपता तेषामि**[१०५.८]ति। द्रव्यस्वभावस्य श्रुतत्वात्, द्रव्यस्वभावादन्यस्वरूपता तेषां किमस्तीत्यर्थः। शेषं समानं पूर्वेण। अनुगामिरूपं द्रव्यमुदयव्यययोगिनस्तु पर्याया ऐकात्म्यञ्च द्रव्यपर्या[5]याणामर्हद्भिः किं नेष्टं?

तत्र व्ययिनः पर्यायानधिकृत्योक्तम्। इदानीमुदयिनोऽधिकृत्याह—**द्रव्यात्मनी**-[१०५.९]ति। पर्याया इत्यनुवर्तते। द्रव्यस्यात्रैव श्रुतत्वात् **तत्**[१०५.९]शब्देन तस्य परामर्शः। तदयं वाक्यार्थो **विरुद्धधर्माध्यास(से)** भेदनिबन्धनेऽपि केन कारणेन **ते** [१०५.१०] पर्यायाः **द्रव्यात्मका** इति। विरुद्धधर्मा[6]ध्यास एव कुत इत्याह—**द्रव्यात्मनि स्थिते पश्चाद्भवन्त** [१०५.९] इति। हेतौ शतृविधानाच्च पश्चाद्भावादित्यर्थः। तन्निष्पत्तावनिष्पत्तिरेव विरुद्धधर्माध्यास इति भावः।

१. विभिन्नता S

अनेन च प्रकारद्वयेन तादात्म्यहापनेन भिन्नरूपाणामेषां तेन सह सम्बन्धाभावाच्च-द्धर्मत्वमेव च न स्यात् । ततश्च प्रकृतकृतिदर्शितमत्रैव वक्तव्यान्तरं समुच्चिन्वन्नाह **भूतश्च किमिति**[१०५.१०] **तत्र** द्रव्ये **भूतं** जातं **किं**? द्रव्यपर्याययोरैकात्म्येन द्रव्यस्थितौ पर्यायाणामपि नियता स्थितिरिति न किञ्चिद्भूतमित्यभिसन्धिः । **यतः** [१०५.१०] कस्यचिचदतिरिक्तस्याभावात् ।

अभिप्रायमविदुषः परस्य वचनमाशङ्कमान आह **भेदे**[१०५.११]ति । भिद्यन्त इति **भेदाः** पर्याया एव [8]**तद्रूपं** भूतं **यदाच्यते**[१०५.११] । एतन्निराचिकीर्षन्नाह **भिन्नमि**[१०५.१२]ति । **हि**रवधारणे भिन्नमित्यस्मात्परो द्रष्टव्यः ।

**अभेदे** [१०५.१३] तयोरैकात्म्ये । **एतदि**[१०५.१४]ति द्रव्याविनाश(शे) पर्यायाः पर्यायरूपेण नष्टा न धर्मिरूपेण, स्थिते च तस्मिन् भेदरूपं भूतमिति चेति । असंबद्धत्वमेवास्य पूर्वसामर्थ्योक्तं कण्ठोक्तं कुर्वन्नाह [1]**एवमि**[१०५.१४]ति **नष्टं** च तद**न**[45a][1]**ष्टं** चेति तथा ।

तदेतत्प्रसज्यत इति पार्श्वस्थस्याविदितप्रस्तावस्य प्रश्नमाशंक्याह—**द्रव्ये**[१०५.१५]-त्यादि । यस्मादुक्तया नीत्या लक्षणभेद एव सिद्धस्**ततः** [१०५.१६] तस्मात् ।

सम्प्रति कार्यभेदं प्रस्तुवन्नाह—**कार्ये**[१०५.१७]ति । कार्यभेदात् **तयोः स्वभावस्य भेदो यदि भवेत्** [१०५.१७] । **तथा सति**[१०५.१७] स्वभावभेदे सति अवश्यं हि भेदमिच्छता स्वभावभेद एवैष्टव्योऽन्यथा भेदासिद्धेः ।

सति [2]चैवं किमकिञ्चित्करः कार्यभेदो भेदसिद्ध्यर्थमुच्यत इति परं शिक्षयन्नाह **स्वभावस्यैवे**[१०५.१९]ति । ननु कार्यभेदोऽभिन्नस्य स्वभावस्य भेदक इति किञ्चित्कर एवापि(एवोप)न्यासार्होऽपि च तत् किमेवमुच्यत इत्या-शंक्याह **न हि** [१०५.२०] इति । **हि**र्यस्मात्**कार्याणां भेदः पश्चात्**प्रकरणा-त्स्वहेत्वागतस्याभिन्नस्वभावस्य पश्चाद्भवनस्वभावस्य **तस्यैव** स्वहेतुबलायातस्याभिन्नस्य **न भेदकः** [१०५.२०] हेतौ शतुर्विधानात्पश्चाद्भावादित्यर्थः । प्राग्भावी हि कारणं तद्भिन्नं स्वभावं कुर्यादपि, न तु पश्चाद्भावीत्यभिप्रायः ।

पश्चाद्भवन्नपि कस्मान्न भेदक इति ? आह **स्वभावस्येति**[१०५.२१] । ननु कार्यभेदः स्वहेतुसमुत्थं स्वभावं मा नाम विकार्षीत्तदवस्थे विकारायोगात्, तमेव तु विनाशयि[4]ष्यतीत्याह **नाशेति** [१०५.२१] । यदि चायं कार्यभेदस्तयोः स्वभावस्य भेदकः स्यात्तदायं दोषः स्यादिति दर्शयन्नाह—**एकान्तेने**[१०५.२२]ति ।

---

१. एकमिति S

**ते** द्रव्यपर्यायात्मके **वस्तुनी** [१०५.२२]। स्यादेतत्—स्यादयं दोषो यदि भेदः पश्चात् प्रकरणात् स्वहेत्वावगे(त्वाग)तस्याभिन्नस्वभावस्य पश्चाद्भवन्स्वभावस्य तस्यैव स्वहेतुवलाया[5]तस्याभिन्नस्य न भेदकस्तयोरभिन्नोय(यं) स्वभावो न भवेत् । यावतास्त्यभिन्नोपि स्वभावस्ततस्तयोरभेदोपीत्याह **स चेति** [१०५.२२]। **सो**ऽभिन्नः स्वभावः ।

**तयोः** [१०५.२३] द्रव्यपर्याययोः, **केन** कारणेन । कुतः पुनरसौ तयोर्न स्यादित्याह—**विभिन्नाभ्यामि**[१०५.२३]ति परस्परभिन्नाभ्यां द्रव्यपर्यायाभ्या**मभिन्नस्या**भि[6]न्नस्वभावस्य कल्पितस्य तस्य । **विभेदतो** [१०५.२३] भेदाद् व्यतिरेकात् । भेदे हि कार्यकारणभावः संबन्धः । स चात्र नास्तीति च बुद्धिस्थम् । **तेषां** [१०५.२३] द्रव्यपर्यायकल्पिताभिन्नस्वभावानाम् ।

**तस्यापि** [१०५.२५] तृतीयस्यापि स्वभावस्य **तदभेदप्रसिद्धये** [१०५.२५] द्रव्यपर्यायाभिन्नस्वभावाभेदप्रसिद्ध्यर्थम् परश्चतुर्थः **कल्पनीयो**[१०५.२६]ऽन्यथाऽयः-[7]शलाकाकल्पास्तूयेव(स्त्रय एवा)ऽसंबद्धाः प्रसज्येरन्निति भावः । एवं पञ्चमादावपि सैव वार्तेत्यादिना भिन्नस्वभावस्यासम्बन्धनिश्चयपरिपन्थिन्य[न]वस्था स्यात् ।

ननु किम[न]वस्थाभयाद् दृष्टानेकस्वभावापलापः कर्तव्यः इत्याह—**न चेति** [१०५.२७]।

स्यादेतत्स्यादयं दोषो यद्यभिन्नस्य स्वभावस्य द्रव्यपर्यायाभ्यां भेदोऽभ्युपगम्येत । किन्त्वभेद[8]एवेत्याह **ऐकान्तिकस्त्वि**[१०५.२९]ति । **भिन्नयो**र्द्रव्यपर्याययो**रभिन्नास्व**भावादभेद **ऐकान्तिको यदि** भवेदिति योज्यम्, भेद एव तयो**र्विशीर्येत** [१०५.३०] विलीयेत । कुत इत्याह **तदेके**[१०५.३०]ति । तस्मादेकस्मात्स्वभावादव्यतिरेकस्तयोरित्यर्थात् ।

अथवा **विभिन्नाभ्या**मित्याद्यन्यथा व्याख्येयम् । **विभिन्नाभ्यां** [१०५.२३] द्रव्यपर्यायाभ्या**मभिन्नस्या**[१०५.२३]व्यतिरिक्तस्य [45b] [1]विभेदस्तदात्मकद्भेदात् । अयं चाभिप्रायो द्रव्यपर्या[य]योः कल्पिताभिन्नस्वभावयोस्तादात्म्योपगमे तस्य वा तयोरनुप्रवेश एषितव्यस्तयोर्वा तत्रेति । तत्र यदि कल्पितस्य स्वभावस्य द्रव्यपर्याययोरनुप्रवेशस्तदा तावेव स्वरूपेण व्यवतिष्ठेयातां न त्वसाविति सोऽसन्कथं तत्सम्बन्धी स्यात् । ननु च नासौ स्वभावस्तयोरुपदर्शीयमानस्तदभेदानुभावी किं तर्हि तेषामभेदसिद्ध्यर्थमभिन्नस्वभावोऽन्योऽभ्युपगम्यते इत्यभिप्रायस्य परस्य वचनमाशंकमान आह **नेषामि**[१०५.२४]ति । अत्रापि दोषान्तरमुपेक्ष्यैवानवस्थां दर्शयन्नाह **तथे**[१०५.२६]ति । अथ द्रव्यपर्याययोस्तस्मिन्नभिन्ने स्वभावेऽनुप्रवेशस्तत्राह **ऐकान्तिकस्त्वि**[१०५.२९]त्यादि इति ।

ननु न तयोस्तदाभि(दाऽभि)न्नस्वभावयोगादभेदो येनैव[3]मुच्यते । किन्तु स्वत एवाभेद इत्याह **अभेदस्ये**[१०६.१]ति । **अभेदस्य** द्रव्यपर्याययोः स्वरससिद्धस्यैकात्म्यस्य **अपरित्यागे**[१०६.१]ऽङ्गीकारे । **तस्य** भेदस्य **अवितथाभावे** [१०६.२] सत्यत्वे । **अभेदे** [१०६.२] प्रतिपाद्ये मृषार्थत्वात्(र्थता) तत्प्रतिपादकस्य वचनस्येत्यर्थात् ।

कस्मात्पुनर्भेदाभेदावेकात्मकौ न स्यातामित्याह **अन्योन्ये**[१०६.३]ति । **अन्योन्या[4]भावरूपाणाम**[१०६.३]न्योन्यव्यवच्छेदेन व्यवस्थितात्मनाम् । **एकस्य भावो** [१०६.४] विधि**रपरस्याभावो** निषेधो यत्तद्धेतुको **यतः** [१०६.४] भेदाभेदाभ्यां **द्विरूपता** नास्ति । यदि विरुद्धधर्माध्यासो भेदव्यवस्थाङ्ग(ङ्गं) स्यान्नैकत्र भेदाभेदौ भवेताम् । स एव तु न भेदव्यवस्थानिमित्तमित्याशंक्याह **अन्योन्याभावरूपाणे**[१०६.४]ति ।

**विरोधो** [१०६.८] [5]विरुद्धधर्माध्यासोऽभिप्रेतः । **भेदशब्देन** भेदव्यवस्था विवक्षिता । **लक्षण**[१०६.८]शब्देन च निमित्तम् । तेनायमर्थो यदि विरुद्धधर्माध्यासो भेदव्यवस्थाङ्गं नेष्यते, तदैवं न स्यात् । एवं च कथं स्यात् एवं च कस्मान्नेष्टव्यमिति ।

तद्रूपाः सन्तोपि **न भेदिनो** [१०६.५] भिन्नाः स्युर्विरोधस्य भेदव्यवस्थाङ्गत्वात् । अन्येन [6]प्रकारेण **तद्विनाशे** [ ०६.६] पर्यायविनाशे । द्रव्यं कथं विनाशि स्यात् । द्रव्यं हि पर्यायरूपेण नश्यति, न तु द्रव्येरूपेणेत्यह्रिकैरिष्यते । तद्रूपेणापि विनाशः कस्मादिष्यते । सर्वथैव तस्य विनाशः किन्नेष्यत इत्यर्थः ।

कथं नाम द्रव्यमेष्टव्यमित्याकांक्षायां शिक्षयन्नाह **कूटे**[१०६.७]ति । **नित्यता** [१०६.७] स्थिरता । "नेध्रु(र्ध्रु)व" इत्य[7]नेन निसस्त्ययो विधानात् । अप्रच्युतानुत्पन्नपूर्वापररूपस्यावस्थानं **कूटस्थनित्यता, भेदेषु** [१०६.७] पर्यायेषु । परिणामनित्यता द्रव्येषु कस्मादिष्टेति सामर्थ्यादावेदितम् ।

अस्तु तर्हीष्टा कूटस्थनित्यतेत्याशंक्याह **तदिष्टावि**[१०६.९]ति । तस्याः कूटस्थनित्यताया इष्टौ । अत्र दोषान्तरमुपेक्ष्यैव एतदाह **किन्ने**[१०६.९]ति । यथोत्तरोत्तरसर्वपर्या[8]यानुगामिसुवर्णत्वाद्येकं सामान्यमिष्यते तत्तद्भिन्नदेशादिसर्वव्यक्त्यनुयायिसुवर्णत्वगोत्वाद्येकं **किं** [१०६.१०] कस्मान्नेष्यते । इच्छामस्तर्हीदमपीत्याह**जनन्ये**[१०६.१०]ति । **जननी** माता । प्रथममूढा पत्नी जाया। ननु यदि स्त्रीत्वसामान्यमभिप्रेत्येदमुच्यते तदाऽभ्युपगम एवोत्तरमिति कोयमनुपया(नुयो)गः ? भार्यात्वञ्चोपाधिरूप न [46a][1]सामान्यम् । अन्यथा संकेतावेदिनोपि गाव इव ता अपि भार्या म(अ)भिमता व्यक्तयस्तेनरूपेण सामान्य-

भासां धियमादधीरन्। न चैतदस्ति, तस्मादयुक्तमुक्तमेतदिति। शोभनमुक्तं भवता केवलमेवं वदितुरभिप्रायो न सम्यग्व्यक्षायि। अयं खल्वस्याभिप्रायो येनोपाध्यवच्छिन्नेन केनचिद्रूपेण तत्स्त्रीत्वं तस्यां जायायां वर्तमान[2]मेनां तथोपभोगाङ्गं नोपपादयति विनैव तावदात्मना जनन्यामपि तेन वर्तितव्यमन्यरूपाभावात्। सति चैवं तस्या अपि तथात्वमापद्येत; एवमत्रापेक्षयाप्युच्यमानजायाया अपि तथात्वमनिवार्यम्। यद्येवं शावलेयबाहुलेयादीनामप्येकगोत्वादियोगादेकत्वं किं नापाद्यत इति ? प्रियं प्रियेणाचरितमिति। उदाहरण[3]दिङ्मात्रं तूक्तमेतदुपहासापदेशेनेति सर्वमवदातम्।

एवमुक्तया नित्या भेदाभेदावेकाधिकरणौ न युक्ताविति प्रतिपाद्याधुना भवेतां तौ तथा, तथाप्युक्तदोषान्न मुक्तिरिति प्रतिपादयन्नाह **भेदाभेदोक्तदोषाश्चे**[१०६.११]ति। द्रव्यपर्याययोर्भेदे ह्येकान्तेन विभिन्ने ते स्याताम्। न त्वेकं द्विरूपम, तथा[4] सुवर्णकुण्डलादिपर्याययोरपरस्परात्मतया कुण्डलादिसुवर्णविशेषाभ्यां तयोरप्रतिभासनप्रसङ्गादयो दोषाः। अभेदपक्षे चैकस्याने[क]कार्यकर्तृत्वमुक्तमव्याहतमापद्येत। द्रव्यपर्यायरूपत्वेनाभ्युपेतं द्वैरूप्यं हीयेतेत्यादयो दोषाः। सति चैवं विफलोऽयमेकस्य भेदाभ्युपग[5]म इति चार्थाद्दर्शितम्। **तयो**[१०६.११]र्भेदाभेदयो**रिष्टौ** [१०६.११] **कथं वा न** भवन्ति। प्रत्येकं भावान्न समुदाये भवन्तीत्याह—**प्रत्येकमिति ते** [१०६.१२] दोषाः।

ननु च दृष्टमिदं यत एकैकभाविनो दोषाः समुदायावस्थायां न भवन्तीत्यभिप्रायवान् परः प्राह **गुडश्चेति**[१०६.१३]। केवलो **गुडः श्लेष्मणोर्हेतुर्नागरं** शुण्ठी [6]केवलं **पित्तस्य कारणम्**[१०६.१३]। मिलितयोस्त्वनयोस्तौ दोषौ कस्मान्न भवत इति प्रकरणाद् द्रष्टव्यमध्याहारो वा कर्तव्यः। अत्र समाधिमाह **तन्मूलमि**[१०६.१४]ति। परस्परोपसर्पणाश्रयात् प्रत्ययात्तदुपादानसहकारिणो**ऽन्यदेव** [१०६.१४] तत्—कार्यकारिणः केवलाद् गुडात्। केवलाच्च नागराद्भिन्नमेव विशिष्टा[7]र्थक्रियाकारि द्रव्यान्तर**मिदं गुडनागरा-**[१०६.१४]ख्यमुत्पन्नम्। न तु स एव गुडो नागरञ्च द्वे इमे द्रव्ये। **तन्मूलं**[१०६.१४] तद्गुडनागरकारणम्। अनेनैतदाह—विशिष्टश्लेष्महरणाद्यर्थक्रियाकारिद्रव्यान्तरमिदमुदपादि तेन प्रत्येकभावी मम दोषो न भवति। भवतस्तु मिलितावपि भेदाभेदौ द्रव्यपर्यायलक्षणौ तावेवेति कथन्नो( कथमु ? )भयभा[8]विनो दोषा न भवेयुरिति।

अथास्तु द्रव्यान्तरमिदं तथापि मधुरत्वात् कटुकत्वाच्च कथं कफपित्तकृन्न भवतीति पार्श्वस्थस्य चोद्यम् प्रतिक्षिपन्नाह **मधुरमि**[१०६.१५]ति। **सर्वं मधुरं** [१०६.१५] **कफहेतुर्न** संभाव्यते। **स्यादि**[१०६.१५]ति संभावनपदमेतत्, शक्यार्थम्वा। केन पुनर्निदर्शनेन सर्वं मधुरमेव(वं) संभावयितुमयुक्तमित्यत आह **यथे**[१०६.१५]ति।

कफना[48b][1]शक्तत्वादेव मधुर(न) इत्यभिप्रायः। अनेन मधुरत्वादित्ययं हेतुः साधारणानैकान्तिको दर्शितः। **तीक्ष्णं** [१०६.१६] कटुकम्वा **सर्वमिति नेति स्यादि**ति चानुवर्तनीयम्। पूर्ववन्निदर्शनं व्याख्येयम्। **मागधिका** [१०६.१६] पिप्पली शीतवीर्याहित्ये(ते)त्याशयः। अनेनापि कटुकत्वादित्यस्य साधरणानैकान्तिकत्वं दर्शयतोऽयमभिप्रायः। गुडनागराख्यस्य द्रव्यान्तरस्या[2]स्यान्यदेवेत्थं मधुर(न) इव माधुर्यं कटुकत्वमपि पिप्पल्या इवान्यदेव तेन मिलितावस्थायां न दोषद्वयसम्भव इति।

यदि च प्रत्येकभाविनां दोषाणां मिलितावस्थायां गुडनागरादेरभावोपदर्शनेनैतत्प्रतिषिध्यते, तदा प्रत्येकभाविनां दोषाणां समुदायावस्थायामपि भावदर्शनात् किमस्मदभिमतं चानुप(नाभ्युप)पद्यत इति [3]दर्शयितुं **प्रत्येकमि**[१०६.१७]त्यादिनोपक्रमते। यदि वा समुदायावस्थायां तेषां दोषाणामसद्भावे साध्ये प्रत्येकभावित्वादित्यस्य हेतोः साधारणानैकान्तिकत्वं दर्शयितुमाह–**प्रत्येकमि**[१०६.१७]ति। **यत्** प्रत्येत्येकं यस्य कार्यस्य **निदानं** [१०६.१७] निमित्तं स्वतस्तद्यदि स्वहेतुबलान् **मिश्रम**[१०६.१७]न्यसहितमेवाधिकरणमुत्पद्यते तदा **किं** [4]तत्कार्यकारि तत्र **दृष्टम्?** [१०६.१८] क्षेपे किमः प्रयोगाद् दृष्टमेवेत्यर्थः। स्नेहो हि कफहेतुरूष्णत्वं च पित्तकृद्दृष्टं संहितावस्थायामपि ते तत्कार्यकारिणी दृष्टे यथा अमूमापङ्क्ते, अतएव **यथा माष**[१०६.१८] इत्युदाहरति। **माषो** हि स्निग्धत्वादूष्णवीर्यत्वाच्चोभयात्मक उभयमेव कार्यं कफपित्तलक्षणं करोतीति।

ननु मधुररसादपि मधुरः(नः) श्लेष्मा कस्मान्न जायते कटुकाया अपि पिप्पल्याः कुतो न पित्तं येनास्मदुक्तं भवता व्यभिचार्यते। तथाप्यभावे वा गुडान्नागराच्च तौ दोषौ मा भूतामिति परस्य मतमाशंक्य दृष्टस्योपपत्तिप्रकारं दर्शयितुमाह–**शक्त्यपेक्षश्चे**[१०६.१९]ति। यस्मात्तेन कार्येणोत्पत्तव्यम्, तस्य स्वोपादानशक्ति[6]मपेक्षत इति **शक्त्यपेक्षम्** [१०६.१९]। किं तत्**कार्यं** माधुर्यादि गुणमात्रं निवन्धनं न भवतीति प्रश्नेऽभ्युपगम एवोत्तरं कुर्वन्नाह–**गुणेति** [१०६.१९]। आचारविशेषानवच्छिन्नः केवलो माधुर्यादिगुणो गुणमात्रं तद**निबन्धनम्** [१०६.१९] अकारणं यस्य तत्तथोक्तम्। शक्त्यपेक्षत्वेपि कार्यस्य तस्याः सर्वत्र भावात् तदवस्थो [दोष] [7]इत्याह **सर्वत्रेति** [१०६.२०]। **तासां** [१०६.२०] शक्तीनां **किञ्चिदेव** कार्यं **कस्यचिदेव** जन्यतया सम्बन्धी भवति। अयमर्थो मधुरत्वाविशेषेपि किञ्चिदेव स्वहेतुसमुद्भूतरूपविशेषं यत्तथाकार्यकारि न तत् सर्वम्। तद्धेतोस्तज्जननः स्वभावः कुतस्त्य इति चेत्, स्वहेतोस्तस्यापि तथेत्यपर्यनुयोज्य ए(०ज्यमे)वैतत्। एतदुक्तं भवति–एकान्तेन विभ(भि)न्नत्वादि[8]दोषो हि भेदमात्रे प्रसज्यमानो न भेदस्य शक्तिविशेषमपेक्षते। न च भेदस्य

विशेष एव संभवति मिलितावस्थायामपि ताद्रूप्यादेव । एवमभेददोषोपि द्रष्टव्यः । तस्माद् गुणमात्रनिबन्धनं यत्कार्यं तद्यथा सति तस्मिन्भवति । तथा भेदाभेदमात्रे संभविनो दोषा ये ते तद्भावे कथं न स्युरिति ।

भेदाभेदाभ्यामुत्पत्ति[47a][1]धर्मत्वममीषां दोषाणामभ्युपेत्य सर्वमिदमुक्तमधुना तु तादात्म्यादेव तेषामनिवार्यत्वमायातमिति प्रतिपादयितुं गुडनागरादौ परेण दृष्टान्तीकृते जन्यदोषाणामन्यथैवानुपपत्तिमभ्युपगच्छन्नाह **विरोधी**[१०६.२४]ति । **विरोधिनो** नागरादेः । **सन्निधिस्तस्माद्विरोधिशून्याद् गुडादेर्जन्म यस्य** दोषस्य स **तज्जन्मा न भवेद्**[१०६.२३]पि । **तदात्मा** [१०६.२४] भेदाभेदात्मा । **तु** दोषः, स तु **तस्मिन्नात्मभूते** भेदे **अभेदे चानिष्टेपि न निवर्तते** [१०६.२४] । अतत्स्वभावत्वप्रसङ्गादिति भावः । इदमत्रार्थसतत्त्वं भिद्यमानं हि रूपं भेदो विपर्ययेण चाभेदः । विभिन्ने च ते स्यातामित्यादिना च वस्तुतस्तदात्मक एव दोषो दर्शितः । अनेककार्यकारित्वमपि अभिन्नरूपात्मकमेव वस्तुतः । अन्य[3]दपि दूषणं वस्तुतो भेदाभेदात्मकमेव । व्यावृत्तिकृतस्तु भेदो यदि भवेद्भवतु न तावता प्रकृतक्षतिरिति ।

तन्मतेऽवस्थान्तरावयविनः सत्त्वमुपेत्यैतदुक्तमिदानीं तु स एव नास्तीति दर्शयितुमाह **भागा एव चे**[१०६.२५]ति । **भागा एव** भागत्वेनाभिमता एव । परमार्थतस्तु परमाणव एवेत्यर्थः । तेन तेन प्रकारेणाधस्ति[4]र्यगूर्ध्वावस्थानलक्षणेन तत्तदर्थक्रियाकारित्वलक्षणेन च **संनिविष्टा** [१०६.२५] व्यवस्थिताः । **तद्वान्** [१०६.२६] भागवान् । **निर्विभागः** स्वतो निरंशः । अनेन दृश्यानुपलंभो दर्शितः । तदभावाच्च केन सह तेषां भेदाभेदचिन्ता स्यादिति चाभिप्रेतम् ।

नन्वसत्येकस्मिन्नवयविनि धारणाऽऽकर्षणे कथमुपपद्येयातामित्याह–**अन्योऽन्ये**[१०६.२७]ति । **ते**[5][१०६.२७] भागाः । एक सामग्र्यधीनत्वादन्योन्यकारणाधीनापेक्षाः सन्तस्तथावस्थितवपुषो येनैकस्याकर्षणे धारणे वाऽन्येषामपि ते भवत इति । न केवलं दृष्टहेतुबलाच्चेषां तथास्थितिरपि त्वदृष्टवशादपीति दर्शयन्नाह–**कर्मणां चे**[१०६.२८]ति । लोकस्यासाधारणचेतनात्मकर्मणामपि **सामर्थ्यात्तेऽविनिर्भागवर्तिनः** [१०६.२८] परस्परं विभागेन न वर्तन्ते ।

ननु चाकारणस्य कर्मणः सामर्थ्योपवर्णनमयुक्तमित्याशंक्याह **सन्निवेशने**[१०६.२९]ति । **हि**[१०६.२९]र्यस्मादर्थे ।

"कर्मजं लोकवैचित्र्यम्"[अभिध० ४.१] ।

इति वचनात्**कर्मभिर्जनिता** [१०६.३०] इत्याह । तेषामेव **प्राणिनां** साधारणै-रसाधारणैर्वा कर्मभिः। **तेभ्यः** [१०६.३०] कर्मभ्य एव तदाधिपत्यादेवेति यावत्। **अवि**[7]**भागिनो** [१०६.३०] विभागेन न वर्तन्ते।

अथासत्येकस्मिन्नवयविनि एकोयं घट इत्यादि व्यपदेशः कथं स्यादित्या-शंक्याह–**ते चे**[१०६.३१]ति । **ते** भागाः **कथंचिदे**ककार्यकारित्वादिना प्रकारेण। ननु चैको घट इत्यादि शब्दजन्मनि शब्दानुविद्धे ज्ञाने तावत्किञ्चिदेकत्वेन प्रत्यवभासते तदेव च स्वलक्षणं स्वलक्षणत्वेनाध्यवसायात्तत् कथमभे[8]दिनोऽर्थस्यापलापः क्रियत इत्याह **न चे**[१०६.३२]ति। स्वलक्षणालम्बनं ज्ञानं **स्वलक्षणज्ञानं** [१०६.३२] तस्मिन् **न**। अयमभिप्रायो यदि शब्दगोचरोऽर्थः स्वलक्षणं स्यात् तदे-न्द्रियप्रभवेपि प्रत्यये तथैव प्रतिभासेत। न चैतदस्ति सजातीयविजातीयव्यावृत्त-प्रतिभासात्। न चैकमेव रूपमुपायभेदेऽपि भिन्नाकारावभासि युक्तम्। तदुक्तम्

"एकस्यै[47b][1]व कुतो रूपं भिन्नाकारावभासि तत्" [प्रमाणवा. २.२३५]।

एवं तर्हि शब्दप्रत्ययगोचर एव किञ्चिदेकं तावदास्ताम्। ततो न सर्वथैकस्याभावः सिध्य-तीत्याह **अस्पष्टे**[१०७.१]ति। **त एव** [१०७.१] भागा एवं। विजातीयव्यावृत्त्या केवलया प्रतीयमानाऽ**स्पष्टरूपाः** [१०७.१]। अयमर्थस्तत्रापि ज्ञाने त एव भागा अ[वि]वेचितभेदाः प्रतीयन्ते न तु तदतिरिक्तं किञ्चिदेकमपि। अध्यवसायानु[2]रोधेन च त एवेत्युक्तं द्रष्टव्यम्। यतो भागातिरिक्तं निर्भागदृश्यमनुपलभ्यमानमसद्व्यवहारगोचरः **तत**[१०७.२]स्तस्मात्। [1]**तेषां** भागानां पर्यायशब्दाभिलाप्यानाम्।

पुनरपि निर्भागमङ्गीकृत्य सिंहावलोकितन्यायेन दूषणान्तरमाह।

**नि**[2]**र्भागस्य चे**[१०६.३]ति। भिन्नो देशो यस्य स चासा**वंश**श्चेति पदसंस्कारं कृत्वा पश्चा**दनेक**शब्देन सह [3]कर्मधारयः कार्यः। **तद्योगिता** [१०७.३] तद्व्यापिता। अयमाशयो यदि तत् सांशं स्यात्, तदेकेनांशेनैकं भिन्नदेशमंशं व्याप्यापरेणापरं व्याप्नुयात्। न तु निरंशं सत्तथा कर्तुमुत्सहत इति। ननु प्रतीयते तावदेकस्यानेकभिन्नदेशांशयोगिता तत्र किं कथमेतदिति विमृष्टेन। तथा चोक्तम

[3]" तत्तथैवाभ्युपैत[4]व्यम् यद्यथैव प्रतीयत।"

इत्यभिप्रायवतः परस्य वचनमाशङ्कमान आह **प्रतीतेश्चेदि**[१०७.४]ति यद्यप्यत्रोक्तमेव दूषणं न निर्विकल्पे नापि विकल्पे ज्ञाने तदेकमनुभासत इत्यादि।

१. एषां S  २. निर्विभागस्य S  ३. तुलना श्लोकवा० अनु० १८६।

तथापि तदुपेक्ष्यैव दूषणान्तरमाह '**ध्वंसे**[१०७.४]ति।

**ये पर्याया: स्थेमानं** [१०७.५] स्थैर्यं **दधत: प्रतीयन्ते** [१०७.५], यत्तदोर्नित्यमभिसंबन्धात्ते [5]**क्षणध्वंसानुभाविन: कुत:** कस्मान्**मता** [१०७.५] इति योज्यम्। अनेनैतदाह प्रतीतिशरणाश्चेद्भवन्तस्तदा कथमन्यथा प्रतीयमाना अन्यथा अनुगम्यन्त इति। पुनः परस्य वचनमाशंकमान आह–**अन्यत**[१०७.६] इति। **अन्यतो बाधकात्** प्रमाणात् तन्मता इत्यभिसम्बन्धव्यम्। इह प्रकृते **तद्** बाधकं पमाणं **समं**[१०७.६] तुल्य[6]मत्रापि तद्धित इत्यर्थः।

उक्तेपि दृश्यानुपलम्भादौ बाधकेऽन्यदपि बाधकं दर्शयन्नाह–**ऐकान्तिकावि**-[१०७.७]ति। **अनन्यत्वा**देकात्मकत्वात्। **तयो**रन्योन्यानुप्रवेशमुखेन भेद एवाभेद एव वेति नियमवन्ता**वैकान्तिकौ** स्याताम्। **ध्रुवं** [१०७.७] निश्चितम्। अथैकात्म्येपि पर्याया एव भिद्यन्ते न धर्मी धर्मे (?) च न भिद्यते न तु पर्याया इत्याशंक्याह–**अन्योन्यं वे**[१०७.८]ति। विरुद्धधर्माध्यासस्य एकत्वबाधकस्य भावाद् **भेद** एव **नियतो**[१०७.८]ऽवश्यंभावीत्यभिप्रायः।

अनन्यत्वेपि नायं दोषो भिन्नरूपस्यापि भावादिति परस्य वचनमाशंकमान आह **तयोरपी**[१०७.९]ति। **अपि**शब्दो भिन्नक्रमो **भेद** इत्यस्मात्परो द्रष्टव्यः। न केवलमभेद इति चार्थः। अत्रा[6]प्याह **येनात्मने**[१०७.१०]ति। **अपि**शब्ददर्शितमभेदमपि दूषयन्नाह **द्रव्ये**[१०७.१२]ति।

**स्वभाव** [१०७.१३] इत्यभिन्नस्वभाव इत्यभिप्रेतम्। **यन्निमित्ता**[१०७.१३] यदभिन्नरूपनिमित्ता। कथं नास्तीत्याह **तत** [१०७.१४] इति। **तत** एकस्मात्स्वभावात्, **अभेदे** स्वभावानुप्रवेशे **तयो: स्वात्महानि:** [१०७.१४] द्रव्यरूपता पर्यायरूपता च हीयेत, तदात्मवदिति भावः।

**त**[48a][1]**स्या**[१०७.१५]भिन्नस्य स्वभावस्य **ताभ्यां**[१०७.१५] द्रव्यपर्यायाभ्याम्। **त** [१०७.१६] इत्यनेनोक्तं बहुत्वमेवाह **धर्मा**[१०७.१६]त्यादि।

**तेभ्यो** [१०७.१७] द्रव्यपर्यायतदन्यस्वभावेभ्योऽन्योऽभिन्नः स्वभावस्ते**षामेव** त्रयाणा**मभेदासिद्ध्यर्थं कल्प्यते** यदि तत्रापि स एव दोष इति पुनः स्वभावान्तरकल्पने च **पूर्व** [१०७.१८] इव **प्रसङ्गो**ऽनवस्थाप्रसङ्गः स्यात्।

अत्रैव दोषान्तरं समुच्चिन्वन्नाह '**धर्मीत्वामि**[१०७.१९]ति। कुत एवं स्यादित्याह **तत्तन्त्रत्वादि**[१०७.१९]ति। तस्मिन्पारतन्त्र्यं तस्मात्। कयोस्तत्तन्त्रत्वमित्येकाद-

१. क्षणध्वंसानु॰ S।

माह–**तदन्ययोरि**[१०७.१९]ति । तस्मादेकस्वभावादन्ययोर्द्रव्यपर्याययोर्भेदस्याभेदस्य च तन्मूलत्वात्तत्तन्त्रत्वं प्रत्येयम् । अस्तु तर्हि तस्य तथात्वमनेकात्मकत्वं च वस्तुनः । न च दृष्टस्यानवस्थया अपलापः क[3]र्तुं शक्य इत्याह–**न चैवमि**[१०७.२०]ति । **चो** यस्मान्नैवं प्रमाणेन गम्यते । प्रकरणमुपसंहरन्नाह **तेने**[१०७.२०]ति । **तेना**[न]न्तरोक्तेन कारणकलापेन **अयम्** अनेकान्तवादो **जाल्मकल्पित** उत्पथप्रस्थितकल्पितः ।

**इति**[१०७.२१]हेतौ । **बहुभाषितया अलं** [१०७.२१] **न** किञ्चित् । एतावतैव सर्वस्य समाहितत्वादिति भावः ।

अवश्यमो भा[4]व आवश्यकमित्यस्य भावप्रत्ययान्तत्वादपृक्करणस्यावश्यकमिति प्राप्ते **योयमावश्यकमपृथक्करणामि**[१०८.९]ति प्रयोगे सामानाधिकरण्येन निर्देशः सः कथमिति तु न जाने महान्त एव प्रष्टव्याः । **संयोगविभागेषु** [१०८.११] कर्तव्येषु **अनपेक्षो** [१०८.११] **न कारण**मिति रूपादिवर्गाभिप्रायेणानपेक्ष[5]स्य तत् कारणमात्रं विवक्षितम् । न तु विशेषप्रतिषेधात्सापेक्षस्य कारणत्वम् । अगुणत्वेन च द्रव्यकर्मणोर्व्यवच्छेदः । सामान्यवत्त्वेन च सामान्यविशेषसमवायानाम् । संयोगविभागापेक्षया त्वनपेक्षो न कारणं किन्तु सापेक्ष एव कारणमिति विवक्षितम् । सापेक्षत्वं न चरमभान्यपे[6]क्षया द्रष्टव्यम् । न तु कस्यचिदन्यानपेक्षस्यैव कारणत्वमस्ति येनानपेक्षोऽकारणमित्युच्यमानं शोभेत । तदात्वगुणत्वेन द्रव्यस्य व्यवच्छेदो द्रष्टव्यः । तद्यथा तन्तुतुरीसंयोगलक्षणो गुणः पटतुरीसंयोगे कर्तव्ये पटं पश्चाद्भाविनमपेक्षते । यथा च वंशादौ पाटनाख्या[7]वयवकर्मजोऽवयवान्तराद्विभागः पश्चाद्भाविनं द्रव्यविनाशमपेक्ष्य सक्रियस्यावयवस्याकाशादिदेशाद्विभागमारभते, यथा चासौ न क्रियाजो विभागः किन्तु विभागज एवेति विभागजं विभागमभ्युपगच्छद्भिर्वैशेषिकैरिष्यते तथा नेहाप्रकृतत्वादुच्यते । **गुणवदित्यत्रादि**[१०८.१५]ग्रहणात्समवायिकारणत्वस्य संग्रहः ।

**चो**[8]द्य[१०८.२८]शब्देन प्रकरणाद् बौद्धकृतं चोद्यं द्रष्टव्यम् । तस्य **परिहार** [१०८.२८]इति विग्रहः ।

अस्माकमयमा**स्माकीनः**[१०९.१६] । "यु[1]ष्मदस्मदोरन्यतरस्यां खञ्" इत्यनेन खञ कर्तव्यः । **प्राग्व**[१०९.६]त्प्रागुक्तसंस्कारपक्ष इव । **निर्बन्धग्रहणेन**[१०९.२१]**चेत्याचष्ट** [१०९.२५] इति सम्बन्धः ।

**सहकरणशीला** [११०.६] एककरणशीलाः ।

**प्रत्ययान्तरं** [१११.२] वासनाप्रबोधकं रसादिकञ्च [48b][1]यथायोग्यं वाच्यम्, **तत्सापेक्षा** [१११.२], **ततः** [१११.३] **सामग्र्या**स्तथाभूताया । **इतरस्ये**[१११.३]-

१. पाणिनीयं सूत्रं (४-३-१) तु भिन्नम् ।

ति निर्विकल्पकस्य रसाद्यालम्बनस्य । **तदुपादेयत्वेन** [१११.२] विज्ञानलक्षणोपादानोपादेयत्वेन । ननु च मनस्कारादिसमुदायजन्यमिदमेकमुपदर्शितमेतत्सामग्रीमध्यप्रविष्टैकजन्यं तु किं न दर्शितमित्याह **तदन्यादि**[१११.१३]ति । **एकजन्यमिति** तत्सामग्र्यन्तःपतितकारणानपेक्षैकजन्यमि[2]त्यवसेयम्, न त्वेकजन्यं नाम किञ्चित्संभवति । तत्र चक्षुरादिनिरपेक्षमनस्कारजन्यो मनोराज्यादिविकल्पः, विषयादिनिरपेक्षचक्षुर्मनस्कारात्मकद्वयजन्यं द्विचन्द्रादिविज्ञानम्, समनन्तरप्रत्ययाद्विज्ञानाच्चक्षुर्विज्ञानस्योपलम्भामहे (?)त्याद्यभिधानादेवैतदूहितुं शक्यमित्यभिप्रायेण च **स्व[1]यमूह्यमि**[१११.१३]त्याह । ननु किं भागतो विशेषवृत्तिर्येन[3] बहुवचनेन निर्देश इत्याह **[4]तज्जन्यापेक्षया चे**[१११.१७]ति । **सामग्र्यन्तरस्य स्वभावभेदवतो भावाद् भिन्नकार्यप्रसूतिः ।**

कुतः स्वभावभेदवत्त्वं तस्येत्यपेक्षायां योज्यम् **कार्यान्तरे**[११२.१]त्यादि । पृथिव्यादीन्**युपादाय** वर्तन्त इत्युपादाय **रूपं** [११२.५] परस्परादि मयूरव्यंसकादित्वात्समासः । आगमापेक्षया वक्तुमुद्यतेन च[1] परेणाऽऽगमभावैवानूदिता । स्वभावस्थितं तेनाश्रयः(स्थितेराश्रयः) **स्वभावस्थित्याश्रयः** [११२.१८] । अवश्यं हि प्रतिबन्धकेन किञ्चित्करेण भाव्यम् । किञ्चिच्छब्दवाच्येनार्थान्तरेणेत्यभिप्रायेणाह **स्वभावान्तरोत्पादने यावदि**[११२.१९]ति ।

ननूपकारक आधारो न तु जनकस्तत्कथमेवमुच्यत इत्याह **नही**[११२.२७]ति । **भूतानां** [११३.२] पृथिव्यादी[5]नाम् । **उत्पन्न इति** [११३.२] वैभाषिकमते कथ्यत इति द्रष्टव्यम् । न तु सौत्रान्तिकनये भूतभौतिकविभागोऽस्ति ।

**कालक्षेपेण** [११३.९] कालविलंबेन । **तत्सहभाविने**[११३.१४]त्यनुग्राह्यसहचारिणेत्यवसेयम् । **अनन्तरं** [११३.१४] **तदुत्पादनात्** । **तस्य** विशेषस्योत्पादनात् । **तस्य** [११३.१५] क्रियमाणविशेषस्य । कथं तत्राकिञ्चित्करत्वं तस्य स[6]हकारिणा ज्ञापितं भवतीत्याह–**शक्तिप्रतिबन्धकापनयनेने**[११३.१९]ति ।

यस्मादर्थेऽयं निपातः ' **न वै** '[नै]वेति व्याचक्षाणो **वै**[११३.२५]शब्दमवधारणे दर्शयति । **संभावनायां** [११४.२] न्यायबलायातायामित्यवसेयम् । अत एव न्यनाकि **न्याये**[११४.३]ति ।

१. स्वयमभ्यूह्यम् S.　　२. ततज्जन्या[illegible] S

अनेन सहकारीत्यत्रैकार्थः सहशब्दो वार्तिककारेण दर्शितः। कथं तर्हि **सह युगपत्कुर्वन्त** [११४.१२] इत्ययं व्याचष्टेति चेत्, उक्तमत्र पूर्वमिति न पुनरुच्यते। **एवंविध** [११४.१३] इत्येकार्थकारी। वह्न्यादिसहकारीशीतक्षणादिलक्षणे कार्याभिसन्धिनाऽ**पचीयमान**[११४.१७]ग्रहणम्।

**यावते**[११५ ८]ति तृतीयान्तप्रतिरूपकोऽयं निपातो यस्मादित्यस्मिन्नर्थे, किंत्वेतस्मिन्नर्थे वा अनुवर्तते। **सहिता** अन्येन युक्ताः **क्षणमात्रावि**[3]**लम्बिनः** [११५.९] क्षणमात्रस्थायिनः। तदवस्थाया **प्राक्** पूर्वं **पश्चादु**त्तरकालं [1]**पृथक्** तद्विकलावस्थायां **भावः** [११५.१०] सद्भावः।

ननु यदि स्वहेतोः समर्थस्योत्पत्तिस्तर्हि कथमनन्तरमुक्तम्—' ते समर्थाः स्वभावतः [११५.६] ' इत्यत आह **परमते**[११५.१६]ति। अवश्यस्मात्कार्यमिति **भावो** हेतु**स्तस्मा**दिति। तदपि त्वया कस्मान्न व्याख्यातमिति चेत्। न, स[49a][1]मर्थः कुत उत्पन्न इत्यस्य व्याघातप्रसंगात्। **सहकारिभ्यः सामर्थ्यमिच्छन्ती**[११५.१७]ति च मीमांसकमताश्रयणेनाह न तु नैयायिका एवमिच्छन्ति येन तन्मतोपग्रहेणाप्येतत्संगच्छेत, सहकारिसाकल्यस्यैव तैः सामर्थ्यरूपत्वेनेष्टेः। तथा चाह—जल्पमहोदधिः ''सहकारिसाकल्यं तद्गतः सामर्थ्यं वैकल्यं त्वसामर्थ्यमि''ति।

**समर्थं** [११५.२५] विवक्षितकार्यक[2]रणे शक्तम्। **आवश्यकं** [3]**जननमि-**[११६.११]त्यस्य शब्दस्य तु सिद्धिः [4]पूर्वं न जाने।

**कुशूलश्च तदपनेतृपुरुषप्रयत्नश्च क्षेत्रनयनं च प्रकिरणं**[११६.१४] च प्रकरणात् क्षेत्रे प्रकिरणं चेति द्वन्द्वं कृत्वा पश्चादादिशब्दे[न] बहुव्रीहिः कार्यः। प्रकिरणमित्ययमौणादिकः शब्दो न तु किरतिर्ल्युडन्तो द्रष्टव्यस्तदा गुणस्याप्रतिषेधेन प्रकरणमिति प्राप्तेरसाधु[3]त्वप्रसंगात्।

**समेत्य** [११६.१९] योग्यदेशे स्थित्वा **सम्भूय** आद्येन सह मिलित्वा **प्रत्ययैः** सहकार्युपादानरूपैः।

ननु च ' अतएव तयोरवस्थयोरि'त्यादिना प्रत्यभिज्ञायाः प्रामाण्यमपोदितमेव तत्कथं न पुनरुक्तं(क्तमि)त्याह—**पूर्वेश्वे**[११७.९]ति। **एतदपि**[११७.११] सारूप्य-

---

१. पृथक्त्व S २. मिच्छति S ३. अवश्यंजनकत्वम् S

४. द्रष्टव्यम्—पृ. ३९४ पं. ८—'अवश्यमो भावः इत्यादिना न जाने इत्यन्तेन कृता', एतदर्थकः पाठस्त्रुटितोत्र भाति।

विषयप्रत्यभिज्ञाप्रामाण्यनिराकरणमिति । **उक्तमेव** सामर्थ्याद्दर्शित[1]मेव । तर्हि किमर्थं पुनरुक्तमित्याह–**विपञ्चनार्थं त्वि**[११७.१२]ति **तुः** पूर्वस्मादस्य कथनस्य विशेषं दर्शयति।

**आध्यात्मिकेषु** [११७.१५]आन्तरेषु । पश्चाद्बाह्येपि दर्शयितव्यत्वात् क्रमे **तावच्छब्दमाह** । **शक्यपरिच्छेदं** [११७.१५] विशिष्टकार्यकारणतया परिच्छेतुं शक्यम्।

[1]**साक्षाद्**व्यवधानेन विज्ञानकार्यकारिणः **प्रत्ययाद्**धेतोः । [5]तस्य जनने–**व्यवधानादिप्रतिपत्तौ** व्यवधानादिस्वीकारे, कथं तादृशो न भवतीत्याह **अन्यादृशादिति** । अन्यादृशाद्धि भवन्नन्यादृशस्यापि हेतोर्हेतुव्यपदेशसंभवाज्जननहेतुरित्याह । कथं तद्धेतुरित्याह **तदिति** **तत्सहकारिभिः** परस्परोपसर्पणाद्याश्रयहेतुसहकारिभिरिन्द्रियादिभिः । [6]**समर्थ**श्च तद्विज्ञानजनने **स्वस्वक्षणांतरं** चेति तथा **तस्यारम्भात्** । अनेन परस्परोपसर्पणाद्याश्रयप्रत्ययविशेषेन्द्रियादिकलापस्य साक्षाद्विज्ञानहेतोर्हेतुत्वं दर्शितम्। एतच्चानन्तरमेव स्पष्टयिष्यते । इदं चाक्षेपवर्ती सामग्रीमभिप्रेत्योक्तं द्रष्टव्यम्। कथमन्यथाभावस्या'संभव इति आह **परस्परेति** । **विज्ञाननिर्माणसमर्थाश्च ते हेतवश्च ते च ते इन्द्रियादयश्च** तेषा**मुपादानैः** । **समर्थहेत्विन्द्रियादेर्जननं** तस्मात्। अनन्तरोक्तस्पष्टीकरणं चैतद् द्रष्टव्यम्।

सुखसंवर्धितत्वादिति व्याचक्षाणो मूले **सुखैधित** इत्यस्या**नभियोग**निमित्तस्यापि सामर्थ्यात्**क्रीडन**[११९.१२]शील इत्यस्य हेतुभावेन [6]विशेषणत्वं दर्शयति। ननु कृतं निष्पादितमुच्यतेऽत्र च किमाचार्येण निष्पादितमित्याशंकां निराकुर्वन्नाह **कृतमि**[११९.१४]ति । **न पुनरे**[११९.१५]वमाचक्षाणेन द्विरुक्ताभावो दर्शित इति बोद्धव्यम्। अस्यार्थस्यासकृदुक्तत्वात् एकवारं प्रतिविहिते पुनः प्रतिविधापयितरि अवज्ञासंभवेनोपहासायोगाच्च कृतं कृतमिति निर्देशस्य न्या[४१०]'य्यप्राप्तत्वादतिप्रसिद्धत्वाच्चेति । ननु किं कुर्वन्तं कर्तुं प्रयुङ्क्ते पुनः पूर्वपक्षवादी येन पुनः पूर्वपक्षवादी कारयतीत्युच्यत इत्याह–**पुनरि**त्यादि । **निर्लोठितं** [११९.१७] निरूपितं निर्णीतमिति यावत् ।

पूर्ववन्मीमांसकाभिप्रायेण **सामर्थ्यं सहकारिभ्यो जायत** [११९.२५] इत्याचष्टे । **सामर्थ्यस्यो**[१२०.६]**त्पत्तिः तद्गतोऽनुत्पत्तिः** [१२०.७]।

---

१. S प्रतिरत्र त्रुटिता।

सम्प्रति प्रकारान्तरेणापि प्रत्यभिज्ञाया अप्रामाण्यं परमभ्युपगमयितुं भूमिकां रचयन्नाह—**व्यवस्थितस्यैवे**[१२०.१२]ति । अयं चात्राभिप्रायः—भवतु यावद्बीजादावुच्छूनोच्छूनतरादिविशेषस्य दर्शनात् सामर्थ्योत्पादादिकल्पना न पुनरिह तथा अदर्शनादिति । **व्यवस्थितस्या**न्यत्वमनापन्नस्य । **सामर्थ्यं** [१२०.१३] विज्ञानोत्पादादिसामर्थ्यम् ।

**अप्रतिभासमानो विवेको** [१२०.१४] यस्य पुं[3]सः स तथा ।

यद्यपि विवेकोऽस्य प्रत्यक्षतो नावगम्यते तथाप्येतस्मात्प्रमाणात् तत्स्वभावस्य सामर्थ्यस्योत्पत्तिः कल्प्यत इति दर्शयन्नाह परः **विज्ञानादी**[१२०.१५]ति । **अनुत्पत्तिप्रसंगात् प्रागस**त्सामर्थ्यं **चक्षुरादिसन्निधा**वुत्पद्यत इति **निश्चयः** । क्रमिणां विज्ञानादिकार्याणां **यौगपद्योदयप्रसङ्गात्** [१२०.१५] । [4]तच्च **क्रमवदि**ति निश्चयः ।

**यद्येवमि**[१२०.१७]ति सिद्धान्ती । **अविकृतमे**[१२०.१७]करूपम् । **अपूर्वसामर्थ्य**स्य यः **प्रतिभास** आकारस्तेन **विविक्तो** रहितो य **उपला**दिस्त**दा**[**थ**]**हि** । यत एवैवं तत एवाविकृतमिति च द्रष्टव्यम् । अनवकॢप्तिख्यापनार्थो **वा**[१२०.१९]शब्दः ।

अभ्युपगम्यतामेवं का क्षतिरित्याह **तथेति** तद्वत् । [5]**सामर्थ्यमि**[१२०.२९]त्यागन्तुकं सामर्थ्यमित्यवसातव्यम् । द्विविधं हि सामर्थ्यं प्रातिस्विकमागन्तुकञ्च । प्रातिस्विकी च शक्तिरवश्यैषितव्या । अन्यथा शिलाशकलमपि क्षित्यादिसान्निध्ये बीजवदंकुरं कस्मान्न निव(र्व)र्तयतीति पर्यनुयोगे किमुत्तरं वाच्यमिति हि तेषां मतम् ।

ननु सामर्थ्यमतिशयलक्षणं सहकार्यधेयं ततोऽन्यदेव तत्क[6]थं 'सहकारिप्रत्यय-[सान्निध्य]लक्षणस्ये'त्युच्यत इत्याह **अत**[1] **एवे**[१२१.२]ति । प्रत्यासत्तिलक्षणस्य सान्निध्यस्य तेभ्यः सन्निहितेभ्योऽन्यस्यानुपपत्तेः । सान्निध्यशब्दपरित्यागेन सहकारिप्रत्ययलक्षणस्येति ते एवेत्याद्यप्युक्तं द्रष्टव्यम् । अत **एवाभ्युपगमादि**[१२.३]ति उपागताभ्युपगमादि[7]ति प्रत्येतव्यम् । एवमिच्छ[2]**ता**[१२१.६] **क्षणि**[3]**क**तैवेत्यभिसंवन्धनीयम् ।

यच्छब्दस्यैतद् व्याख्यानं **यस्मादि**[१२१.२१]ति । इदं शब्दस्य **चैतदि**ति एतद्**दर्शनम्** [१२१.२१] । अनुत्तरस्यैवोत्तरीकरणा**दुत्तरीकृतमि**[१२१.२४]त्युक्तम् । एवं नियुञ्जानमहो महासामर्थ्यमस्तु का तवाक्षमेत्याशंक्य यदि नामेत्यवतारयितुं **न चात्र** [१२१.२५]त्याद्याह । न चात्र **मे काचिदक्षमा** [१२१.२५] **किंत्वितीद**मस्माकं **चिन्ता चित्तं दुनोती**[१२२.२]ति सम्ब[8]न्धः । **न चात्र मे** [१२१.२५] इत्यनेन टीकाकारवचनेनैकवाक्यीकरणपक्षेत्य(प्य)स्माकं इति "अस्मदो द्वयोश्च" (पा. १-२-५९)

१. तत एव S २. इच्छतो S ३. क्षणिकतैवै० S

इत्यनेनैकस्मिन्नेवार्थे बहुवचनेन द्रष्टव्यम् । एवमसंबद्धवादिन्यपूज्य एव **पूजावच**नमुपसंहारपरं द्रष्टव्यम् । **दैन्योद्भावनमि**[१२२.१]त्यर्थात्संबोध्यमानस्य दैन्यप्रकाशनमिति । निकृष्टसम्बोधनेऽयं **हन्तः** [१२२.१] शब्द इति यावत्। **ततो**ऽप्र[50a][1]सवधर्मकत्वात् । **अपेतो**ऽपगतः **संतानः** [१२२.२] प्रसूतिः परंपरा यस्य तथोक्तम् । **इतिना** [१२२.३] चिन्तारूपमुपदर्शितम् ।

शिरःकम्पे चास्य **सत्यमिदमस्ती**[१२२.१०]त्यस्य शब्दस्य प्रयोगमाकलय्य प्रयोक्तुरभिप्रायं वर्णयन्**पृच्छती**[१२२.१३]त्याचष्टे। अत एव चेदमाह–किं त्वयास्तित्वेन पृच्छ्यत इति पार्श्वस्थं प्रश्नयन्नाह **किं तदि**[१२२.१३]ति । **इति** हेतोराहार्य इति प्र[2]करणात् । **औदासीन्यापत्तिरित्य**त्रेति शब्देन **इदमा**स्तित्वेनाभिप्रेतस्य **न्याय्यवचन**[१२२.१७]स्याकारो दर्शितः । अत एव न्याय्यवचनस्यास्तित्वेन दर्श्यमानस्य रूपं दर्शयन् **सत्यमिदमप्यस्ती**[१२२.१६]ति पुनराह । यद्येवमस्य न्याय्यवचनस्य सद्भावादनवद्यमेवास्मन्मतमित्याशं[3]क्याह **किंत्वि**[१२२.१७]ति । केवल**मिदं** [१२२.१७] वक्षमाणं **प्रष्टव्योसि** ।

प्रच्युतमजनकं रूपमुत्पन्नं जनकं रूपं द्वन्द्वैकवद्भावमभिप्रेत्य प्रच्युतोत**पन्नमि**त्याह–अप्रच्युतो(ता)नुत्पन्नत्वेनैव च **स्थिरैकस्वभाव**[१२३.८]त्वं ज्ञेयम् ।

**तद्भेदेऽपि** [१२३.१९] जनकाजनकभेदेपि । **तस्य** [१२३.२०] भावभेदस्य । **अपरापेक्षस्वभावभेदलक्षणत्वादि**[१२३.२०]ति परा[4]पेक्षो यः स्वभावभेदो न भवति स्वत एव यो भावभेदलक्षणत्वादिति । भवत इदं **भावत्कम्** [१२३.२१]। **आधीयते** [१२३.२६] अधिक्रियते नियुज्यते वा । स्वरूपेण कर्तृत्वे विवक्षितस्यापि ताद्रूप्य प्रसज्येतेत्यभिप्रायेणाह **ए[1]षामपि पररूपेण कर्तृत्व** [१२४.१] इति । **पररूपेण कर्तृत्वे** इति पर एव कर्ता स्यात्। तस्य तु तथात्वे[5] हरीतकीं प्राप्य देवता रेचयन्तीत्यनेन तुल्यं स्यादित्यभिप्रेत्याह–**पररूपेणाप्यकारकत्वादि**[१२४.२]ति। **अस्योत्तरस्य** [१२४.५] 'सहितस्तत्स्वभावो न केवल' इत्यस्य। प्रकृतमुपसंहरन्नाह–**तस्मादि**[१२४.१०]ति। **कथञ्चित्के**[१२४.१०]नापि प्रकारेण न **कार्यक्रियाया विरामः**। पुरस्तादपि तस्य स्वरूपस्य भावादिति भावः ।

'स्यादेतज्जनकमस्य रूपमवस्थितं जनकञ्च तदुच्यते यस्मिन् सत्येव कार्यमस्ति न तु यस्मिन्सति कार्यं भवत्येव. सति भावस्याक(का)रणसाधारणत्वात् । कार्यमपि तद्भा(तदभा)

१. तेषामपि° S

वे नोपपद्येत इत्येव तस्य कार्यं, तद्भावे तु भवत्यवश्यमिति को(क्वो)पयोगोऽस्य। तस्मात्कथं तद्रूपभावेपि कार्यक्रिया[7]प्रसंजनं ज्याय इति ।

अत्रोच्यते अक्षणिकत्वेनाप्रच्युतानुत्पन्नरूपान्तरे सर्वावस्थासमानेऽपि कारणे यदि कार्यं नोपजायते तर्हि तत्स्वतन्त्रमापद्येत। तथा च न तत्तस्य कार्यं स्यात्। तदवादि वार्तिकालंकारे प्रज्ञाकरगुप्तेन—

"सर्वावस्थासमानेऽपि कारणे यद्यकार्यता ।
स्वतन्त्रं कार्यमेव स्यान्न [ तत् ]कार्यं तथा [8]सति ॥ " इति ।

कारणपारतन्त्र्ये च तत्कारणं तत्कार्यं हठादेव जनयेत्। तथाप्यभावे न तस्य कार्यं स्यात्। तस्माद[कारणात्] कारणस्य विशेषः कार्यस्यावश्यंभाव एवावश्यञ्च वक्तव्यः ।

ननु 'तद्भा(तदभा)वे न भवति कार्यमि'त्यकारणादस्य विशेषः। न हि तस्याकारणस्याभावे तत्कार्यं न भवतीति; हन्त कुत एतदवगम्यते तद[50b][1]भावप्रयुक्तोऽस्याभाव इति । यदि हि तद्भा(तदभा)वस्याभावे तद्भावलक्षणे कार्याभावस्याभावः कार्यभावलक्षणः स्यात्तदा तदभावप्रयुक्तोऽस्याभावः सिद्ध्येदितरथाऽकारणाभिमताभावप्रयुक्तोऽपि तदभावः किं न कल्प्यते? [1]तदभावेपि कार्याभावस्य भावान्न तदभावप्रयुक्तताऽस्येति चेत्, समानमिदं कारणाभिमतेपि। तस्माद्यथा [2]तदवस्थ एव कारणे स्वयमेव कार्यं न भवति स्वातन्त्र्यात्, तथा तदभावोऽपि स्वयमेव न भविष्यतीति स्वातन्त्र्यादेव। यश्च स्वयमेव न भवति नासौ नियम्यते तेन परतन्त्रत्वे तस्य कारणस्य भावेऽवश्यमेव भवेत्। तदाऽऽह अलङ्कारकारः

" [2]तद्भावेपि न भावश्चेदभावे भाविता कुतः ।
तदभावप्रयुक्तोऽस्य सोऽभाव इति [3]तत्कुतः ॥" इति ।

तस्मात्तद्भावे भावस्तदभावे चाभाव इति विशेषितः कार्यकारणभावोऽवश्यं भवतीति ज्ञापयति। तथा च कारणे सत्यवश्यंभावि कार्यमायातमिति कथं कदाचित्क्रियाविरामः।

किञ्च तथाविधो हि कार्याभावो निर्हेतुकत्वात्स्वयमेव भवतीति युक्तमपि। भावस्तु हेतुपरतन्त्रत्वात्स[4]मर्थे हेतौ न भवतीति न युक्तम्। तदुक्तम्

" अभावो हि पदार्थानां स्वयमेव भवेदपि ।
भावस्तु परतन्त्रत्वात्कथं हेतोर्भवेन्न सः ॥" इति !

---

१. अकारणाभिमताभावाभावेऽपि इत्यर्थः । २. प्रमाणवा० अलं. पृ. ७४.

ननु कार्याभावस्य स्वतन्त्रत्वात् 'कारणे सत्येव न भवती'ति युक्तमेवैतत्। एवं तर्हि न कारणाभाव प्रयुक्तोऽभाव इति कथं भवेत् कार्यस्य(कार्ये[1]मस्य) ततः स्वयमे[5]व न भवति, यश्च स्वयमेव न भवति नासौ तेन नियन्तुं शक्यः। ततो यथा स्वयं न भवति तथा भवेदपि। ततो न तस्य कार्यम्। यदा तु कारणे सति भवेदेव तदा स्वरसनिरोधेप्यपरापरक्षणोत्पत्तेस्तदभाव एव संतानोच्छेदस्तदभाव एव च संतानाक्षेपक्षणानारम्भो वा सु[6]ज्ञात(न) इति कारणप्रतिबद्धत्वं सिद्ध्यति।

एतेन तदपि निरस्तम् यदाहुरेके यथोभयाधीननिरूपणा व्याप्तिरयोगव्यवच्छेदेन व्यापके निरूप्यते व्याप्ये सति भाव एव व्यापकस्य नाभाव इति; व्याप्यस्य पुनरन्ययोगव्यवच्छेदेन व्यापक एव भावो व्याप्यस्य नान्यत्रेति। एवं कार्य[7]कारणभावोऽप्युभयाधीननिरूपणोपि कारणेऽयोगव्यवच्छेदेन निरूप्यते, कार्योत्पादस्य पुरस्ताद्भाव एव कारणस्य नाभाव इति; कार्ये पुनरन्ययोगव्यवच्छेदेन कारण एव सति भावो नान्यस्मिन्नित्यनुभवानुसारान्निश्चीयत इति। उक्तया नीत्या तद्भावेऽभवतस्तत्कार्यताया एवाभावप्रसङ्गात् [8]स्वभावेऽभावमत(?)श्चातत कार्यः का(तत्कार्यका)रणतायाः स तु या (?) अभिसंबन्धयत एव चात्र भवतः (?) कारणस्य मुख्यस्यानुभवोऽन्यस्तु तादर्थ्यादुपचरितकारणभावस्यानुभव इति स्वयमुपचरितकारणानुभवरूपत्व एवेति। अपि च यथा कारणे सत्यवश्यं भावमनिच्छता कार्यस्य कादाचित्कादन्वयात्तत्कार[51a][1]णमिष्यते। तथा कादाचित्कादव्यतिरेकादपि किन्न कारणमिष्यते युज्यते वा। तस्मात्कार्यकारणभावं नियतमिच्छता यथा व्याप्तिमान् व्यतिरेक एष्टव्यस्तथा व्याप्तिमानन्व(मानन्व)योप्यवश्यैषितव्योऽन्यथा तयो(तदयो)गादिति।

किं च सहितावस्थायां तावदसौ भावः कार्यं जनयतीतीष्यते। जनयतीति च कोऽर्थः? किं कार्यं[2] सत्तयाऽभिसम्बध्यते किं वाऽभिसंत्स्यते? किञ्चातः? यद्युत्तरः पक्षस्तदा तस्मिञ्जनयति न कदाचित्कार्यं सत्प्रत्ययविषयः स्यात् सत्तया अभिसम्बन्धस्य भावितत्वा(वित्वा)त्। अथान्य(द्य) एवोपगमस्तदा विकल्पद्वयम्, किमनेनैव स्वभावेन पूर्वमयमवस्थितोऽथान्येन। न तावदन्येन, एकस्य रूपद्वयायोगात्। [3]अनेनैव स्वभावेनावस्थाने च संप्रतीव तदापि कार्यं सत्तयाऽभिसम्बध्यत इत्युपेतं स्यात्। तथा च प्रकृतक्ष(क्ष)तिरिति किमन्धानाभिनिवेशेनेति। अथ भवतोऽपि किमिदं कारणत्वं? किं प्राग्भाव एव किं वा प्रागेव भावः? यदि प्राग्भाव एव, तदा स्थिरस्यापि एवमेव कारणत्वे तु 'साधितम्' निराकरणं प्रसज्येत। अथ प्रागेव भावः, तदेतत्क्षणिकत्वे सिद्धे सिद्ध्यति। तदेव तु न सिद्धमिति

१. 'कार्यमस्य' प्रमाणवा. स्वं. पृ. ७१. २. अत्र स्वलाधितस्य इत्यपि दृश्यते।

कथमिदमुच्यमानं शोभेतेति। आस्तां प्राग्भाव एव कारणत्वं को बाधः ? ननूक्तमेवाक्षणिकस्यापि कारणत्वे साधयितुं शक्ये तदनिराकृतिरेव महती बाधेति चेति। हन्त किं [5]हेतुरूपस्य लक्षणेनाक्षणिकस्य सत्त्वं तथागतैर्निराक्रियते येनेदमपि वक्तुमध्यवसितास्तर्कविदः कथं नामेति चेत्। उच्यते। प्राग्भाव एवासौ स्थिररूपात्क्रमाक्रमाख्यस्य व्यापकस्य निवृत्त्या निवर्तते। यथा च तस्य ताभ्यां व्याप्तिर्यथा च ततस्तयोर्निवृत्तिस्तथाऽन्यत्र निर्णीतमिति ने[6]ह हेतुलक्षणकालेऽप्रकृतत्वादुच्यते। अथ तदेव न संगच्छते। तर्हि तदेवोच्यताम्। न तु हेतुलक्षणेन तस्या निराकृतिरिति। अलमतार्किकवचनेनातिनिर्बन्धेनेति।

**न हि स सामी(ही)[त्य]इत्ये**[१२३.२१]केन प्रकारेण व्याख्यायापरेणापि प्रकारेण व्याख्यातुम् **अथवे**[१२४.१०]त्यादिनोपक्रमते। [1]**अस्या** [१२४.१०]अपेक्षा[7]याः।

ननूक्तमेव प्रत्ययान्तरापेक्षस्वकार्यजननस्वभावो भावस्तत्कथं प्रत्ययान्तरसाहित्यदशायाः पूर्वं कुर्यादित्याह **प्रत्ययान्तरे**[१२४.१९]ति। **तदतत्कालयोः** [१२४.२३] सहकारिसाहित्यासाहित्यकालयोः। केचित्पुनः 'स्वहेतुभिरेवायं प्रत्ययान्तरसापेक्षकार्यजननस्वभावो जनित [१२४.११]' इत्यत्रैव विपञ्च्यते। [8]यद्येवंधर्मोऽयं स्वहेतुभिरेव जनितः स्यात्तदा न कदाचिज्जनयेत्। तथा हि यावत् सहकारिप्रत्ययसन्निधिकालस्तावदकरणधर्मासौ भावोऽन्यथाऽस्य पूर्वमपि कर्तृत्वं प्रसज्येत। प्रत्ययान्तरसन्निधिकाले च स एव कियत्कालाकरणस्वभावो यः प्रथमे क्षण आसीत्। ततो नैव कुर्यात् कि[51b][1]यत्कालाकरणधर्मत्वात्तस्य क्रियायात् (क्रियायांतु) स एव स्वभावो न भवेत्। यद्वा तावत्कालापेक्षजनकस्य स्वभावस्यानुवृत्तेस्तादात्म्यः(म्ये) तावत्कालमक्रिय एव। पुनरन्ते तथैवेति कथमिवाक्षणिकः कदाचिदपि जनयेत्। तस्मान्न प्रत्ययान्तरापेक्षजनकस्वभावो भावः स्वहेतुभिर्जन्यत इति। तथा चाह–

" तत्सहकारिसापेक्ष[2]जनको यदि हेतुभिः।
भावः स्याज्जनितो नासौ किंचिज्जनयेत्तदा ॥
तथाहि सन्निधीयन्ते यावत्ते सहकारिणः।
तावन्नूनमकर्ताऽसौ स्वभावस्तस्य वस्तुनः ॥
एषितव्योऽन्यथा पूर्वं तत्कर्तृत्वप्रसङ्गतः।
तत्सन्निधानकाले च स्वभावोऽस्य (?) वर्तते ॥
तन्न कुर्यात्क्रियायाम्वा स्वभावोस्य नो भवेत (?)।

यद्वा

१. अस्य S

तावत्समयसापे[3]क्षजनकस्यानुवृत्तितः ॥
स्वभावस्य तथाप्येष तावत्कालमसत्क्रियः ।
पुनरन्ते तथैवेति कुर्यादक्षणिकः कथम् ? ॥ " इति ।

**उपगतोऽन्त्यो** [१२५.९] यस्य स तथोक्तः। **प्रस[1]ज्येत्** [१२६.२२] यस्य निपातस्यार्थकथनं **हठादि**[१२६.२२]ति ।

**सुतराम**[१२७.१५]तिशयेन।

सन्तानमप्याश्रित्य कथमुच्यत इत्याह–**पूर्वोत्तरेति**[१२८.८]। किं लक्षणं नाम वस्तु[4]तत्तत्र सहकारित्वमित्याह-**पूर्वक्षणेभ्यस्त्व**[१२८.१०]ति। **तस्य** [१२८.१४] विशेषस्य ।

**तत्समानकाल[3]कारणक्षणः** [१३०.४]। प्र[4]यातुर(?)समानकालकारणक्षणः । **एकत्वेनाधिमुक्तस्य** [१३०.६] तदेवेदमिति निश्चितस्य ।

**उपनिपतन्तीति उपनिपातास्ते च क्षणाः** [१३०.१३] तथा **क्षणो** यतोऽन्यो नास्ति कालः सोवच्छेदकत्वेनैषां विद्यत [5]इति ' [5]अर्ष आदि'त्येनद्विधातव्यः । तेनैकक्षणिकस्थायीनि वस्तुरूपाणीत्यर्थः । एवमन्यत्राप्येवंविधे प्रयोगे ज्ञेयम्। **स्वरसतः** [१३०.१०] स्वानुरागान्नाशो(न्)मुखत्वादिति यावत् । प्रकरणात्**कार्योत्पादं प्रत्यनुगुणत्वं** [१३०.१५] प्रत्येयम् । **क्षेपवती** [१३०.१९] कालविलम्बवती ।

तदनासादनमेव कथमित्याह–**क्षणानामि**[१३०.२७]ति[6]। अयं निरतिशयोऽयं च सातिशय इति विवेकस्याभावात् । **कार्योत्पादानुगुणमा**[१३०.२८]यमित्यर्थात् ।

यदुक्तमक्षणिके **तत्सर्वं क्षणिकेष्वपि समं यत**[१३१.१०] इति । **तेषां** [१३१.१२] क्षणिकानाम् । यद्वा **क्षणानामि**[१३१.१३]तीदमुभयत्रापि सम्बन्धनीयम्। पूर्वं स्वदेशस्थित्या ता(ते) एव **परस्परतः समुत्पन्नविशेषाः सन्निधीयन्ते** [१३१.१५] प्रत्यासीदन्ति । दूरदेशवर्तिनां कथं हेतुफलभावप्रतिनियम इत्याशंकायां न्यायमुपदर्शयन्नाह **येन यस्याभी**[१३१.१६]ति येन दूरस्थितसहकारिकृतेन विशेषेण सविशेषा एव संनिधीयन्त इतीष्यते। **तस्य** विशेष**स्योत्पत्तावपि**[१३१.२२]।

---

१. प्रसज्ज S।
२. पूर्वपूर्वक्षणे S।
३. तत्समानकालः S
४. प्रदातुर इत्यपि पठ्यते।
५. पाणिनीयसूत्रे तु ' अर्ष आदिभ्योऽच् (५-२-१२७) इति वर्तते। किन्तु टीकेन अन्यदेव किञ्चिद् उद्धृतं भाति। तथा च अत्र ' अर्ष आदिभ्योऽदित्यनेनाद् विधातव्यः ' इति पाठः सम्यक् सम्भाव्यते।

नवै कार्योत्पादने योग्यास्तेऽस्माभिरिष्यन्ते किं तर्हि कार्योत्पादानुगुणस्योत्पा[8]दने तत्कथं तदुपायेत्याद्युच्यमानं शोभेतेत्याशंक्याह **यदि हि** [१३२.५] इति ।

**भङ्ग्या** [१३२.२०] वक्रोक्त्या । किं **पुन**[१३२.२२]र्हि द्विस्त्रिर्वा ब्रूमः । किं तर्हि शतश एव ब्रूम इत्यर्थः । संप्रत्येवमेव व्याख्यानस्य निरवद्यतया पूर्वटीकाकृतः कटाक्षयन्नाह- **एवमि**[१३२.२३]ति । **ये** [१३२.२५] टीकाकृतः । न विशेषोत्पादनादेवेत्यादि-ग्रन्थस्य पुनरुक्ततापरि[52a][1]हारार्थं **यतन्ते** यत्नं कुर्वन्ति । **हन्ते**[१३२.२६]ति निपातो नामन्त्रणमात्रे । **तदभावा**[१३३.२]द्विशेषोत्पादाभावात् ।

न सर्वदाऽपरापरयोगोस्य संभवति येनास्य तन्निबन्धनो विशेषः कल्प्यत इत्याह **नहो**-[१३३.२२]ति । **एकमेवा**[१३३.२२]सहायमेव । छायापि शीताद्यर्थक्रियाकारिणी वस्त्वेव त्वना(न त्वा)लोकाभावमात्रमितिच्छा[1]योद्धता (?) । न तु प्रतिक्षणमित्यादिना एक-देवार्थस्योक्तत्वात्कथं द्विः पुनर्ग्रहणं कृतमित्याह **क्षणिकोष्वि**[१३३.२९]ति । **द्वि**-[१३४.२]र्द्वौ वारौ 'द्वित्रिचतुर्भ्यः सुच्' इति । ( पा. ५-४-१८ ) सुचकेनोक्तमित्याह **तत्र स्वरसत** [१३४.२] इति । तज्जन्मानिमित्तमित्याचक्षाणो मूले निमित्तसप्तमीं दर्शयति ।

**परस्परोपसर्पणाद्याश्रयादेव प्रत्ययविशेषादि**[१३६.२३]ति जन्मन्य-परस्परसंपृक्तलक्षणव्यवधानेनेति द्रष्टव्यम् । [3]अन्यथा वक्ष्यमाणविरोधः स्यात् । यस्मिन्कार्ये कर्तव्येऽ**नुकूलो**ऽनुगुणः स चासौ **विशेष**श्चेति तथा **आसादित**-स्त**दनुकूलो विशेषो** यैस्ते तथा तैः [१३६.२८] ।

अथ केन ग्रन्थेन पूर्वमनवस्थोक्ता कथं च स्यादिति पार्श्वस्थवचनमाशंक्य तं प्रागुक्तं ग्रन्थं तस्य चार्थं दर्शयन्नाह **अथे**[१३७.१]त्यादि । कथं [4]सा न भवतीत्याह **तस्ये**-[१३७.४]ति । कुशूलाद्यवस्थमपि बीजं क्षित्यादिना कृतविशेषं क्षित्यादिकमपि तेन कृतविशेषमेवोपतिष्ठत इत्यस्य **प्रक**[2]**रण(कार)स्यानभ्युपगमात्** [१३७.४] किं नामाभ्युपेतामत्याह **पुरुष**[१३७.५]त्यादि । पूर्ववत्**प्रकिरण**[१३७.५]शब्दो द्रष्टव्यः । **कार्योत्पादानुगुणो**ऽयमाद्यो विशेषः **संपर्कक्षणा**[5]नन्तरक्षणरूपस्तज्जनकस्य धर्म-शब्दादनिचं विधातुं व्युत्पत्तिं दर्शयन्नाह **अक्षेपणे**[१३७.१४]ति । **कार्यतामननु**-**भवत** [१३७.२७] इति तत्कार्यतां चेति द्रष्टव्यमितरथा अन्त्यावस्थाप्राप्तेरवी(प्राप्तेन बी)जादिना अनेकान्तः स्यात् ।

१. योद्धता (?) इत्यपि पठ्यते । २. प्रकारस्यानभ्युपगमात् S

**बाहुल्येनेति** विवृण्वन् **प्रायः**[१३७.२८]शब्दं निपातं दर्शयति **बाहुल्ये-नेत्यस्यार्थे** वर्तमानम् । [6]अथ येन न्यायेन क्षणिकस्यैकार्थक्रियया सहकारित्वसंभवस्तेना-क्षणिकस्यापि भविष्यति तत्कथमेवं विभज्यत इति आह **तत्सम्भविन**[१३८.२] इति ।

स्वभावान्तरोत्पत्तिरपि विरुद्धा कस्मात्कल्प्यत इत्याह **प्रागकारकस्ये**[१३८.३]ति । कथं न विरुध्यत इत्याह **तस्यैव ही**[१३८.४]ति । तर्हि पूर्वस्वभावस्य कथमु(म)-[7]पनय इत्याह—**तत्रे**[१३८.६]ति ।

[1]तत्स्वभावतैव ।

**किमिती**[१३८.१५]ति निपातानिपातसमुदायः कस्मादित्यस्यार्थे वर्तते । **मुधे**-[१३८.१५]त्ययमपि निपातो वृथेत्यस्यार्थे ।

**तानि**[१३८.१५] प्रत्ययान्तराणि ।

सम्प्रति व्याख्यातप्रबन्धस्य संभवप्रस्तुताभिधानसंगतिं दर्शयन्नाह **तदेवमि**[१३८.१७]-ति । **अनेकान्तपरिहारायोक्तमस्ये(क्तस्ये)**[१३८.२०]ति 'तत्स्वभावस्य जननादि'त्यस्य [8]**प्रसंगात्प्रस्तावादागतं प्रासंगिकं** [१३८.२३] कार्यं यथेष्टम् अविनाशं हेतु(ष्टम् विनाशहेतु)नैव निवृत्तिः क्रियत इत्याह **विनाशहेतो**[१३९.२७]रिति । **मुद्गरादेः** [१३९.२८] सकाशात्. **वस्त्वन्तरस्य**[१३९.२९] प्रध्वंस-लक्षणस्य **भावे** ।

**व्यवस्थितरूपस्य** [१४०.५] प्राच्येनैव रूपेण वर्तमानस्य ।

ननु यदि स्वरसनिरुद्धात्ताम्रादेरुपादानकारणाद्वह्न्यादेश्च सहकारि[52b][1]कारणाद् अन्यस्यैव द्रवादिरूपस्य ताम्रादेरुत्पत्तिरिहाचार्येणोपगम्यते—तर्हि प्रमाणवार्तिकेऽनेनैव यदवादि—

"सहकारात्सहस्थानाशंका अशिताग्र(स्थानमश्रिताग्र)मदत्ववत्" (प्रमाणवा० १.६.१)

इति तद्विरुध्येत । शक्यते हि तत्रापीदं वक्तुमुपादानात्तस्मात् तन्मात्र सहकारिका-रणादन्यदेव तत्प्रोत्पन्नम् । न त्वभिन्नाग्रमदत्वं सह तिष्ठत इति चेत् । सत्यम्, यथाश्रुति स्याद्विरोधो यथा त्वविरोधस्तथास्माभिर्विरोधाख्याने ख्यापितमिति तत एवानुगन्तव्यमिति ।

---

१. इदं 'असौ' (१३८.१९) इत्यस्य सर्थजदनं नास्ति ।

**अस्थितिस्वभावो**ऽ[१४०.१९]स्थितिस्वरूपो धर्मः पराश्रितत्वात्। तस्योत्**पत्तिः। नतो**[१४०.१९]ऽस्थिररूपाद्धर्माद्विनाशहेतुसमुद्भूतात्। **इति**[१४०.१९]रुच्यमानस्याकारं दर्शयति। पर एव प्रश्नयन्नाह—**कथं ज्ञायत** [१४०.२२] इति। **अवस्थानात्** [१४०.२४] तस्य विनाशस्य काष्ठादेरि[3]ति प्रकरणात्। तथापि तस्य तथात्वम् कथमित्याशंक्य पर एवाह **यदी**[१४०.२४]ति। **तदसंभवेपि** [१४०.२५] विनाशहेत्वग्न्याद्यभावेपि। तर्हि न निवर्तेतैवेत्याशंक्य स एवाह **तस्य स्वभावेने**[१४०.२५]-त्यादि। **यत्तुत**[१४०.२६] यदेतत्। यत्तस्मात्तस्य विनाशो भवतीति ब्रुवता परकार्यत्वं तस्य कथितं भवतीत्याशंक्य स एवाह **परस्मा**[4]**दि**[१४०.२७]ति। उक्तमेवार्थमुपसंहारव्याजेन स्फुटयन्नाह **स्वहेतुभिरेवायमि**[१४०.२८]ति। अत्र मीमांसकस्य सहायकं दर्शयन्नाह—**तदुक्तमि**[१४१.२]ति। **येन** स्वभावेन **विरोधिनं** [१४१.४] **अपेक्ष्य निवर्तन** [१४१.३] इति योज्यम्। **अन्येषां** क्षणिकवादिनां **मुद्गरादिकम**[१४१.४]पेक्ष्य निवर्तत इति सम्बन्द्धव्यम्।

**भावच्युति**[१४१.८]र्भावस्याभावः प्रसज्य[5]प्रतिषेध इत्यर्थः, अवधारणेनान्यस्य विरामः। साऽपि कथमहेतुरित्याह—**तस्याश्चे**[१४१.९]ति। यदि सा भवित्री कथमहेतुका भवेदित्याशंक्य स एवाह—**नही**[१४१.९]ति। को नामास्य भावितस्यार्थ इत्याह **केवलमि**[१४१.१०]ति।

**इदमनन्तरो**क्तमुत्तरं कर्तृ **विकल्पद्वयं कर्म नातिक्रामति** [१४१.१२]। **नित्यविकल्पस्यावकाशो** [१४१.१४] नास्ती[6]ति ब्रुवतोऽयमाशयः। स हि नित्य उच्यते यो नैव विनश्यति न चायं तथोपगत इति। **ने**[१४१.१५]ति सिद्धान्ती। **तदुपगमेपि** [१४१.१५] कालान्तरस्थितिधर्मतोपगमेपि। **संवत्सर** [१४१.१६] इति "कालाध्वनोरत्यन्तसंयोग" (पा.२-३-५) इति द्वितीया। **सम्वत्सरं** व्याप्य **स्थित** [१४१.१८] इत्यर्थः। यद्येकादिवसावति(सेऽति)क्रान्ते सत्येकदिवसा(स)न्यूनस[2]म्वत्सरे स्थितिधर्मा स्यात् तदानयोः स्वभावयोर्विरुद्धधर्माध्यासेन भेद एव भवेदित्यभिप्रायेण **स एव तदन्तेपी**[१४१.१८]त्याह। ये(ते)नैव न्यायेन द्वित्रिक्षणस्थितिधर्मोत्पा[8]दावगमेपि नित्यतोपगमोऽवगन्तव्यः। **अनेन** [१४१.२७] अक्षणिकवादिना। **पूर्वोक्तेन** [१४२.३] 'तदन्तेपि स एवास्य स्वभाव' इत्यनेन **न्यायेन** युक्त्या **तदयोगा**[१४२.५]न्नाशायोगात्।

**ने**[१४२.९]ति सिद्धान्तवादी। **अत एव** [१४२.९] विरोधिसन्निधानापेक्षत्वादेव **विनाशस्य तन्निबन्धनत्वप्रसंगात्** [१४२.८] अपेक्षणीयविरोधिकारणत्वप्रसक्तेः।

**हेतुभावस्य** [१४२.१०] [53a][1]**हेतुत्वस्यापेक्षा** कार्येणापेक्ष्यमाणधर्मस्यैवापेक्षा सा विवक्षितत्वात् सा **लक्षणं** [१४२.११] यस्य तद्भावस्तत्त्वं तस्मात् । **कः पुनरि**-[१४२.१२]ति सिद्धान्ती। अयं चास्याशयो यदि विनाशोऽन्यथा नोपपद्यते परतश्च न भवति तं चापेक्षत इति प्रमाणसिद्धं स्यात् कल्प्येत वैतत्, यदि परमेतदेव नास्तीति । पूर्वमकिञ्चित्करत्वेन विरोधित्वमुपेत्य तदपेक्षा[2]यां उक्तम्। संप्रति तु विरोधित्वेऽकिञ्चित्करत्वमेव नास्तीति दर्शयन्नाह **कथञ्चे**[१४२.१५]ति। **नाम**[१४२.१६]शब्दोऽसंभावनायामिह ।

**समयः** [१४२.२०] सिद्धान्तः । **तद्भाव एव** [१४२.२७] मुद्गरादिभाव एव । **तेषां** [१४२.२७] कपालादीनां **भावात्** उत्पादात् । यथा तद्भावभावित्वं तेषां तथा दर्शयन्नाह–**वेगवदि**[१४२.२८]ति । कस्मात्संजातातिशय इत्यपेक्षायां योज्यम् **परस्परे**[१४२.२८]त्यादि । [3]कार्यमुखेनोक्त्वा कारणमुखेनाप्याह **तस्य चे**-[१४३.२]ति । **तस्य** वेगवन्मुद्गरादिसहकारिणो घटक्षणस्य ।

**परस्परपरिहाररूपत्वात्** [१४३.१०] परस्परपरिहारस्थितरूपत्वात् । विनाशः कथं तस्य स्वभावो भवितुमर्हति येन एवमुच्यत इत्याह–**विनश्यती**[१४३.१४]ति । भावे विहितो घञ् अ(कु)तो वचनात्क[4]र्तरि भवतीत्याशंक्याह–**बहुलमि**[१४३.१४]ति । " कृत्यल्युटो बहुलम् " ( पा. ३-३-११३ ) इत्यस्माद्वचनादित्यर्थः ।

**विनाशं प्रत्यनपेक्षां** [१४३.२३] **प्रतिपाद्ये**[१४३.२४]ति योज्यम् । **अनपेक्षां** विनंष्टुरित्यर्थात् । कथं प्रतिपाद्येत्याह–**तादि**[१४३.२३]ति । **तद्धेत्वयोगेन** विनाशहेत्वयोगेन। अयोग एव कुत इत्याह–**असामर्थ्ये**[१४३.२४]-ति । **पूर्वाचार्यशब्दे**[5]नाचार्यदिग्नागोऽभिप्रेतः ।

स्यादेतत् तत्र खलु विपर्यये बाधकं प्रमाणमुच्यते यत् साध्यविपर्यये हेतोर्वृत्ति(त्तिं) बाधमानं साध्यसाधनयोः प्रतिबन्धं साधयति । न तु यत्साक्षादेव साध्यं साधयति । इयं चानपेक्षा साक्षादेव क्षणक्षयितां कृतकानां सतां साधयितुं शक्तेति । [6]तथाहि ये यद्भावं प्रत्यनपेक्षास्ते तद्भावनियता यथान्त्या कारणसामग्री स्वकार्योत्पादने । विनाशं प्रत्यनपेक्षाश्चोदयानन्तरमिमे कृतका भावा इति–प्रयोगे कृते कृतकानामेषां क्षणिकता किं न प्रतीयते येन कृतकत्वाद्धेतोस्तत्सिद्धिः प्रार्थ्यते । तस्मादयं मौलो हेतुर्वैयर्थ्यमात्मनः पश्यतै(श्यते)वं विपर्यये बाधकं प्रमाणं साध्यसिद्धौ सहायमपेक्षयितुं क्षमते न क्षमत इति । न वयं भट्टार्चटेन कृतकत्वस्य हेतोरेवंरूपे विपर्यये बाधकप्रमाणे प्रदर्शिते सति

**अस्थितिस्वभावो**ऽ[१४०.१९]स्थितिस्वरूपो धर्मः पराश्रितत्वात्। तस्योत्पत्तिः। **नतो**[१४०.१९]ऽस्थिररूपाद्धर्माद्विनाशहेतुसमुद्भूतात्। **इति**[१४०.१९]रुच्यमानस्याकारं दर्शयति। पर एव प्रश्नयन्नाह–**कथं ज्ञायत** [१४०.२२] इति। **अवस्थानात्** [१४०.२४] तस्य विनाशस्य काष्ठादेरि[3]ति प्रकरणात्। तथापि तस्य तथात्वम् कथमित्याशंक्य पर एवाह **यदी**[१४०.२४]ति। **तदसंभवेपि** [१४०.२५] विनाशहेत्वग्न्याद्यभावेपि। तर्हि न निवर्ततैवेत्याशंक्य स एवाह **तस्य स्वभावेने**[१४०.२५]-त्यादि। **यदुत**[१४०.२६] यदेतत्। यत्तस्मात्तस्य विनाशो भवतीति ब्रुवता परकार्यत्वं तस्य कथितं भवतीत्याशंक्य स एवाह **परस्मा**[4]**दि**[१४०.२७]ति। उक्तमेवार्थमुपसंहारव्याजेन स्फुटयन्नाह **स्वहेतुभिरेवायमि**[१४०.२८]ति। अत्र मीमांसकस्य सहायकं दर्शयन्नाह–**तदुक्तमि**[१४१.२]ति। **येन** स्वभावेन **विरोधिनं** [१४१.४] **अपेक्ष्य निवर्तेन** [१४१.३] इति योज्यम्। **अन्येषां** क्षणिकवादिनां **मुद्गरादिकम**[१४१.४]पेक्ष्य निवर्तेत इति सम्बन्द्धव्यम्।

**भावच्युति**[१४१.८]र्भावस्याभावः प्रसज्य[5]प्रतिषेध इत्यर्थः, अवधारणेनान्यस्य विरामः। साऽपि कथमहेतुरित्याह–**तस्याश्चे**[१४१.९]ति। यदि सा भवित्री कथमहेतुका भवेदित्याशंक्य स एवाह–**नही**[१४१.९]ति। को नामास्य भाषितस्यार्थ इत्याह **केवलमि**[१४१.१०]ति।

**इदमनन्तरो**क्तमुत्तरं कर्तृ **विकल्पद्वयं कर्म नातिक्रामति** [१४१.१२]। **नित्यविकल्पस्यावकाशो** [१४१.१४] नास्ती[6]ति ब्रुवतोऽयमाशयः। स हि नित्य उच्यते यो नैव विनश्यति न चायं तथोपगत इति। **ने**[१४१.१५]ति सिद्धान्ती। **तदुपगमेपि** [१४१.१५] कालान्तरस्थितिधर्मतोपगमेपि। **संवत्सर** [१४१.१६] इति " कालाध्वनोरत्यन्तसंयोग " (पा.२-३-५) इति द्वितीया। **सम्वत्सरं** व्याप्य **स्थित** [१४१.१८] इत्यर्थः। यद्येकदिवसावति(सेऽति)क्रान्ते सत्येकदिवसा(स)न्यूनस[2]म्वत्सरे स्थितिधर्मा स्यात् तदानयोः स्वभावयोर्विरुद्धधर्माध्यासेन भेद एव भवेदित्यभिप्रायेण **स एव तदन्तेपी**[१४१.१८]त्याह। ये(ते)नैव न्यायेन द्वित्रिक्षणस्थितिधर्मोत्पा[8]दावगमेपि नित्यतोपगमोऽवगन्तव्यः। **अनेन** [१४१.२७] अक्षणिकवादिना। **पूर्वोक्तेन** [१४२.३] ' तदन्तेपि स एवास्य स्वभाव' इत्यनेन **न्यायेन** युक्त्या **तदयोगा**[१४२.५]न्नाशायोगात्।

**ने**[१४२.९]ति सिद्धान्तवादी। **अत एव** [१४२.९] विरोधिसन्निधानापेक्षत्वादेव **विनाशस्य तन्निबन्धनत्वप्रसंगात्**[१४२.८] अपेक्षणीयविरोधिकारणत्वप्रसक्तेः।

**हेतुभावस्य** [१४२.१०] [53a][1]हेतुत्वस्या**पेक्षा** कार्येणापेक्ष्यमाणधर्मस्यैवापेक्षा सा विवक्षितत्वात् सा **लक्षणं** [१४२.११] यस्य तद्भावस्तत्त्वं तस्मात् । **कः पुनरि-**[१४२.१२]ति सिद्धान्ती। अयं चास्याशयो यदि विनाशोऽन्यथा नोपपद्यते परतश्च न भवति तं चापेक्षत इति प्रमाणसिद्धं स्यात् कल्प्येत वैतत्, यदि परमेतदेव नास्तीति । पूर्वमकिञ्चित्करत्वेन विरोधित्वमुपेत्य तदपेक्षा[2]यां उक्तम् । संप्रति तु विरोधित्वेऽकिञ्चित्करत्वमेव नास्तीति दर्शयन्नाह **कथञ्चे**[१४२.१५]ति । **नाम**[१४२.१६]शब्दोऽसंभावनायामिह ।

**समयः** [१४२.२०] सिद्धान्तः । **तद्भाव एव** [१४२.२७] मुद्गरादिभाव एव । **तेषां** [१४२.२७] कपालादीनां **भावात्** उत्पादात् । यथा तद्भावभावित्वं तेषां तथा दर्शयन्नाह—**वेगवदि**[१४२.२८]ति । कस्मात्संजातातिशय इत्यपेक्षायां योज्यम् **परस्परे**[१४२.२८]त्यादि । [3]कार्यमुखेनोक्त्वा कारणमुखेनाप्याह **तस्य चे-**[१४३.२]ति । **तस्य** वेगवन्मुद्गरादिसहकारिणो घटक्षणस्य ।

**परस्परपरिहाररूपत्वात्** [१४३.१०] परस्परपरिहारस्थितरूपत्वात् । विनाशः कथं तस्य स्वभावो भवितुमर्हति येन एवमुच्यत इत्याह—**विनश्यती**[१४३.१४]ति । भावे विहितो घञ् अ(कु)तो वचनात्क[4]र्तरि भवतीत्याशंक्याह—**बहुलमि**[१४३.१४]ति । " कृत्यल्युटो बहुलम् " ( पा. ३-३-११३ ) इत्यस्माद्वचनादित्यर्थः ।

**विनाशं प्रत्यनपेक्षां** [१४३.२३] **प्रतिपाद्ये**[१४३.२४]ति योज्यम् । **अनपेक्षां** विनंष्टुरित्यर्थात् । कथं प्रतिपाद्येत्याह—**तादि**[१४३.२३]ति । **तद्धेत्वयोगेन** विनाशहेत्वयोगेन । अयोग एव कुत इत्याह—**असामर्थ्ये**[१४३.२४]ति । **पूर्वाचार्यशब्दे**[5]नाचार्यदिग्नागोऽभिप्रेतः ।

स्यादेतत् तत्र खलु विपर्यये बाधकं प्रमाणमुच्यते यत् साध्यविपर्यये हेतोर्वृत्ति(त्तिं) बाधमानं साध्यसाधनयोः प्रतिबन्धं साधयति । न तु यत्साक्षादेव साध्यं साधयति । इयं चानपेक्षा साक्षादेव क्षणक्षयितां कृतकानां सतां साधयितुं शक्तेति । [6]तथाहि ये यद्भावं प्रत्यनपेक्षास्ते तद्भावनियता यथान्त्या कारणसामग्री स्वकार्योत्पादने । विनाशं प्रत्यनपेक्षाश्चोदयानन्तरमिमे कृतका भावा इति—प्रयोगे कृते कृतकानामेषां क्षणिकता किं न प्रतीयते येन कृतकत्वाद्धेतोस्तत्सिद्धिः प्रार्थ्यते । तस्मादयं मौलो हेतुर्वैयर्थ्यमात्मनः पश्यन्ने(श्यन्ने)वं विपर्यये बाधकं प्रमाणं साध्यसिद्धौ सहायमपेक्षयितुं क्षणमपि न क्षमत इति । न वयं भट्टार्चटेन कृतकत्वस्य हेतोरेवंरूपे विपर्यये बाधकप्रमाणे प्रदर्शिते सति

चैवं गड्डुप्रवेशेऽक्षितारानिर्गमकल्पिते यथाश्रुति सुश्लिष्टं किञ्चिद्वक्तुमीश्महे; केवलं वार्तिककार[8]स्य कृतकत्वहेतोर्व्याप्तिं समर्थयितुं पूर्वाचार्यैः कामनपेक्षां ब्रुवतोयमभिप्रायं (?) प्रकाशयितुं सहामहे । अनपेक्षशब्देन ह्यनपेक्षासूचितं बाधकमभिप्रेतम् । न त्वेतदे(दे)व बाधकं प्रमाणम् । तथाहि कृतकत्वस्योदयानन्तरमविनाशित्वे सति विनाशं प्रति सापेक्षत्वं स्यात् । अन्यथा विनाशयोगात् । विनाशं [53b][1]प्रत्यनपेक्षत्वं तद्धेतुयोगादवगतं तस्य व्यापकम् ततस्तद्व्यापकं स्वविरुद्धविधिना विपक्षात्तद्भावानियतत्वादुदयानन्तरमविनाशित्वलक्षणात् निर्वतमानं स्वयमपि व्याप्यं कृतकत्वमादाय निवर्तेत इति व्याप्तिसिद्धिः । ततश्च व्यापकविरुद्धोपलम्भात्कृतकस्य हेतोर्निवृत्तिरिति व्यापकोपलब्धिविपर्यये बाधकं प्रमाणम्—एत[2]त्सूचनार्थमनपेक्षां(?) बाधकं प्रमाणमस्याभिमतम् । ये यद्भावं प्रत्यनपेक्षा इत्येतदपि यद्यनन्तरोक्तसूचनाद्बाधकं प्रमाणमुच्यते, काममुच्यतां कः प्रतिकूलोऽनुकूलमाचरति । न तु जातु तदेव बाधकं प्रमाणं वक्तुं युक्तम् स्वातन्त्र्येण क्षणिकत्वस्य तेन साधनात् । तदुक्यमाचार्यशान्तरक्षितेन—

"तत्र ये [3]कृतका भावाः सर्वे ते क्षणभङ्गिनः ।
विनाशं प्रति सर्वेषामनपेक्षतयास्थितेः ॥
यद्भावं प्रति यन्नैव हेत्वन्तरमपेक्षते ।
तत्तत्र नियतं ज्ञेयं स्वहेतुभ्यस्तथोदयात् ।
निर्विबन्धा हि सामग्री स्वकार्योत्पादने यथा ।
विनाशं प्रति सर्वेपि निरपेक्षाश्च जन्मिनः ॥" (तत्त्वसं. ३९३-३९९) इत्यादि ।

ये पुनरिमं दो[4]षमुपदर्शितं प्रतिवद[1]न्तो यथाश्रुति बाधकं प्रमाणमिदं समर्थयितुमीशते न तान्वयं [2]विद्मः प्रत्युतोपकारिण एव मन्यामह इति । तर्हि पूर्वाचार्यैरकृतकसतां क्षणिकत्वमुक्तम्, तथा च नित्यत्वमुपेक्षेत(?)मित्याशंक्योपसंहारव्याजेनाह—**तदेवमि**-[१४४.९]त्यादि । अहेतोः स्वभावादिनियमायो[5]गादित्यभिप्रायेणाह **कृ**[3]**तकत्वस्य सतोऽभावादि**[१४४.९]**ति** ।

**सामान्येने**त्यस्य स्पष्टीकरणं **कृतके**[१४४.१५]ति **तत्स्वभावसापेक्षत्वाद्वि**[१४४.२३]नाशिस्वभावसापेक्षत्वात् । **विनाशिस्वभावसापेक्ष**[4]**णादि**[१४४.२४]ति हेतुभावेन विशेषणम् । **इति**[१४४.२५]हेतौ ।

१. 'वहन्तो' इत्यपि पठ्यते । २. अत्र यदि 'द्विष्मः' इति पाठः स्यात् तदा बाढं संगच्छेत् । ३. अकृतकस्य S । ४. सापेक्षाणाम् S ।

**अ[1]नपेक्षाया** [१४४.२५] हेतुभूतायाः स्वतो नस्वतः स्व(नश्वरस्व)भावता तस्या प्र(अ)सि[6]द्धेः हेत्वन्तरव्यापारनिषेधमात्राभिप्रायेण **स्व[2]तो**[१४४.२५]ग्रहणं द्रष्टव्यम् । अभिधानीयमभिधातुमुचित**मिति मन्यमान** [१४४.२७] आचार्य इति प्रकरणात् । **संभावनायां** [१४५.४] न्यायबलायातायामिति द्रष्टव्यम ।

ननु सत्तायोगादितः सत्वमक्षणिकस्योपपत्स्यते तत्कथं **शक्तिर्हि**[१४५.१८]-इत्याद्युच्यमानं शोभत इ[5]त्याशंक्याह **एवं मन्यत** [१४५.२०] इति। त्रिपदार्थसत्करीति सत्ता तैरिष्यत इत्यभिप्रायेणाह–**सामान्यादी**[१४५.२२]ति । आदिशब्दात् विशेष-समवायपरिग्रहः । स्वरूपसत्त्वे च तेषामिष्यमाणे तद्वदन्येषामपि किं [न] भवेत् ? इतरेतराश्रयत्वे चैकासिद्धौ द्वयासिद्धिर्दोषः। **तेषां** [१४५.२४] वन्ध्यासुतादीनाम् । तस्यैव **सत्तायोग** इत्यर्थसाम[8]र्थ्यमेव भावलक्षण**मायातमि**[१४६.३]त्येष एव पाठः **इति**[१४६.२]शब्देन हेत्वभिधाने अर्थ्यत इत्यर्थो दाहपाकादिस्तत्र सामर्थ्यं तदेव भावलक्षणमायातमिति संगतत्वात् । तस्यैव सत्तायोग इत्यर्थ इति प्रमादपाठः । एवं हि सामर्थ्यमेव भावलक्षणमित्यकारणमुक्तं स्यात् के च(क्व च) तत्सामर्थ्यमिति च नोक्तं भवेत् तस्मा[54a][1]दित्यध्याहृत्य व्याख्याने च क्लिष्टमिष्टं स्यादिति। अत्रैवोपपत्त्यन्तरं समुच्चिन्वन्नाह–**इत्थं चे**[१४६.३]ति अनेन वक्ष्यमाणेन प्रकारेण। **एवम[**१४६.३]र्थसामर्थ्यभाव-लक्षणमिति। तमेव प्रकारं दर्शयन्नाह **अन्यथे**[१४६.३]ति। अर्थसामर्थ्यादन्येन प्रकारेण।

मीमांसकादीनां सत्त्वलक्षणमपास्य दिगम्बरस्यापि दूषयितुमाह। **उत्पादे**[१४६.६]-ति[2] । यद्येवमाहुः–

> "घटमौलिसुवर्णार्थी नाशोत्पादस्थितिष्वयम् ।
> शोकप्रमोदमाध्यस्थ्यं जनो याति सहेतुकम् ॥" [आप्तमी० ५९]
> " न नाशेन विना शोको नोत्पादेन विना धृतिः ।
> स्थित्या विना न माध्यस्थ्यं तस्माद्वस्तु त्रयात्मकम् ॥ " इति ।

तथा

> " पयोव्रतो न दध्यत्ति न पयोत्ति दधिव्रतः ।
> अगोरसव्रतो नोभे तस्माद्वस्तु त्रयात्मकम् ॥ " [आप्तमी० ६०] इति ।

कथमयु[3]क्तमित्याह **ध्रौव्येणे**[१४६.७]ति । **विरोधाद्धेतोरेकस्मिन्धर्मिण्य-योगात्** [१४६.७] । एषामित्यर्थात् । अनेनासंभवितां लक्षणदोषमाह–**यथोक्तं** [१४६.१०] यादृशमुक्तं उत्पादव्ययध्रौव्यात्मकं लक्षणं यस्य तत्तथोक्तम् । उत्पादव्यय-

---

१. अनपेक्षया S । २. सतो S ।

भ्रौव्याणामसत्त्वप्रसङ्गेनाव्यापितालक्षणदोषो द्रष्टव्यः न चासद्भिस्तैरन्यस्य योगो [4]युक्त इति । **अन्यथा** [१४६.१२] स्वज्ञानजननमप्ययोग्यशक्तत्वोपगमे(म?)प्रकारेण(?) यदि हि सामान्यादिति स्वज्ञानं जनयेत्तदार्थत्वेन व्यवस्थाप्येत नान्यथेति भावः । **आदि-**[१४६.१२]शब्देन द्रव्याव्यवस्थादिसंग्रहः ।

**क्षणि[1]कत्व** [१४६.२७] इति सत्सप्तमीयम् । **क्रमयौगपद्याभ्यामि-**[१४६.२८]ति क्रमयौगपद्यकारित्वाभ्यामिति द्र[5]ष्टव्यम् इतरथा कार्यधर्माभ्यामाभ्यां कारणधर्मः कार्यकारित्वं कथमिव व्याप्येत । यथाचामू कार्यधर्मौ तथोपरिष्टाद्भट्टार्चटेन एव स्फुटयिष्यते ।

अर्थक्रियाकारित्वमात्रक्रमाक्रमकारित्वात्मकार्थक्रियाकारित्वविशेषयोश्चोभयव्याप्तिकत्वात्मकं सत्त्वं क्रमाक्रमकारित्वाभ्यां व्याप्तमि[6]त्युच्यते । अन्यथा सामान्येन विशेषो व्याप्यते । वृक्षत्वेनेव शिंशपात्वम् । न तु विशेषेण सामान्यं व्याप्यते । वृक्षत्वमिव शिंशपात्वेनेति । कथमिदमुच्यमानं शोभेतेति । **ततो** [१४६.२९] व्याप्यव्यापकभावात्कार्यकारणशक्तरूपव्यापकयोः क्रमाक्रमकारित्वयो**र्निवृत्ते**[१४७.१]र्निवृत्तत्वात् । त(क)दा निवृत्तिरित्यपेक्षायामाह **अक्षणि[7]कत्व**[१४७.२] इति अक्षणिकत्वे सति । तत्र एवाक्षणिकत्वाद्विपक्षान्निवृत्तेरिति च सामर्थ्यादपादानं द्रष्टव्यम् । कथं तयोस्ततो निवृत्तिरित्याह—**विरोधादि**[१४७.१]ति । विरोधादित्यनुपपत्तेरित्यर्थो न तु शास्त्रनिर्दिष्टलक्षणयोर्विरोधयोरन्यतरविरोधवशादिति । ' विरोधशब्देनायोगस्य विवक्षितत्वात् ततश्चाक्षणिकस्य क्रमयौगपद्याभ्याम[8]र्थक्रियासिद्धिमनुसरता सौगते विरोध्यस्य (?) क्षणिकः प्रत्येतव्यो विरोधिप्रतिपत्तिनान्तरीयकत्वाद्विरोधसिद्धिरिति ' यदीरितं शङ्कराचार्येण तदपहस्तितम् । अयोगपक्षेऽपि यावत्सम्भवं दूषणं प्रतिविधानं चास्माभिर्विशेषाख्यान एव विस्तरेणाभिहितमिति तत एवाऽपेक्षितव्यमिति । अनेन च यस्य [न] क्रमाक्रमयोगो न त[54b][1]स्य क्वचित्सामर्थ्यम् । यथाकाशकुशेशयस्य । अस्ति चाक्षणिके सति व्यापकानुपलम्भः सत्त्वहेतोः साध्यविपर्यये बाधकं प्रमाणं दर्शितं वेदितव्यम् । यथा चास्याश्रयासिद्धत्वदोषो न संभवति । अ(त)थास्माभिश्चतुःस(श)त्यां क्षणभङ्गसिद्धौ विशेषाख्याने चाख्यातमिति तत एवावगन्तव्यमिति । **विरुद्धयोः** [१४७.३] सत्त्वासत्त्वयोः । ततोऽक्षणिकत्वात् ।

[2]**क्रमयौगपद्याभ्यामेवे**[१४७.६]त्यत्र क्रमयौगपद्ये कार्यधर्मावेव विवक्षिते । तेनायमर्थः—**कार्यमङ्कुरादिकं बीजादिना** [१४७.६] केवलं वा क्रियेतान्यसहितं

१. अक्षणिकत्वे S ।

चेति। **कार्यजन्मनः**[1] [१४७.८] कार्योत्पत्तेः। **विप्रकर्षिणां** [१४७.१०] स्वभावादिविप्रकर्षयुक्तानां **ने**[१४७.१४]ति सिद्धान्ती। **उभयथा** [१४७.१५] तस्य प्रकारान्तरस्य दृश्यत्वादृश्यत्वप्रकारेण। कार्यान्तरसाहित्यासाहित्यरूपे क्रम[3]यौगपद्ये विवृण्वता चानेन कार्यधर्मत्वं क्रमयौगपद्ययोर्व्यक्तमुपदर्शितम्। अत एव क्रमयौगपद्याभ्यां कार्यक्रियाव्याप्तेत्यस्माभिर्व्याख्यातं तथा। **तदुभयावस्थाविरहेपि** [१४७.१७] कार्यान्तरसहितासहितावस्थाऽभावेप्यङ्कुरादेरिति प्रकरणात्। **अन्यथाभवनं** [१४७.१८] प्रकारान्तरम्। भवत्वेवं, ततः किमायात[4]मित्याह–**तस्य चे**[१४७.१८]ति। अनेन दृश्यात्मत्वं तस्य समर्थितम्। अस्तु दृश्यानुपलम्भात् कस्मिंश्चिद्देशे काले च तस्याभावव्यवहारोऽन्यस्मिन्पुनर्देशे काले चाप्रतिषेधात् कथं तत्र प्रकारान्तरस्याभावः सिद्ध्यतीति आशंक्याह–**तस्य चे**[१४७.२३]त्यादि। **अङ्कुरादिभावस्य** अङ्कुराद्युत्पादस्य **अवस्थाद्वयबहिर्भावनिषे**[5]**धे** कार्यान्तरसहितासहितावस्थाबहिर्भावस्ताभ्यां प्रकारान्तरं तस्य निषेधे दृश्यानुपलम्भकृते सति ह्यनि( सति नि )षेध इत्याह–**कयोश्चिदि**[१४७.२४]ति। **देशान्तरादौ** ( १४७.२४ ) **भावेपी**[१४७.२५]ति तस्याङ्कुरादेरिति प्रकरणात् **न काचित्क्षतिः** [१४७.२५]। किं भूते देशान्तरादावित्याह **क्रमेणेत्या**[१४७.२४]दि। **इतरस्मिन्वा** [१४७.२४] युगपदङ्कुरादि[6]भाववति वा। एतच्च हेतुभावेन विशेषणम्। अयं चाशयो देशान्तरादिरप्येतद्देशान्तरवत्क्रमेण वा तद्भाववान् युगपद्वा भवितुमर्हति, तदुभयाऽवस्थाबहिर्भावस्य निषिद्धत्वात्। सति चैवमदोष एवेति। **न काचित्क्षतिरि**[१४७.२५]ति ब्रुवतश्चायमभिप्रायः– कार्यस्य चैकत्रैकदावस्थाद्वयबहिर्भावो निषि[7]द्धोऽन्यदापि तेन भवता प्रमाणपरिदृष्टात्मनैव भवितव्यम् अन्यथा तत्कथं देशान्तरादौ प्रकारान्तरमाशंक्येति(क्येतेति)। प्रकरणमुपसंहरन्नाह **त[त]** [१४७.२५] इति।

ननु संप्रत्येवोक्तः स्वभावानुपलम्भ एवेत्यादि तत्कथमिदानीमुच्यते **प्रत्यक्ष** [१४७.२५] इत्यादीति चेत्। नैष दोषः पूर्वं हि मूढं प्रतिपत्तारं प्रति तथोक्तमधुना पुनरमूढं प्रती[8]ति को व्याघातः

**क्रमयौगपद्ययोरि**[१४८.१]ति क्रमाक्रमयोरित्यर्थः सकृत्प्रत्युपलक्षणेन यौगपद्यशब्देनाक्रमस्यैव विवक्षितत्वात् अन्यथाऽन्योऽन्यव्यवच्छेदरूपता दुरुपपादाऽऽपद्यते ततः सर्वत्रैवाक्रमार्थो(र्थे) यौगपद्यार्थः। अतएवास्माभिरक्रमशब्देन यौगपद्यमनूदितमिति। **तस्य** [१४८.३] प्रकारान्तरस्य प्रतिषेधः। [55a][1]उभयनिषेधात्मकमेव प्रकारान्तरं किं

---

१. कार्यात्मनः S.

न भवति येनैकनिषेधेनापरविधानात्तस्य निषेधो भवतीत्याह—**विधिप्रतिषेधयोरि-**[१४८.४]ति। अयमभिप्रायः—क्रमो न भवतीति अयमेवाक्रमविधिः। सोपि न भवतीति तदैव तस्य निषेधः अनयोश्चैकाधिकरणयोरेककालिकयोर्विरोधस्तस्मात्तथाभूतस्यासंभव इति। **तस्याप्रतिषेध** [१४८.३] [2]इति त्वपाठ एव। कारणमपि कारणापेक्षया कार्यमेवेति कारणग्रहणम्, न तु कारणत्वेनास्योपयोगोऽत्र कश्चित्। कार्य एव प्रकारान्तरासंभवस्य चिन्त्यत्वात्; यद्वा कारणेन क्रियमाणे कार्ये इति ज्ञापनार्थं कारणग्रहणं वास्तवं रू(वरू)पानुवादकं प्रतिषेधस्य यद्विरुद्धं तस्योपलब्धिरित्याशंका एतदेवोपपादयन्नाह-**व्यवच्छिद्य[3]माने**[१४८.१०]ति। **इतरस्य व्यवस्थानमि**[१४८.१०]ति तथाव्यवच्छिद्यमानप्रकारादितरव्यवस्थानमिति तथा। **सम्भवं हेतोः** [१४८.१५] **सद्भा-**[1]वमिति प्रकरणात्। संभवग्रहणं चोपलक्षणं तेन पूर्वसिद्धां च व्याप्तिं प्रदर्श्येत्यपि द्रष्टव्यम्। **विरोधसाधनमेवा**[१४८.१५]र्थात्प्राक्प्रवृत्तमित्यवसेयम्। बाधकमित्यस्याविरुद्धोपलब्धेः साध्यवि[4]पर्यये **बाधकं** [१४८.१५] प्रमाणमुच्यत इति चाध्याहार्या(र्ये)-क्रियाऽपेक्षयाऽयं क्त्वाप्रत्ययः कार्योऽन्यथा कां क्रियामपेक्ष्येयं पूर्वकाला प्रदर्शनक्रिया प्रदर्शयितव्या यत्रायं भवेत्, यथाश्रुति भिन्नकर्तृकायां च क्रियायामयं प्रसज्येत पुरुषसम्बन्धित्वात्प्रदर्शनस्येति। विरुद्धमात्राभिप्रायेण **शीतोष्णस्पर्शयो[5]रि**[१४८.१६]-त्युदाहरति।

ननु क्रमाक्रमाभ्यां कार्यं कामं व्याप्यतां तथाप्यक्षणिकः क्रमेणाक्रमेण वा कार्यं करिष्यति। सति चैवं व्यापकानुपलम्भोऽसिद्ध इत्याशंक्याह—**तत्रे**ति[१४८.१८]। **अविशेषात्** [१४८.१८] पूर्वरूपाविशेषात्। एतदेव दृष्टान्तव्याजेन व्यनक्ति **अकारकावस्थायामिवे**[१४८.१८]ति। अपेक्षितसहकारिप्रत्ययः स[6]न्करोति नान्यदेत्याह—**सहकार्यपेक्षा चे**[१४८.१९]ति। **अनुपन्यसनीये**[१४८.२०]ति च सम्बन्धः; कुत इत्याह **द्विविधस्यापी**[१४८.१९]ति। अथ यथा भिन्नदेशानेककार्यकारित्वमेकस्य स्वहेतु(तो)स्तथोत्पादादुपपद्यते तद्भि(तद्वद्भि)न्नकालानेककार्यकरणमुपपत्स्यते तत्कुतः क्रमकारित्वानुपपत्तिरक्षणिकस्येति चेति(चेत्)। तदेतच्च[7]तुःस(श)त्यां क्षणभङ्गसिद्धावस्माभिः सूक्तं प्रत्युक्तमिति तत एवानुगन्तव्यम्।

ननु कारणलक्षणस्य क्रमस्य क्षणिकपक्षेप्यनुपपत्तेः समानो दोष इति चेदेतदपि तत्रैव निर्णितमिति नेहोच्यत इति। **सर्वेषां** [१४८.२०] चेति द्वितीयादिक्षणभाविनामित्यवसेयम्। **एकक्रियाकाल एव** [१४८.२०] प्रथम क्षणक्रिया-

---

१. सद्भावं S

कालु एव । **तत्कारण[क]स्य**[8] [१४८.२१] द्वितीयादिक्षणभावित्वेनाभिमतकार्यकारकस्य **तदैक**क्रियाकाले, **एव**[१४८.२०]कारो **भावा**दित्यस्मात्परो द्रष्टव्यः । अनेन च यद्यदा यज्जननसमर्थं तत्तदा जनयत्येव यथा अन्त्या कारणसामग्री । द्वितीयादिक्षणभावित्वेनाभिमतकार्यजननस्वरूपश्चाक्षणिकः प्रथमक्षण इति स्वभावहेतुप्रसङ्गं सूचयति । **नापि युगपत्** [१४८.२१] । '[55b][1]अक्षणिकः कार्याणि करोती' [१४८.१८]त्यभिसम्बध्यते । येन स्वभावेन तत्कार्यमजीजनत्तस्य स्वरूपस्यानुवृत्तेरित्यभिप्रेत्य **पुन**[1]**स्तत्करणप्रसङ्गाच्चे**[१४८.२२]त्याह । अनेनापि समुदाये यज्जननसमर्थं तत्तदा तत्तज्जनयत्येव यथाऽन्त्यः कारणकलापः । कृतकत्वेनाभिमतकार्यकरणरूपश्चाक्षणिको द्वितीयादिक्षण इति स्वभावहेतुप्रसङ्गमे[2]व दर्शयति । अनयोश्च प्रसङ्गहेत्वोरुपदर्शितयोरर्थादुन्नीयमानयोश्च प्रसङ्गविपर्यययोर्यावत्संभवं दूषणं तदुद्धरणं चास्माभिर्विशेषाख्याने समीचीनं निरूपितमिति तत एवावगन्तव्यमिति । **अकारकरूपाविशेषाद्** [१४८.२३] इदानीं यद**कारकरूपमस्य** तस्माद**विशेषाद्**इत्यर्थोऽवसातव्यः । **भेदप्रसङ्गः** [१४८.२५] शक्ताशक्तयो[3]रूपयोरित्यर्थात् । अत्रैवोपपत्त्यन्तरमुपचिन्वन्नाह **नित्यश्चे**[१४८.२५]ति । [2](पूर्वोत्तरकालभावा च, उपपत्त्योर्भेदोऽवसेयः पूर्वकालहेतुरकाले च ) **एकदा** [१४८.२८] एकस्मिन्नेव क्षणात्मनि काले सर्वस्य कर्तव्यस्यैक**दा** [१४८.२९] एव कृतत्वादर्थक्रियाकारित्वाभावादसत्त्वं स्यात् । **इति**[१४९.१]**हेतौ** । प्रकरणमुपसंहरन्नाह **एव**[१४९.२]मिति ।

आर्य[4]ज्ञानं तन्वंतीति **आयतनानि** । **चक्षुरादीनि**[१४९.३] च तान्यायतनानि चेति तथा । अन्तर्व्याप्तिवादिनोप्यस्य मते प्रमाणसिद्धस्यैव धर्मित्वं वाच्यमन्यथान्तर्व्याप्तिरसमर्थिता स्यात् । ततश्चक्षुराद्यायतनानाममीषां प्रमाणसिद्धानामिति द्रष्टव्यम् ।

स्यादेतद् यत् सत् तत्क्षणिकमेवेति नियतं क्षणिकत्वं साधयितुं किल स[5]त्त्वाख्यो हेतुरुपादीयते । अयं चाखिलं वस्तु नाक्षणिकं नापि क्षणिकमिति साधयन्साध्यविपर्ययसाधानाद्विरुद्ध एव । तथा चावादीद् वादन्याये स्याद्वादकेशरी—"अखिलस्य वस्तुनोऽनेकान्तिकत्वं सत्त्वात् । अन्यथार्थक्रिया कुतः"—इति । एतच्च व्याचक्षाणेन कुलभूषणेन टीकाकृता एवं व्याख्यातमुप[6]पादितश्च—" **अखिलं** चराचरं सूक्ष्मव्यवहितविप्रकृष्टं **वस्तु** धर्मित्वेनोपात्तम् । अन्तो धर्मो **नैकोऽनेकोऽन्त** आत्मा स्वरूपं यस्य तद्भावस्तत्त्वम्—अयं साध्यो धर्मः **सत्त्वाद्**इति हेतुः । **अन्यथा**ऽनेकात्मकत्वाभावप्रकारेण-

१. पुनस्तत्क्रियाप्रसङ्गात् S । २. कोष्ठकान्तर्गतः पाठः असम्बद्धो भाति ।

**अर्थक्रिया** कार्यं सं(र्यसं)पादनं **कुतो** न कुतश्चित्। अनेनान्यथाऽनुपपत्तेर्विपर्यये बाधकं प्रमाणं समर्थकं दर्शितम्—

"अन्यथाऽनुपपन्नत्वं यस्यासौ हेतुरिष्यते ।
दृष्टान्तौ द्वावपिस्तां वा (?) याचातौ हि न कारणम् ॥ " इति न्यायात् ।

तत्र तावदक्षणिको भावः कार्यं कर्तुं शक्नोति । तस्य क्रमयौगपद्याभ्यामर्थक्रियाविरोतच-त(राधात्) नापि क्षणिको भावः कार्यं कर्तुं प्रभवति । तथाहि किं क्षणिको भावः स्वसत्ता-काले कार्यकरणस्व[8]भावोऽथान्यदा । यदि प्रथमविकल्पस्तदा तदैव कुर्यात् । स्वसत्ताक्षणे च कार्यकृतौ सर्वं जगदेकक्षणवर्ति प्राप्नोति। तथाहि कारणं स्वसत्ताक्षण एव यत् कार्यमकृत तदप्यन्यस्य कारणमिति तदपि तदैव स्वकार्यं कुर्यात् । तदपि कारणमन्यस्येति तदपि तदैव कुर्यादेवमुत्तरेष्वप्ययमेव न्याय इति। सत्यम्, का[56a][1]रणं स्वसत्ताक्षण एव कार्य-ङ्करोति, तत्करणस्वभावत्वात्, केवलं कार्यमन्यदोत्पद्यत इति चेत्। तर्हि कार्यमपि तदैवोत्प-द्येताऽन्यदा तत्कालं परिहृत्य कार्योत्पत्तिर्विरुध्येत [1]उत्पत्त्याविष्यमाणा(णायां) वा समनन्तरो-त्पादविरोधः । तथाहि तत्करणसमर्थस्यापि कालमुज्झित्वा जायमानस्य कार्यस्य कारण-कृतोपकारपराङ्मुख[2]स्य योऽयं समनन्तरनियम एतद्विनाशानन्तरमेवेदमस्य कार्यमिति तस्यानुपपत्तिः । सोयं कारणविनाशो विरूपाख्योऽकिञ्चित्करस्तथापि यदि तत्समनन्तर-नियमः कार्यस्य स्यात् तदा नित्यस्यापि कारणत्वमप्रतिहतं स्यात् । तथाहि यथा स्वसत्तालक्षण एव कार्यकरणस्वभावे क्षणिके भावे सत्यपि न तदैव [3]कार्याण्युत्पद्यन्ते अपि तु कालान्तरे, तथा नित्येपि भावे सर्वदा तत्करणसमर्थेऽपि कार्याण्येव विलम्ब्य विलम्ब्यो-त्पद्यन्त इति किं न समानम् । न च द्वितीये क्षणे निर्व्यापारतया सदसतो-रक्षणिकक्षणिकयोः कश्चिद्विशेष इति । "

यदि नामाह्नीकोक्तिरुपेक्षणीया प्रेक्षावतां तथापि किञ्चिदुच्यते । [4]इह खलु कार्यकारित्वं वस्तूनां न व्यापारसमावेशात् उत्पादातिरेकिणो व्यापारस्यानुपपत्तेः, नापि कार्येण सहोत्पादः, सव्येतरविषाणयोरिव सहभुवोरन्यतरकारित्वानुपपत्तेः ।

" असतः प्रागसामर्थ्यात् पश्चाच्चानुपयोगतः । "

इति न्यायात् । किं तर्हि किञ्चिदनन्तरं सत्तयाभि[5]सम्बध्यमानं प्रति नियतप्राग्भावित्वमेव, कार्यस्यापि नियमेन तदनन्तरभावित्वमेव तज्जन्यत्वम् । सति चैवं स्वसत्ताकाले कार्य-करणस्वभावो भाव इति कोऽर्थः? तत्सत्ताकालं पूर्वं कृत्वा कार्यं सत्तयाऽभिसंबध्यत इति । तथा स्वलक्षण(स्वक्षण) एव करोतीत्यस्यापि कोऽर्थः? अनन्तरभाविकार्या[6]त्पूर्वं सद्भवति

---

१. अत्र प्राक्तनं 'अन्यदा' पदं समाकृष्य अन्यदोत्पत्तौ इष्यमाणायाम् इत्यर्थः कर्तव्यः ।

कारणमिति । तदुक्तं "भूतिर्यैव क्रिया सैव" इत्यादि । इत्थं चैकप्रहारनिय(ह)तमेव तत्सर्वं दिगम्बरेरितम् । ततश्च क्षणिकस्यैवार्थक्रियोत्पत्तेः सत्त्वं क्षणिकत्वमेव साधयद् विरुद्धमाचक्षाणाः क्षपणा अनेकान्तत्वे च साध्ये साधनमिदमुपनयन्तः स्फुटमहीकावेति-(मह्रीका एवेति) उपेक्षामेव प्रे वतामर्हन्तीति ।

स्वभावहेतुं व्याख्याय कार्यहेतुं व्याख्यातुकामो वार्तिककारस्य कार्यहेत्वभिधानस्य निमित्तं दर्शयन्पूर्वापरयोः संगतिं **तदेवमि**[१५०.३]त्यादिना करोति । **तद्वत्** [१५०.५] कार्यहेत्वाश्रितम् । कस्मात्पुनः स्वभावहेतुवदप्यस्यान्वयव्यतिरेकावेव न प्रतिपाद्येते, येन तद्वता[s] परभ्रान्तिकारणोपादानार्थमेव कार्यहेतुविषयो[प]दर्शनं वर्ण्येत इति आशंक्य **कार्यहेताचि**[१५०.४]त्यादि योज्यम् । **तयोर**[१५०.४]न्वयव्यतिरेकयोः । तर्हि कार्यकारणभावसिद्धिरेतद्दर्शनीया ततश्च तां दर्शयितुमिति किं नोच्यत इत्यपेक्षायां **तस्याश्चे**[१५०.५]ति योज्यम् । **तस्याः** कार्यकारणभावसिद्धेः । हेतोः प्रत्यासन्नत्वात् [56b][1]**हेतोर्व्यतिरिक्त** [१५०.७] इत्याचष्टे । **कार्यं** [१५०.७] कार्यमेवेति विवक्षितं । 'त्रिधैव स' इति नियमस्य पूर्वं प्रतिपादितत्वात् अत एव **कस्मात्कार्यमेवे**[१५०.८]ति पश्चाच्चोदयिष्यते । **अनर्थान्तरे** व्यावृत्तिभेदात् परिकल्पितव्यावृत्त्यन्तररूपे धर्मान्तरे । असाधारणं **कार्यं**[१५०.९] ।

दिङ्[1]नागेन [2](सर्वव्यक्तिष्वनुपग(ष्वनुग)तप्रत्ययप्रसूतिः ? ) ।

सर्वथा तद्भावमेव प्रतिपादयन्नाह[2]–**अग्नेरि**[१५०.१७]ति । अस्याश्रितत्वादग्नेः अग्नित्वं सर्वाग्निव्यापनादनुगतप्रत्ययहेतुत्वविवक्षयैव, सामान्यधर्मा अपि गमकाभिप्रेतास्त इव । तार्णत्वादेः सर्वाग्न्यव्यापनाद् व्यावृत्तप्रत्ययहेतुत्वा(त्व)विवक्षया विशेषधर्मत्वं विवक्षितम्, न तु सर्वथा सामान्यरूपत्वमस्य निराचिकीर्षितम् सर्वतार्णादिवह्निष्वनुगतप्रत्ययप्रसूति[3]हेतुत्वात्, सामान्यरूपस्य चात्राव्याघातात्, अन्यथा तार्णवह्न्यादिजन्यरूपतयावधारितात् धूमान्वयता(मात्र वह्निता)र्णाद्यनुमानं स्यात् विशेषरूपस्याव्यापकतया अननुमेयत्वात् । तेपि विशेषधर्मा गम्याः स्युः, इष्यन्ते चाग्नेः सामान्यधर्मा एवाग्नित्वद्रव्यत्वसत्त्वज्ञेयत्वादयो गम्या इति भावः । धूमस्यापि विशेषधर्मवत्सामान्यधर्मा गमकाः स्युः न चेष्यन्ते सत्त्वज्ञेयत्वपार्थिवत्वादयो गमका इति भावः । कोऽसौ धूमाश्रितो विशेषधर्मो

१. 'आचार्येण' [१९०.१३] इत्यस्य विवरणं दिग्नागेन इति भाति ।

२. 'सर्वव्यक्तिष्वनुगतप्रत्ययप्रसूति ?' इदं शंकाचिह्नितं पदं नात्रत्यं किंतु अग्रेतनं भाति । तच्च 'अग्नेरिति' इत्यस्य अनन्तरं यदि स्यात् तदा संगच्छेतापि । तत्रापि सामान्यपदं गलितं भाति । तथा च सर्वव्यक्तिष्वनुगतप्रत्ययप्रसूतिः सामान्यं इत्यर्थः स्यात् ।

दृष्टान्तीकृत इति चेद् एवं धूमत्वपाण्डुत्वादिभिरि[१५०.२३]त्यत्र धूमत्वादि निरूपयिष्यंतो निर्देक्ष्यामः ।

ननु कार्यत्वस्य तद्भावाख्यैकसम्बन्धवशाद्गमकत्वं तत्कथं ' सर्वथा [5]जन्यजनकभावाद् ' इत्युच्यत इत्याशंक्याह **जन्ये**[१५०.२०]ति। सर्वथा जन्यजनकभावमेव प्रतिपादयन्नाह **तथाही**[१५०.२१]ति । पूर्वोक्तेन प्रकारेणाग्नित्वादीनां सामान्यधर्मत्वं ज्ञेयम् । सर्वं चैतद्धर्मभेदपरिकल्पनयोच्यते । तृणे भवो वह्नि**स्तार्णः** [१५०.२२] । पर्णे भवः **पार्णः** [१५०.२३] । भावप्रधानश्चैष निर्देशस्तेन तार्णत्वादिभिरित्यर्थः ।

ननु यथाऽग्नित्वं सकलाग्निव्यापनेनानुगतप्रत्ययहेतुत्वात्सामान्यधर्म उच्यते तथा धूमत्वमपि सामान्यधर्म एव । यथा च द्रव्यत्वादयोऽन्यनग्निसाधारणत्वादनुगतबुद्धिनिबन्धनत्वेन सामान्यधर्मास्तथा पाण्डुत्वमपि धूमनीहारादिगमनादनुगतज्ञानकारणत्वाच्च सामान्यधर्म [7]एव तत् कथममू विशेषणे धर्मित्वेनोदाहरणीकृते इति । साधूक्तं भवति(ता) केवलं बोधे यत्नः करणीयः । इह खलु सर्वधूमव्यक्तिव्याप्यनुगतप्रत्ययहेतुधूमत्वमेव सामान्यविशेषो विजातीयाद् व्यावृत्तप्रत्ययपुरस्कारेण विशेषधर्मो विवक्षित इत्यादिचोद्यमपोदितम् । एवं सत्यग्नित्वमपि विशेषधर्म इत्यग्ने[8]र्विशेषधर्मस्यापि गम्यत्वमायातमिति चेत् । तथाविधस्य विशेषधर्मस्य गम्यत्वेनेष्टत्वान्न कश्चिद्दोष इति । अवान्तरविशेषस्य तु तार्णत्वादेर्गम्यत्वम् धूममात्रस्य तदप्रतिबन्धान्निषिध्यत इति किमवद्यम् । धूमस्य विजातीयासाधारणधर्मवाचकश्च पाण्डुशब्दोऽस्ति योनेनोपात्त इति द्वितीयमपि चोद्यमपोद्यते । स [57a][1]चैतच्छब्दाभिलाप्यो धर्मो दुर्ज्ञान इत्यग्निरत्र पाण्डुत्वादिति नोच्यत इति सर्वमवदातम् ।

**स्वभावैवध**[१५१.८](वैर्ध)र्मैरित्यर्थः । **अपरोर्थ** [१५१.१३] इति । यावद्भिरविनाभाविकारणस्य वाक्यैकदेशस्यान्योऽर्थो न तु समुदायग्रन्थस्यामुमर्थमन्तरेण पूर्वार्थमात्रेण वाक्यस्यासंगतत्वात् । **संबध्यत** [१५१.११] इति तत्**कार्यं** **तेषां हेतुरि**[१५१.१५]ति सम्बन्धः कार्य इत्यर्थो न[2] तु पूर्वव्याख्यानोक्तमत्रापि व्याख्यानेऽभिसम्बध्यत इति बोद्धव्यम्। पूर्वव्याख्याने तेषां स्वगतानां धूमत्वादीनां हेतुरिति प्राप्तावर्थो सं(वर्थासं)गतेरेव संबन्धनीयत्वादिति । **तेषा**मिति कारणगतानां धर्माणां हेतुस्तत्कार्यमिति पूर्वोक्तमभिसंबध्यते । कैः स्वभावैर्हेतुरित्यत्र गजनिमीलिकैव कृता एतदनुसन्धानेन न [3]त्वनन्तरं वाक्यं भविष्यति । केचित्पुनरत्रैवमाहुः—उक्ते सति नियतमेतद् व्याख्येयं नान्यथा । सति चैवं पूर्वव्याख्यानस्य कोपयोगः । तस्माद् यतस्तदुत्पत्तिनियमाभावे सर्वथा जन्यजनका(क)भावो व्यवस्थापयितुमयुक्तस्तस्माद्यावद्भिः कारणे

व्यवस्थितैर्धर्मैर्विना तत्कार्यं न भवति ताव[4]तां हेतुर्नान्येषां तत्कार्यत्वनियमादित्येवं व्याख्यातुमुचितमिति । अत्र तु समाधानमत्राभियुक्तैरेव दातव्यमिति ।

पूर्वव्याख्यानस्य पश्चाद्व्याख्याततया पश्चाद्भवेन **पाश्चात्येनार्थेन** [१५१.२०] कारणाश्रितानां तावतां हेतुरित्यनेन **कारणगतमंशामि**[१५१.२०]वांशं धर्मं **निरूप्य** साध्यत्वेन निश्चित्य पश्चाद्[5]व्याख्यातादर्थात् प्राग्व्याख्याततत्वेन प्राग्भवेन **प्राक्तनेनार्थेन** 'यावद्भिर्धूमत्वादिभिः स्वगतै'रित्यनेन **कार्यगतमंशं** धर्मं **निरूपय**[१५१.२०]न्प्रकरणाद्धर्मकतया निश्चिन्वन्। पूर्ववत् **पाण्डुत्व**[१५१.२३]मनयोः विशेषरूपत्वं च प्रत्येयम्। **परेषामु**[१५२ ८]भयत्राविशिष्टरूपसंयोगवशाद्गम्यगमकभावमि[6]च्छतामित्यभिप्रायः । **ग्रहीतुं** [१५२.२०] निश्चेतुम्। धूमत्वं विशेषणं यस्य तेन धूमत्वादिति विशेषणे तु द्रव्यत्वादौ हेतुतयोपनीयमाने समर्थविशेषत्वेनासाधनाङ्गवचनात्कथमेव क्ष्मादीनि गृह्यत इति भट्टार्चटेनापि शङ्कितम न च परिहृतमिति किमस्माकमत्र परिश्रमेण धर्मोत्तरादेरे[7]व तु तदवसेयमिति ।

यथैव जन्यजनकभावस्तथैव किं न गम्यगमकभाव इत्याह **नही**[१५२.२५]ति । वस्तुवृत्त्यपेक्षयैव कस्मान्न तथात्वम् किं पुनर्निश्चयापेक्ष इत्याह—**तथाही**[१५२.२६]ति ।

ननु भवो भवतो यस्माद्भावशंकायां नान्वयव्यतिरेकावित्युक्ते ततोऽभाव उच्यमानः कथं शोभत इत्याशंक्याह एवं **मन्यत**[१५४.१२] इति । **शक्रमूर्द्धा** [१५४.२८] वल्मीकः[8] इति ।

मन्यमान आह—**सर्वः** [१५५.१३] **तथाविधजन्मे**[१५५.१५]ति **कुत** [१५५.१७] इति द्रष्टव्यम्।

ननु उक्तमेव तदुत्पन्नमेव कार्यं कारणमपेक्षते न तु तादृशातादृशतायां ततस्तयोर्हेतुनिरपेक्षयोरिष्टत्वादेव किमनेनोक्तेनेत्याशंक्याहेतुकत्वे सर्वत्रैवोत्पत्तरितयो (?) विशेषणभावः स्यादिति इत्यादिदूषणमुत्पत्त्येव (?) कारणनिरपेक्षत्व[57b][1]मेव तयोरसहमान आह **नही**[१५९.४]ति । **तदपेक्षा** इत्यपेक्षा ।

अपराजितशब्देन यो लताविशेष उच्यते स **सूर्य**शब्दाभिधेयोऽवसेयः । **इतर**[१६१.२४] शब्देन लताचम्पको वृक्षचम्पकसमानाकारो देशविशेषभवो वक्तव्यो न तु भूमिचम्पक इति यस्य रूढिः तस्य वृक्षचम्पकेन सहाकारसाम्यस्यैवाभात् ।

**क्षणभेदा**(धानं [1]कुतश्चिद्रूपात्कथंचित्तेन सहैकप्रत्यवमर्शजनना)**श्रयत्वेनैव सूक्ष्मावान्तरजातिभेदे** [ १६२.१८] । जातिभेदे कथमेकसंतानव्यवस्थेत्याह—**सर्वे-**

१. कोष्ठकगतः पाठः प्रत्यन्तरे दृश्यते स च न सम्यग् भाति ।

[१६२.२०]ति । यद्येकाकारप्रत्ययनैवनुनैव्यप्रत्यय(निबन्धनै)कसन्तानव्यवस्था तदाऽन्यस्य सो(स्वो)पादानेन सहैकसंतानव्यवस्था न स्यात्सा चावश्यवाच्याऽन्यथा स्वसन्ततिपतित॰ कार्यजनकत्वेन या तस्योपादनत्वेनाभिमतस्योपादानव्यवस्था सा न स्यादित्य[3]भिप्रायवान्पर-श्चोदयति **आद्यस्ये**[१६२.२२]ति । जात्यनुविधानं कुतश्चि(श्चि)द्रूपात् कथञ्चित्तेन सहैकप्रत्यवमर्षजननम् । **तथाही**[१६२.२३]त्यादिनैतदेव समर्थयते । अगुरुजाति-भेदानुकरणं तद्धूमस्यागुरुगन्धसहचारितया प्रत्यवमर्षजनकत्वम् । **अनुकुर्वन्त्येवेति** वर्तेते **तद्धूमाः** [१६२.२४] तद्वर्तिधूमाः । ,[4]तद्भेदानुकरणमेषां कुतो ज्ञायते इत्याह–**तद्रू**[1]**पे**[१६२.२५]ति । यस्मादिन्धनेन सह धूमस्य केनचिद्रूपेण एकाकार-परामर्शजनकतयैकसंतति [व्यवस्थानाद् येन (?)] तस्मात् इन्धनमेवेति स्थूलेनायं व्यपदेशो वस्तुतस्तु तद्गतार्द्रसन्तानविशेषस्तस्योपादानकारणं ज्ञेयं सन्ता[5]नस्तु तस्याङ्गारादेः । यथा चैतत्तथा धर्मोत्तरेण विनिश्चयटीकायां निर्णीतमिति तत एवापेक्षितव्यम् । प्रसज्यते प्रतिपाद्यत इति प्रसङ्गोऽतिशयितः प्रसङ्गोऽ**तिप्रसङ्गस्तेनालम**[१६३.४]तिविस्तरेणे-त्यर्थोऽत्र द्रष्टव्यः ।

**तस्य** [१६३.६] कार्यभेदस्याताद्दशत्वलक्षणस्याऽ**भावात्** । **तस्येति** भेदस्य तस्मिन् स[6]त्यजायमानस्यापि कथमहेतुत्वमिति पार्श्वस्थवचनमाशंक्याह **नही**[१६३.९]ति । **असत्यभेदे** [१६३.११] प्रकरणादसति सामग्र्यभेद इत्यर्थः । कुतः पुनरसत्यभेदे जात इत्यपेक्षायां योज्यं **सामग्र्योरि**[१६३.११]ति । **हेतौ** [१६३.१२] सामग्र्यो-र्भेदेऽन्याद्दशत्वलक्षणे सत्यभवतो भेदस्य **तथा** तद्वत् **हेतौ** [१६३.१२] सामग्र्यभेद-लक्षणेऽ**सत्यपि** भवतो भेदस्येति प्रकरणात् । **अभेद**स्ताद्दशत्वमेकजातीयत्वमिति यावत् तस्य **निबन्धनत्वात्** [१६३.१४] शालिकोद्रवादौ भेदस्य भावात्कथं न क्वचित्पदानुबन्ध इत्याह **शाली**[१६३.१५]ति । तद्धेत्वोरभेदहेतुत्वात्तयोरप्यभेदेनैव भवितव्यमिति तदपि पक्षीकृतमेवेति भावः । हेतुभेदेऽपि [8]शालिकोद्रवादेर्न तत्कु(कृ)तो भेदोऽन्याद्दशत्वमपि त्वेवमेवेत्याह–**निमित्तमन्तरेणे**[१६३.१६]ति । **कल्पनायां** भेदकल्पनायां विशेषा-भावान्निर्निमित्तत्वेन **विशेषाभावात्** [१६३.१६] शाल्यन्तरेऽपि किं न कल्प्यत इति शेषः प्रकरण लभ्यम्वा । यद्वा न हेत्वभेदोऽभेदस्य निबन्धनम् । नापि हेतुभेदः किन्त्वेव-मेवाभेदो भविष्यतीत्या[58a][1]ह–**निमित्तमि**[१६३.१६]ति । **कल्पनाया**मभेदकल्प-नायाम् । **विशेषाभावा**च्छालिकोद्रवयोरपि भे(अभे)दः किं न कल्प्यत इति पूर्ववत् ।

स्यादेतत् प्रतिभासनियमनिबन्धनोयमभेदो नान्यनिबन्धनस्तत्किमेवमुच्यते इत्याह **प्रतिभासे**[१६३.१६]ति । प्रतिभासस्य भेदस्ताद्दशत्वम् । तस्य **स(भ्रा)न्तिनिमि-**

१. दुर्वेकानुरोधेन ' तद्रूपरसवीर्य ' इत्यादि पाठः स्यात् ।

**त्तादा**[१६३.१७]कारसाम्यादेः **परमार्थतो भेदेऽप्य**ताद्दृ[2]शत्वेप्यु**पलक्षणाद्** दर्शनान्नैवमिति द्रष्टव्यम्। एवमुपलक्षणत्वादस्य भेदविचारावसरेऽपि प्रतिभासभेदाद्भेद इति पूर्वपक्षे प्रतिभासभेदस्य च कुतश्चिद्भ्रान्तिनिमित्तात्परमार्थतोऽभेदेप्युपलक्षणादिति वक्तव्यम्। उभयत्रापि तु यदि प्रतिभासभेदाभेदावप्यपरप्रतिभासभेदाभेदनिबन्धनौ तत्रापि तत्प्रत्यनवस्था तस्मादा[3]द्ययोरपि तथात्वं व्यवस्थापयितुं न शक्यत इति दोषो दर्शयितव्यः **तयोः** [१६३.२१]भेदाभेदयोः। **तस्य** [१६३.२२] स्वभावस्य। **ताभ्यां** [१६३.२२] भेदाभेदाभ्याम्। **तेभ्यो** भावस्वभावभेदाभेदेभ्योऽ**न्यः स** चासौ **सम्बन्ध**श्चेति तथा तस्य **कल्पना** [१६३.२३] तस्याम्। सोपि तेषां कुत इत्याकांक्षायां सम्बन्धाङ्गीकरणं तत्रापि तत्पर्यनुयोगे तदे[4]वोत्तरमित्यनवस्था। **स्वात्मन्येवावस्थानादि**[१६३.२४]ति ब्रुवतोऽयं भावो यदि भावस्वभावे तयोरनुप्रवेशस्तदा स एवावतिष्ठेत न तु तौ। अथ तयोस्तस्यानुप्रवेशस्तर्हि ताववतिष्ठेयातां न त्वसाविति। पुनर्भेदपक्ष एव दोषान्तरं समुच्चिन्वन्नाह **अनुपकाराच्चे**[१६३.२५]ति। यौ भेदाभेदौ ताद्दशत्वाता[5]द्दशत्वलक्षणावसौ प्रतिपद्यते **तावपि यदि भिन्नौ** [१६४.१] ततो व्यतिरिक्तौ। **तादवस्था** (तदवस्थः)[१६४.२] न भिन्नं नाप्यभिन्नं यत् तदवस्थम्, यदवस्थं भेदाभेदप्रतिपत्तिकाले। **तस्य** [१६४.२] भावस्वभावस्य। **तस्य** [१६४.६] स्वरूपान्तरेण क्रियमाणस्य। तत एव हेतुबलायातात्कुतश्चिद्भिन्नाभिन्नाद्रूपाद् **विशेषसामान्यात्मनो**[१६४.११]रित्यत्र विशेषशब्देन स्वलक्षणं न वाच्यम्। तस्य भिद्यत इति व्युत्पत्त्या भेदरूपत्वापत्तेरयोगासिद्धिप्रसङ्गान्नापि विशेषपदार्थस्तस्य विनाशारम्भरहितेरवे वाणवाकाशादिषु प्रवृत्तेः परेण भेदशब्देनाभिप्रेतत्वात्। किंत्वेकसामान्ययोगेप्यवान्तरसामान्यविशेषः। **तयो**[१६४.१३]र्भेदाभेदयोः। [7]**अपेक्षया हीं**[१६४.१८]त्यत्रस्थस्य हिशब्दस्य मौलस्य व्याख्यानमेतत् **यस्मादि**[१६४.१८]ति। टीकाकृतस्तु **'अपेक्षयाहि'** इत्यत्रस्थहिशब्दोऽवधारणे, यद्वा **हिर्यस्मादपेक्षया तस्ये**ति योज्यम्। द्वावेतौ शतृप्रत्ययौ हेतौ द्रष्टव्यौ।

**साधनानां कारणानां साधनाय** [१६५.२] निष्पादनाय कथं नेष्यत इत्याह। **विलक्षणादपी**[१६५.१०]ति। याद्दशं दृष्टं **यथा दृष्टम्**। [8]यथादृष्टं कार्यं यथादृष्टादेव कारणादुत्पद्येतेति वर्तते। विलक्षणयाऽपि विवक्षितसामग्र्या अन्याद्दशापि तल्लक्षणं विवक्षितसामग्र्या जायमानकार्यसरूपम्। तत्सामग्रीवैलक्षण्याविशेषाद्यस्याः कस्याश्चित्सामग्र्या जायमानं किं तल्लक्षणं न भवतीति।

तथा च स एव दोष इत्याशंक्य पर एवाह **कस्याश्चिदेवे**[१६५.२३]ति। अत्रास्मि[58b][1]**न्पूर्वपक्षे**[१६५.२५] **याद्दशी शक्ति**[१६५.२८]रिति योज्यम्। **नामान्तरेण** [१६६.३] संज्ञान्तरेण। कथं तदेव **नामान्तरेणोक्तं**

**स्यादित्याह तद्विलक्षणस्ये**[१६६.३]ति । **तद्विलक्षणस्या**ग्न्यादिसामग्री-विलक्षणस्य । याऽग्न्यादिसामग्र्याऽन्यादृशी सामग्री सा तच्छब्देन प्रत्यवमृष्टव्या । तस्या**विलक्षणस्या**ग्न्यादिकारणकलापस्य य **आत्मातिशयः** शक्तिशब्दवाच्य-स्तस्या**संभवाद्**[१६६.४]योगात् । [2]अनग्न्यादिरूपस्य कारणकलापस्याग्न्यादिसामग्री-शक्तियोगासंभवादिति समुदायार्थः । तदाऽऽत्मातिशययोगेऽपि कथमग्न्यादिरूपत्वं तस्येत्याह **स एव ही**[१६६.४]ति **धूमं जनयति सहकारिकारणत्वेन** । **स्वजातिमनुकारयत्यु**[१६६.५]पादानभावेन जनयतीत्यर्थः । **यदि चे**-[१६६.६]त्यत्र चशब्दस्तुशब्दस्यार्थे । तां सामग्रीमग्न्यादिसंज्ञया वयं[3] व्यवहरामो भवन्तस्तु शक्रमूर्धादिसंज्ञया व्यवहरन्ते अतो **नाम्नि** संज्ञायामेव **विवादः स्यात्** । [१६६.७] कथं पुनर्नाम्न्येव विवादो नान्यत्रेत्याह **अर्थाभेदमि**[१६६.७]ति । अर्थाभेदं तथा धूमजननशक्तिलक्षण**मभ्युपगम्य तथाभिधानात्** [१६६.७] शक्रमूर्धादीत्यभिधानात् । **धूमादिकं कार्यं** कर्तृ कथं निश्चितमित्याह—**अतद्रूपे**-[१६६.९]ति । **का**[4]**रणमिन्ध**नादिकं कर्म **न व्यभिचरति** । क्षणापेक्षापक्षे तु कारणमिन्धनादि क्षणरूपमित्यवसेयम् । अव्यभिचारस्याकारं दर्शयति – **तद्विलक्षणादिति । इतिर्हेतौ सिद्ध्यति** [१६६.१२] निष्पद्यत इति ।

कार्यं हेतुं व्याख्यायाऽधुनाऽनुपलब्धिं व्याचिख्यासुर्यतस्ततस्तदुत्थानं तदुपदर्शयितुं **तदेवमि**[[१६७.२]त्यादिनोपक्रमते । **भवदु**त्पद्यमानं **दृष्टं** निश्चितं **सकृदि**-[१६७.३]ति सकृदपीति ज्ञेयम् । **प्रत्यक्षानुपलम्भाभ्यां** [१६७.३] यथा व्याख्याताभ्याम् । **तथाविधादेवे**[१६७.४]त्यवधारयतोऽनन्तरोक्तैवोपपत्तिः बुद्धिस्था । अवधारणेन प्रतीयमानमप्यतथाविधाज्जन्मनिषेधं कण्ठोक्तं कुर्वन्नाह—**ने**[१६७.४]ति । **व्याप्त्या**[१६७.५] सर्वदेशकालपरिग्रहेण । [6]तुरनुपलब्धिं भेदवतीं दर्शयति । यादृग्युक्ता **यथोक्ता**[१६७.७] तस्यां दृश्यत्वविशेषणायामित्यर्थः । निमित्तान्तराभावोपदर्शनं प्रागुक्तमिति भावः । **स्वरूप**[१६७.८]ग्रहणमुपलक्षणं तेन व्यापारेपीत्यपि प्रत्येयम् । अत एव व्यापारस्य पश्चाद्दर्शयितव्यत्वात् । क्रमे तावच्छब्दं प्रयुञ्जानोऽनुपलब्धिस्वरूपं [7]तावद्दर्शयतीति वक्ष्यति । **ए[व]का**[१६७.८]रस्त्वन्वयव्यतिरेकविषयविप्रतिपत्तिमात्र-निरासार्थः । यथाश्रुति व्याख्याने तु तथेत्यादि वक्ष्यमाणमसंगतं स्यात् । **तथाही**-[१६७.८]त्यादिना स्वरूपविषयविप्रतिपत्तिं प्रतिपादयति । तथा चेश्वरसेनश्वरकव्याख्याने प्रमाणान्तरत्वेनेमामुपदर्शयां बभूव । **प्रतिषेध्याविषयज्ञानविषयरूपे**[8]**णापरिणाम**[१६७.११]स्तद्विषयज्ञानानाधारत्वं तद्ग्राहकत्वेनानवस्थानमात्मनो मन्तव्यम् । तज्ज्ञानाधारत्वप्रतिषेधमात्रविवक्षया च पक्षान्तरमिति प्रमाणान्तरत्वमेव तदन्यविज्ञानाश्रयेणोप-

पादयन्नाह **नही**[१६७.१३]ति । प्रत्यक्षमेकमनुमानात्मकं यद्वा । **तस्य**[१६७.१६] प्रत्यक्षस्यानुमानस्य वा । **ततो** भावांशात् । किं कुर्वत् तर्हि तदभावप्रमाण[59a][1]व्यपदेशमश्नुत इत्याह **भावांश (अभावांशे)** [१६७.१४] **जनयादिति** [१६७.१५] हेतावयं शतृप्रत्ययः प्रत्येयः । **तदि**त्यन्यविषयज्ञानम् । तदिन्द्रियजन्मनि ज्ञाने यदवभासते स तस्य विषयस्तत्प्रतिपत्तिजनकत्वेन लभत इत्यभिसंबन्धाद् द्वितीया **साधन**[१६७.१८]-पदसंस्कारवेलायामनुपलब्धिर्नापेक्षितेति तथा निर्देशः । कथं तर्हि स सिध्यतीत्याशंकायामाचार्यदेशीय[2]स्यैवाभिप्रायं वर्णयन्नाह **अनुपलब्धेरि**[१६७.१८]ति । यदि विमृश्यमानम् 'अघटमेतद्भूतलम्' इति प्रतीतिर्नातिशेते 'तद्घटो नास्ति' इति ज्ञानम् प्रतियोगिस्मरणसहायेनेन्द्रियेण जन्यमानत्वात् तज्ज्ञाना[न]न्तरभावि संयुक्तविशेषभावलक्षणात् इन्द्रियार्थसन्निकर्षात् जायमानं प्रत्यक्षं सदेव **प्रमाणान्तर**मनुमानादेः प्रमाणादन्यत् प्रमा[3]णम् । यद्वा विशेषवचनोऽयमन्तरशब्दः । किं भूतं सदेतत् प्रत्यक्षं प्रमाणमित्याह- **अभावस्य** [१६७.२१] इति । **तुच्छरूपस्य** [१६७.२१] इति भावरूपशून्यस्येति बोद्धव्यम् न त्ववस्था(त्वस्त्वा)त्मन इति तन्मतेनाभावस्यापि वस्तुत्वात् ।

ननु च नेदं प्रत्यक्षं प्रमाणं, अपि तु सन्निकर्षस्य प्रत्यक्षप्रमाणस्य प्रमाणरूपं फलमेतत् तत् कथ[4]मेवमुक्तमिति चेत्, सत्यमेतत् । केवलं हानादिबुद्धिरूपं फलं प्रधानमिदं प्रमाणमभिप्रेतम् । **परिच्छेदात्मकमि**[१६७.२१]ति च परिच्छिद्यतेऽनेनेति परिच्छेदस्तदात्मकम् । परिच्छित्तिस्तूपादानादिधीरेवेति । यदि वा प्रमाणशब्देनोपचारात्फलमेवाभिप्रेतमिह एवंभूतं प्रत्यक्षप्रमाणफलान्तरमाच[5]क्षाणैश्च सामर्थ्यात् यत एतद्भवति तत् प्रत्यक्षं प्रमाणमिति दर्शितमिति सर्वथाऽवदातम् । तेषामेव बौद्धं प्रति वक्रोक्तिं दर्शयन्नाह—**तदेव** [१६७.२१] इति तदेव प्रमाणमनन्तरोक्तं यत् । **प्रतिवादिनां** तीर्थिकानामाचार्यदेशीयानां च **तन्निरासार्थं** [१६७.२४] बुद्धिभेदनिरासार्थं, विप्रतिपत्तिनिरासार्थमिति याव[6]त् । उपलब्धिलक्षणप्राप्तिर्यस्याऽस्ति स खलूपलब्धिलक्षणप्राप्त उच्यते । सैव तु कीदृशी यत्प्राप्तोऽर्थस्तथोक्तो वार्तिककृतेत्याशङ्क्योपलब्धिलक्षणप्राप्तिमाभिप्रेतां दर्शयन्नाह **उपलब्धी**[१६७.२५]ति । उपलब्धिलक्षणप्राप्ति**रेवंरूपा शास्त्रकृता**[7] **अन्यत्र व्याख्याता** [१६७.२९] इति सम्बन्धः कार्यः । **प्रत्यय**-[१६७.२६]शब्दः प्रत्येकमभिसम्बध्यते । [1]हेतुप्रत्यय आलोकादिः, **समनन्तर**-प्रत्ययः प्राक्तनं विज्ञानम्, **अधिपतिप्रत्ययश्च** चक्षुरादिः, आलम्ब्यत इति कृत्वा **आलम्बनप्रत्ययो** नीलादिः स । किमर्थम् सा तथारूपा **शास्त्रकृता** [१६७.२८]

१. दुर्वेकानुरोधेन 'हेतुसमनन्तरे'त्यादि पाठः सम्यग् भाति ।

अन्यत्र व्याख्यातेत्याशङ्कायामाह—**नैयायिक** [१६८.१] इति । विप्रतिपत्तिमेव दर्शयन्नाह—**ते हि** [१६८.१] इति । **द्र'व्याणाम्**[१६८.२]पलम्भकानीति वदता च यत्रैतानि सन्ति तदुपलम्भे निमित्तं द्रव्य एव च सन्तीति द्रव्यस्यैवोलम्भे निमित्तम् अमूनि नोपलम्भमात्र इति दर्शितम्, अन्यथा अभावसमवाययोरुपलब्धिर्न स्यात् । न च नास्ति संयुक्तसमर्थतया विशेषणभावेन तयोरुपलम्भस्य नैयायिकैरिष्टत्वात् । [59b][1]एवं गुणादीनामपि तथा तथोपलब्धेरिष्टत्वादिति । एवमेषामभिधानं कुतो ज्ञायत इति आह **महती**[१६८.२]ति । एतच्च प्रतितन्त्रसिद्धान्ताश्रयणेन **एवं वचनादि**[१६८.३]त्याचष्ट इति द्रष्टव्यम् अन्यथा असंगतमुक्तं स्यात् वैशेषिकसूत्रत्वादस्येति । अस्यायमर्थो महत्त्वयुक्ते महत्युपलब्धिर्भवति न द्व्यणुकादौ । यदि महत्त्वादुपलब्धिस्तर्हि परममहत्त्वेप्यवकाशादौ सा किं न भवतीति पर्यनुयोगाशंकायां तद्व्यवच्छेदार्थमुक्त**मनेकद्रव्यत्वादिति** । अथवा अनेकद्रव्यावयवास्तद्वत्त्वमवयविनो महत एव न द्व्यणुकस्येत्युत्पत्त्यान्यनिरपेक्षत्वं महत्त्वानेकद्रव्यत्वयोरिति लक्षणविकल्प एवायं विवक्षितं बोद्धव्यम् । अनेकं द्रव्यमारम्भकतया विद्यते यस्य तद्भावस्त[3]स्मात् । अनेकद्रव्यवत्त्वादिति पाठे सर्वधनादेराकृतिगणत्वेन गणपाठादस्य बहुव्रीहिप्रतिषेधेन शतुर्विधे द्रष्टव्यः (मतुविधिः दृष्टः) अन्यथा कर्मधारयमत्वर्थीयात् बहुव्रीहिर्लाघवेनेष्ट इत्यनेकं द्रव्यं [यस्य] स तथा तद्भावस्तस्मादिति निर्देशः प्राप्नोति अनेकद्रव्यवत्त्वा(व्यत्वा)दिति पाठे तु न काश्चिदायासः । यदि [4]महत्त्वादनेकद्रव्यवत्त्वादन्यत[र]स्माद्वा उपलब्धिर्वायावपि सा स्यात् । तन्निवृत्त्यर्थमुक्तं **रूपादि**[१६८.३]ति ।

ननु चानयोपलब्धिलक्षणप्राप्त्या युक्तस्यानुपलम्भतोऽभावसिद्धेरनुपलब्धिस्तावल्लिङ्गत्वेन तैरिष्टैवेत्याह—**एवं च** [१६८.३] इति । **अनैकान्तिकीत्याचक्षते** [१६८.५] त एव नैयायिकाः । कुतोऽनैकान्तिकीत्याशङ्क्य [5]तन्मत एव स्थित्वा आह—**सत्यपि** [१६८.४] इति । एतदेव तन्मत्यैव निदर्शनेनोपपादयन्नाह—**नहि** [१६८.५] इति । [2]**न भवन्ति** न सन्ति । **भाष्यकारः** प्रकरणात् न्यायभाष्यकारः पक्षीलस्वामी । अनुमानत उपलब्धिमेव तदीयां दर्शयितुमाह—**इन्द्रियत्वात्** [१६८.८] इति । **प्राप्यकारी** [१६८.९] विषयं प्राप्य तेन सह संयुज्य तत्र ज्ञानं जनयतीत्यर्थः । ए[6]तच्चार्थकथनमवसेयम् न तु अनुमानप्रयोग एष । पञ्चावयवस्य वाक्यस्यानुपदर्शनात् । मवनैकान्तिकत्वं कीतन(तदनैकान्तिकत्वकीर्तन)मेवोपसंहरन्नाह—**तदेवमि**[१६८.११]ति । अनैका-

१. दुर्वेकानुरोधेन 'द्रव्याणामुपलम्भकान्याह' इति पाठः स्यात् ।
२. मूले 'भवन्ति' इत्येव मुद्रितं किंतु 'न भवन्ति' इत्येव पाठोऽनुटीकागतः साधुः ।

न्तिकत्वाभिधानं च तेषां वैशेषिकसूत्रे यथाश्रुति द्रष्टव्यम्। न तु तैर्यथा व्याख्यायते। ते हि रूपादिष्युद्भूतसमाख्यातादिति विशेष्य [7]नायनरश्म्यवयविन उपलब्धिं निवर्तयन्तीति। [1]**तन्निरासार्थस्तु**[१६८.१२]पलब्धिलक्षणप्राप्तानुपलब्धेरनैकान्तिकत्वनिरासार्थम्। कथं तन्निरासार्थमित्याह—**उपलब्धी**[१६८.१२]ति। **अभ्युपगमाद्** [१६८.१३] अन्यत्रेति सामर्थ्यात्। तदुपदर्शनेति[पि] यदि व्यभिचारसंभवः कथं तन्निराकृतं भवतीत्याह **यदाही**[१६८.१३]ति। **कुतो व्यभिचारावकाश** [१६८.१५] इति तयोपलब्धिलक्षण[8]प्राप्त्या वर्तमानस्यानुपलब्धिरिति च प्रकरणात्। **तस्या** [१६८.१५] इत्युपलब्धिलक्षणप्राप्तानुपलब्धेः।

ननु नैयायिकैर्यदुपलब्धिलक्षणप्राप्तिशब्देन महत्त्वादिकमुच्यते तस्याप्यनवद्यत्वात् सैवोपलब्धिलक्षणप्राप्तिर्भवतापि कस्मान्नोच्यते किं पुनराहोपुरुषिकयाऽन्याभिधीयत इत्याशंक्याह **महत्त्वादिकं त्वि**[१६८.१६]ति। तमेवा[60a][1]संभवमाश्रयाभावद्वारेण प्रतिपादयितुमाह **नही**[१६८.१७]ति। **हि**र्यस्मात्। न रूपादिव्यतिरिक्तं द्रव्यं **स्वज्ञाने प्रतिभासते**। कथं न प्रतीभातीत्याह **आकारान्तरेणे**[१६८.१८]ति रूपाद्यात्मनोऽन्येनात्मना। किं भूतेनेति आह **तत्प्रतिभासे**[१६८.१८]ति तस्य रूपादेः प्रतिभासः प्रतिभासत इति कृत्वा स्वरूपमेव तस्य **विवेकः** प्रच्युतिस्तद्वता। अनेनानुपलम्भ[2]स्तद्भावव्यवहारसाधको दर्शितः। प(घ)टप्रतिभासनेऽपि पटप्रतिभासव्यवस्था स्यादित्या**तिप्रसङ्ग**[१६८.१९]**स्तस्मात्**। इदानीं द्रव्यमभ्युपगम्य महत्त्वादेः तदुपलम्भकत्वमपाकर्तृकाम आह **न चे**[१६८.२०]ति। **तत्सम्बन्धेपि** महत्त्वसंबन्धेपि। स्वहेतुसमुद्भूतेऽपि तत्रामहति द्रव्यात्मनि तस्याकिञ्चित्करत्वादिति भावः। स्वरूपेण महतस्तु किमर्थान्तरे[3]ण महत्त्वेन तद्बुद्धेरपि तत एवोत्पत्तेरिति चाभिप्रेत्य **न च स्वरूपेणामहन्** [१६८.२०] इति। एकस्मिन्नेव पक्षे स दोषो दर्शितोऽनेनेति द्रष्टव्यम्।

अथ तत्संबन्धे मा भूदस्य स्वतो महत्ता। किं नश्छिन्नमर्थान्तरभूतमहत्त्वरूपेणास्य ग्रहणं भविष्यतीत्याह—[१६८.२१]—**पर**[2]**रूपेणेति**। परस्य ततोऽन्यस्य महत्त्वस्य रूपेण। [4]**कथमभ्रान्तं** [१६८.२१] भ्रान्तमेव। अतस्मिंस्तद्ग्रहरूपत्वाद्भ्रान्तेरिति भावः। उपलम्भयतीत्यु**पलंभकम्**। एतच्च महत्त्वमुपेत्योक्तं दूषणम्। न तु च महत्वा(त्व) न्नाम किञ्चित् न चात्र स(तत्) कस्यचिदुपलंभकं नामेत्यपि वक्तव्यम्। रूपं वा द्रव्यस्योपलम्भकमिति वर्तते। कुतस्तस्यानुपलम्भकत्वमित्याह—**तस्यापी**[१६८ २३]ति। तस्य **रूप**[5]स्य **न तथा ग्राहकत्वमि**[१६८.२४]ति सम्बन्धनीयम्। ग्राहयतीति

१. तन्निरासं S। २. अपररूपेण S।

ग्राहकं तस्य भावस्तत्त्वमिति चार्थो द्रष्टव्यः। **अपि** [१६८.२३] न्यायतः संभावनामाह। तुल्योपकत्त्वं(पपत्ति) वा समुच्चिनोति। परेणाकांक्षितहेतुं दर्शयितुमाह **स्वरूपेणे-**[१६८.२३]ति। **स्वरूपेण** प्रातिस्विकेन आत्मना **ग्रहणे सत्यन्य**स्योपलब्धौ तस्येति प्रत्यासत्तेः। नान्यस्यापरोक्षीभाव इति द्रव्यात्मनोऽत्यन्तपरोक्षत्वात्। अयमस्याशयो रूपं हि गृह्यमाणमेवोपलम्भकं युक्तम्, नान्यथा। न तच्च द्रव्यरूपेण गृह्यते तद्ग्राहिणो ज्ञानस्य भ्रान्तत्वप्रसंगात्। ततः कथं द्रव्यस्योपलंभ इति। तथाप्यस्य तथात्वमुपगच्छामो यदि ततो भेदेन तत्प्रतिभासः[7]स्यान्न चैतदस्तीति प्रतिपादयन्नाह **द्रव्यरूपस्ये-**[१६८.२३]ति। **द्रव्यरूपस्य** द्रव्यस्वरूपस्य। **तद्विवेकेन** रूपस्वभावविवेकेन अनुपलक्षणादनुपलब्धेः। एतच्च दूषणं महत्त्वेप्युपलंभे द्रष्टव्यम्। अत्रैव वक्तव्यान्तरं समुच्चिन्वन्नाह—**न चे**[१६८.२४]ति। हेतुमाह **यत** [१६८.२५] इति। **प्रतिलब्धात्मकमेवो**त्पन्नमेव सत्। **तथातां** [१६८.२६] समवायिकारणताम्। उत्पत्तिक्ष[8]णे निर्गुणमपि द्वितीये क्षणे सगुणं भविष्यतीत्याह **न चे**[१६८.२७]ति। [9]**स्वस्य** द्रव्यस्य। **प्राक्तनरूपयोगेपि** पूर्वस्वरूपनाशोऽक्षणिकत्वादस्येत्याशयः। **यतः** [१६८.२८] पूर्वरूपनाशरूपान्तराऽऽविर्भावात्।

ननु च पूर्वरूपनाशे तस्यैव नाशाद्रूपान्तराविर्भावे चान्यस्यैव भावात् कथं यदेव महत्त्वादिकं प्रति प्रागप्रतिपन्नाधारभावं तदेवाऽऽधा[60b][1]रतां यायादिति चेदयमपरोऽस्तु दोषोऽस्येत्यभिप्रायाददोष एषः। इहापि महत्त्वादिकं प्रति द्रव्यमाधारो नोपपद्यत इति दर्शयन्नाह—**न चे**[१६९.१]ति। अजनकस्यापि तथात्वेऽतिप्रसंगात्। स्थापकत्वादिना प्रकारान्तरेणाधारभावस्यान्यत्र निषिद्धत्वाच्चेति भावः। **अर्थक्रियाविरोधाद**[१६९.२]-र्थक्रियाया अनुपपत्तेः। यथा चाक्षणिकः क्रमेणा[2]क्रमेण वार्थक्रियामुपकल्पयितुं न कल्प्यते तथोदितं पुरस्तात्। समवायिकारणस्येति प्रकरणात् महत्त्वादिकं प्रति समवायिकारणस्यास्योपलभ्यस्य द्रव्यस्येत्यर्थोऽवसेयः। स्यादेतद्यदि नामानन्तरोदितया नीत्या तं प्रति तस्याधारभावो नोपपद्यते तथापि तदनाधार एव तत्समवायिकारणं किं न भवतीत्याह **यत** [१६९.३] इति। [3]**स्वोत्कलितं** स्वाश्रितं स्वारूढमिति यावत्। जनयतु तर्हि स्वोत्कलितं कार्यम्। यतस्तथा व्यपदेशमश्नुत इत्याह—**न चे**[१६९.४]ति। **एतदि**ति स्वोत्कलितकार्यजननम्। अयमस्याशयो लब्धात्मसत्त्वेनैव हि तथा जनयितव्यं न त्वागृहीतमहत्त्वादिरूपेण तेनोत्पत्तव्यम् सहभुवोः कार्यकारणभावाभावेनात[4]द्धेतुकत्वप्रसंगात् क्षणिक[त]या तु द्वितीयेक्षणेऽसत्त्वात् न स्वोत्कलितकार्यजननमिति—**पश्चादाधारभावो** [१६९.५] न चेत्यनुवर्तते, स्वहेत्वागतस्य तदाधाररूपस्याविनाशादिति भावः।

१. अस्य S

२. आधाराभावः S

तदभावेपि कथमसंभवीत्याह—**यस्मादि**[१६९.६]ति। **एवमनेकद्रव्यवदिति** व्यपदिश्यते। द्रव्याभावश्च न हि रूपादिव्य[5]तिरिक्तमित्यादिना अनन्तरमेवोपपादितः। **तथोपलब्धिलक्षणप्राप्त्या** [१६९.१०] **उपलब्धिलक्षणप्राप्तस्येति** तथाभूतोपलब्धिलक्षणप्राप्तिमत इत्यर्थः। **इति**[१६९.११]हेतौ **शास्त्रकारः** प्रकरणात् वार्तिककारः। अभावशब्देन अभावो अभावव्यवहारश्चाभिप्रेत्य(त) इत्यभिप्रायेण आह—**अभावव्यवहारहेतुश्चे**[१६९.१३]ति। **या त्वि**[१६९.१३]त्यादि ब्रुवतश्चायमभिप्रायो—यदि व्यापकाद्यनुपलब्ध्यभिप्रायेणाभावव्यवहारहेतुर्वेति वक्तुमध्यवस्याह—**नैतद्रूपात्** अभावशब्देनाप्यभावव्यवहारस्य विषयेण विषयिणो निर्देशसम्भवेन वक्तुं शक्यत्वात् ब्रुवन् विशिष्टामेवानुपलब्धिमभिप्रैतीति **उपलब्धिलक्षणप्राप्तानुपलब्धेर्व्यापारमिमं** कथयता च वार्तिककृता सामर्थ्याद्यदत्रोपदर्शितं अन्यत्र तु साक्षादभिहितम् तदपि दर्शयन्नाह—**या त्वनुपलब्धी**[१६९.१५]त्यादि **सद्व्यवहारप्रतिषेधहेतुरित्यवगन्तव्यम्**[१६९.१७]। कुतः पुनस्तदन्यवस्तुविज्ञानमेवेच्छन्तीति ज्ञायत इत्यपेक्षायां योज्यम्—**विज्ञानं चान्यवस्तुनीति वचनादि**[१६९.२१]ति। यदा **कर्तृस्थतया** [6]**विवक्ष्यत** [१६९.२४] इत्यर्थः।

ननु भवन्मते किमुपधी(मुपलब्धा) कश्चिदात्माऽस्ति, येनैवमुच्यते इत्याह—**उपलभमानश्चे**[१६९.२६]ति। **चो** व्यक्तमेतदित्यस्मिन्नर्थे यस्मादर्थे वा। अत्रैवाहंकारस्योपपत्तेरिति भावः।

ननु उपलब्धिक्रियायाः कर्ता उपलभमान उच्यते। तत् किमुपलब्धिजनकस्तथाविध उपलभमान उच्यत इत्याशंक्याह **तथाही**[१६९.२८]ति। काममेवमुच(च्य)ताम् [61a][1]तथापीन्द्रियादेः कथं तत्त्वमित्याह **न चे**[१६९.२८]ति। **अन्यस्ये**[१७०.१]त्यात्मनः। **जनकत्वमिति** प्रकरणात् उपलब्धिजनकत्वमित्यर्थः। **आत्मन** [१७०.७] आत्मास्यस्य नित्यद्रव्यस्य। **तदुत्पत्तावु**पलब्ध्युत्पत्तौ **हेतूनां अव(न)स्थितिः** इयन्त एव हेतव इति व्यवस्थाऽभावः। हेत्वनवस्थितौ च कार्यार्थिनो नियतकारणोपादानं न स्यादिति भावः।

आश्रयत्वात्तर्ह्यसौ कर्ता [2]भविष्यतीत्याह—**आश्रयत्वमपी**[१७०.११]ति। तस्य नित्यस्यात्मनो[6] जनकत्वानुपपत्तेरिति भावः। **क्षणिकत्वे** उत्पत्तिक्षणमात्रसत्त्वे सति **स्थितेरु**त्पादातिरेकिण्या **अभावात्** [१७०.१२]। **न पाताभावस्तस्याः** [१७०.१४] पतनस्यैवासंभवादिति भावः। कुतो न पतनं तस्या यतो न पाताभावः स्थितिरित्याह—**तस्याः** [१७०.१४] इति। तस्या उपलब्धे**र्गुरुत्वाभावात्** [१७०.१५]

गुरुत्वसंज्ञकगुणा[3]भावात् । तदभावश्च बुद्धेर्गुणरूपत्वे निर्गुणत्वात्, निर्गुणत्वञ्च गुणानां "अगुणत्वं द्रव्याश्रितत्वं चे"ति वचनात्, गुरुत्वं च गुणः "गुरुत्वं जलभूम्योः पतनकारणमि" ति वचनाच्च गुरुत्वाभावः। मा भूद् गुरुत्वं तस्याः पतनं तु किं न भवतीत्याह—**सं[1]योगाभाव** [१७०.१५] इति । यदि गुरुत्वादेव पतनं भवेत् न [4]तर्हि शाखादौ फलान्यवतिष्ठेतेति संयोगाभावे सतीत्युक्तम् **संयोगाभावे** [१७०.१५] शाखावृन्तादि-संयोगाभावे ।

**कृतान्तः** [१७०.१६] सिद्धान्तः **समवायात्** उपलब्धेस्तत्र समवायादित्यर्थः । **सोऽपि** [१७०.१६] समवायोऽपि । कार्यकारणा(ण)भावविशेषः आधार्याधारभावः स चाऽऽत्मनो नित्यस्य न संभवतीति भावः । यद्यप्यु[5]पलब्धेर्न पातः सम्भवी तथाप्यसौ किमाधारो न भवतीत्याशङ्क्य पूर्वस्मिन् पक्ष एव प्रतिवचनं दर्शयति। **न चापतनधर्मिकाया** [१७०.१७] इति। अपतनधर्मकत्वं च तस्या गुरुत्वाभावादनन्तरमेव प्रतिपादितम्। अनेनैतद्दर्शयति—पतनधर्मणो जलादेः पातप्रतिबन्धकः कश्चिदाधारो भवतु यावद्य[6]दि तत्रापि कश्चित् कोऽयं प्रतिबन्धो नामेति न पर्यनुयुञ्जीत । न त्वपतनधर्मण इति तदाह—प्रामाणिकचक्रचूडामणिः—

" स्यादाधारो जलादीनां गमनप्रतिबन्धतः ।
अगतीनां किमाधारो गुणसामान्यकर्मणाम् ॥ " [प्रमाणवा० १.७०] इति।

**अन्यस्याप्या**[१७०.१८]त्मनोपि । **तद्भावप्रसङ्ग**स्तदाधारत्वप्रसङ्गः । कुत एतदित्या[7]ह **तस्ये**[१७०.१९]ति । **तस्य समवायस्य । समानत्वात्** [१७०.१९] एकत्वात् । अत एवाह—एक**त्वेन** [१७०.१९] इति । **अस्य** [१७०.१९] समवायस्य ।

**प्रकरणे**[१७०.२५] चिंतायां प्रस्तावे इति यावत्। **विवक्षितात्** [१७०.२५] शास्त्रविहिताद्। **भक्ष्यात्** [१७०.२५] भक्षणार्हात्। अन्यत्वेन **ग्राम्यकुक्कुटः** [१७०.२६] **तदन्यस्य** [१७०.२६] ब्राह्मणादेरन्यस्य । **भक्ष्योऽपि सन्नभक्ष्य उच्यत** [१७०.२६] इति सम्ब[न्ध]नीयम्। अनेकेन निदर्शनेनोपपद्य[8]मानोऽर्थः सुज्ञातो भवतीति निदर्शनान्तरमाह **यथा च** [१७०.२७] इति। **अधिकारे** [१७०.२७] प्रस्तावे । **तद्वद्** [१७१.१] उपदर्शितद्वयवद् **विशिष्ट** [१७१.३] उत्तरपदार्थाभावविशिष्टे **अर्थे** [१७१.३] तत्सदृश इति यावत् । **तया नञो भावविषयता** [१७१.३] इति

१. संयोगाभावेन S ।

योज्यम्। **तया** [१७१.२] इतीत्थंभूतलक्षणा चेयं तृतीया प्रत्येया। भावविषयभानप्रतिषेध-मात्रविषयतेत्यर्थात्। किंभूतस्य नञ [61b][1]इत्यपेक्षायां योज्यम् **आगृहीते**[१७१.३]ति। तथा विधिसामान्येन समन्तात् स्वीकृतोत्तरपदार्थप्रतिषेधस्य कथं पुनरेतत् ज्ञातव्यमित्यत्रायं न त्तरपदार्थप्रतिषेधमात्रवृत्तिः प्रसह्यवृत्तिरत्र तु उत्तरपदार्थाभावविशिष्टसदृशवस्तुवृत्तिः पर्युदासवृत्तिः इत्याशङ्कायामाह **यत्र** [१७१.४] इति। यत्रैवमेवं **तत्र पर्युदासवृत्तिता** [१७१.६] इति सम्बन्धः। **विधेः प्राधा**[2]**न्यम**[१७१.४]भिधेयतया भावरूपं प्रतिपाद्यत इत्यर्थः। **प्रतिषेधः** [१७१.५] तथाभूतोत्तरपदार्थनिषेधः **अर्थगृहीतः** सदृशवस्तुविधानसामर्थ्याक्षिप्तः **विधिभाग्विधे**[१७१.५]र्योऽर्थः क्षत्रियादिः **स्वपदेना**त्मवाचकेन **नोच्यते** पर्युदासमर्थप्रतिपादके वाक्ये इति बोद्धव्यम् न तु 'समासनिमित्ते अन्वाख्यान-वाक्य' इति नित्यसमासत्वादस्य तदसंभवात् [3]इतरथा 'राज्ञः पुरुषमानय' इत्यादिवत् क्षत्रियानयने विवक्षिते न ब्राह्मणमानयेत्यादिरपि प्रयोगः प्रसज्येत। यत्तु [न] ब्राह्मणोऽब्राह्मण इत्युच्यते तद् ब्राह्मणो न भवति प्रसज्यप्रतिषेधेन मात्रया अर्थः कथ्यते। पर्युदासे प्रसज्य-प्रतिषेधोप्यस्तीति कृत्वा, न पुनः समासार्थमन्वाख्यानवाक्यं [4]तत्, कुम्भं करोतीति कुम्भकारः कुम्भस्य समीपमुपकुंभमित्यादिवदिति। यदि स्वपदेन नोच्यते कथं नामासावुच्येत इति चेत्। अन्यशब्देनेति ब्रूमः। अन्यशब्दस्यैव तत्र प्रयोगात् एकवाक्यता च तथार्थकथने वाक्ये नञर्थवाचकस्यान्यशब्दस्य सुबन्तेनैव पदान्तरेणाभिसम्बन्धात्। एतदेव[5] सामान्योपदर्शितं लक्षणं प्रकृते योजयन्नाह **वि**[1]**धिश्चे**[१७१.६]ति। **वाक्येन** [१७१.७] तथाविधेनेति द्रष्टव्यम्। एवं तत्प्रतिषेधः प्रतीयत इत्याह—**विवक्षितोपलब्धेरनिवर्तन** [१७१.८] इति। कथं तर्ह्यसावुच्यत इत्याह **किं तर्ही**[१७१.१०]ति। कथमन्यशब्देनोच्यते न तु स्वशब्देनेत्याह **अन्यशब्दस्यैवे**[१७१.११]ति[6]। वाक्य इति तत्त्वार्थकथने **वाक्य** [१७१.११] इति प्रत्येयम्। तत्रापि कथमन्यशब्दप्रयोग इत्यपेक्षायां योज्यं **पर्युदासाश्रयेणे**[१७१.१०]ति। एतदेव दर्शयति **अन्योपलब्धिरनुपलब्धिरि**[१७१.११]ति। **इतिर**[१७१.१२]शब्देनाभिधानस्याकारं दर्शयति। **नञश्च सुबन्तेन** समासैकदेशेन। **सामर्थ्यं** [१७१.१२] त्यपेक्षालक्षणः सम्बन्धः। [7]**इति**[१७१.१२]हेतौ। **एकवाक्यत्वं** न वाक्यभेदं(दः) सामानाधिकरण्यमित्यर्थः। तदेव दर्शयन्नाह—**अन्या**[2]**उपलब्धिरनुपलब्धिरि**-[१७१.१२]ति। **इतिना** एकवाक्यत्वस्याकारो दर्शितः। **प्रसज्यप्रतिषेधः** [१७१.१३] कंचिदर्थं प्रसज्य यः प्रतिषेधः। कस्यचिदर्थस्य प्रसङ्गमुपदर्शनमधिकारं कृत्वा यो निषेध उत्तरपदार्थप्रतिषेधमात्रं यत्राभि[8]धेयमित्यर्थः मयूरव्यंसकादित्वाच्च

१. विधेश्चेति S २. न उपलब्धि° S

समासः । [1]**तद्विपरीतः** [१७१.१३] उपदर्शितपर्युदासविपरीतः । वैपरित्यमेव सुख-प्रतिपत्त्यर्थमुपदर्शयन्नाह–**तत्र ही**[१७१.१४]त्यादि । तत्र ह्युत्तरपदार्थप्रतिषेधस्य समासार्थत्वात्प्राधान्यम् । **विधिः** कस्यचिदर्थस्य विधानं **अर्थात्** सामर्थ्यात् **गम्यते** [१७१.१४] यदा विधिप्रतीतिस्तदाऽर्थादिति च द्रष्टव्यम्। [62a][1]तथाहि " अभिहिते न भवन्ति द्वितीयाद्याः विभक्तयः " इत्युक्तेर्विशेषप्रतिषेधस्य शेषधीनान्तरीयकत्वादिति लक्षणात्सामर्थ्यादनभिहिते भवतीति गम्यते। सूर्यं न पश्यन्तीति नात्र प्रद(नञोऽत्रद)र्शिना तिङन्तेन संबद्धो न तु सुबन्तेनेति **वाक्यभेदः** । **प्रतिषेधभाक्** [१७१.१५] सूर्यदर्शनादिः **स्वपदेन** [१७१.१५] स्ववाचकेन सूर्यं न पश्यन्तीति अनेनोच्यते । अत्र तु समास[2]निमित्तेऽन्वाख्यानवाक्य इति द्रष्टव्यम् । प्रसज्यवृत्तिनञ्समासे तत्संभवादिति सर्वञ्चैतत्प्रकरणादितो ज्ञातुं शक्यमिति सर्वमवदातम् ।

प्रासंगिकं परिसमापय्य संप्रति प्रकृतमनुधुन्व(नुबध्न)न्नाह **तदेवमि**[१७१.१६]ति । [2]**भावतो** [१७१.२६] वस्तुतः परमार्थत इति यावत् । **संबन्धकल्पनायाम**[१७१.२७]न्यस्य वास्तवस्य संबन्धस्य कल्पनायाम् । सोप्यर्थान्तरभूतः सम्बन्धः[3] कथं तयोरिति पर्यनुयोगे तदन्यकल्पना, तत्राप्येवमित्यनवस्था प्रस्तुतवस्तुव्यवस्थापरिपंथिनी स्यात् । उक्तसदृशं **उक्तप्रायम्** [१७१.२७] ।

तत्र विज्ञाने किं भूतं सद्घटरूपम् तत्र स्वाकारमर्पयतीत्यपेक्षायां योज्यम् **तथाविधमि**[१७२.१६]ति । यथाविधं प्रदेशरूपं तथाविधं सत् व्यवधानविप्रकर्षादिरहितमित्यर्थः । **स्वाकारद्वारे**[4]**ण** । [१७२.१९] स्वाकारार्पणद्वारेण । एतदेव स्फुटयन्नाह **तादि**[१७२.२०]ति । **तयोः संसर्गस्वा(संसर्गमा)त्मनि** [१७२.२०] स्वात्मनि **दर्शयति । अवधेयवचसः** [१७२.२८] आकर्णनीयवचनाः । **लघुवृत्तित्वाद्** [१७२.२८] अतिशीघ्रप्रचारत्वात् ज्ञानस्य **यौगपद्याभिमानो** [१७२.२९] युगपद्गृहीतानीत्यध्यवसायः । एवं चाचक्षाणेन क्रमेणैव तानि पुरोवर्तीनि तुल्ययोग्यतारूपाणि वस्तूनि गृह्य[5]न्ते ज्ञानेन तु युगपदिति सामर्थ्याद्दर्शितम्। **सर्वत्र तथाभावप्रसंगात्** [१७३.५] भ्रान्तिकल्पनाप्रसंगात् । ज्ञानमेवात्र क्रियेति मन्यते परः । **कथमि**[१७३.४]ति सिद्धान्ती सन्तमसावस्थितघटादिप्रतिपत्तौ कर्तव्यायां प्रदीपस्यापि करणरूपत्वमव्याहतमिति भावः । **कर्तृभेदाद्** देवदत्तादिप्रतिपत्तृरूपकत्वनैक(कर्त्रनेक)त्वात् । **कर्त्रे**[6]**कत्वात्** [१७३.५]-तर्हि इति सिद्धान्तवादी । अयमस्याशयो यदि सत्यप्येकस्मिन्नस्मिन् करणेऽनेकत्र घटादिके कर्मणि कर्त्रनेकत्वादनेकक्रियोदयो वर्ण्यते तर्हि कर्त्रेकत्वात् क्रियैकत्वमिति सामर्थ्यादायातम्

१. एतद्विपरीतः S २. सम्बन्धाभावतः S इति तु न युक्तं, ' सम्बन्धो भावतो ' इति तु अनुटीकानुरोधेन सम्यक् पाठः ।

ततश्च न करणैकत्वानुविधानं क्रियैकत्वस्येति किमनेनोक्तेनापीति । स्यादेतत् यथा तत्र कर्तारो[7] बहवः प्रतिपत्तारस्तथा करणान्यपीन्द्रियाणि बहून्येव ततश्च करणबाहुल्यादेवानेकत्र कर्मणि क्रियाबाहुल्यमिति करणैकत्वात्क्रियैकत्वं व्यवस्थितमिति । तदेतदवद्यम् । यतो ज्वल्यमाने दीपे प्रत्येकमेकस्मिन्नेवेन्द्रिये प्रदीपे वा करणे सर्वेषामेव प्रतिपत्तृणामनेकघटादिकर्मविषयज्ञानक्षणानेकक्रियो[8]दयात्साधारणनैकान्तिकत्वमनिवारितमेवेति । **विशरारुषु** [१७३.६] विशरणशीलेष्वित्यर्थः । अयमस्याभिप्रायो यः किल लब्धात्मसत्ताक एव पश्चात्स्वातन्त्र्येण कांचित्क्रियामभिनिवेशयति स कर्ता, यश्च क्रियासिद्धौ साधकतमः स करणमुच्यते । तथा सत एव कदाचित्क्रियायोगादर्थान्तरभूता क्रिया जायते क्षणमात्रस्थायी च कृत्स्ना(स्नो) भाव [62b][1]इति कथं सत्त्वमासाद्य तथाकारी तथा प्रतिपत्स्यते क्रियास्वर्था-(क्रियामर्था)न्तरभूतामिति । संप्रति क्षणिकाक्षणिकयोरसाधारणदूषणमाह—**न चे**[१७३.८]ति । **सर्वकारकान्वयव्यतिरेकानुविधायिनी**ति विशेषणं हेतुभावेन वेदितव्यम् । रूपरसादिवै(रसावि ववै)धर्म्योदाहरणम् ।

इदानीमेकज्ञानसंसर्गादित्यत्रैकशब्दार्थं निरूपयितुमाह **तत्रे**[१७३.१४]ति । **एकायतनसंगृहीत** एकरूपा[2]द्यायतनसंगृहीतोऽ**नेकत्रापि एकमेवेन्द्रियज्ञानमि**[१७३.१५]ति । निराकारपक्षे द्व्यादिसंख्यानिरासार्थं एकः शब्दः साकारपक्षेपि चित्राद्वैतवादिमतेन तथैवैकशब्दः । **प्रत्यर्थमि**[१७३.१६]ति स्थूलेनायं व्यपदेशः कृतः । परमार्थतस्त्वेकस्मिन्नेव द्रव्ये परमाणुसमूहात्मके प्रति परमाणु तदाकारधारीण्य[3]र्वाग्दर्शनं संक्षेपान्येव(दर्शनप्रसंगे यान्येव) ज्ञानान्युत्पद्यन्त इति । अस्मिंश्च पक्षे यच्चोद्यम्, यश्च परिहारस्तद् द्वयमपि विशेषाख्यानेऽस्माभिरभिहितमिति नेहोच्यते । **योग्यताया** [१७३.२३] इति प्रकरणात् प्रतिषेध्यतद्विविक्तप्रदेशयोः स्वज्ञानोपजननयोग्यताया इत्यर्थः **एकस्मिन् ज्ञाने संसृष्टं** शीलं ययोस्तौ **तथोक्तौ**[4]। **व्याप्तिन्यायसमाश्रयाद**[१७३.२८]शेषोपसंहारन्यायस्वीकारात् । **प्रत्यासत्तेः** [१७४.१] प्रत्यासत्तिन्यायसमाश्रयणादित्यर्थः । का पुनरत्र तयोः प्रत्यासत्तिः सम्भविनीत्याह—**एकज्ञाने**[१७४.१]ति ।

**तस्माद्** [१७४.८] घटात् । यदा तज्ज्ञानं तदा ज्ञातृधर्मलक्षणाऽनुपलब्धिर्यदा तत्स्वभावस्तदा ज्ञेयधर्मलक्षणा तद्विविक्तज्ञानमे[5]व पर्युदासवृत्त्याऽनुपलब्धिरुच्यताम्, न तु तत्स्वभावो वेति **कुमारिलो** [१७४.११] मीमांसावार्तिककारो मन्यत इति शेषः । कर्तृकर्मस्थत्वविवक्षयोपलब्धेर्द्वैतादनुपलब्धेरपि तथैव द्वैतमायातं न्यायत इति मन्यते । घटाभावव्यहारे तद्विविक्तप्रदेशज्ञानस्यैवोपयोगादनुपलब्धित्वं [6]युक्तं नान्यस्ये-

त्याशंक्य द्वयोरप्युपयोगाविशेषं प्रतिपादयन्नाह **यथे**[१७४.१२]ति । **प्रतियोगी** निषेध्या-(ध्यो) विवक्षितस्तत्**स्मरणापेक्षम्** [१७४.१३] । एतदेव प्रतिपत्तृव्यवहारेणोपपादयन्नाह **तथाही**[१७४.१४]त्यादि । अथैकैकत्रैकैकं नास्तीति कथं द्वयोस्तत्त्वार्थमिति चेत् । नैतदस्ति । एकैकस्मिन्नेकैकस्य विशेषण[7]त्वेनावश्यं भावात् । तथाहि यस्मात्केवलप्रदेशाकारं ज्ञानं मया संवेद्यते तस्माद्घटो नास्तीति व्यवहरमाणस्यापि प्रदेशो विज्ञानावच्छेदकत्वेनोपयुज्यत एव । तथा ग(य)तः केवलः प्रदेशोयं दृश्यते ततो नास्ति घट इति व्यवहरतोपि दर्शनं प्रदेशोपाधिभावेन व्याप्रियत एवेति ।

**आहत्ये**[१७५.२]ति निपातस्त[8]ल्क्षणमित्यस्यार्थे ।

**तयो**[१७५.१६]र्भावाभावांशयोः । **उद्भवाभिभवाभ्यां** यथासंख्यग्रहणाग्रहण**व्यवस्था** [१७५.१६] ।

धर्मभेदे धर्मिरूपेणाभेदेऽपि **धर्मयोर्भेद इष्टः** [१७५.१८] । **नो**ऽस्माकं स्थानं [1]**स्थितं** व्यवस्थानं मतमिति यावत् तस्मिन् । **उद्भवाभिभवात्मत्वात्** [१७५.१८] उद्भूतानुद्भूतरूपत्वात् । **ग्रहणं** [१७५.१८] चशब्दादग्रहणं चावतिष्ठते तयोरिति प्रकर[63a][1]णात् ।

एतस्मिन्व्याख्याने भावप्रधानः साधनशब्दो वार्तिककारस्य विवक्षित उन्नेतव्य इत्यभिप्रायेण **साधनत्वामि**[१७६.६]ति व्याचष्टे । **सिद्धिहेतुत्व**शब्दसामर्थ्याच्च कस्यचिदिति लब्धम् । **तदयोगात्सि**[१७६.७]द्धिहेतुत्वायोगात् । दूषणान्तरमत्र समुच्चिन्वन्नाह **अभावस्ये**[१७६.९]ति च । अभावस्य **नास्तीति ज्ञानजनने** [१७६.१०] **नित्यं तज्जननप्रसङ्ग** [१७६.१०] इति योजयित्वा कुत एतदित्यपेक्षा[2]या**मनपेक्षितसहकारिण** [१७६.९] इति हेतुभावेन विशेषणपदं योज्यम् । तदनपेक्षत्वमेव कथमस्येत्यपेक्षाया**मनाधेयातिशयं** [१७६.१०] तस्पति (यतयेति) योज्यम् । **साध**[2]**नत्वायोगात्त**[१७६.११]स्य प्रतिषेधमात्रस्येति प्रकृतत्वात्प्रत्येयम् । तस्य साधनासिद्धेरित्यस्य एकं(एकां) विधामभिधाय अपरामुपदर्शयितुमाह **अथवे**[१७६.११]ति । **साधनमेव** [१७६.१२] साधकमेव निश्चायकमेवेति[3] यावत् **तदुभ(द)यप्रसङ्गात्** [१७६.१५] नास्तीति ज्ञानोदयप्रसंगात् ।

**अन्यथा** [१७६.२५] भावरूपसंसृष्टत्वप्रकारेण । **तदयोगात्** [१७६.२६] तस्याभावांशस्यायोगात् । **सा** पररूपात्सं(पासं)सृष्टरूपता ।

---

१. स्थिते S । २. साधकत्व° S ।

प्रकारान्तरेणाप्यभावव्यवहारसिद्धेरविभन्धात्किं तवैतत्पक्षाश्रयणप्रयत्नेनेति परपक्ष एवाशंक्यापरस्यैवाभिप्रायं [4]वर्णयन्नाह **एवं मन्यत** [१७७.९] इति। **घटज्ञानाभावप्रतिपत्त्या** [१७७.१०] वा **घटाभावं प्रतिपद्यत** [१७७.११] इति वर्तते। **ततो** [१७७.११] घटाभावप्रतिपत्तेः। **घटाभावव्यवहारमि**ति प्रतिपद्यत इत्यस्यानुवर्तनादुक्तम्. केवलप्रदेशाभिप्रायेण **साक्षाद् ग्रहणम्** [१७७.१५]। तज्ज्ञानाभिप्रायेण **पारंपर्यग्रहणम्**। स च तथा हानतो(भावतो) घटाभावः। एवं हि लोकप्रतीतिरनुकूलिता भवतीति भावः। मध्ये घटाभावप्रतीतेर्भावात् **पारंपर्येणापि** [१७७.१८] इत्याचष्टे परः। **इति**[१७७.१९]ना मननीयस्याकारो दर्शितः। केवलप्रदेशज्ञानापेक्षया **स्वसंवेदन**[१७८.२]प्रत्यक्षेण चेत्युक्तं द्रष्टव्यम्। पर एव विशेषमाशंक्य परिहरन्नाह **नन्वस्त्येवे**[१७८.८]ति। **इतरया** [१७८.९] प्रतिषेधमा[6]त्रया रूपयाऽनुपलब्ध्या तदवगतया **अन्यस्ये**[१७८.१२]ति व्यवधानाव्यवधानकृतस्य। एवं सति को गुण इत्याह—सांख्य(ख्यः) स्वमते गुणं दर्शयन्नाह **तथे**[१७८.१८]ति तथा सही(ती)ति योज्यम्। **हि**र्यस्मादर्थे द्रष्टव्यः।

**तस्य वस्तुनो लिङ्गं भवति**। [१७९.१] तल्लिङ्गमेवं सति भवतीत्यर्थोऽवसेय इति।

**भावाभावयोर्विरोधा**[१७९.१०]देकात्मत्वानुप[7]पत्तेः **तुच्छरूपत्वं**[१७९.१५] न किञ्चिद्रूपत्वम्। तदपि पररूपेण न किञ्चिदित्यभिप्रायेणाह—**पररूपेण** [१७९.१६] **तस्यापि तुच्छरूपत्वादिति शून्यविकल्पप्रतिभासी** [१७९.१७] तदभावमात्रविकल्पप्रतिभासी। **त[1]द्रूप परिहारात्** [१७९.१८] प्रतिषेध्यरूपविरहात्। **तथा** तद्वत्। **विरुध्येत** [१७९.२०] नोपपद्येत। **अन्यथा** [१७९.२१] स्वरूपेणापि तुच्छरूपत्वप्रकारेण। कथं पुनस्तथात्वे परस्य तत्राभावो न स्यादित्याह-**यो ही**[१७९.२२]ति **रूपान्तरन्तु** सदृशरूपान्तरन्तु।

कीदृशं **पररूपशून्यं** [१७९.२८] निषेध्यरूपरहितम्। विषयेण वामुना विषयिणो विधानस्य विधीयमानधर्मस्य—निर्देशो द्रष्टव्यः। **पर्युदास इति** [१७९.२८] कथ्यत इति वर्तते। **ततो** विवक्षिताद् रूपा**त्तत्प्रतीतिः**[१८०.२] रूपान्तराभावप्रती**तिः**। **नेति** प्रकृतं निषेधयति। प्रतीतावित्यन्तर्भू[63b][1]तो णिजर्थो द्रष्टव्यस्तेना**कारण**स्य प्रत्यायकाजनकस्य **प्रतीतौ** प्रत्यायने **सामर्थ्यासम्भवात्** [१८०.२] प्रकरणात् **तस्य** [१८०.५] विवक्षितस्य रूपस्येति। अर्थान्तरस्य सतो

१. तद्रूपविरहात S

गमकत्वे हि तज्जनितत्वं सामर्थ्यं वाच्यम् । नचार्थान्तरप्रसज्यप्रतिषेधेन सकलशक्तिविकलेन तज्जनितं येनास्य तथाभावो भवेदिति भावः । अवश्यं किं तेन तत्कारणेन भाव्यं येनाकारणस्येत्यु[2]च्यमानं शोभेतेत्याह **तादात्म्ये**[१८०.३]ति । **अन्यस्य** [१८०.९] अव्यभिचारनिबन्धनस्य भावादिति भावः । **तेन**[1] प्रत्यक्षेण **अग्रहणात्** [१८०.९] ।

स्यादेतद्यदि तत्त्वव्यवस्थापकादेव प्रमाणाद्घटस्याधेयभूतस्याभावः सिद्ध्यति, तर्हि तस्य घटासंसृष्टरूपत्वसिद्ध्यर्थमभावप्रमाणमभ्युपेयम्। घटासंसृष्टरूपत्वमस्य ततः सिद्ध्यति। एवं तर्हि घटं प्रत्याधा[3]रभावोऽस्याभावप्रमाणप्रतिपेध्यः प्राप्त इत्याशंकायां यथा द्वयमप्येतत्तत एव प्रसिद्ध्यति तथा प्रदर्शयितुं **द्विविधो ही**[१८०.९]त्यादिनोपक्रमते । **अथमि**[१८०.१०]ति । इदमाऽत्रे(त्र) देशमात्रं विवक्षितम् । **तद् व्यावृत्तरूपतया** [१८०.१०] घटव्यावृत्तस्वभावतया। **घटासंसृष्टरूपो** न घटेन सम्बन्धस्याहैकरूपम्। तद्व्यावृत्तरूप[4]तयैव च **घटवानपि** घटसहितोऽपि । **ततो** घटात् **अन्य** इति । सर्वथा घटादन्यत्वं तस्यैका विधा । **घटवानि**[१८०.१०]ति तु प्रमादपाठः । द्वितीयां वा(वि)धामाह **केवलश्चे**[१८०.११]ति। केवल इति, घटादन्य एव सानु(सन्)-तत्संयोगीति विवक्षितम् तदेव कैवल्यं स्पष्टयन्नाह—**घटं प्रती**[१८०.११]ति । **तस्य** प्रदेशस्य **तद्विवेकेन** [१८०.११] घट[5]रूपविवेकेन च **प्रत्यक्षेण ग्रहणे** सति। **घटविरहश्च** [१८०.१२] संयोगिघटविरहश्च । **इतिस्तस्मात्** । **वस्तूनामसङ्करो**-[१८०.१३]ऽसाङ्कर्यम् , मत्सरशब्दवद्धर्मवचनस्यापि संकरशब्दस्या(स्य) भावात्, तत् **सिद्ध्यर्थं** तन्निश्चयार्थं, **परानभ्युपगताऽपेक्ष(क्ष्य)ते** [१८०.२० [2]**तदेति** [१८०.२०] इहैवच्छेदः स्वज्ञान एव । परानभ्युपगतत्वमेव[6] तस्याः प्रतिपादयति **अन्यभावादिति** । **अन्यथा** [१८०.२१] यदि तस्य तद्भावरूपता परानभ्युपगतानपेक्षते(क्षिता) तेन प्रकारेण । **प्रत्यक्षसिद्धता च** [१८०.२२] तदभावस्येति प्रकरणात् । **तदैवे**[१८०.२३]ति तयोस्तादात्म्योपगमकाले । यद्वा प्रत्यक्षसिद्धता तदैव नेति योज्यम् । यद्वा सा परानभ्युपगताऽपेक्ष्यते किं तदा प्रत्यक्षसिद्धतेत्याशंकायां **ने**[१८०.२३]त्युत्तरम् । के(क्व) तर्हि साभिहितेत्यपेक्षायामुक्तं **प[3]क्षान्तर** [१८०.२३] इति । तादात्म्योपगमपक्ष इत्यर्थः । संयोग एव समवायशब्देनोक्त इति व्याचक्षाणश्च धूमो हि संयोगी हेतुरित्यभिप्रैति । कुतः पुनः स्वशब्देनैव

---

१. तेन ग्रहणात् S २. तदिति S। ३. पक्षान्तरेण S.

गो नोक्त इत्याह–**संयोगे**[१८१.२]ति । **भेदेने**[१८१.३]तरभिन्नेन रूपेण यो **व्यपदेशो** [१८०.३] व्यपदिश्यमानत्वं **तत्रानादरात्।** यद्वा **भेदेन भिन्नेन** वाचकेन यो व्यपदेशमा(श आ)ख्यानं तत्रानादरादिति । किं पुनः समवाय एव नोच्यत इत्याह **परेषां त्वि**[१८०.३]ति। एवं तावद्भट्टार्चटो व्याचष्ट अन्ये पुनरस्थान एवास्य मतिविभ्रमो जात इत्याचक्षते । तथाहि धूमावयविधर्मिणि पर्वते वा धूमत्वे(मवत्त्वे)न धूमत्वेन च हेतुना साग्नि[64a][1]त्वं साध्यत इत्येकार्थसमवाय्येव धूमो हेतुरिति परे संसचते (संचक्षते) । पुरस्ताचायं तस्माद्धूम एवात्र धर्मी कर्तव्यः । साग्निरयं धूमो धूमत्वादित्युद्योतकरमतमदर्शयदिदानीं तु तद्विस्मृत्यैवं व्याचक्षाणो वार्तिककारमप्यवज्ञयात्र(ज्ञापात्र)मापादयतीति–किमत्र ब्रूम इति । **इतरस्य** [१८१.६] धूमस्य ।

**ननु चे**[१८१.८]त्यादिना प्रकृतमाक्षि[प]ता **सत्यं** [१८१.१०] **प्रसङ्गोरनित्या**(ङ्गेनेत्या)दिना [2]च परिहरता अनेन यदीश्वरसेनमतानुप्रवेशेन कश्चिदन्यभावतदभावयोरमीषामन्यतमं सम्बन्धमिच्छति तदभावोपदर्शनेन स तावत्कण्ठोक्तेनैव निरस्यते। सामर्थ्याच्च येपि नैयायिका–'न वयमनयोर्गम्यगमकभावं वर्णयामोऽपि तु संयुक्तविशेषणसन्निकर्षजन्मना प्रत्यक्षेण घटाभावः प्रतीयते' इत्यभि[3]मन्यन्ते तेप्यन्यभावतदभावयोः सम्बन्धाभावेन विशेष्यविशेषणभावानुपपत्तेः कथं तज्जन्मनः प्रत्यक्षस्य वार्तापि येन तदवसेयोऽसत्त्वाद्भवितुमर्हतीति निरस्ता भवन्तीत्यभिप्रायेणान्यभावतदभावयोः सम्बन्धाभावो विभावित इति वेदितव्यम् । अस्यैवार्थस्य पुनरुक्ततां परिहर्तुमाह [4]**पूर्वं हि** [१८१.११] इति । तस्य तदन्यासंसृष्टरूपस्येत्यादिना प्रागभिहितत्वादुक्तम् । **प्रत्यक्षान्तरासि**[१८१.१२]ति हानादिबुद्धिव्यपेक्षया बोद्धव्यम् । न च विशेषणविशेष्यभावलक्षण एव संबन्धः । सम्बन्धेन च संबन्धान्तरं मृगणीयमिति तेन शक्यते वक्तुं षट्सु पदार्थेष्वस्यानन्तर्भावेन सप्तमपदार्थोपगमयन्वि[5]प्र(गमनप्र)सङ्गात् दण्डदण्डिनोर्जातितद्वतोश्च विशेषणविशेष्यभावोपपत्तेः संयोगसमवायसम्बन्धयोरस्तंगमनप्रस(सं)गाच्च किं कुर्वच्च तत्तस्य विशेषणमित्यादिविचारासहत्वाच्चेति । एवं चास्याक्षेपपरिहारापुनरुक्तताप्रदर्शनं चानवगतवक्ष्यमाणग्रन्थार्थस्य त्वरया चोदितस्य चोद्ये [6]सत्यादितो द्रष्टव्यमितरथा संबन्धाभावोपदर्शनग्रन्थव्याख्यानानन्तरमिदं भ्राजेतेति । [7]**तेन** प्रदेशावयवा **द्रव्यात्मानो** [१८१.२५] द्रव्यस्वभावाः । **नवैव** [१८१.२६] नवसंख्याव्यवच्छिन्नान्येव पृथिव्यप्तेजोवाय्वाकाशदिक्कालात्ममनोलक्षणानि । तदाह प्रशस्तकरः "तत्र द्रव्याणि–पृथिव्यप्तेजो-

१. तेहि S

वाय्वाकाशदिक्कालात्म[7]मनांसि सामान्यविशेषसंज्ञोक्तानि नवैवेति ।" [प्रश० भा० पृ० ३] **आदि**[१८१.२७]शब्दाद्गुणवत्त्वसमवायिकारणत्वावबोधेः(धः) ।

**तत्र** [१८१.२७] अभावो(वे) गुणरूपेणैवाभावो द्रव्ये वर्तिष्यत इत्याह **न चे-**[१८१.२८]ति । **तत्र** द्रव्ये रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्[त्व]संयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नगुरुत्वद्रवत्वस्नेहसंस्कारधर्माधर्म[3]शब्दाश्चतुर्विंशतिगुणाः । न चायमभावस्तेषां चतुर्विंशतेर्गुणानां रूपादीनामन्यतमः । कर्मरूपतया तर्हि तत्रासौ वर्तिष्यत इत्याह—**नापी**[१८२.१]ति । **कर्मरूपतया** [१८२.१] वर्तत इत्यनुवर्तते । कस्मान्न वर्तत इत्याह **पञ्चस्वि**[१८२.१]ति । उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनलक्षणेषु पञ्चसु कर्मस्वनन्तर्भावात् । कथं तस्य तत्रान[64b][1]न्तर्भाव इत्याह **तल्लक्षणविरहादि**[१८२.२]ति । किं पुनः कर्मणो लक्षणं यद्विरहस्तस्योच्यत इत्याह **एकद्रव्यमि**[१८२.२]ति । भावप्रधानत्वान्निर्देशस्यैकद्रव्यत्वमित्यर्थः । **आदि**[१८२.३]ग्रहणेन कर्मत्वसम्बन्धः क्षणिकत्वं मूर्तद्रव्यवृत्तित्वं गुरुत्वप्रयत्नसंयोगजत्वं स्वकार्यसंयोगविरोधित्वं संयोगविभागनिरपेक्षकारणत्वमसमवायिकारणत्वं स्वपराश्रय[2]समवेतकार्यारम्भकत्वं समानजातीयानारम्भकत्वं द्रव्यारम्भकत्वं च परिगृहीतम् । सामान्यादिरूपेण तर्हि तत्रासौ वर्त्स्यतीत्याह—**नापी**[१८२.३]ति । **अपि** शब्दाद्विशेषसमवायपरिग्रहः । कुतस्तथा न वर्तत इत्याह **तद्रूपे**[१८२.४]ति । एवं ब्रुवतोऽस्यायमाशयः—स्वविषयसर्वगतमभेदात्मकमनेकवृत्त्यनुवृत्तिबुद्धिकारणं हि सामान्यस्य रूपं न[3] चायं तथा । तथाऽन्तेषु भवा अन्त्याः स्वाश्रयविशेषकत्वावि(त्वाद्वि)शेषा विनाशारम्भरहितेषु नित्यद्रव्येष्वण्वाकाशदिक्कालात्मनःस्व(त्ममनःसु) प्रतिद्रव्यमेकैकशो वर्तमाना अत्यन्तव्यावृत्तिबुद्धिहेतवः, न चायं तथा । अयुतसिद्धानामाधार्याधारभूतानां च सम्बन्धः इहप्रत्ययहेतुः समवायो न चायं तद्रूप इति । [4]**तदभ्युपगमात्त**[१८२.५]स्य संयोगस्याभ्युपगमात् । **पञ्चानां** [१८२.९] द्रव्यगुणकर्मसामान्यविशेषाणां **समवायित्वं** [१८२.९] समवायाश्रयत्वम् । **प्रदेशाभावेऽपि** [१८२.१३] विशिष्टोद्देशाभावेपि **घटाभावसंभवात्** [१८२.१३] । अनेन व्यतिरेकानुविधानं दर्शितम् । **न चास्य प्रतिविषयं भेद** [१८२.१८] इति अनेन चेतरकार्यधर्मातिक्रमो दर्शितः । **सम्बन्धिभेदात्** [१८२.१९]। सम्बन्धिनां घटपटादीना **भेदात्** नानात्वात् अन्यादृशत्वाद्वा । **भेदे** [१८२.२०] नानात्वे अन्यादृशत्वे इष्यमाणे । **तत्प्रसङ्गो** भयप्र(भेदप्र)सङ्गः । समनन्तरमेवोक्तं (?) ।

ननु च वाच्यवाचकभूताविह शब्दार्थौ प्रकृतौ तथा बुद्धिघटिते च शब्दार्थसामान्ये वाच्यवाचकरूपे न तु शब्दार्थस्वलक्षणे, न च तयोः [6]शब्दार्थसामान्ययोर्जन्यजनकभावः

सम्भवी तत्कथमेवमुक्तम् इत्याशङ्क्य विशेषाभिधानार्थमभ्युपगच्छन्नाह—**यद्यपि चे-** [१८३.४]ति । **शब्दार्थयोरि**[१८३.५]ति । वाच्यवाचकभूतयोरिति विवक्षितम् । **बुद्धिकल्पितसामान्यरूपते**[१८३.५]ति प्रबुद्धसंकेताहितवासनस्य या बुद्धिः 'स एवायं यो मया वाचकत्वेन प्रतिपन्नः स [1]एवायं यो वाच्यत्वेन प्रतीत' इति संकेतकालोपलब्धशब्दार्थाभेदेन स्वाकारं प्रतीयती जायते तया यद्रूपं कल्पितं सामान्यं तद्रूपतेति विशेषविवक्षया न । **तथापी**[१८३.५]ति **उत्प्रेक्षा** समाकलनमध्यवसाय इति यावत् तस्या **निबन्धनस्य** [१८३.६] बीजस्य । शब्दस्वलक्षणानुभावादेव हि वाचकशब्दसामान्या(न्यो)त्प्रेक्षा भव[8]तीति भावः । **तन्मुखेन** [१८३.७] वाचक-शब्दसामान्योत्प्रेक्षाबीजशब्दस्वलक्षणोत्थापनद्वारेण **अन्यभावस्य** [१८३.१३] केवलप्रदेशादिभावस्य । अनेन च **प्रागपि** [१८३.१५] इत्यादिना **सत्यपि तदभिप्राय** [१८३.१६] इत्यादिना च तदन्वयव्यतिरेकानु(काननु)विधानं तस्य दर्शितम् । भेदे सत्यसति कार्यकारणभावे अविनाभावानुपपत्तेस्तद्**द्वारक** [१८३.१६] [65a][1]इत्याह ।

ननु यदि यद्यस्य सिद्धेर्निबन्धनं तस्य तेन सह कार्यकारणभावादिकः सम्बन्धोऽवश्यं भावीत्युच्यते । न तर्हि चक्षुरादीन्द्रियं स्वविषयस्य रूपादेः प्रतिपत्तिनिबन्धनं स्यादित्यभि-प्रायवान् परः प्राह—[1]**कथं तर्हि** [१८३.२८] इति । सिद्धान्त्याह—**परस्परे-** [१८३.२८]ति । अनेन यदि नाम तयोः समकालिकयोः साक्षात्कार्यकारणभावोऽस्तीति दर्शयति । अनयोरप्येवमेव भवि[2]ष्यतीत्याह—**नैवमि**[१८४.१]ति । इह अन्यभावे तदभावसाधने । **एवं** [१८४.१] अनन्तरोक्तं नास्ति । कुत इत्याह—**अन्यभावे-** [१८४.१]ति । **तदयोगादे**[१८४.१]कसामग्र्युत्पादायोगात् । अयोगश्चाभावस्य कुत-श्चिदुत्पादे भावरूपताप्राप्तेस्ताद्रूप्यहानिप्रसङ्गात् घटाभावेन च विना तत्प्रदेशक्षण-सदृशस्य क्षणस्याभावप्रसङ्गाच्च द्रष्टव्यः । प्रौढवादितया तत्तदुक्तमयुक्तं प्रतिपाद्य[3] सम्प्रत्यप्रस्तुताभिधानमस्य दर्शयन्नाह—**लिङ्गलिङ्गिभावलक्षणस्य च** [१८४.२] इति ।

**न तु केवलो** [१८४.२४] घटाभाव इति प्रकृतत्वात् । कैवल्यमेव दर्शयति धर्मिणः **कस्यचिद्गुणभावं** [१८४.२४] विशेषणत्वमनापन्न इति ।

**तद**[2]**न्यस्य** [१८५.२३] **धर्मिणोऽभावादि**ति केवलप्रदेशरूपादन्यस्य । **धर्मिणो** [१८५.२४] लिङ्गाश्रयस्याभावादिति ।

---

१. कथमिन्द्रिय S । २. ततश्चान्यस्य S ।

**देशकालवस्तुनियत** [१८६.८] इति [1]हेतुभावेन विशेषणम् । **प्रतिज्ञा** [१८६.१०] साध्यनिर्देशस्तस्याः । कृतकत्वादिपरिजिहीर्षया विशिंसन्नाह—**व्यावृत्तितोऽपी**[१८६.१२]ति । **प्रदेशमात्रमि**[१८६.१४]ति ब्रुवता परेण प्रदेशत्वसामान्यं हेतुः प्रदेशविशेषो धर्मीति दर्शितम् ।

**योऽसौ केवल**[१८६.२३]इति । पुरोऽवस्थितघटजातीय इति द्रष्टव्यम् तस्यैव प्रकृतत्वात् । लिङ्गवज्ज्ञापकत्वादवश्यप्रत्येतव्यमित्यभिप्रायेणाह—**लिङ्गभूतस्य** [१८६.२५] **केवलस्य प्रदेशस्य** [१८६.२६] प्रतिपत्ताविति पूर्ववत् प्रतिज्ञार्थैकदेशताप्यत्र द्रष्टव्या । ततः केवलप्रदेशालिङ्गीभूतात् ।

**विषयविषयिभावेने**[१८७.१०]तीत्थंभूतलक्षणा तृतीया । **तथाविधाऽभिप्रायानभिज्ञा(ज्ञ)तयेति**[2] पाठोऽवदातो यथाऽभिधानाभिप्रायानभिज्ञा(ज्ञ)तयेति पाठे तु महान् क्लेशः ।

**प्रमेयत्वेन** [१८७.१९] साध्यत्वेन । **आदि**शब्दादन्योन्याभावप्रध्वंसाभावयोर्न विरोधो मीमांसकमतेऽत्यन्ताभावस्य च ।

**एते** [१८८.३] प्रागभावादिरूपा भेदाः **इतरप्रतीतेश्चा**[१८८.६]भावांशप्रतीतेश्च । **तत्संयोगे** [१८८.६] तेनेन्द्रियेण प्रत्येतव्यस्य सम्बन्धे । **इत्थं तु** [१८८.५] **यत्प्रतीयत** [१८८.६] इति प्रकरणात् । **तदसंयोगहेतुकमि**[१८८.७]न्द्रियासम्बन्धहेतुकम् । ज्ञानमिति प्रकृतत्वात् । यद्वा **तत्त**थाविधं ज्ञानं **असंयोगहेतुकं** प्रकरणादिन्द्रियासंयोगहेतुकं न भवतीति । ननु भावांशयोर्भेदात् कथं 'तदन्यभाव एवे'त्युक्तमाचार्येण इत्याशङ्क्याह—**एवं मन्यत** [१८८.१५] इति । **तद्रूपवैकल्यात्** [१८८.१७] घटरूपविरहितत्वात् । **तद्रूपवैकल्यं** [१८८.१७] घटरूपवैकल्यम् । **तदभावे** [१८८.१८] घटरूपवैकल्याभावे । **तस्य** घटादन्यस्य भावस्य प्रदेशादेः । **तथा च** [१८८.२०] तस्यापि घटरूपत्वप्रकारे सति । **अभावांशोऽपि** घटाभावोऽपि **न** [3]**सिद्ध्यति** घटात्मनीवेति भावः । **तत्संयोग एव** [१८८.२४] अन्यभावसंयोग एव । **विचारयता** [१८९.२] मयेति बुद्धिस्थम् । **अवधार्यो** [१८९.३] ज्ञातव्यः ।

**सकलत्रैलोक्यविलक्षणं** [१८९.११] सर्वपदार्थेभ्यो व्यावृत्तम् । **असांकर्येण** [१८९.१२] अमिश्रत्वेन । **संप्र**[4]**मुग्धाकारं** [१८९.५] संदिह्यमानसर्वाकारम्-

---

१. देशकालावस्थानियतो S । २. अभिप्रायानभिज्ञतया S ।
३. न सिद्ध्येत् S । ४. सम्मुग्धाकारं S ।

निश्चिताकारमिति । कामलो विद्यतेऽस्येति **कामली** [१८९.१७] तस्य । **तत्परिच्छेदाभावः** [१८९.२०] तस्य पुरोवर्तिनो भूतलादेरप्यभावस्य परिच्छेदाभावः ।

ननु च कस्यचिद्दर्शनाद्योयं क्वचित्प्राप्तिपरिहारार्थो व्यवहार इति प्रकृते **अदृष्टस्य च परिहारार्थ** [१८९.२३] इति व्याख्यानं कथमिव न साहसम् न ह्यदृष्टस्य दर्शनमस्ति । अथ दर्शनमित्युपलक्षणमेतत्, ततोऽदर्शना[65b][1]दित्यपि द्रष्टव्यमिति चेत् । तदवद्यम्, दर्शनस्यैव संकीर्णासंकीर्णरूपावभासितया विचारयितुं प्रक्रांतत्वात्, यदि चादृष्टपरिहारार्थो व्यवहारो भवेत्तर्हि कण्टकादेः परिहारार्थो व्यवहारो न भवेत् किन्तु प्राप्त्यर्थ एव, सम्यक्ज्ञानपूर्विका च सर्वहानोपादानलक्षणा पुरुषार्थसिद्धिर्न स्यादिति । स्थाने पराक्रान्तं भवता केवलं विवक्षिते दृष्टादृष्टशब्दार्थे समीचीनं मनो न प्रणिहितम्, **दृष्टशब्देन** हि सुखमत्रविवक्षितम् **अदृष्टशब्देन** च तद्विपर्ययेण दुःखम्, ततोयं वाक्यार्थः—कस्याचिद्वस्तुनः सुखहेतोर्दर्शनाद्योयं क्वचिद्देशे संवित्सामर्थ्यभावि(भावि)स्मरणादिना दृष्टस्य सुखस्य प्राप्त्यर्थो व्यवहारः प्रवृत्तिलक्षणो यश्च दुःखहेतोर्दर्शनाददृष्टस्य[3] दुःखस्य परिहारार्थो व्यवहारो निवृत्तिलक्षणः स न स्यात्; सर्वत्रैव सुखहेतुदुःखहेतुविषयत्वेन संप्रमुग्धाकारत्वात्सर्वस्यैव दर्शनस्येति । अतश्चैवं यद् विनिश्चयः " सुखदुःखसाधने हि ज्ञात्वा यथार्हं प्रतिपित्सवः " इत्यलं वहुना । किं भूतस्तदर्थो व्यवहार इत्याह **प्रवृत्तिनिवृत्तिलक्षण** [१८९.२४] इति यथासंख्य सम्बन्धः कार्यः । **अन्यथा** [१८९.२६] संकीर्णरूपाप्रतिभासनप्रकारेणा**ऽस्य**[१८९.२६] प्रत्यक्षस्य ।

**ज्ञानद्वयेन** [१९०.६] प्रत्यक्षानुपलम्भरूपेण । **पर**[१९०.१६]मिति मीमांसकमित्यवसेयम् । एवमभ्युपगमे कारितेऽपि किं फलमित्याह **तथा चे**[१९०.१७]ति । यथाश्रुति **चापरिणामाख्येन धर्मेणे**[१९०.१८]त्युक्तं द्रष्टव्यम् । **भावां**[1]**शस्यैवाभावत्वेनोप**[5]**गतत्वादि**[१९०.२०]ति । " भावान्तरविनिर्मुक्तोऽभावोत्रानुपलंभवदि "त्यादिवचनादुक्तं भावान्तरस्याप्यतुल्ययोग्यतारूपस्य तथात्वेनेष्टत्वात् । न त्वदुपगतानुपलब्धिरूपत्वमभावप्रमाणस्य भविष्यतीत्यत आह **तुल्ययोग्यतारूप**[2]**स्यै**[१९०.२०]वेति । अन्यथा तस्य तदभावरूपत्वानुपपत्तेरिति भावः । भवत्वेवं [6]तथाप्येकज्ञानसंसर्गित्वानपेक्षितया भेदो भविष्यतीत्याह **तुल्ययोग्यतारूपस्य** [१९०.२०] [3]**एतज्ज्ञानसंसर्गिण एव चे**[१९०.२०]ति । अन्यथा तुल्ययोग्यता-

१. भावान्तरस्यैव० S २. स्यैक० S ३. एकज्ञान०

रूपतैव न सिद्ध्येत्। असत्यां च तस्यां न प्रतियोग्यताभावनिश्चयः स्यादित्याशयः। **तथोपेयम**[१९०.२१]भावप्रमाणतयोपगन्तव्यम्। **तज्ज्ञानात्** [१९०.२१] तस्य तदतुल्ययोग्य[7]तारूपस्य तदेकसंसर्गिणश्च वस्तुनो ज्ञानात्। एतदेव साधयन्नाह **नही-**[१९०.२२]ति । **कथमभावः** [१९०.२८] प्रसज्यप्रतिषेधयोर्निरूपाख्यानत्वा **त्कस्यचित्परिच्छेदो** [ १९१.१ ] भवति । **तद्धेतुभावः** [ १९१.२ ] परिच्छेदहेतुत्वम्।

**तदे**[१९१.१०]त्येवमभ्युपगमकाले। **कस्यचिदपी**[१९१.१०]त्यनेन कस्यचिदपीति मूलग्रन्थमनुभासते । **तदेवाहेति कस्यचि**दिति ग्रहणकपदविवक्षि[8]तमेवाह आचार्यः। तस्ये[१९१.१०]त्यनेन तस्येति मूलपदमुल्लिङ्गार्थमाह **सलिलोपलम्भाभावस्ये**[ १९१.१० ]ति । **तदन्यस्य चे**[ १९१.१४ ]ति। मूल(लं) व्याचक्षाण आह–[1]**ततोऽपी** [१९१.११]ति । कस्मात्पुनस्ततः सलिलादन्यस्यानलादेरिति व्याख्यायते न तु तत्प्रतिषेधमात्रपुरस्कारेणेत्याशंक्याचार्यस्यैतद् द्वयोपन्यासेऽभिप्रायं वचनभङ्ग्या वर्णयितुमाह **वि**[66a][1]**ज्ञान**[2]**श्चे**[१९१.११]ति । **तत्रापि** [१९१.१२] 'विज्ञानं वाऽन्यवस्तुनि' इति लक्षणे तदङ्गीकरणेऽपरिणामशब्देनान्यवस्तुज्ञानाभ्युपगम इति यावत्। **तदात्मकत्वाद**[१९१.१३]न्यवस्तुज्ञानात्मकत्वात्। तत आत्मनो यः परिणामो मा भूद्भेदेन व्यवस्थाप्येत 'विज्ञानं वान्यवस्तुनि' इति लक्षणमिति प्रकरणात्। **कस्यचिदपी**त्यादेर्मूलग्रन्थस्य समुदायार्थमिदानीं **ततश्च**[2] **कस्यचिदपी-**[१९१.१४]त्यादिना वक्तुमुपक्रमते। **स्वाप**[१९१.१५]शब्देन गाढस्वापोऽभिप्रेतः। प्रगाढनिद्राक्रान्तस्य हि विषयग्रहणवैकल्यं भवति। यदि यत्तदपेक्षेणान्यस्यान्यत्वेन सर्वं सुस्थं स्यात्परस्य तदा व्यवधानाद्यवस्थैव प्रसङ्गार्थमाचार्येण नोपदर्शिता स्यादिति भावो **व्यवधानादिग्रहणेन च एतद्दर्शयती**[१९१.१६]ति ब्रुवतो [3]द्रष्टव्यः। **प्रकारान्तरेणा**स्मदभिमतात् प्रधानादन्येन प्रकारेण। **न तिष्ठेदि**ति अस्यार्थकथनं **प्रवर्तेते-**[१९१.२५]ति। तर्हि प्रतिष्ठेतैवार्थक्रियाऽवाप्तये प्रस्थानमेव कुर्यादित्याह **नापी-**[१९१.२५]ति। **न प्रतिष्ठेते**त्यस्यार्थं कथयति **न प्रवर्तेते**ति [१९१.२५]। एतदेव प्रदर्शयितुमुपक्रमते। **तथाही**[१९१.२६]ति।

**तत एकदर्शनादन्या**[4]**भावे ज्ञानमुत्पद्यते तथोच्यते**[१९२.१९]ऽन्यदित्युच्यते। **तद्रूपतया**[१९२.१९] सकलासंकीर्णवस्तुरूपावभासितया। ।तदन्यद्र वस्तु

१. ततो वे० S। २. विज्ञानं वे० S।

**प्रतियदेव**मन्याभावं प्रत्येतीति **व्यपदिश्य** [१९२.२०] **तदयोगाद**[१९२.२०]-न्यभावप्रतिपत्त्ययोगात्। यश्चान्यो **विकल्पो पाश्चात्यो** [१९३.८] विधिविकल्प इत्यर्थात्। **अभावाख्यप्रमाणं** [१९३.९] नेत्यनुवर्तनीयम्। **वहनं** [5]वहित्रं तदारूढैः[१९३.१७]।

**तदात्मनो** [१९५.५] शेषपदार्थवृत्तात्मनः सकाशात् **तत्** [१९५.६] प्रत्यक्षम्। **तत्प्रामाण्यसमाश्रिता** [१९५.७] अभावप्रामाण्यसमाश्रिता।

**स्वभावत** एव [१९५.१०] स्वहेतुत एव। **तस्या(स्य)** [१९५.१३] अभावाख्यस्य प्रमाणस्य।

**अध्यात्मनः** [१९५.२४] परात्मनः सकाशात्। **तदन्येभ्यो निवर्तनं** [१९६.१] व्यवच्छेदनं तस्य गृह्यमाण[6]स्येत्यर्थात् **तत्परिच्छेदप्रसङ्गात्** [१९६.७] अन्यात्मपरिच्छेदप्रसङ्गात्।

**तदात्मनः** [१९६.१०] सकाशा**दशेषमन्य**न्निवर्तयतीति वर्तते। तदात्मनोपलभमानेति कथमुच्यत इत्यपेक्षायां **तथाविधस्वभावस्यैवानुकारादि**[१९६.१३]ति योज्यम्। **उपलभमाने**[१९६.१४]ति हेतौ शानयोर्विधानाद्धेतुपदमिदमन(मव)-वसेयम्। [7]**अन्यदेशे**[१९६.१५]त्यादि **तथात्वप्रच्युते**[१९६.१४]र्व्याख्यानम्। **तथाभूतादि**[१९६.२४]त्यादेर्मूलग्रन्थस्य अभावात् कार्यमाह। **अभावकल्पनया**[१९६.२८] इत्यभावप्रमाणकल्पनयेति प्रकरणात्। विषयमेवा(विषयेणैव) विषयिणो निर्देशात् द्रष्टव्यम्।

[1]**अन्यच्चैवमात्मकं** [१९.७.१] न भवतीति वर्तते। **ततो**[१९७.३] निर्विकल्पकात् प्रत्यक्षात **विधिप्रतिषेधविकल्पावि**[१९७.४]ति यथावासना-प्रबोधं[8] विधिविकल्पश्चेति बोद्धव्यम्। अथ वैकल्यस्य (?) साक्षादितरस्य सामर्थ्याज्ज्ञानाद् विधिप्रतिषेधविकल्पद्वयोपजननं उक्तः। [2]**तदर्थादिति** [१९७.२१] तत्त्वान्यत्वाभ्याम् भिन्नतया विकल्पता(ना)दित्यर्थः। येन निमित्तेन विवक्षितस्य ततोऽन्यत्वं न व्यवस्थाप्यते, तस्य **निमित्तस्य समानत्वात्** [१९७.२७]। कथं प्रकारान्तराभावं सूचयतीत्य-पेक्षायां योज्यम् [66b][1]**तद्विरुद्धस्येति**[१९८.४] तेन परिच्छिद्यमानेन विरुद्धस्यै-तत्परिहारेण व्यवस्थितस्य तदसंकीर्णस्येति यावत्। तद्विरुद्धस्य सर्ववस्तुनो द्वैविध्य-

---

१. अन्यथैतदात्मकम् S इति तु न सम्यक्।

२. ततोऽर्थात् S

साधनमेव कुत इत्यपेक्षायां **सर्वस्यान्यतया व्याप्तिसाधनादिति**[१९८.४] योज्यम् ।

**एकस्य प्रमाणस्य व्यापार एष** [१९८.६] इति ब्रुवतोऽयं भावः— तस्यैवैकस्य प्रमाणस्य वृत्तं विमृष्यमान(ण)मेवमवतिष्ठते । यत[2] इति **तद्रूपत्वात्** [१९८.१०] परासंकीर्णरूपत्वात् । वस्त्वनतिक्रमेण **यथावस्तु** [१९८.१०] इति दृष्टतदन्यत्वेन सर्वस्य व्याप्तिसाधनादित्यपि प्रमाणवृत्तविचारेणोच्यत इत्यवसातव्यम् ।

**इतिना**[१९८.२७]ऽ[न]न्तरोक्तस्य न्यायस्याकारो दर्शितः । **अनन्यसहायत्वं** [१९९.१] च **कार्यस्य** [१९९.१) एकजातीयकार्यापेक्षया द्रष्टव्यम् । द्वयोर्भावो द्वितैव **द्वैतं तत्सिद्धेः** [१९९.३] । **इ(प्र)तीयत्येव** [१९९.६] **बुद्धिः व्यवस्था[1]पककाल एवा**[१९९.६]तद्रूपं ततः पृथक् करोतीति अनुवर्तनीयम् । इतरथा शतृप्रत्ययस्यानुपपत्तिः प्रसज्येत । अत्र कथं प्रत्ययान्तराभावः सिद्ध्यतीत्यपेक्षायामाह—**तद्विपरीते**-[१९९.६]त्यादि ।

**एकप्रमाणनिबन्धनां** [१९९.९] इति प्रत्यक्षैकनिबन्धनामनुमानैकनि[4]बन्धनां वेति विवक्षितम । न तु परोप्येनामनेकप्रमाणनिबन्धनाम् इच्छति यदनेन व्यवच्छिद्येत । अभावप्रमाणमात्रनिबन्धनतया तेनोपगमादिति **तस्योपलभ्यमानस्य** [१९९.११] **तदात्मनो** [१९९.१२] **व्यवच्छेद** [१९९.१२] इति सम्बन्धः । 'तदन्यात्मन' इति मूले निर्देशात् कथं त्वया **तदन्यात्मताया** [१९९.१४] इति व्याख्यायत इत्य[5]नुयोगमाशङ्क्याह **भावप्रधानत्वान्निर्देशस्य** [१९९.१४] इति ।

**अवच्छिद्यते** [१९९.१८] व्यवच्छिद्यते । सा तदेकाकारनियता प्रतिपत्तिः ।

**स च** [२००.३] तद्देशकालश्च स्यात् । तद्देशता च लोकप्रसिद्धदेशाभिप्रायेणोक्ता द्रष्टव्या । न तु वस्तुतो मूर्तं वस्तु वस्त्वन्तरेणैकदेशं नामेति । **नो चेत्** कथमिति वर्तते । **अभावसिद्धिरि**[२००.९]त्य[6]भावव्यवहारसिद्धिर्मूढं प्रतीति च द्रष्टव्यम् । अमूढस्य प्रत्यक्षादेवाभावव्यवहारसिद्धेः । एतच्चानन्तरमेव प्रतिपादयिष्यते । यथोक्तमेवानुपलम्भं दर्शयितुमाहो**पलब्धिलक्षणप्राप्तस्य** [२००.९] इति । अनुपलम्भादिति चावर्तनीयम् । तेनायं वाक्यार्थः—उपलब्धिलक्षणप्राप्तस्यानुपलम्भादिति । ननु उप[7]लब्धिलक्षणप्राप्तानुपलम्भ एव कीदृशो यस्मात् तत्सिद्धिरित्याह **तत्तुल्ये**[२००.१०]-ति । **तेन** निषेध्येन सह **तुल्या** स्वज्ञानोपजननं प्रति योग्यता सैव रूपं स्वभावो यस्य

१. व्यवस्थापनाकाल एव S

स तथा तस्य यदुपलम्भ उपलभ्योपलभमानधर्मः स आत्मा यस्य [२००.१०] तस्मात्। **चो** [२००.१०] व्यक्तमेतदित्यस्यार्थे। यद्वा उपलम्भशब्देन ज्ञानमात्रस्याभिधानं। तेन तु तत्तु[3]ल्ययोग्यतारूपोपलभ्यमानसेन इति समुच्चीयते इत्येवंरूपादनुपलम्भात्। अन्यथा व्याख्याने तूपलब्धिलक्षणप्राप्तस्येत्यसङ्गतं स्यादिति। **न तु सामान्येन** [२००.१०] अनुपलम्भमात्रादित्यर्थः। किमेवंवादिनोऽपि सम्भवति येनैवमुच्यत इत्याह–**यथाहुः पर** [२००.११] इति। **वस्तुसत्तावबोधार्थे** [२००.१३] **यत्र वस्तुरूपेण प्रमाणपञ्चकं** [67a][1]**न जायते तत्रेति** [२००.१२] योज्यम्। पञ्चावयवा यस्येति **पञ्चकम्**। "संख्यायातिसदन्ताया कन्" इत्यनेन कन्। प्रमाणं च तत् पञ्चकं चेति पश्चात् कर्मधारयः कार्यः **प्रमाणपञ्चकं** [२००.१२] **न जायत** इति च पञ्चानां प्रमाणानां मध्ये यत्रैकमपि न जायत इत्यर्थः। सति वस्तुनि तदनुदय एव कथमित्याह **सत्यपी**[२००.१५]ति।

**तद्विषयाया उपलब्धे**[२००.१९]र्लिङ्गत्वमपि प्रकरणात्। **तदभावेन** सह **सम्बन्धाभावस्य तुल्यत्वादि**[२००.२५]ति योज्यम्। [1]**भावरूपाया** उपलब्धिरूपभावरूपायाः।

कस्मात् सकाशात् प्रमाणान्तरं प्रत्यक्षादिकं नास्तीत्याह–**अन्यभावविषयोपलब्धेरि**[२०१.२७]ति। **किमिति** [२०२.६] सामान्यतः पृच्छति। **पुनरि**[२०२.६]ति विशेषतः **सोऽन्यभावो** [२०२.६] योसौ केवलप्रदेशलक्षणोऽन्यभावः **प्रत्यक्षलक्षणेने**[२०२.७]न्द्रियजप्रत्यक्षलक्षणेन। एतच्च प्रायेण लोको यस्मात् केवलमिदं भूतलं वे[3]द्यते तस्माद् घटोऽत्र नास्तीति प्रत्ययमुखेन प्रतिपद्यत इत्यभिप्रायेणोक्तं द्रष्टव्यम्। **अनुपलम्भेन सिद्ध** [२०२.८] इति च तस्यापि प्रत्यक्षस्य तदनुपलम्भरूपत्वात् वास्तवानुवादो बोद्धव्यो न तु तस्यानुपलम्भरूपताप्रतिपादनमिदानीं प्रकृतं नाप्युपयुक्तमिति। **अभावव्यवहारं साधयेत्** [२०२.८] नाभावमित्यर्थात्, तस्य केवल[4]प्रदेशोपलब्धिकाल एव सिद्धत्वादिति भावः। ननु-अनुपलब्ध्या अभावव्यवहारः साधनीयो न चासौ प्रदेशस्तथेत्याह **कर्मस्थक्रियापेक्षये**[2][२०२.८]ति। उपलब्धेः कर्मस्थत्वापेक्षया तत्पर्युदासेनान्यभावस्य तथात्वमित्यर्थः। प्रत्यक्षेणाभावव्यवहारं प्रवर्तयितुमनीशानोऽस्य मते **मूढो** वाच्यस्तस्य **प्रतिपत्तौ**[२०२.१०] प्रतिप[5]त्तिशब्देन चाभावव्यवहारैकदेशो ज्ञानलक्षणो अनुष्ठानलक्षणो वा वक्तव्यः। तस्यां साध्यायां व्यवहारश्च तदितरो द्रष्टव्यः। मूढं प्रतिपत्तारं प्रति तं साधयति नामूढमिति च समुदायार्थः। अमूढस्य

१. अन्यभावरूपायाः S २. °पेक्षायाम् S

तर्हि किं निबन्धनोऽसद्व्यवहार इत्याह–**यस्त्वि**[२०२.११]ति। **प्रसङ्गेना**-[२०२.१३]स्यैव प्रस्तावेनालं न किञ्चित्। अत्र धर्मोत्तरः प्रा[6]ह–"तदेकाकारनियतं पटीयोऽपि प्रत्यक्षं नाभावव्यवहारं प्रवर्तयतुमलमदृष्टानामपि सत्त्वान्नित्यं शक्यमानानुपलम्भ-व्यभिचारो ह्यभावः" इति। दृश्यत्वविशेषणापेक्षायां चानुपलब्धिरेवायातेति चाभिप्रैति। अत्र तु यथा प्रतिवक्तव्यं तथाऽस्माभिः स्वयूथ्यविचारे विचारितं विस्तरेणेति तत एवापेक्षितव्यमिति।

यद्यपि बहुप्रकारानुपलब्धिस्तथापि मूलभूतप्रकारप्रदर्शनार्थं **त्रिविधे**[२०२.२१]-त्युक्तं द्रष्टव्यम्। **सविशेषणा** [२०२.२८] सह विशेषणेन उपलब्धिलक्षणप्राप्तत्व-लक्षणेन वर्तत इति।

तथा **कारणव्यापकानुपलब्धिलक्षणस्ये**[२०३.२६]ति कारणव्यापकयोर्या-ऽनुपलब्धिः तद्विविक्तप्रदेशज्ञानात्मिका तल्लक्षणस्येति। **सिद्धसम्बन्धयो**[२०४.३]रिति कारणव्यापक[8]येरिति मूलग्रन्थस्यापेक्षणात् सङ्गतमिदम्। **तथाभावदर्शने**[२०४.१०]ति एकदर्शनेनान्यदर्शने तथैकादर्शनेनान्यदर्शनेऽपि भूयस्त्वविशेषणत्वे च क्रियमाणे लोह-लेख्यत्वपार्थिवत्वादिना प्रत्ययवत् तल्लब्धी तद्विविक्तपदार्थज्ञानात्मिके तयोः संदेहरूप-त्वात्। तदभावस्य च तयोः कारणव्यापकयोरभावस्य च संदिग्धलक्षणता वाच्या। एतदेव विदर्भवचनेन मात्रया दर्शयन्नाह–[67b][1]**पुरुषस्य त्वि**[२०४.११]ति। **यदृच्छा-संवाद** [२०४.१२] इति ब्रुवतो यथाऽऽमलककषायरसत्वादिना संस्कारादिना अन्यथाभावसम्भवेऽपि साहचर्यादर्शनसंवादस्तथा विवक्षितेऽपि भविष्यतीति भावः।

**प्रतिबन्धः** [२०४.१६] सम्बन्धोऽभिधातव्यो न तत्प्रतिबद्धत्वं यथाऽन्यत्र। **साध्यसाधनयोरि**[२०४.१६]त्यादेरनुपपत्तिप्रसङ्गात्। प्रतिबन्धे चेष्टौ च सर्वेषां साधनवत्त्वेन[2] च साध्यवतां साध्याभाववत्त्वेन च साधनाभाववतामर्थतां द्रष्टुम(?) पेक्षत्वेपि व्याप्तिमतोरन्वयव्यतिरेकयोर्निश्चयः सञ्जायते। सोयमुपानटधर्ममात्र (?) पृथिव्याच्छादनं न्यायः प्रायः प्रकारो द्रष्टव्यः।

जरन्नैयायिकाभिप्रायेण **नैयायिक**[२०५.२३][3]ग्रहणमस्य बोद्धव्यम्। अधुनतनाः पुनरन्वयव्यतिरेकिणं पंचलक्षणमन्वयिनं व्यतिरेकिणं चतुर्लक्षणलक्षणमाचक्षत इति सामान्येन नैयायिकग्रहणे व्याख्यायमाने तन्मतावेदनमस्यावेदितं स्यादिति। संख्याया गुणत्वेन द्रव्याश्रितत्वाद्धेतु**द्रव्यस्ये**[२०५.२८]त्याह। **एकसंख्यानवच्छिन्नायामि**त्यस्यै-

वार्थकथनं **प्रतिहेतुरहितायाम्** [२०६.३] इति । साध्यप्रतिपक्षसाधको हेतुः **प्रतिहेतुः तद्रहितायाम्** । सिषा[1]धयिषिताविरुद्धं न व्यभिचरतीति ।

**तथा ज्ञातत्वं चा**[२०६.६]परं रूपमिति प्रागुक्तमनुवर्तते । यथोक्तबाधाप्रमाणेन साध्यधर्मनिराकरणं **तस्मिन्** [२०६.१७] साध्येऽ**सति** [२४६.१७] ।

**बतेति** [२०७.२] निपातोऽनुविषये । **यंत्रद्वय**[२०७.३]शब्देन प्रकरणादाकर्षकनिष्काषकलक्षणे यन्त्रे वक्तव्ये ।

यथा किल केनचित् कुतूहलिना कश्चित् तपस्वी स्त्रीरूपधारिणीं तृतीयां प्रकृतिं परिचरणायोग्यां शब्दवाच्यामुद्वाह्य पुत्रं तदर्थक्रियां वा व्यपदेशेन प्रार्थ्यते तेन तुल्यमिदं यदविनाभावविकलं हेतुमुपदर्श्य धर्मिणि साध्यकथनमिति मन्वानः परोपहासपूर्वकमाहाचार्यः **शण्ढमुद्वाह्ये**[२०७.१५]ति मूलमनूद्यस्यात्वं(र्थं?) प्रकृते योजयन् दर्शयति—**तस्मिन्नि** [२०७.१५]ति । [6]**तस्मिन्** साध्यधर्मिणि **साध्यधर्मसाधनशक्तिविकलं** [२०७.१६] साध्यधर्मप्रकाशनशक्तिवियुक्तम् । तद्वैकल्यञ्च तस्य तत्र तदविनाभावितयाऽनिष्टेः । शब्दार्थस्यैतद्व्याख्यानं प्रतिच्छायया द्रष्टव्यम् । **उद्वाह्य**[२०७.१५] पदार्थं तथैव व्याचक्षाण आह—**परिणाय्ये**[२०७.१६]ति । परिणाय्यपदेन च तत्संबन्धत्वोपदर्शनं तल्लक्षितम् । तल्लक्षणं[7] **पुत्रं मृ[1]ग्यते**[२०७.१७] प्रार्थ्यते याच्यत इति यावत् । ननु चान्यत्राविनाभाव्यपि हेतुस्तत्र साध्यं विभावयेदिति कोऽयमुपहास इत्याह **नद्यी**[२०७.२०]ति । यदम्भस्तल्लवणरसं यथा सामुद्रम् । अम्भश्चेदं नादेयमिति प्रयोगे चैतदुच्यत इत्यवसेयम् । **लवणतया** [२०७.२१] लवणरसतया ।

**अम्भस्त्वादिषु** [२०७.२५] हेतुतयोपनीतेषु तथा दर्शनात् । **अबाधितधर्मा** [२०७.२७] [8]अबाधितसाध्यधर्मा ।

**तन्नियतस्य** [२०८.१३] बाधकप्रमाणवृत्तिनियतस्य । व्यापकाभावे व्याप्यस्याप्यवश्यमभाव इति भावः । **तद्भावस्य** [२०८.२०] साध्यभावस्य । **अतएवे**-[२०८.२१]ति बाधकप्रमाणे सति साध्याभावादेव ।

**तदभावेपि** [२०८.२३] बाधकप्रमाणवृत्त्यभावेपि वा **भावात्** साध्याभावस्येति प्रकरणात् ।

हेतोः सामर्थ्यं **हेतुसामर्थ्यं** तत्प्रतिपादयन्नाह **परः** [२०९.२] । कथं [68a] [1]हेतुसामर्थ्यं प्रतिपादयतीत्यपेक्षायां योज्यम्—**तत्रान्यथात्व[2]मि**[२०९.१]ति ।

---

१. मृगयते S ।

२. तत्रान्यथाऽर्थमिति S

**दर्शयन्निति** [२०९.२] हेतौ शतुर्विधानात् तत्राबाधाया अन्यथात्वप्रदर्शनादित्यर्थः। **तत्सिद्धये** [२०९.६] साध्यसिद्धये। यत्रासौ तदर्थ**मभिधानीयः स हेतुप्रयोगस्य विषयः** [२०९.६]।

**वै**[२०९.९]शब्दोऽक्षमायां बाधानुपलब्धिरबाधेत्यादि यदुच्यते तन्न क्षम्यत इत्यर्थः। **किंन्वि**[२०९.९]ति निपातानिपातसमुदायः[2] प्रश्ने। **तस्या** [२०९,१०] इतिमोत्रार्थानां भयहेतुरपादानमित्यपादानत्वादपादाने पञ्चमीयम्।

**काकु**[२०९.१६]शब्देनात्र वचनविन्यासो विवक्षितः। प्रश्नार्थस्य किं शब्दस्याप्रयोगेपि काकुरेव शिरःकम्पसहिता प्रश्नं प्रकाशयतीत्यभिप्रायेण **पृच्छती**[२०९.१६]ति व्याचष्टे। बाधानुपलब्धिरबाधेति अभिधाना**दुक्तमेतदि**[२०९.१६,१७]त्यभिप्रायवान्परः प्राहोक्तमेवै[3]तदिति। **किमर्थं प्रयुज्यते** [२०९.१८] स हेतुरिति सामर्थ्यात्। **अभावनिश्चयं** [२०९.२४] परमार्थतोऽसद्भावनिश्चयं **प्रति**।

**संशयितस्य** [२१०.६] बाधां प्रति जातसंदेहस्य। **ज्ञान[नि]वृत्त्या**[२११.४] बाधकज्ञान[नि]वृत्त्याऽसौ साध्यबाधा।

**आदि**[२१२.२१]शब्दादनुमानविरुद्धादेः संग्रहः **तेषां** [२१२.२३] प्रत्यक्षविरुद्धादीनाम् **उपवर्णनं** [२१२.२३] स्वरूप[4]प्रदर्शनम्।

तद्बाधायोगाद्विषयत्वायोगात् साधकप्रमाणस्यानुमानस्यावृत्तेर्यदुक्तं "व्यस्तोहेतोरनाश्रय" इति भावः। [1]**किं यथा बाधाविनाभावयोरि**[२१३.९]ति पाठो युक्तरूपः। किंशब्दवियुक्ते तु पाठे सशिरःकम्पयाकांक्षा एवंवदतः प्रश्नोऽभिप्रायगतो द्रष्टव्यः।

**तल्लक्षणं** [२१३.१४] तस्य हेतोः लक्षणम्। अन्वयव्यतिरेकात्मा**ऽविनाभावः** [२१३.१४]। लक्षणशब्दस्य चासति बहुव्रीहावजहल्लिङ्गत्वात् स्वलिङ्गेन निर्देशः।

विरुद्धस्यापि विपर्यये सम्यग्धेतुत्वात्तदभिप्रायेण **विपर्ययस्य चे**[२१३.२३]त्युक्तम्।

**भावसिद्धि**[२१४.१४]स्तत्त्वसिद्धिस्तदयोगात्।

**विवक्षितैकसंख्यत्वप्रतिपादित**[२१४.१७]मिति विवक्षितैकसंख्यत्वशब्देन प्रतिपादितमित्यर्थः। [6]**पूर्वकस्ये**[२१४.२१]त्यलक्षणमेतदित्यस्य। अत्रापि बाधितत्वादिरूपान्तरयोगिन्यपि पूर्वयोजितमुपदर्शितम्।

**निष्प्रमाणिके**[२१४.९९]त्येतद्धेतुभावेन विशेषणम्। **स इति**[२१५.३] स एवेति विवक्षितं। निरस्तप्रतिपक्षत्वमेव कुत इत्याह—**तथाविधे**[२१५.१२] तथा

१. कथं—यथा बाधाविनाभावयोः S

भूतविशेषवति पटू **तथाविधे** साध्ये क्वचि**द्धर्मिणि** [२१५.१३] संभवति सति । **तद्[7]व्यभिचारिणः** [२१६.७] साध्याव्यभिचारिणः ।

**वेदप्रामाण्यनिराकर्तृ**ष्वि[२१७.१४]ति प्रत्यक्षाद्यधिकारेपि तेनासंवादादीत्यादिष्वित्यभिप्रेतं—यदाह—वार्तिके कुमारिलः—

" स्वर्गयागादिसम्बन्धविषयाश्चोदना मृषा ।
प्रत्यक्षाद्यधिकारेपि तैरर्थासंगतिर्यत[1] " [श्लोकवा० २.२६] इत्यादि ।

**सौगतै**रि[२१७.१४]ति वार्तिककारात्पूर्वैरिति विवक्षितम् । **प्रतिहेतव** [२१७.१६] इत्यदुष्टकारणजन्य[8]त्वादित्यादयः । यथाह कुमारिलः—

" चोदनाजनिता बुद्धिः प्रमाणं दोषवर्जितैः ।
कारणैर्जन्यमानत्वाल्लिङ्गाप्तोक्त्यक्षबुद्धिवद् ॥ " [श्लोकवा.२.१८४] इत्यादि ।

**तन्निमित्तसंभवाद(दा)**[२१७.२०]शंकानिमित्तसंभवात् । **आक्रोशमात्रेण** [२१७,२०] विपूर्वपक्षे भाषिकामात्रेण । केषां न कश्चिद्धेतुः स्यादित्याह **एकसंख्यावादिना**मि[२१८.१]ति ।

**सम्यग्ज्ञानविपर्ययहेतुरिष्ट** [२१८.६] इति प्राक्तनेन आचार्यग्रन्थेन । अ[·8b][1]**थाप्रदर्शितहेतु**रि[२१८.६]त्यस्याचार्यग्रन्थस्य सम्बन्धः कार्य इति । **न कथञ्चिद् व्यवच्छेदहेतुकं**[2] [२१८.९] केनापि प्रकारेण नित्यानित्यव्यवच्छेदहेतुत्वम् । ताभ्यामस्यान्वयव्यतिरेकासिद्धेरभिप्रायेणैवोक्ते ।

**भुजमुत्क्षिप्य** [२१८.१६] बाहुमूर्ध्वीकृत्य **फूत्कुर्वन्**[२१८.१७]फूत्कारं मुञ्चन्नित्यर्थः । **कैश्चिद्**[२१८.१८]ईश्वरसेनजिनेन्द्रबुद्धिप्रभृतिभिः । **अप्रच्छादनीयं** [२१८.२०] अनावरणीयम् ।

मी[2]मांसकमतेन निरंतरा प्रीतिः स्वर्गे(र्गो) वाच्यः। अपवर्गस्तु मोक्षः। स च दर्शनभेदादनेकविध इष्टः । स्वर्गापवर्गयोजनमेव वैयाकरणमताश्रयेण दर्शयन्नाह—**तथाही**[२१९.१]ति । मीमांसकमताश्रयेणाथवेत्यनेन पक्षान्तरमाह—**वेदान्तानिषेवणात्** [२१९.५] आत्मतत्त्वनिषेवणात्। **प्रज्ञाजातीयेन** [२१९.५] प्रशस्तप्रज्ञेन । उप[3]हासेप्ययं प्रयोगः प्रकरणात् ज्ञातव्यः । **यदस्य सामर्थ्यमासीत् तत्तदुपदर्शनेनो-**

१. श्लोकवार्तिके तु—" प्रत्यक्षाद्यगतार्थत्वादीदृग्बुद्धादिवाक्यवत् " इति उत्तरार्धम
२. °हेतुत्वम्–S

**त्कीलितं अपनीतं** [२१९.८] इति व्याचक्षाणश्चोत्कीलितम् अपनीतं साधनसामर्थ्यं यस्य श्रावणत्वलक्षणस्य हेतोः स तथोक्तो मूलग्रन्थ इति दर्शयति । ननु तानि वस्तूनि ते च पुरुषाः प्रतिहेतुनैतद्विपरीतरूपोपदर्शनद्वारा तथाभूतायाः संपदः प्रच्याव्यन्ते, न तु तेन हेतुनेति किमुच्यते **तानि वस्तूनि नित्यत्वसंपदः प्रच्याव्य तांश्च पुरुषान् स्वर्गापवर्गसम्पद** [२१९.८] इति चेत्, सत्यमेतत् केवलं यस्मादसौ विद्यमान एव स्वयं प्रापितायास्तथाभूतायाः संपदः प्रच्याव्यमाना न समानजातीयेन परेण [5]तानि वस्तूनि तांश्च पुरुषांस्त्रायस्व त्रायस्वेति फूत्कारं विप्लवमाभापमाणानीव स्वजीवितमपेक्षमाण इवोपेक्षते । तस्मात् प्रच्याव्या वयं तं परं प्रयुंक्त इवेत्यभिप्रायाददोषत्रय (?) इति चेत्, सर्वञ्चैतत् किं यो वस्तुतो असंभवात् प्रतिहेतुरित्यादिदूषणमबाधितविषयत्वेऽपि लक्षणे प्रतिहेतुप[6]दमपोद्धृत्याबाधपदं प्रक्षिप्य वक्तव्यम् । अत एवास्माभिरेतन्निदानमेव किं वस्तुतोऽसंभवद्बाधत्वमबाधितविषयत्वमभिप्रेतमुताप्रतिभासमानबाधत्वमपि किं तदैव किं वा अन्येषामपि । तत्रापि कि तदैवाहोस्विदुभयं वदापि (?) । अन्येषामपि किं तदैवाथ कालान्तरेऽपीत्यादि विकल्प्य सर्वत्र यथा[7]योगं दूषणमुपनयद्भिरात्मनिराकरणेऽबाधि[त]त्वमात्मसाधनस्य प्रतिसंधानलक्षणस्य हेतोर्विशेषणमपहस्तितम् । ततोऽन्यैरपि जिगीषुभिरबाधि[त]त्वे विशेषणे सर्वत्रैवानयैव दिशा प्रत्यवस्थेयमिति ।

**तल्लक्षणं** [२२०.२३] लिङ्गलक्षणम् । ज्ञानस्यैव **भावप्रत्ययेन** [२२०.२४] त्वप्रत्ययेन । एतदेव साधयन्नाह **तथाही**[२२०.२४]ति । **स्वतन्त्र**[8] **एव** [२२०.२९] वाच्यवस्तुनिरपेक्ष एव । **अनर्थप्रतिलम्भ एव स्यात्** [२२१.१] अर्थप्रतिलम्भो न स्यादेवेत्यर्थः । **अस्य** [२२१.२] विकल्पप्रतिभासिनः सामान्याकारस्य । यद्येवं बाह्यस्यैव हेतुत्वमस्तु तत्किमनेन प्रयासेनेत्याह—**साध्ये**[२२१.३]ति । कथं तर्हि विकल्पारूढानां सामान्याकाराणां परमार्थतो बाह्याङ्गासंस्पर्शिनां संपादकत्वं साध्यसाधनभावः [69a][1]कार्यादिरूपत्वं चेत्याशङ्क्याह—**तद्धर्मतामेवे**[२२१.४]ति । तस्यैव **तद्धर्मतां** बाह्यवस्तुधर्मतां(ताम्) । बाह्यगतं(तां) तद्व्यावृत्तिरूपतां इति यावत् । **अनु**[1]**सरंतो** [२२१.४] भेदाप्रतिपत्त्या अविद्यमाननिबन्धनयाऽध्यवस्यन्तो **नानैकव्यतिरेकान्** [२२१.४] एकस्मिन्नप्यर्थे नानारूपं कृतकत्वानित्यत्वादि, एकत्वं सामान्यमनुगामिरूपं, व्यतिरेकं तयोः परस्पर(रं) धर्मिणश्च भेदं हेतौ [2]शतुर्विधानात् प्रदर्शनादित्यर्थः । साध्यसाधनभावसमर्थनार्थमेतदुक्तं द्रष्टव्यम् ।

१. अनुस्मरंतो S ।

संवादकत्वसमर्थनार्थमाह—**वस्तुनि** [२२१.५] इति । वस्तुनि-साध्येऽर्थे । **परम्परया** [२२१.५] संबद्धसंबद्धतया । कार्यादिव्यपदेशसमर्थन(ना)याऽऽह **कार्यादी**[२२१.५]-ति । कार्यादिदर्शनद्वाराऽऽयातत्वात् तत्त्वेनाध्यवसायाच्च **कार्यादि[1]व्यपदेशनिबन्धनं** [२२१.५] त एव इति प्रकरणात् । तेन व्यपदेश[3]निबन्धनमिति च व्यपदेश "इन्द्रियमस्थानमेतद्राजन (?) " इति निर्देशवद् द्रष्टव्यः ।

ज्ञानस्य बाह्यलिङ्गरूपत्वं निराकृत्य सामान्याकाररूपत्वमपि निराकुर्वन्नाह—**विकल्पावभासी च** [२२१.७] इति । **तस्य** [२२१.८] विकल्पावभासिनः । सामान्याकारस्य **निरूपस्ये**[२२१.८]ति च व्याचक्षाणोऽलीकरूपतामपोहस्याभिप्रैति । **तद्रूपस्य** [२२१.९] अवृक्षव्यावृत्ति[4]रूपस्य विचारतोऽसद्रूपस्य **विकल्प[2]-प्रतिबिम्बकस्य** [२२१.९] इति । विकल्पाकाराद् भेदेन प्रत्येतुमशक्यत्वात् प्रतिबिम्बस्येव प्रतिबिम्बकस्यापोहस्य अथवा अनया वचनभङ्ग्या बुद्ध्याकारोऽपि तथा-ध्यस्तोऽपोहो वाच्य इति दर्शितमनेन । कथं तस्य सामान्यात्मत्वव्यवस्थेत्याह—**यस्मादि**-[२२१.१०]ति । **अनुयायितया**[२२१.११]ऽध्य[3]वसित[5]स्येत्यनन्तरोक्तमनुवर्तते । एवंविधस्यापि किं न विकल्पात्मता । तथा च ज्ञानं किं न रूपं लिङ्गस्येत्याह—**तथात्वे च** [२२१.११] इति । **तथात्वे** [२२१.११] अनुयायित्वे । **विकल्परूपा[4]त्मता** [२२१.१२] विकल्पस्वलक्षणात्मता । **प्रकृतायां** [२२१.१७] प्रस्तुतायाम् । **रूप[5]-मभिधीयते** [२२१.१७] एवंविधं लिङ्गस्य रूपमित्यभिधीयते । **प्रत्ययात्[6]** [२२१.२१] संप्रत्ययात् ।

परमतापेक्षया **प्रमातुरि**[२२१.२८]त्युक्त[6]म् । तथा **संयोगसमवाया-दीनाम्** [२२२.१] इति, **आलोकमनस्कारादीनाम्** [२२२.२] इति, वस्तुवृत्त्यपेक्षयोक्तम् । **न हि तेष्वसास्त्वि**[२२२,२]ति ब्रुवतोऽयं भावो यदि तत्र साध्यं न भवेत् तदा तदव्यभिचारिवस्तुदर्शनप्रनाडिकया तत्र ज्ञानमेव न भवेत् । यदि च लिङ्गे धूमादौ महत्त्वादिसमवायो न स्यात्, यदि च तस्येन्द्रियेण संयोगो न[7] भवेत् तदा तद्विषयं प्रत्यक्षमेव न भवेत् । असति च तस्मिन्न लिङ्गिनि विज्ञानमुत्पद्येत तथाऽऽलोका-ऽभावेऽपि तथैव लिङ्गिज्ञानानुत्पत्तिर्ज्ञातव्या । तथाऽ**सति** मनस्कारेऽसति । मनस्कारसाद्गुण्य इति बोद्धव्यम् । पूर्ववाल्लिङ्गिज्ञानानुत्पत्तिश्च । **निश्चयोऽपी**त्येव पाठः यत्र पुस्तके

१. कार्यादिलिङ्गव्यपदेशनिबन्धनं S । २. विकल्पप्रतिविम्बचक्रस्य S । ३. व्यवसितस्य S । ४. विकल्परूपता S । ५. स्वरूपमभि० S । ६. संप्रत्ययात्–S

**निश्चयो ह्री**[२२२.९]ति पाठः। तत्र हिशब्दोऽपिशब्दस्य वार्थे[8] द्रष्टव्यः। **तद्विशेषत्वात्** [२२२.१०] ज्ञानविशेषत्वात्। **अस्य** [२२२.११] निश्चयस्य।

**'सपक्षे भावेन'** [२२२.१९] किं भूतेनेत्याह—**विपक्षे** [२२२.१९] इति। **सर्वत्र** विपक्षे यो**ऽभावः तद्विशिष्टेन** [२२२.२१] किं भूतेन सर्वत्र विपक्षे योऽभावेनेत्याह-**सपक्ष**[२२२.२०] इति। **तादात्म्यतदुत्पत्ती लक्षणे** निमित्ते यस्य **भावस्य** स तथा **तद्विशिष्टेन** [२२२.२१]। ननु च दर्शनादर्शननिबन्धनौ सपक्षासपक्षयो[69b]-[1]भावाभावावप्यन्योन्यविशिष्टावेव तत् कोऽतिशयोऽनेनोक्त इत्याशङ्क्याह—**एतदुक्तं भवती**[२२२.२२]ति। प्रतिबन्धसाधकप्रमाणवृत्त्यां **नि[1]श्चितो (तौ)** [२२२.२३] न तु दर्शनादर्शनाभ्यामित्यर्थात्। **तथाविधावि**[२२३.६]ति व्याप्तिमन्तावित्यर्थः

**तादात्म्यतदुत्पत्तिसाधनविषयं** [२२३.१०] तादात्म्यतदुत्पत्तिसिद्धिविषयम्। **तयोरेव** [२२३.१२] भावाभावयोरेव। **आक्षिप्यते**[२२३.२०] प्रकाश्यते। उत्पत्त्यतिरेकि[2]ण्याः सत्ताया अनुत्पत्ते**र्या सत्ता उत्पत्ति**[२२३.१९]रिति व्याचष्टे। **अभावलक्षणस्य** [२२३.२९] प्रतियोग्यपेक्षया तद्विविक्तपदार्थलक्षणस्य परमताश्रयणेन चैवमभिधानम्। **सिद्ध्यन्ति** [२२४.१] व्यवहारयोग्यतामुपयान्ति। **सर्वस्य** [२२४.१] इति पुंसः। तथा च अयत्नसिद्धः सर्वः सर्वदर्शीत्याशयः। **नैवमि**[२२८.१]**तीदमि**ति सम्बन्ध्यते। लिङ्गस्य प्रकृतत्वात् **ज्ञापकस्य** [२२४.१३] इत्याह[3]। आचार्येण [२२४.२१] इति आचार्यदिग्नागेन। सूत्रकारीयानिश्चितग्रहणसाफल्यमुपवर्णयता वार्तिककृता स्वानुमतिरत्र दर्शितैवेत्यभिप्रायेण आचार्यवचनमिव कृत्वा इह **अस्माभिश्च** [२२४.२१] इत्यादि।

**तथाभावो** [२२५.३] व्याप्त्यान्वयः। सर्वत्र तदभावे अवश्यमभावो नेति पूर्वकमनुवर्तनीयम्। **तस्माद् यत** [२२५.९] इत्यादिकवस्तु(°कस्तु) मूलस्यादि[4]ग्रन्थो अनेन सुबोधत्वान्न व्याख्यातः। अयं त्वस्यार्थोऽवसेयो **यत एवं तस्माद्** [२२४.२०] यतः प्रमाणादनयोर्भावाभावयोर्भवति निश्चयस्तदधीनता तयोर्भावाभावयोः सत्ता व्यवस्थेत्यस्यार्थस्य ज्ञापनार्थं निश्चितवचनं कृतमिति। आचार्यदिग्नागकृतनिश्चितग्रहणार्थे भूयः संह्रियमाणे वार्तिककारेण कथमस्मा[5]भिरित्युच्यत इत्याशंक्याह—**अस्माभिरि**[२२५.९]ति। **आचार्यकृते** [२२५.९] सूत्रकाराचार्यकृते। **निश्चितग्रहणे** [२२५.९] **अस्माकमभिमतत्वादि**[२२५.१०]ति वचनेन चैवं आचार्यस्याभिप्रायं दर्शयति। तच्चेदस्माकमभिमतमेव तदाऽस्माभिरेवोक्तमिति। एवं तावदनेन व्याख्यातं लक्ष्यते पुनरयमस्यार्थः—

१. निश्चितौ S

एतदर्थं सूत्रकारेण प्रमाणसमुच्चये[6]–मया च विनिश्चयादौ निश्चितग्रहणं कृतमित्यभिप्रेत्याचार्यवार्तिककारेणावाभ्यामित्यस्मिन्नर्थे**ऽस्माभिरि**त्यभिधायीति । द्वयोरर्थयोर्बहुवचनं केन वचनेनेति "अस्मदोर्द्वयोश्च" इत्यनेनेति ब्रूम इति ।

**अतोऽपि न्यायात्** इति पाठः **अतएव न्यायात्** [२२९.१२] इति तु प्रमादपाठः । **प्रतिपन्नत्वात्** [२२९.१९] ज्ञानस्येति प्रकरणात् । **त्रैरूप्यात् ज्ञानं** [२२९.१०] '**रूपान्तरं न भवती**'त्यनुवर्तते ।

**सपक्षे भाव उच्यत** [२२६. ] इत्यनेन च साध्ये सत्येव भावो लक्षितस्तथा **अभावोऽसपक्ष** [२२६.१] इत्यनेन असति साध्ये अभाव एव विवक्षितः । **व्यावृत्तिकृतं भेदमुपादाय** [२२६.९] इति तत्राभावव्यावृत्त्या भावो व्यवस्थाप्यते । तत्र भावव्यावृत्त्याऽभाव इति । **परमार्थतो भेदो नास्ति** [२२६.१०] इति ब्रुवतोऽर्थं भावः तस्मिन् सत्येव भावो भवितृत्वं तदभावे चाभाव एवाभवितृत्वं एवमेव हेतोः स्वगत एवायं धर्मोऽत एव यत्रान्वयस्तत्र व्यतिरेक इति स्वभावहेतुसाध्यमेतदवतिष्ठते । न तत्त्वा(त्वर्था)पत्तिगम्यमिति । ननु च यद्यनयोः परस्परान्तर्भावो न भवेत् तर्हि कथमेकं वाक्यमुभयं गमयेत् । तथा चैतत् पूर्वोक्तं [70a][1]किं......हीति ।

**भिन्नलक्षणमेव** [२२६.१५] व्यावृत्तितो भिन्नस्वभावमेव सन्तं ततश्च भिन्नत्वात् अनयोर्लिङ्गरूपत्वाच्च पृथगवयवान्तरत्वं युक्तमिति भावः । यद्येकः स्वभा......... ..............यदुक्तपूर्वं तदवस्थमेवेत्याह **परस्पर** [२२६.१६] इत्यादि । **एकवाक्यात्** [२२६.१६] एकवाक्यार्थरूपत्वात् एकवाक्यप्रकाश्यरू[2]......सपक्षविपक्षयोर्भावाभावयोरपरस्पराक्षेपादिति सिद्धान्तवादिनाऽभिहितं किमनेन तदप्रतिविधायकेन **न त्वि**[२२६.१७]त्यादिनोक्तेन इत्याशङ्क्य पूर्वपक्षवादिमत एव...... ........दर्शयितुमाह–**अयमभिप्राय** [२२६.१७] इति । तदभावोऽभावो गम्यते अन्यथा तदर्थैवास्या वाक्यस्य न स्यादित्या[3]............त इति वर्तते । **प्रतिबन्धश्च** [२२६.२२] प्रतिबद्धत्वञ्च हेतेरित्यर्थात् । **तादात्म्यतदुत्पत्तिभ्यां** [२२६.२२] तादात्म्येन तदुत्पत्त्या वा । **तद्भावे भावरूप एवे**[२२६.२३]ति विचारत एतदवतिष्ठते । यत इत्यभिप्रायेणोक्तं एकवाक्येनेति पीनो देवदत्त इत्यादिना **तत एवैकवाक्या**[1]**न्तरभावादि**[२२७.१७]ति

१. °वाक्यार्थान्तर° S

कदाचित्[4]........पादनकाले दृष्टादित्यभिप्रायेणोक्तम्—**एकवाक्यार्थानपेक्षा-चे**[२२७.१८]कवाक्यार्थावतवन्ता(?)वित्यर्थः। **तदन्तर्भावमात्रेण** [२२७.१८] एकवाक्यार्थान्तर्भावमात्रेण नियमवद्वाक्यव्यपक्षेया कदाचिद् दृष्टेन तदन्तर्भावात्। एकरूपान्तरर्भावात्तु **द्वितीयगति**[२२७,२७]र्नेति वर्तते। **भिन्नरूपावेवे**[२२८.६]-ति यथा तया क[5]......त तथा भिन्नरूपावेवेति।

**ततः** [२२८.१९] शास्त्रात्। सर्वदा चात्र **ज्ञान**[२२८.१५]ग्रहणं ज्ञातत्वोप-लक्षणं ज्ञातव्यम्। ज्ञात(न)शब्देन अस्यैव विवक्षितत्वात्। एतच्च पुरस्तादुपदर्शितमेव। स्यादेतत् ये तावत् ज्ञातत्वशब्देन ज्ञानमेवाभिदधते ते सन्तूक्तया नीत्या निराकृताः। ये तु ज्ञानकर्मत्वं ज्ञातत्वं[6]........निराक्रियन्ते इत्याशङ्कायामाह **तदयमत्र** [२२८.२०] इत्यादि। **तदपेक्षोऽपि** [२२८.२५] ज्ञानापेक्षोऽपि। प्रकरणमुपसंहरन्नाह—**तदेवमि-**[२२८,२८]ति। त्रीणि पक्षधर्मान्वयव्यतिरेकात्मकानि लक्षणानि यस्य स तथोक्त इति सर्वमवदातम्।

आचार्यश्रीधर्मकीर्तिविरचितस्यास्य हेतुविन्दुसं[7]..............थ तत्त्वप्रकाशिकां टीकां पटीयसीमीदृशीं परार्थमुद्दिश्य प्रणयता नियतं मयापि किमपि पुण्यं उपार्जितं तदप्यहं परार्थमुपनयामिति मन्वानोऽनेकजन्माभ्यस्तकृपायोगात् सात्मीभूतपरार्थकरणोऽयं भदन्तधर्माकरदत्त **इमम्** [२२९.१] इत्यादि परिणामनाश्लोकेनाह। अस्यायं समुदाया-[र्थः[8] **मुनीशराद्धा**]**न्तनयप्रदीपम्** [२२९.२] **विवृ'त्य यत् पुण्यमुपार्जितं तत् जगतो विशुद्धिं विधेयात्** [२२९.३] इति। कायवाङ्मनोमौनयोगा-न्मुनयः प्रत्येकबुद्धादयस्तेषां ईशः शास्ता बुद्धो भगवान् सवासनक्लेशपरिहाणि-योगेनात(?)भ्यस्तस्य प्रकर्षप्राप्तया तायित्वात् तस्य नयो नीतिः प्रवचनं तस्य राद्धान्तः सिद्धान्तस्तस्य [70b][1].............क्षणिकाः सर्वसंस्कारा इत्यादि प्रवचनार्थस्यानेन यथावत्प्रकाशनात् कुत्सितः प्रमाणानुपपन्नार्थप्रकाशनात् **तर्को** न्यायदर्शनादि[रि]ति तथा। अशेषश्चासौ स चेति तथा। तस्य **मार्गः** [२२९.१] पन्थाः सिद्धान्त इत्यर्थः। क्षतः खण्डितः तद्वैरूप्यापादनादशेषः कुतर्कमार्गो येन स तथा। तं **विवृ'त्य** व्याख्याय[2] ..................र्थात्। **तत् पुण्यं** [२२९.३] कर्तृ **विशुद्धिं** [२२९.३] विमलचित्तसंततिं **परां** [२२९.४] प्रकृष्टां सर्वावरणप्रहाणादिति सर्वमनवद्यमिति।

---

१. वितत्य S

दारिद्र्यदुःखादभियोगमात्राद् विशुद्धबुद्धेर्विरहादबोधात् ।
नास्तीह सूक्तं मम यत्पुनः स्यात् गुरोर्जितारेः स खलु प्रसादः ॥
कुतूहलेनैव यदृच्छया वा मात्सर्यतो दोषजिघृक्ष[3][या वा]
......स्वत एव रूपं विज्ञास्यतेऽस्येति न वर्णयामः ॥
कृतोऽयमर्चटालोको निबन्धो बालबान्धवः ।
यत्र मूर्तिरिवादर्शे दृश्यते स्वपरस्थितिः ॥
परार्थमुद्दिश्य यथार्थमर्चटं विवृण्य पुण्यं यदुपार्जितं मया ।
निहन्तु तेनावरणानि विद्विषो जनोन्तरायेण विनैव सर्वथा ॥
समाप्तश्चा[5]................निवन्धः ॥
कृतिरियं पण्डितदुर्वेकमिश्रस्येति ।

---

# १. हेतुबिन्दुगतशब्दानां सूची[1]



१ स्थूलाङ्काः पृष्ठसूचकाः, सूक्ष्माङ्काश्च पङ्क्तिसूचकाः।

## २. हेतुबिन्दुटीकागतानां विशेषनाम्नां सूची[1]



१. अङ्काः पृष्ठसूचकाः

## ३. हेतुबिन्दुटीकागतानामवतरणानां सूची[1]



१. अङ्काः पृष्ठाङ्कसूचकाः        २. कोष्ठकान्तर्गताङ्काः कारिकाङ्कसूचकाः

# ४. हेतुबिन्दुटीकागतशब्दानां सूची

[ आ ]

## ४. हेतुबिन्दुटीकागतशब्दानां सूची।

[ द ]

[ प ]

[ श-ष ]

# ५. हेतुबिन्दुटीकालोकगतविशेषनाम्नां सूची ।

# ६. हेतुबिन्दुटीकालोकगतानामवतरणानां सूची ।

# सप्तमं परिशिष्टम् ।

## आचार्यधर्मकीर्तिकृतं

# हेतुबिन्दुप्रकरणम्[1] ।

[T. 355b] नमो बुद्धाय ।

## [१. हेतोः सामान्यनिरूपणम् । ]

परोक्षार्थप्रतिपत्तेरनुमानाश्रयत्वादेव तद्व्युत्पादनार्थं संक्षेपत इदमारभ्यते[1] —

[2]पक्षधर्मस्तदंशेन व्याप्तो हेतुस्त्रिधैव सः ।
अविनाभावनियमाद् हेत्वाभासास्ततोऽपरे ॥

[3]पक्षो धर्मी, अवयवे समुदायोपचारात् । प्रयोजनाभावादनुपचार इति चेत् । न । सर्वधर्मिधर्मप्रतिषेधार्थत्वादुपचारस्य । एवं हि चाक्षुषत्वादि परिहृतं भवति ।

[4]धर्मवचनेनापि पराश्रयत्वात् धर्मस्य धर्म्याश्रयसिद्धौ प्रत्यासत्तेः साध्यधर्मिण एव सिद्धिरिति चेत् । न । प्रत्यासत्तेः दृष्टान्तधर्मिणोऽपि । सिद्धे तदंशव्याप्त्या दृष्टान्तधर्मिणि सत्त्वे पुनर्धर्मिणो वचनं दृष्टान्तधर्मिण एव यो धर्मः स हेतुरिति नियमार्थमाशंक्येत । ततश्च चाक्षुषत्वादय एव हेतवः स्युः न कृतकत्वादय इत्यनिष्टमेव स्यात् । तस्मादुपचारः कर्तव्यः । दृष्टं " सजातीय एव सत्त्वम् " इत्यवधारणेन साध्याभावे सिद्धेऽपि व्यतिरेके साध्याभावे असत्त्ववचनम्, तथेहापि तदंशव्याप्तिवचनात् सिद्धेऽपि दृष्टान्तधर्मिणि सत्त्वे तत्रैव भावनियमार्थं धर्मिवचनमाशंक्येत । तस्मात् सामर्थ्याद् अर्थप्रतीतावपि उपचारमात्रात् समाननिर्देशात् प्रतिपत्तिगौरवं च परिहृतं भवति ।

[5]पक्षस्य धर्मत्वे तद्विशेषणापेक्षस्यान्यत्राननुवृत्तेरसाधारणतेति चेत् । न । अयोगव्यवच्छेदेन विशेषणात् [T 356a] । यथा चैत्रो धनुर्धर इति । नान्ययोगव्यवच्छेदेन । यथा पार्थो धनुर्धर इति ।

---

1. We thank Mahapandita Rahul Sankrityayana for allowing us to print this restoration made by him from Tibatan version. We also thank Muni Shri Jambu Vijayji for kindly supplying us with the references of Hetubindu in Utpādādisiddhi. It should be noted here that Rahulji's restoration is not printed verbatim. We have made the changes, wherever it was found necessary. All the notes are supplied by us. So final responsibility rests on us.

१. पृ० ३९. पं० १८ ।　　२. प्रमाणवा० ३.१ (मनो०) । प्रमाणवा० १.३ (कर्ण०) ।

३. कर्ण० पृ० १२ ।　　४. कर्ण० पृ० १३ ।

५. कर्ण० पृ० १५ ।

[1]तदंशो हि तद्धर्म एव।

तस्य व्याप्तिर्हि व्यापकस्य तत्र भाव एव। व्याप्यस्य वा तत्रैव भावः।

एतेन अन्वयो व्यतिरेको वा [2]पक्षधर्मश्च यथास्वं प्रमाणेन निश्चित उक्तः।

[3]सर्वत्र हेतौ साध्यवैधर्म्ये व्याप्त्यसिद्धेर्व्यापकनिवृत्तौ निवृत्त्यभावाद्वा। अन्वयव्यतिरेकनिश्चयाभ्यां हि तद्धर्मव्याप्तिनिश्चयः।

[4]तत्र पक्षधर्मस्य साध्यधर्मिणि प्रत्यक्षतोऽनुमानतो वा प्रसिद्धिः। यथा प्रदेशे धूमस्य, शब्दे वा कृतकत्वस्य।

सधूमं हि प्रदेशमर्थान्तराविविक्तरूपमसाधारणात्मना दृष्टवतः स्मार्तं यथादृष्टभेदपरमार्थविषयं लिङ्गज्ञानमुत्पद्यते।

तत्र यदाद्यमसाधारणविषयं दर्शनं तदेव प्रमाणम्।

तस्मिन् तथाभूते दृष्टे सति तदसाधारणतामभिलपन्ती अतद्व्यावृत्तिविषया स्मृतिरुत्पन्ना प्रत्यक्षबलेन न प्रमाणम्। यथादृष्टाकारग्रहणात्, प्रागसाधारणं दृष्ट्वा असाधारणमभिलपतः [प्रतिषेधविकल्पस्य] अपूर्वार्थाधिगमाभावात्, अर्थक्रियासाधनस्य आलोचनाज्ञानेन दर्शनाच्च। अदृष्टस्य पुनस्तत्साधनस्य [विधि]विकल्पेनाप्रतिपत्तेरनुमानवत्। [T. 356 b]

अर्थक्रियार्थी हि सर्वः प्रेक्षावान् प्रमाणमप्रमाणं वा अन्वेषते। न च सामान्यं स्वलक्षणप्रतिपत्तेरूर्ध्वं तत्सामर्थ्योत्पन्नविकल्पविज्ञानग्राह्यं काञ्चिद् अर्थक्रियामुपकल्पयति। यथा नीलं दृष्ट्वा नीलमिति ज्ञाने। तदेव हि नीलस्वलक्षणं तथाविधसाध्यार्थक्रियाकारि। तच्च तेनात्मना दृष्टमेव।

न च तत्स्वलक्षणग्रहणोत्तरकालभाविनो नीलविकल्पस्य विषयेण नीलसाध्यार्थक्रिया क्रियते।

तस्मात् 'अनधिगतार्थविषयं प्रमाणम्' इत्यपि 'अनधिगते स्वलक्षणे' इति विशेषणीयम्।

अधिगते तु स्वलक्षणे तत्सामर्थ्यजन्मा विकल्पस्तदनुकारी कार्यतस्तद्विषयत्वात् स्मृतिरेव, न प्रमाणम्, अनधिगतवस्तुरूपस्यानधिगतेः। वस्त्वधिष्ठानत्वात् प्रमाणव्यवस्थायाः। अर्थक्रियायोग्यविषयत्वात् तदर्थिनां प्रवृत्तेः। अर्थक्रियायोग्यलक्षणं हि वस्तु इति।

१. वर्ण० १६।   २. वर्ण० पृ० १६।

३. नास्ति टीकायां पत्रमिति इत आरभ्य 'तत्र' इति यावत् टीकातः समुद्धारोऽशक्यः।

४. पृ० ३९।

ततोऽपि विकल्पात् वस्तुन्येव तदध्यवसायेन पुरुषस्य प्रवृत्तेः। प्रवृत्तौ प्रत्यक्षेणा-भिन्नयोगक्षेमत्वात्।

पूर्वप्रत्यक्षक्षणेनोत्तरेषां क्वचिदभिन्नयोगक्षेमत्वात्, प्रामाण्यप्रसङ्ग इति चेत्। न। क्षण[ T. 357 a ]विशेषसाध्यार्थवाञ्छायां नानायोगक्षेमत्वात्। साधारणे हि कार्ये न तेषां सामर्थ्यभेदः। अपरापरधूमप्रमितसन्निकृष्टाग्निषु इव अनुमानज्ञानानामग्निमात्र-साध्येऽर्थे।

एतेन धर्मि-धर्म-लिङ्गादिविकल्पस्य प्रमाणपृष्ठभाविनः प्रामाण्यं प्रत्युक्तम्।

अन्वयनिश्चयोऽपि स्वभावहेतौ साध्यधर्मस्य वस्तुतस्तद्भावतया साधनधर्मभावमात्रानु-बन्धसिद्धिः। सा हि साध्यविपर्यये हेतोर्बाधकप्रमाणवृत्तिः। यथा यत् सत् तत् क्षणिक-मेव, अक्षणिकत्वेऽर्थक्रियाविरोधात् तल्लक्षणवस्तुत्वं हीयते।

[1]कार्यहेतौ कार्यकारणभावसिद्धिः। यथेदमस्योपलम्भे उपलब्धिलक्षणप्राप्तमनुपलब्ध-मुपलभ्यते, सत्स्वप्यन्येषु हेतुषु अस्याभावे न भवतीति यस्तद्भावे भावस्तदभावेऽभावश्च प्रत्यक्षानुपलम्भसाधनः कार्यकारणभावः तस्य सिद्धिः। कार्यकारणभाव एव ह्यर्थान्तरस्य एवं स्यात्--यत्र धूमस्तत्रावश्यमग्निरिति, अग्निभाव एव हि भावो धूमस्य तत्कार्यत्वमिति।

[2]अनुपलब्धावपि अन्वयनिश्चयः—असद्व्यवहारस्योपलब्धिलक्षणप्राप्तस्यानुपलब्धिमात्र-वृत्ति[ T. 357 b. ]साधनम्, निमित्तान्तराभावोपदर्शनात्।

व्यतिरेकनिश्चयोपि कार्यस्वभावहेत्वोः कारणव्यापकानुपलब्धिभ्यां दृश्यविषयाभ्यां कार्यकारण-व्याप्यव्यापकभावसिद्धौ सत्यां साध्याभावेऽभावसिद्धिरुद्दिष्टविषयस्याभावोपदर्शने। अनुपलब्धिलक्षणप्राप्तस्यान्यथा क्वचिदभावासिद्धेः। अनुद्दिष्टविषयं साध्याभावे हेत्वभाव-ख्यापनं प्रतिबन्धमात्रसिद्धौ सिध्यति इति न तत्र व्यतिरेकसाधने दृश्यविषयता-विशेषणमपेक्ष्यते।

व्यतिरेकनिश्चयोऽनुपलब्धौ उपलब्धिलक्षणप्राप्तात् सतोनुपलम्भाभावदर्शनम्।

एतल्लक्षणो हेतुस्त्रिप्रकार एव। स्वभावः, कार्यम्, अनुपलब्धिश्चेति। यथा अनित्ये कस्मिंश्चित् साध्ये सत्त्वमिति। अग्निमति प्रदेशे धूम इति। अभावे च उपलब्धिलक्षणप्राप्तस्यानुपलब्धिरिति।

अत्रैव त्रिविधहेतौ 'अविनाभावस्य नियमाद्' इति पक्षधर्मस्य यथोक्ता व्याप्तिरविना-भावः। [3]न स त्रिविधाद्धेतोरन्यत्रास्ति इत्यत्रैव नियत उच्यते।

१. उत्पादा० पृ. ३९, ९२ २. वादन्याय पृ. १८

३. पृ० ८ पं० १.

## [ २. स्वभावहेतुनिरूपणम् । ]

तत्र साधनधर्मभावमात्रान्वयिनि साध्यधर्मे स्वभावो हेतुः । अपरापरव्यावृत्तिभेदेन धर्मभेदे सत्यपि वस्तुतः लिङ्गस्वभाव एव । हेतुस्वभावे साध्यधर्मेऽन्वयव्यभिचाराभावात् [T. 358a] विशेषणमयुक्तमेव तथापि परमतापेक्षं तन्मात्रान्वयेनेति कृतम् ।

परे हि अर्थान्तरनिमित्तमतद्भावमात्रान्वयिनमपि स्वभावमिच्छन्ति । तेन च विशेषणेन तथाविधस्य अतत्स्वभावताम्, तस्मिन् साध्ये हेतोर्व्यभिचारं चाह । यथा हेतुमति विनाशे कृतकत्वस्य ।

तस्य द्विधा प्रयोगः । साधर्म्येण एकः, वैधर्म्येणापरः । यथा—यत् सत् तत् सर्वं क्षणिकम् । यथा घटादयः । संश्च शब्दः । तथा, क्षणिकत्वाभावे सत्त्वाभावः । सर्वोपसंहारेण व्याप्तिप्रदर्शनलक्षणौ साधर्म्यवैधर्म्यप्रयोगौ उक्तौ ।

अत्र पक्षधर्मसम्बन्धवचनमात्रसामर्थ्यादेव प्रतिज्ञार्थस्य प्रतीतेः न प्रतिज्ञायाः प्रयोग उपदर्शितः । अप्रदर्शिते प्रमेये कथं तत्प्रतीतिरिति चेत् । स्वयं प्रतिपत्तौ प्रमेयस्य क उपदर्शयिता ? प्रदेशस्थं धूममुपलब्धवतः तस्याग्निना व्याप्तेः स्मरणे तत्सामर्थ्यादेव 'अग्निरत्र' इति प्रतिज्ञार्थप्रतीतिर्भवति । न च तत्र कश्चित् 'अग्निरत्रेति' अस्मै निवेदयति । नापि स्वयमपि प्रागेव प्रतिपद्यते किञ्चित्, प्रमाणमन्तरेणैवं प्रतीतेः निमित्ताभावात् । प्रतीतौ लिङ्गस्य वैयर्थ्यम् । स्वयमेवाकस्मात् प्राक् 'अग्निरत्र' इति व्यवस्थाप्य [T. 358b] तत्प्रतिपत्तये पश्चाल्लिङ्गमनुसरतीति कोऽयं प्रतिपत्तेः क्रमः ? परेणापि तदुच्यमानं प्लवत एव, उपयोगाभावात् । [1]विषयोपदर्शनं चेन्मतम् ; तेनैव तावद्दर्श्यमानेन कोऽर्थः ? [2]यदि प्रतीतिरन्यथा न स्यात्तदा सर्वं शोभेत । तस्मादेव स्वयंप्रतीतौ केनचित् विषयोपस्थापनेन विनापि प्रतियन् अस्मान् कार्यिणो दृष्ट्वा पर्वब्राह्मण इव व्यक्तं मूल्यं मृगयते । अस्मद्वचनादपि स्वयं सिद्धमेव लिङ्गमनुसृत्य साध्यं प्रत्येति । तस्मात् कोनयोरवस्थयोर्विशेषः ? [3]दृष्टा च पक्षधर्मसम्बन्धवचनमात्रात् साधर्म्यवत्प्रयोगादेः प्रतिज्ञावचनमन्तरेणापि प्रतीतिरिति कस्तस्योपयोगः ? स्वनिश्चयवदन्येषामपि निश्चयोत्पादनाय साधनमुच्यते । तत्र स्वयं प्रमेयोपदर्शनेन विनापि प्रतिपद्य परं प्रतिपादयन्तत्पूर्वकमाश्रयते इति किमत्र कारणम् ? तस्मात् न प्रमेयस्य वचनेन किञ्चित् प्रयोजनमन्यथापि प्रतिपत्तेरुत्पत्तेरिति ।

---

१. सन्मति० पृ० ६७ पं० ७  
२. सन्मति० पृ० ६७ पं० ३०  
३. सन्मति० पृ० ६७ पं० ३१

एतेनोपनयनिगमनादिकमपि प्रत्युक्तम् । एतावतैव साध्यप्रतीतेर्भावात् । [1]डिण्डि-करागं परित्यज्याक्षिणी निमील्य चिन्तय तावत् किमियता प्रतीतिः स्यान्नवेति । भावे किं प्रपञ्चमालया ? [ T. 359a ] । इति इयानेव साधनवाक्ये प्रयोगो ज्यायान् ।

अत्र 'पूर्वं हेतुः प्रयोक्तव्यः पश्चाद् दृष्टान्तः' इति क्रमनियमोऽपि न कश्चित् । तस्य कथमपि गमकत्वात्[2] ।

सम्बन्धवचनेपि नार्थभेदोपि कश्चित् । उभयथा धर्मभेदेपि तद्भावस्यैव ख्यापनात् । नहि अतत्स्वभावस्य भावे एकान्तेनान्यस्य भावः, तन्निवृत्तौ वा निवृत्तिः । कृतकत्वस्य प्रयत्नानन्तरीयकत्वमन्तरेणापि भावात् । कार्यस्याभावेपि तन्निवृत्तेरभावात् । यथाऽनयोरेव कृतकत्वप्रयत्नानन्तरीयकत्वयोर्विपर्ययेण नैकनिवृत्तौ अन्यनिवृत्तिः ।

तस्मादन्वयव्यतिरेकयोर्यथालक्षणमेकोऽपि प्रयुक्तो द्वितीयमाक्षिपतीति [3]नानयोरर्थतः कश्चित् भेदोऽन्यत्र प्रयोगभेदात् । इति नैकत्र साधनवाक्ये द्वयोः प्रयोगः, वैयर्थ्यात् । तत्स्वभावतयाऽन्वयसिद्धौ तदभावेऽभावोपि सिद्ध्यति एव । तथासिद्धौ च अन्वयस्यापि सिद्धेरिति ।

तदभाव एव हेतोरभावख्यातिर्यथा स्यात् नान्यत्र विपक्षे विरुद्धे वा इति नियम-ख्यापनार्थोपि व्यतिरेकप्रयोगो न युक्तः, अन्यविरुद्धयोरपि विपक्षत्वात् ।

कथमिदम् अभ्युपेयते येन अन्वयव्यतिरेकयोः संभवे विनाशस्वभावतेति ? विनाशहे-त्वयोगात् । स्वभावत एव भावा नश्वराः नैषां स्वहेतुभ्यो निष्पन्नानामन्यतो विनाशोत्पत्तिः । तस्यासामर्थ्यात् । [ T. 359b ] नहि विनाशहेतुर्भावस्य स्वभावमेव करोति, तस्य स्वहेतुभ्यो निर्वृत्तेः । नापि भावान्तरमेव, भावस्य तदवस्थत्वाद् तथोपलब्ध्यादिप्रसंगः । नापि भावान्तरेणावरणम्, तदवस्थे तस्मिन्नावरणायोगात् । नापि विनाशहेतुना अभावः क्रियते । अभावस्य विधिनान्यतयोपगमे व्यतिरेकाव्यतिरेकविकल्पानतिक्रमात् । भावप्रति-षेधकरणे न तस्य किञ्चित् भवति न भवत्येव केवलमिति । एवं च कर्ता न भवतीत्य-कर्तुरहेतुत्वमिति न विनाशहेतुः कश्चित् । वैयर्थ्याच्च । यदि स्वभावतो नश्वरस्तस्य न किञ्चिन्नाशकारणैः । तत्स्वभावतयैव स्वयं नाशात् ।

[4]यो हि यत् स्वभावः स स्वहेतोरेवोत्पद्यमानो तादृशो भवति, न पुनस्तद्भावे हेत्वन्त-रमपेक्षते । प्रकाशद्रवोष्णकठिनद्रव्यादिवत् । नहि प्रकाशादयस्तदात्मान उत्पन्नाः पुनः

१. व्यो. पृ० ६१७ । न्यायमं० पृ० ५८२
२. वादन्याय पृ० १०८
३. पृ० २२६ पं० १२
४. पृ. १३८ पं. १८ । तत्वाद० पृ. ७५.

प्रकाशादिभावे हेत्वन्तरमपेक्षन्ते । तदात्मनस्तादात्म्याभावे नैरात्म्यप्रसंगात् । तद्वद् अस्थिति-धर्मा चेत् स्वभावतो भावो निष्पन्नो न पुनस्तदात्मतया हेत्वन्तरमपेक्षते ।

बीजादिवदनियमश्चेत् । स्यादेतत् बीजादयः अङ्कुरादिजननस्वभावा अपि सलिलादि-हेत्वन्तरापेक्षणात् [ T. 360a ] न केवला जनयन्ति । तद्वत् भावेऽपि विनाशे स्यादिति । न । तत्स्वभावस्य जननाद् अजनकस्य चातत्स्वभावत्वात् । [1]अतएव तयोर-वस्थयोर्वस्तुभेदो निश्चेयः । भावानां स्वभावान्यथात्वाभावात् । तत्स्वभावस्य पश्चादिव प्रागपि जननप्रसङ्गात् ।

तस्मात् योऽन्त्योऽवस्थाविशेषः स एवाङ्कुरजननस्वभावः । पूर्वभाविनस्तु अवस्थाविशेषा अङ्कुरकारणस्य कारणानि, तेभ्यस्तदुत्पत्तेः, तस्मान्नानेकान्तः ।

[2]क्षणिकेषु भावेषु अपरापरोत्पत्तेरैक्याभावात् । यदि ते अन्त्याः समर्थाः, किं न जनयन्ति प्रत्येकमिति ? जनयन्त्येव नात्र अन्यथाभावः, स्वभावस्याविपरीत्यात् ।

ननु तेषु सहकारिषु समर्थस्वभावेषु कार्यस्य एकेनैव जनितत्वात् कोऽपरस्योपयोगः ? [3]न वै भावानां प्रेक्षापूर्वकारिता यतः ' अयमस्मास्वन्यतमोऽपि समर्थः किमस्माभिः कर्तव्यम् ' इत्यालोच्य अपरे निवर्तेरन् । स्वहेतुपरिणामोपनिधिधर्माणो निरभिप्रायव्यापारा एव भावाः पर्यालोचनशून्याः [ कार्ये सर्व एव व्याप्रियन्ते । तदपि कार्यं सर्वेभ्य एव जायते इति ][4] नोपालम्भमर्हन्ति, तत्प्रकृतेः ।

[5]ते समर्थाः किन्नापरापरं जनयन्ति इति चेत् । न । तत्रैव सामर्थ्यात् । तस्यैवैकस्य जनने समर्था इति [ T. 360b ] नापरापरजननम् इति ।

[6]भिन्नस्वभावेभ्यश्चक्षुरादिभ्यः सहकारिभ्य एककार्योत्पत्तौ न कारणभेदात् कार्यभेदः स्यादिति चेत् । न । यथास्वं स्वभावभेदेन तद्विशेषोपयोगतस्तदुपयोगैः कार्यस्वभाव-विशेषासङ्करात् । यथा मृत्पिण्डकुलालसूत्रादिभ्यो भवतो घटस्य मृत्पिण्डादमृत्स्वभावेभ्यो वृक्षादिभ्यो भिन्नः स्वभावः, कुलालात्तस्यैव मृदात्मनः सतः संस्थानविशेषात्मतया तदन्येभ्यो भिन्नः, सूत्रात् तस्यैव मृत्संस्थानविशेषात्मनः चक्रादिभिर्विभक्तः स्वभावो भवति । तदेवं न कुलालान्मृत्स्वभावता; न मृदः संस्थानविशेषः । न च तयोः शक्ति-विशेषविषयभेदेऽपि तज्जनितविशेषभेदस्य कार्यस्य स्वभावभेदः; मृत्संस्थानयोरुपरस्परात्मतया मृत्संस्थानाविशेषाभ्यां तयोरप्रतिभासनप्रसङ्गात ।

१. पृ. ११७ पं. ९ २. पृ० १३३ पं० २९ ।
३. तुल०–अष्टश० पृ० १८४ । तात्पर्य० पृ० १३ पं० २१; पृ० ३९०. पं० ८
४. नास्ति रा० कृते । ५. उत्पादा० पृ० १५
६. उत्पादा० पृ० ४२–४३.

[१]अन्यदेव संस्थानं गुणो मृद्द्रव्यात् तेन भिन्नस्वभावः कुलालमृत्पिण्डयोरुपयोगविशेष इति चेत् । उक्तमत्र । अपि च यदि संस्थानं भिन्नं मृदः, कुलालः किं न पृथक् करोति ?

गुणस्य द्रव्यपरतन्त्रत्वात् स कथं पृथक् क्रियेत ? तत्संस्थानस्य यदि स्वभावेनैव तद् द्रव्यमाधारस्वभावम्, तत्संस्थानं वा स्वत एवाधेयात्मकम् [T. 361a ] तदा न किञ्चित् कुलालव्यापारापेक्षया इति चेत् । न । ततः परस्परसम्बन्धयोग्यतां द्वयमप्येतत् प्रतिलभते, अन्यथा स्वभावत एव तथाविधसंस्थानसम्बन्धयोग्यत्वे प्रागपि योग्यता अस्तीति संस्थानविशेषेण सम्बन्धः स्यादिति । एवं तर्हि सा योग्यता मृद्द्रव्यस्य कुलालाद् भवतीति न चानयोः स्वभावभेदः । भेदे हि प्राग्वत् प्रसज्येत । अस्ति तावद् एकस्वभावत्वेऽपि एकस्यानेकप्रत्ययोपाधेयविशेषतेति किं मृत्संस्थानयोरेकत्वसाधनाय अतिनिर्बन्धेन ? ।

[२]तेन सहकारिणः प्रत्ययाः नैकोपयोगविषयाः कार्यस्यैकस्वभावत्वेऽपि वस्तुत इति । यथा इह कारणभेदो भिन्नविशेषोपयोगात् नैककार्यः, तथा चक्षुरादिभ्यो विज्ञानोत्पत्तौ उन्नेयः । तथा हि–समनन्तरप्रत्ययाद्विज्ञानात् चक्षुर्विज्ञानस्योपलम्भात्मनः सतश्चक्षुरिन्द्रियाद्रूपग्रहणयोग्यताप्रतिनियमः विषयात् तत्तुल्यरूपतेति अभिन्नत्वेपि वस्तुतः कार्यस्य कारणानां भिन्नेभ्यः स्वभावेभ्यो भिन्ना एव विशेषा भवन्ति । तेन कारणभेदेपि अभेदस्तत्कार्यविशेषस्येति ।

[३]त एवैते कारणशक्तिभेदा यथास्वं प्रतिविशिष्टकार्यजननेऽव्यवधेयशक्तितया प्रत्युपस्थिताः, क्षणिकत्वात् सामग्रीकार्यस्य स्वभावस्थित्याश्रय इत्युच्यन्ते । [T. 361b] तथाहि तत् तेभ्य उपलम्भात्मकं रूपग्रहणं प्रतिनियतं विषयरूपं चेति प्रतिविशिष्टस्वभावमेकमेव जातम् ।

अप्रतिरोधशक्तिकेषु अनाधेयविशेषेषु क्षणिकेषु प्रत्ययेषु परस्परं कः सहकारार्थः ? न[४] वै सर्वत्रातिशयोत्पादनम् सहक्रिया । का तर्हि ? एकार्थकरणं यद् बहूनामपि । यथाऽन्त्यस्य कारणकलापस्य । तदेव मुख्यं सहकारित्वं सहकारिणाम्, तस्यैवान्त्यस्य कारणत्वात् । तत्र च क्षणे एकस्य स्वभावस्याविवेकात् विशेषस्य कर्तुमशक्यत्वात्, स्वभावान्तरोत्पत्तिलक्षणत्वाद् विशेषोत्पत्तेः । भावान्तरजननेऽन्त्यत्वमेव हीयेत । ततश्च न साक्षात्कारणं स्यात् । तस्मात् न कारणस्य सहकारिभ्यो

१. उत्पादा पृ० ४५
२. उत्पादा० पृ० ४४ ।
३. उत्पादा० पृ० ४५
४. पृ० १२७ पं० २८ ।

विशेषस्योत्पत्तिः । [१]ते समर्था एव स्वभावतोऽन्त्याः प्रत्ययाः सह जायन्ते क्षणिकाः येषां प्राक्पश्चात्पृथग्भावो नास्ति, येभ्यश्चानन्तरमेव कार्यमुत्पद्यते । तत्र एकार्थक्रियैव सहकारित्वम् ।

समर्थः कुतः जायते इति चेत् । स्वकारणेभ्यः । तानि एनमपरसन्निधान एव किं जनयन्ति ? कदाचिदन्यथापि स्युः ततश्च एकोपि क्वचिज्जनयेत् । [२]अपरापरप्रत्ययप्रयोगेन प्रतिक्षणं भिन्नशक्तयः संस्काराः सन्तन्वन्तो यद्यपि कुतश्चित् [T. 362 a] साम्यात् सरूपाः प्रतीयन्ते तथापि भिन्न एव एषां स्वभावः तेन किञ्चिदेव कस्यचित् कारणम् ।

[३]तत्र योऽव्यवधानादिदेशो रूपेन्द्रियादिकलापः स विज्ञानजनने समर्थो हेतुः । [४]यस्तेषां परस्परोपसर्पणाद्याश्रयः प्रत्ययविशेषः स तद्धेतुजनने समर्थो हेतुः । अतस्तस्य नित्यं नान्यत्र जन्म ।

अनेन न्यायेन सर्वत्र हेतुफलभावप्रतिनियमो द्रष्टव्यः प्रतिक्षणमन्यान्यस्वभावभेदान्वयिनीषु शक्तिषु, न तु स्थिरैकस्वभावेषु भावेषु स्वभावस्यान्यथात्वासंभवात् । समर्थासमर्थस्वभावयोः क्रियाऽक्रियाऽयोगात् । अन्यसाहितः करोति चेत् । किं केवलस्यासामर्थ्यम् ? समर्थः केवल इति चेत् । किन्न करोति ? अकुर्वन् कथं समर्थः ? कुविन्दादयः पटादिक्रियायां समर्था अपि न सर्वत्र कुर्वन्तीति चेत् । क्रीडनशीलो देवानां प्रियः कृतमपि पुनः पुनः कारयति, तथाहि बीजादिवदिति निर्लोठितमेव ।

तस्मात् स्वभावस्यान्यथात्वासम्भवात् [ T. 362 b ] तद्धर्मणः तथाभावः अन्त्यावस्थावदनिवार्यः ।

अन्त्यावस्थायां प्रागसमर्थस्य सामर्थ्योत्पत्तौ—तत्सामर्थ्यस्य तत्स्वभावत्वेऽपूर्वोत्पत्तिरेव सा । अतत्स्वभावत्वे स प्रागिव पश्चादपि अकारक एव ।

अपि च योऽसौ सकलेषु सहकारिषु करोति स तदैव कस्मात् करोति ? कुर्वन् दृष्टस्तेन दर्शनबलेन करोतीति ब्रूमः । अहो महासामर्थ्यं महाप्रभावस्य दर्शनम् यदेतत् कार्यकारणस्वभावविकलान् अपि भावान् स्वभावमात्रेण नानाप्रकारेषु व्यापारेषु नियुङ्क्ते । यदि नाम किञ्चित् कथञ्चिद् अत्रभवतो दर्शनस्य विषयतामतिक्रामेत् हन्त ! अप्रसवधर्मकमपेतसन्तानं स्यादिति—इयं चिन्ता चित्तं दुनोति ।

न वै वयं भावानामस्मद्दर्शनवशात् कार्यक्रियां ब्रूमः किन्तु ते स्वभावेनैव कार्यकरणस्वभावाः, तान् पश्यंतो जानीमहे—एते कारकस्वभावा इति ।

१. पृ० १२४. पं० २८ ।
२. पृ० १३३. पं० २६ ।
३. पृ० १२४. पं० १९
४. पृ० १२४. पं० २७

सत्यम्, इदमप्यस्ति—स्वभावस्तेषां कार्यक्रियाधर्मा तेन समस्तप्रत्ययानाम् अकृत्वा कार्यं नोपेक्षापत्तिरिति । सोऽक्षेपक्रियाधर्मा स्वभावस्तदैवान्त्यावस्थायामुत्पन्नः, आहोस्वित् प्रागपि आसीत्? आसीत्, अप्रच्युतानुत्पन्नानां स्थिरैकस्वभावानां कस्मिंश्चित्काले कस्यचित्स्वभावस्याभावविरोधात् ।

तत् किमिदानीं माता च वन्ध्या च अस्ति? को वास्य भाषितस्यार्थः—प्रागपि अक्षेपक्रियास्वभावः कार्यं च न करोति इति । [ T. 363 a ]

सहितः स्वकार्यजननस्वभावः न केवल इति चेत् । अन्यस्तर्हि केवलोऽन्यश्च सहकारिसहितः स्वभावभेदात् । स्वभावभेद एव हि भावभेदस्य लक्षणम् । नहि स साहित्येपि पररूपेण कर्ता स्यात् । स्वरूपं च तस्य प्रागपि तदेवेति न कथञ्चित् कार्यक्रियाविरामः ।

यस्यापि भावः क्षणिकः तस्यापि स कथं न तादृशः, केवलस्य अजनकत्वात्? न । अजातत्वादजनकः । जात एव कथं न भवति? क्षणिकत्वात् । उक्तं यादृशस्य क्रिया । स कथमेकक्षणभावी अन्यथा भवेत् । यश्च भवति स एव न भवतीति नायं प्रसङ्गः कारकाकारकयोः स्वभावतत्कारणयोर्विरोधात् ।

[1]योपि मन्यते—अक्षेपाक्रियाधर्मैव स तस्य स्वभावः; न स साहित्यमपेक्षते, कार्यं तु प्रत्ययान्तरापेक्षमिति सहितेभ्य एव जायते न केवलेभ्य इति—तस्यापि कथं— 'स भावः केवलेपि करोत्येव,' 'कार्यं च तस्मान्नोत्पद्यते' इति तदवस्थो विरोधः । न केवलः करोत्येवेति चेत् । कथमिदानीमक्षेपक्रियास्वभावः । ननु एतदेव परिदीपितं भवति—'करोत्येव' इति कार्यं चायं केवलोपि समर्थः सन् परमपेक्षमाणं कथमुपेक्षेत? परमनादृत्यैतत प्रसह्य कुर्यात् [ T. 363b ] । एवं हि अनेनात्मनः सामर्थ्यं दर्शितं भवति । कार्यं परमपेक्षत इति—ततः केवलादनुत्पत्तिरुक्ता भवति, केवलोपि समर्थस्वभाव इति ततः उत्पत्तिः—एते चैकत्र कथं स्याताम्? तदयमीर्ष्याशल्यवितुद्यमानमर्मा विक्लवं विक्रोशतीत्युपेक्षामेवार्हति ।

तस्मादिदमेकार्थक्रियालक्षणं सहकारित्वं क्षणिकानामेव भावानाम् । अक्षणिकानां पृथक् क्रियाऽसंभवात्, संभवे वा सहकारित्वनिश्चयाऽयोगात् ।

यत्र तु सन्तानोपकारेण भावाः हेतुतां प्रतिपद्यन्ते, यथा तण्डुलबीजादिभ्य ओदनाङ्कुरादिजन्मनि दहनोदकादयः । तत्र सन्तानाश्रयेण विशेषोत्पादने प्रत्ययानां सहक्रियोच्यते न द्रव्याश्रयेण, क्षणिके द्रव्ये विशेषस्यानुत्पत्तेः । नहि तण्डुलादीनां विशेषानुत्पत्तौ

१, उत्पादा. पृ० १४० ।

दहनादिभावेऽपि ओदनजन्म स्यात् । तथा, प्रभास्वरादपवरकं प्रविष्टस्य यदीन्द्रियं स्वोपकारिभ्योऽतिशयं क्रमेण न प्रतिपद्येत तदा प्रागिवार्थप्रतिपत्तिं नैव जनयेत् ।

अक्षेपकारिषु इन्द्रियादिषु न विशेषोत्पत्तिः परस्परतः संभवति । [1]तत्र यथास्वं प्रत्ययैः परस्परोपसर्पणाद्याश्रयैर्ये योग्यदेशा[ T. 364a ]द्यवस्था जातास्ते सहस्वभावनिष्पत्त्या ज्ञानहेतुतां प्रतिपद्यन्ते इति एकार्थक्रियैव सहकारित्वम् ।

यत्र तु सहकारिणः प्रत्ययाः विशेषमुत्पादयन्ति तत्र हेतुसन्तानापेक्षया स्वभावान्तरस्य प्रतिलम्भः । [2]तत्र स्वरसतः हेतुप्रत्ययानां पूर्वोपनिपातक्षणानां निवृत्तौ तेभ्य एव विशिष्ट-क्षणोत्पादाद्विशेषोत्पत्तिरिति कार्योत्पादानुगुणविशिष्टस्य क्षणस्योत्पत्तिक्रमेण यावदत्यन्ताति-शयवतोऽन्त्यकारणकलापात् कार्योत्पत्तिः ।

सहकारिणः समुत्पन्नविशेषात् कारणात् कार्योत्पत्तौ तस्यैव विशेषस्य उत्पत्तिर्न युक्ता । [3]अविशिष्टाद् विशेषोत्पत्तौ कार्यस्यापि स्यात् । ततश्च परस्परतो विशेषोत्पादानपेक्षिण एव सहकारिणः कार्यं कुर्वीरन् । तेनाक्षणिकानामपि सहकारिसापेक्षाणां कारणता स्यात्, अपेक्षणीयेभ्यः स्वभावातिशयोत्पत्तिश्च न स्यात् ।

अथ सहकारिणा कार्योत्पादानुगुणविशेषजननाय कृतविशेष एव उपतिष्ठेत । एवं सत्यनवस्था स्यात् । न च सहकारिणः परस्परं कार्योत्पादानुगुणविशेषोत्पादने नित्यं योग्यावस्थाः, येन नित्यानुषक्त एषां विशेषः स्यात् । तदुपायापाययोः कार्यस्योत्पत्त्यनु-त्पत्तिदर्शनात् । तस्मान्न सहकारिभ्यः कार्योत्पादनानुगुणो विशेष [ T 364 b ] उत्पद्यते ।

नास्माकं पुनः पुनरभिधानेपि कश्चिदुद्वेगो भवति यद्येवं लोकस्य न्यायप्रतीतिर्भवति । हन्त तर्हि उच्यताम् । न विशेषोत्पादनात् सहकारिणां सहकारित्वं परमार्थतः संभवति । यतः तदभावात् विशेषे कर्तव्ये सहकारिताविरहः स्यात् ।

अथ कथं एकार्थक्रियापि भवेत ? यदि पुनः परस्परतो विशेषरहितानामपि सा स्यात् , पृथगपि सा भवेत् । तथा च, तस्माद्विशेषाद्भवन्तोलं कार्यमपि केवलात् स्यादिति चेत् । अत्रोक्तमुत्तरम् प्रतिक्षणमपरापरैः प्रत्ययैः यथा भावसन्ताने विशेषस्यो-त्पत्तिः । योग्यदेशताद्यवस्थाभेदाः कार्यकरणशीलाः सर्वदा न भवन्तीति कथमेषां

---

१. पृ. १२४ पं० २९ ।

२. comp पृ० १२४ पं० ४ ।

३. पृ० १३२ पं० १

पृथगपि तथाविधविशेषारम्भः स्यात् । कार्यद्वैविध्यं च सहकारिभ्यः सञ्जनितविशेष-परम्परया उत्पत्तिधर्मकम्, अन्यच्च । अङ्कुरादिवत्, अक्षेपकरणशीलेन्द्रियविज्ञानवच्च कार्यकारणयोः स्वभावभेदात् । इति सर्वमुक्तम् ।

तत्र सहकारिभ्यः सन्तानोपकारापेक्षस्य कार्यस्योत्पादानुगुणः यद् आद्यविशेषः स तेषां संपर्ककृतविशेषजन्मा न भवति । ततः ये विशेषाः जायन्ते ते तज्जन्मानः, [T. 365a] तत्प्रकृतित्वाद् इति नानवस्था ।

तथा यद्यक्षणिकोपि अविलम्बितकार्यकर्तृधर्मा तदा पृथग्भावस्य संभवात् केवलोपि तथा स्यात् । अतत्स्वभावस्तु तदापि अकारक एव ।

तस्मादक्षणिकेभ्यः कारणेभ्य एकार्थक्रियया न कश्चित् सहकारित्वनिश्चयः । नापि सन्तत्या उपकारेणेति न तस्य कश्चित् सहकारीति केवलोऽपि कुर्यात् । प्रायस्तु संघातस्थायी भावसंतानः सहकारिप्रत्ययैरुपजनितविशेषः स्वकार्यं कुर्वन् दृष्टो बीजादिवत् । तत् स्थिरहेतुवादिनः हेतोः प्रत्ययान्तरापेक्षकारकस्य व्यक्तं स्वभावान्तरस्योत्पत्तिः । कारकस्वभावस्य प्रागपि सत्त्वेऽक्रिया न युज्यते ।

[1]तस्माद् यो यदात्मा स स्वसत्तामात्रेण तादृशो भवति न भूत्वा तद्भावे पराभिसंस्कारमपेक्षते इति स्वभावतोऽस्थितिधर्मणो भावस्य न किञ्चिन्नाशकारणैः [T. 365b] । स्थितिधर्मणोऽपि भावस्य स्वभावान्यथात्वस्य केनचित् कर्तुमशक्यत्वात् न नाशकारणैः किञ्चित् । तदन्यथात्वप्रतिपत्तौ स तत्स्वभाव एव न स्यादिति पूर्व एव विकल्पः स्यात् । तत्र च प्रागेवोक्तं दूषणम् ।

[2]यश्च परस्मादन्यथाभावः सोऽपरः स्वभावः कथं तस्य स्यात् ? स्वभावभेदो हि वस्तुभेदलक्षणम् । तथा च यः स्थितिधर्मा जातः न तस्यान्यथाभावः स्यात् ।

एतेन ताम्रादीनामग्न्यादेः कठिनत्वादीनां द्रवत्वादिस्वभावान्तरोत्पत्तिः प्रत्युक्ता । तत्रापि पूर्वकस्य स्वरसनिरोधित्वाद्विनाशे तत एवोपादानकारणादग्न्यादिसहकारिकारणोपादानप्रत्ययोपजातविशेषादपर एव द्रवादिस्वभाव उत्पन्नः ।

स स्वयं स्थितिधर्मैव स्वहेतुभिर्जनितः, विनाशहेतोरसंभवेऽवस्थानात् । तस्य परस्माद्विनाशो भवति इति । न च विनाशो नामापरः स्वभावः । भावच्युतिरेव विनाशः ।

---

१. उत्पादा० पृ० ७६ । तुलना—न्यायमं० पृ० ११३
२. पृ० १४० पं० २०.

नेदं विकल्पद्वयमतिक्रामति—किं नित्यो भाव उतानित्यः। प्राङ् नित्यो भूत्वा पश्चादनित्यो भवतीति च ब्रुवाणो नित्यानित्यस्वभावभेदम् भावद्वयमाह। नित्यस्वभावस्य नाशं ब्रुवाणः सर्वदैव नाशं प्राह। अन्यथा सर्वदैवानाशमिति विनाशहेतुरसमर्थ एव।

न प्राग् नित्यो भूत्वा पश्चादनित्यः स्याद्, [T. 366a] एक स्वभावत्वात्। स तर्हि भावः विनाशमनाविशन् कथं नष्टो नाम? नित्यस्वभाव-विनाशयोरपरस्पररूपत्वात्। यत एवं यदि अवश्यंभावी विनाश इष्यते तदा तेन विनाशस्वभावेन भवितव्यम् तथापि विनाशहेतुः व्यर्थ इत्युक्तम्।

तस्माद् विनाशं प्रत्यनपेक्षो भावः तद्भावनियतः। ततो यः सन् स विनाशी। नश्वरतायाः निवृत्तौ सत्त्वनिवृत्तिरिति अन्वयव्यतिरेकसिद्धिः।

स्वभावतो नश्वरत्वेपि कश्चिद् अतत्स्वभावोपि स्यात्। न हि सर्वः सर्वस्य स्वभाव इति न तन्निबन्धनान्वयव्यतिरेकसिद्धिरिति चेत्। न। अक्षणिकत्वेऽवस्तुत्वप्रसंगात्। [1]शक्तिर्हि भावलक्षणम्। सर्वशक्तिविरहः पुनरभावलक्षणम्। न चैवाक्षणिकस्य क्वचित् कदाचित् शक्तिरस्ति, क्रमयौगपद्याभ्यां कार्यक्रियाशक्तिविरहात्। इत्थं च यत् सत् तत् क्षणिकमेवेति व्याप्तिसिद्धिः।

## [ ३. कार्यहेतुनिरूपणम्। ]

अर्थान्तरे गम्ये कार्यं हेतुः, अव्यभिचारात्। [2]कार्यकारणभावेन गमकत्वे सर्वथा गम्यगमकभावः स्यात्, सर्वथा जन्यजनकभावात्। न सर्वथा [ T. 366b ] जन्यजनकभावः। तदभावे भवतः तदुत्पत्तिनियमाभावात्। तस्मात् कार्यं स्वभावैर्यावद्भिरविनाभावि कारणे तेषां स हेतुः। तत्कार्यत्वनियमात्। तैरेव च धर्मैर्ये तैर्विना न भवन्ति। अंशेन जन्यजनकभावप्रसंग इति चेत्। न। [3]तज्जन्यविशेषग्रहणेऽभिमतत्वात्। अविशिष्टसामान्यविवक्षायां व्यभिचार इति गमकत्वं नेष्यते।

कस्यचित् कदाचित् कुतश्चिद्भावेऽपि सर्वस्तादृशस्तथाविधजन्मेति कुतः, तथा च नान्वयव्यतिरेकौ इति चेत्। न। अतद्भाविनस्तस्य सकृदपि ततोऽभावात्। परस्परापेक्षया जन्यजनकस्वभावलक्षणे कार्यकारणे। तत्र यदि धूमोऽग्न्यादिसामग्र्या अन्यतोऽपि भवेत् तदा तस्य तज्जन्यस्वभावो न भवतीति सकृदपि ततो न भवेत्। अर्थान्तरवत्। नापि सामग्री तं जनयेत्, अतज्जननस्वभावत्वात्। सामग्र्यन्तरवत्। न च धूमस्य

१. उत्पादा० पृ० ५, ९.
२. वर्ण० पृ० २६-२८।
३. न्यायवि० वि० भाग २, पृ० १५४

तदतज्जन्यः स्वभावो युक्तः । एकस्वभावत्वात् । धूमाधूमजननस्वभावात् भवतो धूमाधूमस्वभावः स्यात् । कार्यस्वभावानां कारणस्वभावकृतत्वात् । [ T. 367 a ] अकारणापेक्षणे च अहेतुकत्वप्रसङ्गात् ।

तस्माद् यो धूमजननः स अग्न्यादिसामग्रीविशेषो भवतीति अग्न्यादिसामग्रीविशेषेण यः जनितः स एव धूमो भवतीति कार्यकारणयोरेवं स्वभावस्य नियमात् तद्विजातीयादुत्पत्तिर्न भवति ।

तत् यादृशं कार्यं कारणाद् दृष्टमेकदा तत् तन्न व्यभिचरति । तेन सिद्धे कार्यकारणभावे कार्यस्य कारणेन व्याप्तिः सिद्धा भवति ।

ननु विजातीयादपि किञ्चिद्भवद् दृष्टं तद्यथा गोमयादेः शालूकादिः । न विजातीयादुत्पत्तिः । तथाविधमेव हि तादृशाम् आदिनिमित्तम्-इति न कारणभेदः । प्रबन्धेनोत्पत्तौ शराद् भवति । अस्ति च गोमयेतरजन्मनोः स्वभावभेदः रूपस्याभेदेऽपि । नहि आकारतुल्यतैव भावानां तत्त्वे निमित्तम् । अभिन्नाकाराणामपि केषाञ्चिदन्यतो विशेषाज्जातिभेदो दृश्यते । अन्यथा हि [1]विलक्षणाया अपि सामग्र्या अविलक्षणकार्योत्पत्तौ न कारणभेदाभेदाभ्यां कार्यभेदाभेदावित्यहेतुकौ विश्वस्य भेदाभेदौ स्याताम् । तथा हि न भेदाद्भेद इति अभेदादपि नाभेदः । तद्व्यतिरिक्तश्च न कश्चिद्भावस्वभाव इत्यहेतुकत्वाद्भावानां [ T. 367b ] नित्यं सत्त्वमसत्त्वं वा स्यात् । अपेक्षया हि भावाः कादाचित्काः भवन्ति । व्यवस्थावांश्च साध्येषु साधननियोगो न स्यात् । कारणशक्तिप्रतिनियमे हि किञ्चिदेव कस्यचिदेव साधनाय उपादीयेत, नापरम्, तस्यैव तत्र शक्तेः, अन्यस्य चाशक्तेः, तयोस्तज्जननेतरस्वभावत्वेन भेदात् । तज्जननस्वभावविलक्षणादपि तस्योत्पत्तौ न तज्जननशक्तिप्रतिनियम इति यत् किञ्चित् यतः कुतश्चित् स्यात् । तज्जननशक्तिसाम्ये तु तदेवेति न कार्यं दृष्टं कारणं व्यभिचरति इति ।

## [ ४. अनुपलब्धिहेतुनिरूपणम् । ]

उपलब्धिलक्षणप्राप्तस्य अनुपलब्धिः अभावस्य अभावव्यवहारस्य वा हेतुः ।

अत्र उपलब्धेः उपलभमानधर्मत्वे तज्ज्ञानमुपलब्धिः । तस्मादन्या उपलब्धिरनुपलब्धिः विवक्षितोपलब्धेरन्यत्वात्[2], अभक्ष्यास्पर्शनीयवत् पर्युदासवृत्त्या । उपलभ्यमानधर्मत्वे स्वविषयविज्ञानजननयोग्यतालक्षणो विषयस्वभावो भवति । योग्यतायाः भावस्वरूपत्वात् । तस्मादन्य उपलम्भजननयोग्य एव अनुपलब्धिः । पूर्ववत् । यत्र यस्मिन्नु-

१ उत्पादा० पृ० ४ २. पृ० १७२, पं० ४ ।

पलभ्यमाने नियमेन [ T. 368 a ] यस्योपलब्धिः स तत्संसृष्टः, एकज्ञानसंसर्गात् । [1]तयोः सतोर्नैकरूपनियता प्रतिपत्तिरसम्भवात् । तस्माद् योग्यतारूपं परस्परापेक्षमेव अन्यत्वमिहाभिप्रेतम्, प्रत्यासत्तेराश्रयणात् ।

स केवलः तदपेक्षया तदन्यश्चेदुच्यते तदा तज्ज्ञानं तत्स्वभावो वा ज्ञातृज्ञेयधर्मलक्षणाऽनुपलब्धिः । सा अभावम्, अभावव्यवहारं वा साधयति ।

कथमन्यभावस्तदभावो येन भावरूपानुपलब्धिरभावमभावव्यवहारं वा साधयेद् इति चेत् । उक्तमत्र यथा पर्युदासवृत्त्या अपेक्षातः तद्विविक्तोऽर्थस्तज्ज्ञानं वाऽभावोऽनुपलब्धिश्चोच्यत इति । न प्रतिषेधमात्रम्, तस्य साधनासिद्धेर[2]भावव्यवहारासिद्धिप्रसङ्गात् । तस्यासंसृष्टरूपस्य भावसिद्धिरेव अपरस्याभावसिद्धिरिति अन्यभावोऽपि तदभाव इति व्यपदिश्यते । अन्यभावलक्षणोऽभावः स्वयं प्रमाणसिद्धः सन् अभावव्यवहारं साधयेत्, तत्सिद्धिसिद्धो वेति न कश्चिद्विशेषो येनानुपलब्ध्याऽभावव्यवहारसिद्धेर्विरोधः स्यात् । [3]स एव अन्यभावस्तद्विषया चोपलब्धिरभावस्य किं न साधनमिष्यते ? किं पुनरभावस्य सिद्धिरेव तदभावसिद्धिः ? [ T. 368 b ] इति चेत् । अपृथक्सिद्धेरन्यभावात्, सम्बन्धाभावाच्च न लिङ्गलिङ्गिता ।

अन्यभावस्तावन्न साधनम्—यत्सिद्धौ यस्य न सिद्धिः तत् तस्य लिङ्गं भवति । धूमाग्निवदिति । अन्यभावसिद्ध्यैव तदभावः प्रसिध्यति, तस्य तदन्यासंसृष्टरूपस्य तत्त्वव्यवस्थापकप्रमाणत एव सिद्धेः ।

सम्बन्धाभावाच्च । तल्लिङ्गत्वे तत्र सम्बन्धः कश्चित् स्यात् । तच्च तस्य एकार्थसमवायः—यथा कृतकत्वस्यानित्यत्वेन धूमलक्षणे एकस्मिन्नर्थे समवायः, अधाराधेयभावो वा जन्यजनकभावो वा । नैवं कश्चिद् भावाभावयोः सम्बन्धः येनास्यान्यभावः साधनं स्यात् ।

अस्ति विषयविषयिभावः, शब्दार्थसम्बन्धवदिति चेत् । शब्दार्थयोः तत्प्रतिपादनाभिप्राये सति तत्प्रयोगात्— कार्यकारणलक्षणोऽविनाभावलक्षणो वा सम्बन्धः स्यात् । अयं चात्र न सम्भवति, यतः कथं विषयविषयिभावः स्यात् । सिद्ध हि तदुभयोः साध्यसाधनभावे तन्मुखेन विषयविषयिभावः स्यात् । स एव चासति सम्बन्धे न सिध्यति । अन्यथेतरेतराश्रयमिदं स्यात् ।

१. पृ० १९२. पं० २२ ।
२. पृ० १७८. पं० १३.
३. पृ० २००. पं० १७.
१ हे. सू.

अन्यभावाच्चाभावसिद्धौ असमुदायश्च साध्यः स्यात् । तथा च 'तदन्यभावात् घटाभावः' [T. 369 a] इति घटस्य सर्वत्र सर्वदा चाभावः प्रसज्येत । घटाभावेन विशिष्टः प्रदेशादिधर्मी साध्यते न तु केवलः । ततो नासमुदायस्य साध्यता । न च लिङ्गलिङ्गिनोरसम्बन्धदोषः प्रसज्यते, अन्यभावस्य प्रदेशादिना सम्बन्धाद् इत्ययुक्तं मन्यते चेत् । न । प्रदेशादेरेव अन्यभावत्वात् । यत्रैव हि प्रदेशादौ यन्नास्ति इति स एव तेनासंसृष्टोऽन्यभावः । तद्दर्शनादेवास्य 'घटो नास्ति' इति विकल्पो भवति । इति कथं तस्यैव लिङ्गलिङ्गिभावः ।

न चात्र सामान्यविशेषभावकल्पना संभवति येन सामान्यं हेतुर्भवेत्, तद्विशेषप्रतिपत्तेरेव तदभावस्य प्रतीतेः । तस्यान्यत्रान्वयस्याभावात्, प्रतिज्ञार्थैकदेशत्वाच्च न हेतुता । न च यत्र प्रदेशमात्रं तत्र घटाभावः । तादृशे केवले प्रदेशे सर्वत्राभाव इति चेत् । ननु तस्यैव कैवल्यं घटविरहः । स च तत्प्रतिपत्तौ एव सिद्ध इति कस्य तल्लिङ्गम् ? अन्वयस्यानुगमनमपि निरर्थकम् । तस्मादन्यभावो न साधनमभावस्य ।

अस्ति विरोधः सम्बन्ध इति चेत् [T. 369b] ।

**' केन कस्य विरोधोन्यभावेन प्रतियोगिनः '**

किं नु वै प्रतियोगी प्रमातुमिष्टो येन लिङ्गलिङ्गिनोर्विरोधः सम्बन्धः स्यात् । अभावस्तु प्रतियोगिनो घटस्य भावेनाविरुद्धः, सद्भावस्थानात् । तत् लिङ्गलिङ्गिनोः कथं विरोधः । तस्मात् सम्बन्धाभावः । अत्रापि न सामान्यसाध्यत्वम् ।

[१]तस्य कैवल्यमेवापरस्य वैकल्यमिति तदन्यभाव एव तदभावः । ततश्च तत्प्रतिपत्तिरेव च तदप्रतिपत्तिः । अन्यथा तस्य अव्यवच्छेदे तत्परिच्छेद एव न स्यात् । तदतद्रूपयोरविवेकात् । य एव व्यवहारः कस्यचित् क्वचिद्देशे दर्शनात् प्राप्तिपरिहारार्थः स न स्यात् । [२]न हि अयं अनलं पश्यन्नपि अनलमेव पश्यति इति कथं सलिलार्थी तत्र न प्रवर्तेत ? अनुपलम्भेन सलिलाभावः प्रतिपद्यते चेत् । कोऽयमनुपलम्भो नाम । यदि सलिलोपलम्भाभावः तदा [३]कथमभावः [T. 370a] कस्यचित् प्रतिपत्तिः, प्रतिपत्तिहेतुर्वा ? तस्यापि कथं प्रतिपत्तिः ? तस्य ततो वाऽन्यस्य कस्यचिदपि अप्रतिपत्तौ अपि यद्यभावः प्रतीयते तदा स्वापाद्यवस्थास्वपि किन्न प्रतीयते ? इत्येतच्च विचारितं प्रमाणविनिश्चये ।

१. अष्टशती (अष्टसहस्री) पृ० ११४
२. पृ० १९६ पं० ८.
३. पृ० १७६ पं० १६ ।

तस्मादयम् [1]अनलं पश्यन्नपि 'अनलोऽयं न सलिलम्' इति नाध्यवस्यति इति न तिष्ठेत् नापि प्रतिष्ठेत । ततश्च दुस्तरं व्यसनं प्रतिपत्तुः स्यात् ।

तत एवैकस्य केवलस्य दर्शनादन्याभावगतिश्चेत् । कथमेकं दर्शनमन्याभावं प्रत्याययति । तस्यैव केवलस्य दर्शनाद् इति चेत् । इदमेवास्माभिः प्रागभिहितं कस्मात् तवात्र परुषमिवाभाति ? । तस्मात् तीरादर्शिनेव शकुनिना दूरं गत्वापि प्रत्यागच्छता किमनयाऽविद्यमानप्रतिष्ठानया दिशः प्रतिपत्त्या प्रयोजनम् ?

यद्येकपरिच्छेदादेव अन्यव्यवच्छेदः सिध्यति तदा सर्वस्याविशेषेण तत्राभावसिद्धिर्भवेत् । न तु तुल्ययोग्यावस्थस्यैव । उपलब्धिलक्षणप्राप्तस्य अनुपलब्धिरभावसाधनीति च विशेषणं न वक्तव्यम्, अनुपलब्धिलक्षणप्राप्तानामपि तत्र व्यवच्छेदात्

एकात्मपरिच्छेदात् तस्य तदन्यात्मव्यवच्छेदो भवति तदात्मनियतप्रतिभासज्ञानात् न हि तदात्मा तदन्यस्य आत्मा भवति । अन्यात्माऽव्यवच्छेदे प्रवृत्तिनिवृत्त्योरभावप्रसङ्गः । [T. 370b] तं च देशकालस्वभावावस्थानियतं तदात्मनोपलभमाना बुद्धिः तथात्वप्रच्युतिमस्य व्यवच्छिनत्ति । एवं हि अन्यदेशतादेः पृथक्करणे सति तद्देशादिनियतः परिच्छिन्नो भवति, तथात्वं च तस्यैव भवति नान्यस्येति अन्यथाभूतात्तथाभूतं व्यवच्छिन्दत्येव तत् परिच्छिनत्ति । एवम् एकप्रमाणवृत्तिः सर्वभावान् द्वैराश्ये व्यवस्थापयति । तस्यान्वयव्यतिरेकबुद्धिजनकत्वेनैव साफल्यात् । तद्व्यतिरिक्ताशेषव्यवच्छेदेन व्याप्तिसाधनादेव प्रकारान्तरस्याभावः सिध्यति । तस्य तदन्यतया व्याप्त्यभावे तेन तदर्थाव्यवच्छेदात् पुनरपि भावस्यापरिच्छेदप्रसङ्गात् ।

[2]तस्मात् क्वचित् प्रमाणं प्रवृत्तं [3]तत् परिच्छिनत्ति, तदन्यद् व्यवच्छिनत्ति, तृतीयप्रकाराभावं च सूचयति इति एकप्रमाणव्यापार एषः । तथाहि क्वचित् प्रमाणं प्रवृत्तं तदेव तदन्यस्मात् व्यवच्छिनत्ति, तस्यैव परिच्छेदात् । तदन्यदेव च तस्मात् व्यवच्छिनत्ति, तदन्यस्याऽपरिच्छेदात् । अतस्तद् एव प्रमाणं प्रकारान्तराभावं साधयति । तस्मिन् दृष्टतदन्यत्वेन सर्वस्यैव व्यवस्थापनात्, अतदन्यस्यैव च तत्त्वेन व्यवस्थापनात् ।

एतेन क्रमाक्रमादयोऽन्योन्यव्यवच्छेदरूपा [ T. 371 a ] अपि व्याख्याताः ।

तदेवम् एकस्योपलम्भात् तस्य तदन्यात्मनो व्यवच्छेदः । न तद्देशकालयोः सर्वस्यान्यस्य भावस्य व्यवच्छेदः । तस्मादतदात्मा च स्यात् तद्देशकालश्च, रसरूपादिवत् ।

---

१. Comp. न्यायमं० ( Viz. ) पृ० २९ । सन्मति० पृ० २८५ ।

२. उत्पाद० पृ० ३७ ।

३. न्यायमंजरी [ Viz ] पृ० २९ ।

तस्माद् यथोक्तादेवानुपलम्भात् क्वचित् कदाचित् कस्यचिदभावसिद्धिः ।

अन्यभावविषयस्योपलब्धिरपि तदभावस्य साधिकैव न तु लिङ्गत्वेन । तत्रापि अभावस्य पृथक्साध्यत्वे सम्बन्धाभावस्य तुल्यत्वात् । लिङ्गाविर्भावकाल एव तदभावसिद्धेश्च । न हि अन्यस्य भावं प्रतिपद्य तत्प्रतिपत्तेस्तदभावेनान्वयव्यतिरेकौ प्रसाध्य तदभावं प्रतिपद्यते । किन्तर्हि ? तदन्यं प्रतिपद्यमान एव तदभावं प्रतिपद्यते । दर्शनानन्तरम् ' इदमस्ति ', ' इदं तु नास्तीति ' व्यवस्थापनात् । तच्च तस्य लिङ्गं भवति यस्यान्वयि व्यतिरेकि च, दृष्टान्तासिद्धेः । न हि एवं शक्यं दर्शयितुं ' यत्र अन्यभावोपलब्धिः तत्र तदभावः ' इति । तदेकोपलब्धेः क्वचिदपि अभावात् । सामान्येन प्रदर्शने दृष्टान्तेऽपि प्रमाणान्तरं नास्तीति । तस्मात् नैव कुतश्चिल्लिङ्गात् तदभावसिद्धिरिति । सोऽन्यभावः प्रत्यक्षलक्षणेनानुपलम्भेन सिद्धः सन् मूढप्रतिपत्तौ अभावव्यवहारं साधयेद् इति [ T. 371 b ] सुचर्चितमेव ।

सेयमनुपलब्धिस्त्रिधा । सिद्धे कार्यकारणभावे सिद्धाभावस्य कारणस्यानुपलब्धिः, व्याप्यव्यापकभावसिद्धौ सिद्धाभावस्य व्यापकस्यानुपलब्धिः, स्वभावानुपलब्धिश्च ।

तत्र कारणव्यापकयोरपि अभावव्यवहारः तदन्यभावसिद्ध्यैव सिध्यति । कारणव्यापकाभावः तथासिद्धः सन् कार्यव्याप्ययोरभावम् अभावव्यवहारं वा साधयति । स्वभावानुपलब्धौ तु अभावव्यवहार एव साध्यते ।

यदि कारणव्यापकौ तदन्यभावसिद्ध्या अनुपलब्ध्या सिद्धासद्व्यवहारौ अन्यस्य अभावम् अभावव्यवहारं च साधयतः । सा च तयोरुपलब्धिलक्षणप्राप्तावेवासद्व्यवहारस्य साधिका इति कथं तयोः कारणव्यापकानुपलब्ध्योः परोक्षेऽर्थे प्रयोगः ? नैव प्रयोगः प्रमाणतया, लिङ्गस्यानिश्चयात् । केवलं कारणव्यापकयोर्हि सिद्धसंबन्धयोर्यत्रभावः परस्यापि अवश्यं नियमेनाभावः इति एतस्य दर्शनार्थमेते क्वचित् प्रयुज्येते इति ।

एष एव पक्षधर्मोऽन्वयव्यतिरेकवान् इति तदंशेन व्याप्तः त्रिलक्षण एव त्रिविध एव हेतुर्गमकः, स्वसाध्यधर्माव्यभिचारात् ।

षड्लक्षणो हेतुरि[ T. 372 a ]त्यपरे । त्रीणि चैतानि अबाधितविषयत्वं विवक्षितैकसंख्यत्वं ज्ञातत्वं च । तत्र अबाधितविषयत्वं तावत् पृथग् लक्षणं न भवति, [1]बाधाऽविनाभावयोर्विरोधात् । अविनाभावो हि सत्येव साध्यधर्मे भावो हेतोः । स हेतुस्तल्लक्षणः धर्मिणि स्यात् । अत्र च साध्यधर्मः कथं न भवेत् ?

१. Comp. न्यायमं० पृ० ११०, ११३.

प्रत्यक्षानुमाने हि साध्यधर्मं बाधमाने तं धर्मिणः निष्कासयतः, तस्मिंश्च सत्येव हेतुर्भवन् तं तत्रैवावस्थापयतीति परं बत भावानाम् अस्वास्थ्यम्।

अन्यत्र साध्यधर्मेणाविनाभावी हेतुः न पुनः साध्यधर्मिण्येवेति चेत्। [1] तत् किमयं तपस्वी शण्ढमुद्वाह्य पुत्रं मृगयते? यस्य धर्मिणि असत्यपि साध्यधर्मे भावः, तमुपदर्श्य कथं स धर्मी साध्यधर्मवानिति उच्यते।

अत एव प्रमाणाभ्यामबाधितधर्मा धर्मी इति। स्यादेतत् यदि ताभ्यामेव साध्यधर्मिणि हेतोर्विषयः न बाध्यते तदा तस्य गमकत्वम्।

[2]तत् किमिदानीं हेतोः सामर्थ्यम्? [3]अबाधयैव साध्यसिद्धेः व्यर्थो हेतुः। बाधायामपि साध्याभावस्य तेन साधनात् कुतः साधनस्य सामर्थ्यम्। साध्याभावस्य बाधकप्रमाणवृत्तौ [T. 372 b] अनियमे बाधकप्रमाणस्याभावः, साध्याभावस्य च संभवः स्यादिति न सामर्थ्यमबाधायाः।

[4]न बाधाया अभावोऽबाधा। किं तर्हि? बाधाया अनुपलब्धिः। सा च पुरुषस्य क्वचित् बाधाया संभवेऽपि स्यात् इति स हेतुप्रयोगस्य विषयः। किं नु वै हेतुः बाधोपलब्धेः बिभेति न पुनर्बाधाया येन बाधामनादृत्य तदनुपलब्धौ प्रयोक्तव्य इष्टः। स तर्हि परमार्थेन—'बाधा किमस्ति नास्ति—' इत्यनपेक्ष्य बाधाया अनुपलब्धौ प्रयोक्तव्यः? किमर्थं प्रयुज्यते? साध्यसिध्यर्थम्। स किं क्वचित् सत्यामपि बाधायां साध्यं साधयेत् येनास्या अभावनिश्चयं प्रति यत्नो न क्रियते हेतुश्च प्रयुज्यते। एवं च सति अबाधितविषयत्वं हेतुलक्षणं न भवति। बाधायामपि सत्यामस्य सामर्थ्यात्। तथा च संशयितस्य प्रवृत्तिर्न युज्यते। यथा च बाधाया अनुपलब्धौ तामभ्युपगम्य प्रयुज्यते तथा तदुपलब्धावपि प्रयुज्यताम्, विशेषाभावात्।

न बाधायां सत्यां हेतोः सामर्थ्यम् इति। यद्येवम् अनिर्णितबाधाऽसंभवो हेतुः, मा भूत् बाधायाः संभवपक्षे प्रयुक्तस्यापि असामर्थ्यमिति न प्रयोगमर्हति।

बाधानुपलम्भे सति [T. 373 a] सामर्थ्यं चेन्मन्यसे। किमुपलम्भो बाधां व्याप्नोति यतो तन्निवृत्तौ बाधाया निवृत्तिः स्यात् यतो हेतोः बाधायाः सम्भवकृतमसामर्थ्यं न सम्भवेत्? अथ तन्निवृत्तौ बाधा निवर्तते। तथापि बाधानुपलम्भादेव

१. तुलना न्यायमं० पृ० १११, ६०९। तात्पर्य० पृ० २९ पं० २२
२. न्यायवि० वि० पृ० भाग २, १७९
३. पृ० २०९. पं० १।
४. तुलना न्यायमं० पृ० १११

साध्यसिद्धेः व्यर्थो हेतुः । अनुपलम्भे बाधायाः असंभवात् । उपलम्भस्य निवृत्तावपि बाधाया अनिवृत्तौ तदवस्थं हेतोरसामर्थ्यम् इति अप्रयोगः ।

तस्मात् स्वसाध्यभावाभावाभ्यामन्यथापि धर्मिणि न किञ्चित् भावयति न विभावयति इति तदुपक्षेपो न समर्थ इति बाधाविनाभावयोर्विरोधः । तन्नाबाधा रूपान्तरम् ।

तन्नाम तस्माद् विशेषणान्तरं लक्षणकारैरुपादानमर्हति यत्र यस्य भावेऽपि अपरस्याभावः स्यात् । तद्यथा पक्षधर्मत्वे सत्यपि सपक्षे भावो नास्ति । न चैतद् अबाधाया अविनाभावे सति सम्भवति । सत्यविनाभावे अबाधायाः संभवात् इति न हेतो, विरुद्धस्य च साध्यविपर्ययाविनाभाविनो विषये बाधा संभवति । इति न तदभावो पृथगनयोः लक्षणान्तरत्वेन वाच्यः । तस्मात् हेतोः प्रयोगे प्रतिज्ञादोषाणां संभवो नास्ति । नापि केवला प्रतिज्ञैव प्रयुज्यते । ततश्च न प्रतिज्ञादोषा वाच्याः ।

एतेन एकसंख्याविवक्षापि प्रत्युक्ता । [ T. 373 b ]

कथम् ? एको हि हेतुः स्वसाध्यभाव एव भवेदिति तत्राव्यभिचारी । तत्रैव तस्मादन्योपि कथं हेतुर्भवति ? एकस्य यत् साध्यं तद्बाधकस्य धर्मस्य भाव एव भावादिति बाधया समानम् ।

अपि च । [1]किं यो वस्तुतोऽसंभवत्प्रतिहेतुः स सम्यग्ज्ञानस्य विपर्ययहेतुरिष्टः आहोस्विद् अप्रदर्शितप्रतिहेतुः ? किञ्चातः ?

यद्यसंभवत्प्रतिहेतुः सम्यग्ज्ञानस्य हेतुरिष्यते तदा अशक्यानिश्चयत्वादलक्षणमेतत् । न हि अनिश्चितात्मनः तल्लक्षणत्वं यथा सन्दिग्धस्य पक्षधर्मत्वस्य । नापि सन्दिग्धलक्षणो हेतुर्भवेदिति हेत्वभावो वा स्यात् ।

तुल्ये लक्षणे हि दृष्टः प्रतियोगिनः संभवोऽदृष्टप्रतियोगिषु शंकामुत्पादयति विशेषाभावात् । सति वा विशेषे स विशेषो हेतोर्लक्षणम् । यतस्तद्विशेषात् हेतुरेकान्तेन स्वसाध्यं निश्चाययतीति अतल्लक्षणो न हेतुः स्यात् । तथा च हेतौ प्रतिहेत्वसम्भवे व्यर्था एकसंख्याविवक्षेति । अतः स्वलक्षणयुक्तयोर्हेत्वोरेकत्रधर्मिणि विरोधेनोपनिपाते सति विरुद्धाव्यभिचारीति लक्षणं हीयेत ।

न च तद्विशेषस्य स्वरूपं निर्दिष्टम्, यद्रूपं प्रतीत्य प्रतियोगिनः सम्भवासंभवावुत्पश्यामः । तस्मान्नास्त्येव विशेष इति सर्वत्र शङ्कया भवितव्यम् । दृष्टप्रतिहेतोरपि [ T. 374a ] न कश्चिद्विशेषो लक्ष्यते । न च संभवत्प्रतिहेतूनामपि सर्वदा तत्प्रतिहेतोः उपलब्धिः ।

---

१. पृ० २१८ प० ४

अतिशयवती तु प्रज्ञा प्रतिहेतूप्रेक्षिणी दृष्टा । तेनानिश्चयः प्रतियोगिनः संभवासंभवयोरिति वस्तुतोऽसम्भवत्प्रतिहेतुत्वलक्षणस्यानिश्चितत्वात् न कश्चित् हेतुः स्यात् ।

अथाप्रदर्शितप्रतिहेतुः, यथाह "**यदा तर्हि शब्दत्वं नित्यं अभ्युपगच्छति तदायं हेतुरेव स्यात् यत्र अनित्यत्वहेतुं कृतकत्वादि कश्चिन्न दर्शयेद्**" इति । इदमिदानीं सुमहद्व्यसनमायातम्—गुरुभिरभिहितत्वाद्प्रकाश्यम्, न्यायमनुपालयद्भिरसंवरणीयमिति कष्टतरं व्यसनं कथं निर्वोढुं शक्येत ? [1]स तावदयं हेतुः वस्तूनि स्वसाध्यप्रकृतीनि कृत्वा तत्प्रमाणकान् पुरुषान् अभ्युदयनिःश्रेयसाभ्यां च योजयित्वा पुनश्च प्रतिभावता पुरुषेण हेत्वन्तरनिदर्शनेन उत्कीलितसाधनसामर्थ्यः तानि वस्तूनि तांश्च पुरुषान् तद्भावसम्पदः स्वसाध्यप्रकृतिस्वसम्पदोऽभ्युदयनिःश्रेयससम्पदश्च प्रच्याव्य भ्रष्टराज्य इव राजा तपोवनं गच्छतीति किमत्र वयं ब्रूमः ।

पुरुषप्रतिभाकृतं हि यदि साधनत्वं स्यात् तदा न किञ्चित् साधनमसाधनं वा । स च हेतुर्यदि स्वभावतस्तद्धर्मभावी [T. 374 b] तदा कथमन्यथा क्रियेत । वस्तुस्वभावान्यथाभावस्याभावात् । उभयोश्च एकत्रभावे विरुद्धोभयस्वभाव एकः स्यात् । अतद्धर्मभावी च कथमन्यदापि साधनं कस्यचित् ।

तस्मात् स्वभावतः स्वस्वसाध्याविनाभाविनोर्यथोक्तलक्षणयोः कार्यस्वभावहेत्वोः प्रतिहेतोरसंभवादलक्षणमेकसंख्याविवक्षा, व्यवच्छेद्याभावात् ।

ज्ञानं पुनः न लिङ्गस्यात्मरूपमिति कथं लिङ्गलक्षणं भविष्यति ।

किंरूपाद् हेतोरनुमेयोऽर्थो ज्ञातव्य इति चिन्तायां प्रतिपत्तुरविसंवादकलिङ्गस्वरूपमभिधीयते यस्य दर्शनाद् 'अयं साधनम्' इति व्यवस्थाप्य तस्येष्टार्थसन्निधानसंप्रत्ययात् प्रवृत्तिमवलम्बते । एतस्मिंश्च यदस्यात्मरूपं तल्लक्षणम् न तु यत् पररूपम् ।

प्रतिपत्तिजन्मनि उपयुज्यते ज्ञानमित्येवं लिङ्गलक्षणत्वे प्रमेयपुरुषादीनामपि तल्लक्षणत्वं भवेत् । न हि तेष्वपि असत्सु लिङ्गिनि ज्ञानं भवति इति ।

निश्चितग्रहणं तर्हि न कर्तव्यम् । न । तस्यान्यार्थत्वात् । सपक्षविपक्षयोः दर्शनादर्शनमात्रतो गमकं हेतुमिच्छतां नैव समर्थो हेतुर्भवति सतोर्दर्शनादर्शनयोरगमकत्वदर्शनात् । ततो भावाभावयोरेव गमको हेतुरिति ज्ञापनार्थं निश्चितग्रहणम् । तेन पररूपं लिङ्गस्य लक्षणं न भवति, [T. 375 a] तेन लिङ्गस्य रूपविशेषानभिधानात् । तौ हि भावाभावौ तद्भावसाधकप्रमाणवृत्त्या बोद्धव्यौ, उपायान्तराभावात् ।

१. न्यायवि० वि० भाग २, पृ. १८०

यद्यपि भावाभाववचनमात्रेण तयोः साधनप्रमाणवृत्तिराक्षिप्यते अन्यथा तयोरेव सत्ताऽप्रसिद्धेः, ज्ञानसत्तानिबन्धत्वात् ज्ञेयसत्ताव्यवस्थायाः। सर्वत्र ज्ञेयसत्ताव्यवस्थैव तत्साधनं प्रमाणमाकर्षति; परार्थत्वाच्च शास्त्रप्रणयनस्य त्रिरूपं लिङ्गं संवादकमर्थस्येति तद्रूपमप्रतिपत्तॄणां ततः प्रवृत्तिर्न भवति, अज्ञातस्य ज्ञापकस्य प्रवर्तकत्वाभावाद् इति परोपलक्षणत्वादेव प्रवर्तके ज्ञानं सिद्धम्; तथापि तौ एव विशिष्टौ भावाभावौ केचिद् दर्शनादर्शनमात्रेण व्यवस्थापयन्ति इति तेषां निषेधार्थोऽयं निश्चितशब्दः प्रयुक्तः। सतोरपि भावाभावयोरन्वयव्यतिरेकयोः संशयात्। तस्मात् प्रतिबंधप्रसाधकप्रमाणवृत्त्यैव भावाभावौ सिध्यतः इति विप्रतिपत्तिनिरासार्थमस्माभिर्निश्चितग्रहणं कृतम्।

यतोऽपि त्रैरूप्यवचनमात्रेण तत्साधनप्रमाणाक्षेपतः तेनैवावगतत्वात् न ज्ञानं पृथगतः रूपान्तरं भवति। उपनयार्थवत् [ T. 375b ] पक्षधर्मत्वात्।

[१]अन्वयव्यतिरेकयोरपि हन्त न पृथक्त्वम्। एकस्य प्रयोगादुभयगतेरिति चेत्। न। हेतोः सपक्षासपक्षयोः भावाभावौ न परस्परमाक्षिपतः। एकं वाक्यमुभयं गमयतीति उच्यते नैकोऽर्थः स्वभावो द्वितीयस्येति। ननु ' तत्रैव भावे ' तदर्थतया ' तदभावेऽभावो ' गम्यते; ' अतद्भावेऽवश्यमभावे ' च ' तद्भावे भावः ' इति परस्परान्तर्भावः। वचनमेतत् सामर्थ्यादुभयमाक्षिपति। एकस्यापि नियमव्यापकस्य द्वितीयाक्षेपनान्तरीयकत्वात्। न च तावता उभयोरेकस्वभावता। पृथगभिधानं तु प्रयोगनियमार्थम्। न पुनः केवलौ भावाभावौ परस्परमाक्षिपतः। नियमवन्तौ च न केवलौ, नियमस्य उभयरूपत्वात्।

तस्माद् यदाऽन्वयव्यतिरेकौ भावाभावावभिप्रेतौ तदा तौ भिन्नरूपावेव। नैवं ज्ञानम्, परोपलक्षणशास्त्रागृहीतज्ञानात् त्रैलक्षणाद्व्यतिरेकादिति न लक्षणान्तरम्। तस्मान्न हेतुः षड्लक्षणः।

। समाप्तं हेतुविन्दु नाम प्रकरणम् आचार्यधर्मकीर्तिकृतम्।

---

१. पृ० २२६ पं० ७६।